पृष्ठे भागे ग्रन्थे पङ्क्तौ

द० १उ० ३ क्ङिप्रत्ययपरेग्रूपं पाठान्तरम्
१९० २प्र० ३ निषेधाप्रसङ्गादित्यर्थः ॥ ,,
१९१ द. भा. ३ अयं च धातूपदेशावस्थाया ,,
प्र. ३ र्गापवादयोरप्येकवाक्यताया ,,
६ {भूताकारनिवृत्तावस्याव्यापारः / भूताकारनिवृत्तावप्यस्याव्यापारः} ,,
८ यथेवं ,,
१० गुणप्रतिषेधविषयः ,,
१९२ वा. १प्र० २ उभयपदाश्रयत्वा ,,
२प्र० २ दङ्गस्यात्र कार्यित्वा ,,
१९३ वा. १उ० १ पुगन्तलघूपधस्येति त ,,
१९३ १भा. १ क्ङिद्ग्रहणं तदनवकाशं ,,
वा० २भा० ५ एतत्प्रयोजनम्—गुणो न स्यादिति ,,
६ गुणनिषेधो न स्यात् ,,
द० १भा० २ क्षणस्य प्रतिषेध ,,
प्र० २ अनेकपरिहारन्यासो ,,
उ० १ २ } पूर्वस्य परस्य वेति संदेहे तदुप ,,
४ —यव्युत्पादनार्थेति । ,,
१९४ वा० उ० ६ निषेध्याकाङ्क्षतया ,,
द. १ प्र० १ ततश्चासिद्धत्वान्निषेधा. ,,
१९५ वा० उ० ९ {इत्यादिना दुर्छामुर्छे / इत्यादिना दुर्छामुर्छौ} ,,
१९६ द० प्र० ३ तच्चेत्स्थानिवद्भावात्स्याद् ,,
१९७ द. २उ० २१ {यदि समुदाय इति । पठनीयम् / यदि च समुदाय इति। पाठान्तरम्}
१९८ वा० वा० २ च्छन्दसः अदीर्घे- ,,
१९९ द० १भा. १ वेव्यदिति च अधिकम्
२भा० १ दीध्यदिति च इयन्नेष व्यत्ययेन पाठा.
२०१ द. २प्र० ६ समासपदानामन्तोऽव पाठान्तरम्
२०२ द० २प्र० ३ यथा ग्लेयादिति ,,
,, ६ शक्तेति । तृचि तकारे झलि ,,
२०३ ,, उ० १ नचाङ्गावयव ,,
२भा० १ २ {दषत्करोति समित्करोतीति संयोगान्तस्यलोपः / दषत्करोति संयोगान्तस्य लोपः} ,,
द. १प्र० २ विशेषणात्तदन्तविधौ सिद्धेऽन्तग्रहण ,,
२०४ द. १ भा. २ गुणवृद्धिसंज्ञे प्रत्येकं भवतः ,,
२०५ वा० १भा. २ प्रत्येकं वृद्धिगुणसंज्ञे ,,
प्र० ३ नावयवैकाचः ,,
२०५ द० २भा. १ अस्तु तर्हि द्वयोर्द्वयोः संयोगसंज्ञा।,,
२वा. ४ द्वयोर्हलोः संयोगसंज्ञेति चेद् ,,

पृष्ठे भागे ग्रन्थे पङ्क्तौ

२०६ वा. २उ० ४ सामर्थ्येन सवर्णकालव्यवायोपि पाठान्तरम्
द० भा० १ यदा द्वयोर्द्वयोः, तदैवं विग्रहः ,,
२०७ वा० प्र० ४ यदा द्वयोरन्तरा ,,
,, ,, ५ {यदा बहूनां / यदा तु बहूनां} ,,
२०७ वा० उ० ३ तथा सति द्वयोरेवाव— ,,
द० ,, १२ तन्निमित्तत्वादित्याहुः ॥ ,,
२०८ वा० १प्र० ४ चनवैषम्यादविशेषेणेत्युक्तम् ,,
२ भा. १ {निर्ग्लायात् निर्ग्लेयात् निर्म्लायात् / निर्म्ले} ,,
२ भा. २ {निर्ग्लायात् निर्म्लायात् निर्ग्लेयात् / निर्म्ले} ,,
२११ द. १प्र० २ बाधकत्वपक्षे मुखनासि- ,,
२१२ द० प्र० १ स्थानान्तरमेवानुनासिकस्येति ॥ ,,
,, २ {यदा तु सर्व एव / यतः सर्व एव} ,,
उ० १ उपशब्दस्य सामर्थ्यादिति भावः ,,
८ तत्तद्देशावच्छिन्नवाय्वाद्यभिघा- ,,
२१३ वा० १टि० ४ पाणिनीयशिक्षानुसारेण पठनीयम्
२१४ वा० उ० २ युगपदुभयोर्व्याप्तेः ॥ ,,
२१५ वा० १प्र० ४ तत्र द्वन्द्वगर्भबहुव्रीहिरिति पक्षे ,,
२उ० १ तद्धितान्तास्यशब्दविषये ,,
२१६ वा० २प्र० २ {तेन नञ्शब्दस्येह भावः साधनं / तेन न शब्दस्येह भावः साधनं} ,,
२भा० २ सर्वेषां हि तत्तुल्यं भवति ,,
३प्र० २ वर्णानां निष्पादनादिति भावः ,,
३ विततमस्ति पणवचर्मवत् तत्संबद्धा ,,
२उ० ५ ६ {तज्जनकवायुसंयोगस्यापि तुल्यत्वात् / अनवधारणगर्भ} ,,
२१७ द० भा० ११ आनुनासिक्यं तेषामधिको गुणः॥ ,,
प्र० ३ संवृततविवृतताख्याः ॥ ,,
उ० ५ {तेषां चास्यविवृतत्वमास्य / तेषां चास्यान्तर्गतत्वमास्य} ,,
८ बाह्यान्प्रयत्ना ,,
२१९ वा० ४प्र० {२ विशिष्टस्यैवावस्था वर्णो / ३ बुद्धिकृतभेदाश्रयो व्यप} ,,
२२० वा० २उ० २ जातावेकवचनम् ,,
,, ९ तत्तत्स्थानानामभिघातका ,,
२२१ वा० २प्र० २ {मानस्यापि कचित्सवर्णग्रहणद- / र्शनात्} ,,
द० ३भा० २ किं तर्हि ? ॥ प्रयतनमेव प्रयत्नः॥ ,,
२२३ द० सर्वांधः कोष्ठकम् २२४ पृष्ठप्रारम्भे पठनी०

पृष्ठे भागे ग्रन्थे पङ्क्तौ

२२५ द० १प्र० ४ द्विमात्रावेतावित्यभ्युपगन्तव्यौ पाठा०
२ प्र० ३ तथा पूर्वमेवोक्तम् । सत्यां तु ,,
७ इह द्वयोरेककार्ययो ,,
२२६ वा०२उ० २ तद्व्याचष्टे—अपिचेत्यादिना । ,,
८ टि० १४ "अण्"प्रत्याहार पठनी०
२२६ द० प्र० २ र इति लणिति लकाराकारेण ,,
टि० ६ ञति" इति भाष्यं विरुध्येत ,,
२२८ वा० उ० १६ स्वविषयेऽप्राप्तौ तद्बाधक पाठा०
द० ,, २ अनचि [1]चेति ,,
२२९ द० उ० १४ सर्वनिर्णयं विना ,,
२३१ वा० १प्र० १ भेदमभ्युपगम्योच्यते ,,
३प्र० १ अपर आह— ,,
२३३ वा० भा० 'किमेतस्य ज्ञापने प्रयोजनम्' अप्लुता-
दप्लुते इत्येतन्न वक्तव्यं भवति ॥'
इति भाष्यं प्रथमप्रदीपतः प्रागेव॥पठनी०
२३३ वा० ३प्र० २ सिद्धे हि प्लुते तन्न वक्तव्यं भवति
अतोतीति पाठा०
२३३ द० १प्र० २ च प्राधान्यात् प्रधानदेश— ,,
२३४ वा० प्र० ३ दीर्घोच्चारणाच्च प्रयत्नाधिक्या ,,
द० उ० ८ व्यक्तिगाया अपि न ग्रहण ,,
१५ तद्विशिष्टग्रहणेऽप्यण्त्वाभावा ,,
भा० १ प्रगृह्यसंज्ञोच्येत ,,
२३५ द० उ० ७ तदेकवाक्यतापन्नस्यापि ,,
३भा० १ एवं तर्हि किं न एतेन कार्यकालं,,
२३६ ,, १ वा० १ ईदादयो यद् द्विवचनं प्रगृह्या ,,
१भा० १ ईदादयो यद्विचनं प्रगृह्या ,,
द० २वा० १ ईदाद्यन्तं यद्विवचनमिति ,,
२३७ वा० १प्र० २ {केवलयोः संभव / तयोः सिध्यति} ,,
३ एकारान्तस्य द्विव ,,
वा० २प्र० ५ —न्तग्रहणेन ज्ञापितत्वादिति ,,
२३७ द० प्र० ३ कथं पुनरत्र ,,
२३८ वा० ३प्र० ३ द्विवचनान्तमित्यर्थः ॥ ,,
द० ४भा० १ {अन्यस्य कृते / त्वन्यस्याकृते} ,,
२३९ वा० प्र० ५ नास्तीत्येतत्पक्षासंभव एव ,,
२३९ द० भा० ३ / ४ {असी अत्र असी आसते / अमू अत्र अमू आसाते} पाठा०
द० प्र० २ / ३ {च शब्दान्मत्वस्यापि} ,,

२४२ वा० प्र० ३ प्यसंभवो भवति यथा पाठान्तरम्
द० उ० ५ एव सिद्धत्वबोधनमित्यर्थः ॥ ,,
२४३ द० उ० १ इत्यर्थ इति कार्यकालेपि ,,
२४४ ,, प्र० २ / ३ {ईदूदर्थश्चेदूदिति} ,,
,, ,, ३ / ४ {बुद्धिसंकलनाया} ,,
,, १उ० २ अथवाऽऽहेति ॥ ,,
२प्र० २ स्वरे इति । अचि ॥ ,,
उ० १ द्वितीयपदस्थेऽचि यत्किंचित् कार्य ,,
२४७ वा०३भा० १ एकाजित्युच्यमाने ह्यत्रापि पाठा०
द० १प्र० २ {प्राधान्यादिति भावः । पठ० / प्राधान्याच्चेति भावः पाठा०}
२४८ ,, १भा० १ / २ {भविष्यति / न भविष्यति} ,,
२४९ वा० प्र० ५ / ६ {नावयवानाम् एकाज्द्विर्वचन} ,,
२५१ द० २प्र० ३ रूपग्रहणेनार्थवद्ग्रहणस्य ,,
२५३ उ० ९ मुपात्तविशिष्टरूपविषयत्वे चेत्यपि ,,
२५४ प्र० ४ शाकल्यश्रुत्यनुवृत्त्या चादेशे ,,
२५५ वा० २उ० २ एव प्राप्ता एकप्रयोग एव ,,
२५६ द० ३उ० ७ नमिधानमिति तात्पर्यम् ॥ ,,
२५८ वा० ३प्र० ४ संसृष्टरूप एवाभिधीयते ,,
,, ५ उद्धृतस्तस्यैव ,,
२५९ वा. १प्र० १० {तत आत्वं भूता / तेनात्वं भूता} ,,
२६० वा. २ प्र० १ प्रकृतयश्चैषामिति । यदि प्रकृति-
शब्देन सर्वेषां धातूनां ग्रहणं
स्यात् तदा दाधाग्रहणं व्यर्थं भ-
वेत् । अन्ततः सामान्येन तेषा-
मपि ग्रहात् । अतो दाधारूपाणां
नान्येषामिति प्रत्यासत्त्यैषामिति
लभ्यते ॥ ,,
द. १ भा. २ दाशतिमंहति ,,
२ भा. ३ परिणिमयत इत्येवमर्थम् ,,
३ / ४ {पुरस्तादाकृष्यते / पुरस्तादपकृष्यते} ,,
२६१ वा. २ प्र० २ पित्त्वमदाबिति प्रतिषेधे ,,
७ इत्येतद् धेङ्निवृत्त्यर्थं ,,
८ {इत्येतद, दधातेर्हि / इत्येतद्, अस्य दधातेर्हि} ,,
२६१ द० २ प्र० ४ किंतु दाद्धाशब्दापेक्षयेत्यदोषः ,,
२६२ वा. २ प्र० १ लब्धव्यपदेशात्मकस्य ,,

१ 'अनचि' इत्येव पाठो योग्यः चकारस्य द्वित्वविधायकत्वात् ॥ दाधि०

| पृष्ठे | भागे | ग्रन्थे | पङ्क्तौ | | |
|---|---|---|---|---|---|
| | द० | उ० | ७ | पुक्प्रवृत्तावपि / पुगप्रवृत्तावपि | पाठान्तरम् |
| | | | ७ | दाशब्देनाग्रहणात् | ,, |
| | | | १६ | तु कथनवैयर्थ्यापत्तिः । | ,, |
| २६३ | वा. | १उ० | ४ | घुत्वाभावे तदवस्थो | ,, |
| ,, | | २भा० | २ | शब्दान्तराच्छब्दान्तरस्य | ,, |
| | वा. | ३प्र० | १ | इह भवतीत्यनेन द्वारेण | ,, |
| | द० | प्र० | १ | कार्यं प्रति यत् पद्यमानं प्रतीयमानं / प्रकृति | ,, |
| | | प्र० | २ | तत् सर्वम् ॥ | ,, |
| | | प्र० | ४ | विकाराभावप्रतिपादनार्थमेतत् | ,, |
| | | उ० | २४ | गमा अपीत्यर्थ इत्यस्य सर्वथेत्यादिः ॥ | पाठा. |
| २६५ | वा. | प्र० | ५ / ६ | सिध्यति । अत एव | ,, |
| २६६ | द. | २प्र० | १ / २ | पक्षे एजन्ताना / पक्षे उपदेशे एजन्ताना | ,, |
| २६७ | वा. | उ० | ७ | मानमाह— | पठ० |
| | वा. | उ० | ७ | द्व्योरिति । प्राकार | पाठा० |
| | द. | उ० | ५ | दित्यस्याद्यन्तवच्छास्त्रप्रवृत्ते | ,, |
| २६९ | द. | २प्र० | १ | प्रथमरूपताध्यवसायात् | ,, |
| | | ३भा० | १ | तथाऽप्रसूतायामसोष्यमाणायां | ,, |
| २६९ | द. | ३प्र० | २ | सापि कदाचि | ,, |
| २७० | वा. | प्र० | १ | पूर्वांगमनं / पूर्वंगमनं | ,, |
| २७० | द. | २भा. | २ | चैकस्मिन्नपि संभवति | ,, |
| | | २ प्र० | २ | प्रतियोगिनोराद्यन्तशब्दयोः | ,, |
| २७१ | वा. | प्र० | ३ | योगोऽयमारब्धव्यः ॥ | ,, |
| | | भा. | २ | कुर्तव्यम् तैत्तिरीयः ॥ औपगवः कापटवः | पठनीयम् |
| २७१ | वा. | २उ० | २ | साहित्यात्प्रतीतिरित्यर्थः ॥ | पाठा० |
| | | भा. | | अहिंचुम्बुकायनिः आग्निवेश्यः ॥ गार्ग्यः कृतिः | पठनीयम् |
| २७२ | वा. | २प्र. | १ | सूत्रकारापेक्षया प्रयो | पाठा० |
| २७३ | वा. | २प्र. | ४ | तरमित्यादि सिद्धं | ,, |
| | वा. | २उ० | ३ | नातिशयिकस्यापि | ,, |
| | द. | प्र० | १ / २ | प्रतिषेधक्रिया | ,, |
| २७५ | द. | १भा० | १ / २ | यदि तर्हि कृत्रिमे संप्रत्ययो / ,, कृत्रिमाकृत्रिमयोः / कृत्रिमे संप्रत्ययो | ,, |
| | | ३भा० | १ | गङ्गा यमुनेति | अपाठान्तरम् |

| पृष्ठे | भागे | ग्रन्थे | पङ्क्तौ | | |
|---|---|---|---|---|---|
| २७६ | वा. | २प्र० | १ | नित्यार्थः पाठ इति चेत् | पाठा० |
| | | ३उ० | ४ | तत्प्रत्याख्यानसामर्थ्येन | ,, |
| | द. | ५भा. | २ | माकृत्रिमयोः कृत्रिमे संप्रत्ययो | ,, |
| २७७ | वा. | प्र० | ११ | संज्ञान्तरं निवर्तयति | ,, |
| २७८ | द. | २उ० | १ | स्फोटयितुं | ,, |
| २७९ | ,, | प्र० | ५ | भूर्यादिनिवृत्त्यर्थं | ,, |
| | द. | १भा. | १ | उत्तरार्थेनापि नार्थः | ,, |
| २८० | १वा. | प्र० | ५ / ६ | न गृह्णातीत्यर्थः । | ,, |
| २८० | द. | १प्र० | १ | स्वरितत्वाद् वाक्यान्तरे | ,, |
| | | ३प्र० | १ | वार्तिकं कर्तव्यमितिस्थितं | ,, |
| २८१ | वा. | १प्र. | ३ | चेदम् ॥ | ,, |
| | | २प्र० | १ / २ | समासकन्विध्यर्थमिति | ,, |
| | | | ६ | एकः, अध्यर्धः, द्वौ, अर्धत्रय इति / एकोऽध्यर्धौ द्वावर्धतृतीया इति | पठ० / पाठा० |
| | | २उ० | ३ | तस्यैव संख्याकार्यत्वात् | ,, |
| २८३ | द. | उ० | १६ | त्येव सिद्धेः / त्येव तत्रोदात्तत्वसिद्धेः | ,, |
| २८४ | वा. | प्र० | २ | अन्यवाचित्वाश्रयेण तूत्तरम् ॥ | ,, |
| | | २उ० | ३ | साहचर्यस्य न सर्वत्र व्यवस्थापकत्व | ,, |
| २८४ | द० | २उ० | ४ | धनेन लोपस्याप्यनापत्तेः ॥ | पाठा० |
| २८४ | द. | ,, | ५ | स्याददीदपदित्यत्रेति भाष्ये | ,, |
| | | ,, | ७ | सिद्धतया तस्या अप्राप्तौ | ,, |
| २८५ | वा. | १उ० | ९ / १० | तद्विघातकसूत्रस्यात्य— | अपपाठः |
| | द० | प्र० | २ | न तु पातेर्डतिः ॥ | पाठान्तरम् |
| २८६ | वा. | ,, | २ | डतिः संगृह्यते नत्वौणादिको डतिः ॥ | ,, |
| | वा. | २प्र० | २ | प्रयोगस्त्वेषां लुप्तत्वान्नास्ति ॥ | पाठा० |
| २८७ | वा. | ३उ० | २ | वेदिकां पुण्डरीकं वेति । | ,, |
| | द. | १भा. | १ | एवमपि प्राकीर्ष्टेत्यत्र प्राप्नोति ॥ | ,, |
| २८८ | वा. | १प्र० | २ | बहुव्रीहित्वनिश्चया / बहुव्रीहिरितिनिश्चया | ,, |
| २८९ | वा. | प्र० | १० | स्वस्वामिसंबन्धः षष्ठ्यर्थः / स्वस्वामिसंबन्धलक्षणः षष्ठ्यर्थः | ,, |
| | | | १६ | पृथक्प्रयोगसत्त्वात् / पृथक्प्रयोगात् | ,, |
| | | | ,, | कार्यार्थतया | ,, |
| | | | ,, | भवितव्यमिति | ,, |
| | द. | उ० | १९ | अवयवसंख्यारोपेण | ,, |

१ कस्मिंश्चित्पुस्तके "तद्धितेभ्यः" इत्यस्य व्याख्या टिप्पणीरूपा मूले केनचिल्लेखकेनैव प्रक्षिप्तेति बोध्यम् ॥

| पृष्ठे भागे ग्रन्थे पङ्क्तौ | | |
|---|---|---|
| २९० वा. उ० ३ | ब्राह्मणत्वेन विशेष्यत इति भावः | पाठा० |
| २९१ वा. २प्र० १ | प्रतिषेधस्य हि निवृत्तावेव | ,, |
| ,, २ | निपातनस्य च | ,, |
| ,, ३उ० १ २ | किम् एवम् एवंजातीया | पठ० |
| २९२ वा. उ० ९ | निदन्तत्वादाद्युदात्तत्वाय । | पाठा० |
| २९४ वा. १प्र० ३ | असंज्ञोपसर्जनीभूतानि सर्वादीनि<br>असंज्ञोपसर्जनानि सर्वादिगणे संनि- | ,, |
| द. २प्र० २ | गणपाठोपलक्षितं यद् विशिष्टं कार्य | ,, |
| ३ | इति तदर्थमपि | ,, |
| २९५ द. उ० ८ | तत एव स्त्रीभ्यो [ढगिति] ढकि | ,, |
| १५ | नन्वेवं कुम्भकारीत्यत्र | पठ० |
| १९ | न ३० चैवं बहुकुरुचरेत्यादावतिप्रसङ्ग— | ,, |
| ९ टि. १ | शङ्कते—नन्विति ॥ | ,, |
| ३०० वा. उ० ११ | तु सर्वे सर्वोपस्थापकत्वमेव | पाठा० |
| द. उ० ९ | स्वविषयसर्वार्थबोधकत्वं | ,, |
| ३०१ द. २उ० ३ | चोभस्य पाठाभावे<br>चोभयस्य पाठाभावे | ,, |
| ,, ,, ३ ४ | अन्यथोभयात्तसिलादेः | ,, |
| ३०२ २प्र० १ | स्वार्थिकत्वाट्टाप उभार्थे | ,, |
| ३०३ वा. उ० १० | अतः प्रकृतिग्रहणेन प्रकृतिभूतोभ | ,, |
| ३०४ ,, १प्र० ३ | आश्रयिष्यत इति प्रश्नः | ,, |
| द० २उ० ४ ५ | काकचोरपि विशेषाभावात् | ,, |
| ३०५ द. उ० ३ | ,, ,, यस्या इत्यर्थात्<br>,, ,, यस्य इत्यर्थात् | ,, |
| ४ | पूर्वपदस्य | ,, |
| ३०८ वा. १प्र० १ | सूत्रपाठ एवायमर्थं | ,, |
| ,, ३भा. १ | गोनर्दीय आह— | ,, |
| द० प्र० १ | गोनर्दीय आहेति ॥ | ,, |
| उ० ५ | सूत्रमिति सूत्रद्वयम् | ,, |
| ३०९ वा. १प्र० २ | पूर्वत्वमाद्यस्य विशेषण | ,, |
| द. भा. २ | योगाङ्गं यथा विज्ञायेत | ,, |
| १प्र० ३ | समासोऽयं गृह्यते ॥ | ,, |
| ३१० द. २प्र० ४ | प्रकारार्थप्रदर्शनाय | ,, |
| ,, ,, २प्र० ५ | तदुक्तम्— | ,, |
| ३११ वा. २प्र० २ | मध्यमस्यामवमस्यामिति तु | ,, |
| द. ३प्र० ३ ४ | तत्र पुनः सर्वनामसंज्ञया तसि-<br>लादिर्विधीयते । | ,, |
| ३१२ वा. प्र० ४ | मुक्तानुवाददोषादभास | ,, |
| द. १प्र० ४ | पुत्रादिशब्दास्तु ज्ञातिधनयोर्वर्तन्ते | ,, |

| पृष्ठे भागे ग्रन्थे पङ्क्तौ | | |
|---|---|---|
| ३१३ द. १प्र० १ | समाने शाटक— | पाठान्तरम् |
| २ | तत्रेदं न ज्ञायते | ,, |
| ३१३ द. १उ० २ | समानेति ॥ | पठनीयम् |
| | समाने इति । | पाठा० |
| ३१४ द. २प्र० ३ | लोहितगङ्गमित्यादीनां चाव्ययानां | ,, |
| २उ० १ | स्वआगत | अपाठा० |
| ३१५ वा. भा. १ | एवं तर्ह्यव्ययसंज्ञैव स्यात् | पाठा० |
| द० प्र० ५ | विधीयते । तत्र | ,, |
| १० | अस्मिंस्तु सूत्रार्थे<br>एतस्मिन्सूत्रार्थे | ,, |
| ३१६ वा. ३उ० ३ | लोपेनैव | ,, |
| ३१७ द० प्र० ३ ४ | स एव प्रकारवचने | ,, |
| ३१८ वा. ३भा० ६ | आतश्चाभिज्ञाः | पठ० |
| द. १उ० ४ | आतश्चाभिज्ञा इति । | ,, |
| ३१९ द. प्र० ३ | एकस्मिन्नित्येतदपनीयै | पाठा० |
| ३२० द. प्र० ४ | तदाऽसर्वविभक्तयो | ,, |
| ३२१ | शिरोलेखे अव्ययसंज्ञा | पठनीयम् |
| ३२१ द. प्र० ६ | स्वादित्येवमर्थं तद्धितग्रहणं | पाठा० |
| ९ | रित्यव्ययत्वप्रसङ्ग इत्याह | ,, |
| १२ | प्रपञ्चार्थस्तु सूत्रपाठः<br>,, सूत्रप्रबन्धः | ,, |
| ३२२ वा. १भा० १ | पाठेनैयमव्ययसंज्ञा कृता । सेह | ,, |
| १उ० २ | पातमव्ययमितीत्यर्थः ॥ | ,, |
| १प्र० २ | वचनेनेत्यर्थः ॥ | ,, |
| ३२३ वा. प्र० ६ | एकत्वादिष्वित्यर्थः ॥ | ,, |
| ८ | सत्त्ववचनानामपि | ,, |
| ११ | लिङ्गादिविशेषणायोगात् | पाठा० |
| द. भा० १ | कृद् यो मकारान्त इति | ,, |
| ,, २ | कृदन्तं यन्मकारान्तमिति | ,, |
| द. प्र० ४ ५ | मिति चात्र तदन्तविधिः | ,, |
| ७ | नाना गमनमगमनं वा संभवति | ,, |
| ३२४ वा. १प्र० ५ | मिथोयोगाभावात् । | ,, |
| द० २भा० १ | लिग्रहणं निवर्त्तयिष्यते | ,, |
| १प्र० ३ | अत्रैवार्थे ज्ञापकमाह— | ,, |
| २प्र० १ | तस्य हि सो नो धातो | ,, |
| ३ | यस्य च धातोर्नियमेन निवृत्तिः | ,, |
| ३२६ वा० प्र० ३ | पूर्वपदोत्तरपदयोरानन्तर्ये | ,, |
| ३२७ द. प्र० ३ | तथाच तत्र<br>दीर्घत्वप्रसङ्गः | ,, |

| पृष्ठे | भागे | ग्रन्थे | पङ्क्तौ | | |
|---|---|---|---|---|---|
| | द० | प्र० | ४ | रिति दीर्घ ऊकारः | पाठान्तरम् |
| ३२९ | द. | प्र० | ४ | वलवत्त्वात्परत्वाच्चात्र विक | „ |
| ३३० | द० | | ९ १० | अतिप्रसङ्गस्त्वेतन्न्यायस्यानित्यत्वेन | „ |
| ३३१ | वा. | ३वा० | | पपिवान् | „ |
| | द. | ३भा. | ३ | पपिवान् | „ |
| ३३२ | वा. | प्र० | ४ | सर्वशब्दपर्यायः | „ |
| | द, | प्र० | ४ | पपिवानिति | „ |
| | | | १२ | त्संनिपातपरिभाषाया बाधः ॥ | „ |
| ३३४ | द. | १प्र. | १ | शिसर्वनामस्थानं सुडनपुंसकस्येति | „ |
| | | | ३ | त्वस्मिन्न्यासे तु न दोष इत्यर्थः ॥ | „ |
| ३३५ | वा० द० | प्र० | २ १ | शिसर्वनामस्थानमित्यनेन या प्राप्तिः। | „ |
| | „ | | २ | निरवकाशमेव स्यात् ॥ | „ |
| ३३६ | वा, | प्र० | ३ | नञ्समासो भवतीति ॥ | „ |
| | द. | ७उ० | ८ | यस्माद्विहितस्त— | „ |
| ३३७ | वा. | २प्र० | २ | इतिश्चासौ करणश्चेति विशेषणसमासः। | „ |
| ३३७ | द. | ३भा. | २ | करणः परः प्रयुज्यमानो | „ |
| | | | ५ | नवाशब्दादितिकरणः परः प्रयुज्यमानो | „ |
| ३३८ | द. | २प्र. | २ | तत्र प्रदेशेषु च कार्याणि | „ |
| ३३९ | वा. | १भा. | १ | येन नवेत्युक्ते लोके | „ |
| | | | ५ | समानलिङ्गेन निर्देशः | „ |
| | | १प्र० | २ | व्यधिकरणत्वं लक्ष्यते। | „ |
| | | २प्र० | १ | व्याकरणसूत्रे समानलिङ्गो | „ |
| ३४० | वा. | ३भा. | २ | अत्र न ज्ञायते— | „ |
| ३४० | द. | ३भा. | ७ ८ | संज्ञा यथा स्यात्-नेति च वेति च। | „ |
| ३४१ | द. | प्र० | २ | समीकृते देशे पश्चाद्विकल्पः | „ |
| | „ | „ | ३ | पश्चात्प्रतिषेधस्तदा विकल्प- | „ |
| | „ | „ | ४ | आनुपूर्वी च यैव संज्ञाविधा | „ |
| ३४३ | वा. | प्र० | २ | —ल्प्यत्वात्तदङ्गानां विकल्पः<br>—ल्प्यत्वादङ्गानां विकल्पः | „ |
| | वा. | २भा० | १ | युगपच्चान्वाचयेन च | „ |
| | द० | १प्र० | ४ | प्रयोगनिरपेक्षं शब्दानन्वाचष्ट इति | „ |
| | | २प्र० | ४ | व्यवहितस्य प्रसङ्गः। | „ |
| | | | ६ | तव्यादयस्त्वेका | „ |
| ३४४ | वा. | १प्र० | १ २ | एकस्याः प्रकृतेर्भवन्त्विति | „ |
| | वा. | | | शीलनेन च तद्विषयत्वम्। | „ |
| | द. | प्र० | ३ | सर्वप्रयोक्तृप्रसङ्गे | „ |
| | | | ५ | नास्ति प्रयोक्तृनियमः। | „ |

| पृष्ठे | भागे | ग्रन्थे | पङ्क्तौ | | |
|---|---|---|---|---|---|
| | | | ५ | सत्तृत्वेन निर्दिष्टोऽस्य | पाठान्तरम् |
| ३४५ | वा. | १भा. | २ | पूजार्थम्, देशग्रहणं च | „ |
| | | उ० | ७ | कृतस्यानुवादोऽन्याकृतत्व— | पठ० |
| ३४७ | द. | १भा. | १ २ | प्रत्याहारे ग्रहणम् | पाठान्तरम् |
| ३४८ | द. | ७टि. | १ | गन्धनमात्रे यमः | पठ० |
| | | | ४ | अप्राप्तविभाषा— | „ |
| ३४९ | द. | २प्र० | ५ ६ | तदा पूर्वोक्तदोषाभावः | पाठा० |
| ३५० | वा. | प्र० | ५ | तूभयत्रेति संशयः<br>तूभयत्र विभाषेति संबन्धः<br>तूभयत्र विभाषेति संदेहः<br>तूभयत्रेति संदेहः | „ |
| ३५१ | वा. | २प्र० | १ | यद्यच्चकाविति नानुवर्तते | पठ० |
| | | | २ | पद्यच्कौ नानुवर्तेते | पाठान्तरम् |
| ३५६ | द. | प्र० | १ | पक्षद्वयेऽपि | „ |
| ३५८ | वा. | १प्र० | २ ३ | येनैकः काकस्तेनैवापरोपीति | „ |
| | „ | | ४ ५ | निर्ज्ञातं च तस्य काकाज्जन्म तदै | „ |
| ३५८ | वा. | ३भा. | २ | पदेषु पदैकदेशान्प्रयुञ्जानाः। | „ |
| | „ | २प्र० | ४ | —त्येतन्निर्वृत्तार्थमाक्षिपतीत्यर्थः ॥ | „ |
| | द० | २उ० | ४ | तस्यायोग्यत्वे पुत्राय समर्प्यते | „ |
| ३६१ | वा. | भा. | २ ३ | अत्राशक्यमुदात्त | „ |
| | | ६भा. | ३ | आदिर्यस्येति। | „ |
| | द, | ३प्र० | २ | पश्चादिकारोऽवयवत्वमागच्छति | „ |
| ३६२ | वा. | १प्र० | २ | कल्पितामेवार्थवत्तामाश्रित्य प्रकृतिप्रत्ययौ | „ |
| ३६६ | वा. | १प्र० | १ | संघातस्य पूर्वस्यान्तो न | „ |
| ३६७ | द. | ३उ० | २ | —मित्यनेन नलोपः | „ |
| ३६८ | | २भा. | ३ | पञ्चारलिनी | पठ० |
| | | | | दशारलिनी | „ |
| ३६९ | द. | १प्र० | २ | वधैकारार्थौकारौ प्राप्नुतो, | पाठान्तरम् |
| | | १उ० | ९ | तत्सदृशश्चैतयोरवयव इत्यर्थः ॥ | „ |
| | „ | „ ३भा. | ६ | तन्नानेनानिको व्यावर्त्यन्ते ॥ | „ |
| ३७० | द. | प्र० | २ | ओकारस्यौष्ठ्यस्यौष्ठ्य उकारो भविष्यतीत्यर्थः ॥ | „ |
| | | | ७ | टि. इति स्वीयप्रातिशाख्यशिक्षान्तरसंवादेन सस्थानत्वं वार्तिककृतोक्तम् | पठ० |
| ३७१ | वा. | ४भा. | २ ३ | भूयसश्च ग्रहणानि | पाठा० |
| | द. | १प्र० | २ | श्रवणाप्रसङ्गः, असमासे तु 'युक्तिरिति' | „ |

| पृष्ठे भागे ग्रन्थे पङ्क्तौ | | |
|---|---|---|
| ३७२ वा. २प्र० १ | पष्ठीदण्डकपाठाश्रयेणैतदुच्यते | पाठा० |
| ३७२ द० १प्र० १ | यावतां संवन्ध इत्यर्थः ॥ | ,, |
| ३७४ वा. १प्र० १ | पारार्थ्यसामान्यात्परि— | ,, |
| ३प्र० २ | फलिष्यतीति भावः ॥ | ,, |
| ३७५ द. प्र० ४ | अस्य च सूत्रस्य निर्दिश्य / अस्यैव निर्दिश्य | ,, |
| ३७७ वा. १प्र० २ | यत्र चानेकविधमान्तर्यं | ,, |
| ३७८ वा. २प्र० ३ / ४ | भवत्येतदुदाहरणम् / भवत्येव तदुदाहरणम् | पाठान्तरम् |
| ३८० वा. २प्र० २ | षष्ठ्यन्तेऽल्यनुसंहियेतेति भावः ॥ | ,, |
| ३८१ वामे वा. | स्थानेऽन्तरतमनिर्वर्तके | ,, |
| ४भा. १ / २ | विसं मुसलं पत्वं / विसं मुसलम् इण्कोरिति पत्वं | ,, |
| द. १उ. १ | प्रसक्तं तत्रैव दोष इत्यर्थः ॥ | ,, |
| ,, २ / ३ | आदेशरूपस्यैव तेन पत्वविधाना | ,, |
| १भा. १ | न प्रकल्पते / न प्रकल्पेत | ,, |
| ३८२ वा. १उ० २ | पाक्षिकसाधुत्वापत्तेरिति भावः ॥ | ,, |
| द. २उ. २ | स्थानिपदार्थस्येत्यर्थः ॥ | ,, |
| ३८४ वा. ३प्र० १ / २ | त्वेकमात्रिकमिति भावः ॥ | ,, |
| ३८५ द० १प्र. २ / ३ | भवतीति ऋश्रुतिस्थाने / भवतीति ऋश्रुतेः स्थाने | ,, |
| ३८६ वा. १प्र० १ / २ | पूर्वमेवान्त्यमिकमनुसंहियते | ,, |
| ३८७ द० वा. २ | निवृत्त्यर्थमिति चेदुदा | ,, |
| २भा. ४ / ५ | कृतिः हृतिः कृतं हृतं प्रकृतं प्रहृतम् | पठ० |
| प्रदीपे २ | स तूदात्तादिगुणो | ,, |
| ६ | रित्वोत्वादिभिरयं हि बाध्यत | ,, |
| ३८८ वा. २प्र. ३ / ४ | नियमेनाप्रतिपत्तिरवर्णाप्रतिपत्तिरिति | ,, |
| ३९१ द. २उ० १४ / १५ | वर्णविधौ सर्वत्रेति च / सर्वत्रेति च | पाठा० |
| ३९२ वा. २भा. ३ | इह यो द्वयोः षष्ठीनिर्दिष्ट— | ,, |
| २प्र० ५ / ६ | आनङादेस्तु समुदायस्या— | ,, |

| पृष्ठे भागे ग्रन्थे पङ्क्तौ | | |
|---|---|---|
| द० ४उ. ४ | तत्रान्तादिवद्भावाप्रवृत्तेः । | पाठा० |
| ३९३ द. वार्ति २ | हलादिःशेष | ,, |
| ३९४ वा. ९भा. १ | गीर्यते स्वय. | पठ० |
| २ | पूर्यते स्वयमेव | ,, |
| द. १भा. २ | पिपरुः बिभरुः | ,, |
| ,, ३भा. १ / २ / ३ | हलादिःशेष | ,, |
| ३९५ वा. १प्र. ६ | स्तदाप्यण् रपरो न स्या | पाठा० |
| ३९५ द० ३भा. १ | गीर्यते | पठनीयम् |
| ३९६ द० २प्र. २ | व्यवधानाभावात्तस्य स्यादेवादेशः | पाठान्तरम् |
| ३९७ वा. २भा. २ | पिपरुः बिभरुः | पठ० |
| ३भा. १ | प्रकर्ता | ,, |
| २ | प्रकर्तुम् | ,, |
| द. २उ. ४ / ५ | वचनैव निर्वाह इति भाष्य उक्तमिति | पाठा० |
| ३९८ ४भा. १ | इत्युच्येत | ,, |
| ३९९ वा. १प्र. ३ | मुपसंहियते । / आदेशो वा यो विवक्षितः | ,, |
| ४ | इत्येवं विज्ञायते । | ,, |
| द. १प्र. १ | यदुक्तमर्थवत आगमा इति | ,, |
| ४०० द. उ. १६ | परिभाषात्वमङ्गकृतं हि तत्त्वमिति भावः | ,, |
| ४०१ वा. १प्र० १ | सति सर्वादेशे ङित्क | ,, |
| वा. २प्र० ३ | वृद्धिप्रतिषेधार्थं ङित्त्वं ज्ञायते | ,, |
| द. ३भा. १ | "इदम दश" इतः, इह ॥ | पठ० |
| ४०१ द.३-४टि.१ | बहुत्र पुस्तकेषु | ,, |
| ४०२ द. प्रदीपे ६ | स्येत्येतद्बाधित्वा सर्वादेशो | पाठा० |
| ९ | ज्ञापने प्रयोजनम् | ,, |
| ४०३ द. प्र० ७ | वत्करणे त्विहातिदेशेन | ,, |
| ४०५ वा. १प्र० ७ | समाससद्भावात् | ,, |
| प्रदीपे ९ | पन्थाः सः । इति सुलोपो | ,, |
| ४०६ वा. २टि० १ | धानाशब्दस्य बहुवचनान्तत्वात् | पठनी० |
| ,, ४ | परश्शताः | ,, |
| द. १प्र. २ | —ण्यादेशः प्राप्स्यतीति भावः ॥ | पाठा० |
| ४०७ वा. २भा. १ | अस्ति चेह कश्चित् | ,, |
| ४०९ वा. उ० ९ | तेषामसंग्रहेण | पठ० |
| ४१० वा. १उ. ३ | शङ्किताह | [1]अपपाठः |

१ 'शङ्किताह' इत्येवं पाठेऽस्य पूर्वपक्षिग्रन्थत्वं प्रतीयेत ॥ तच्च नयुज्यते अस्य गूढवक्ष्यमाणाशयवतः सिद्धान्तिनो वाक्यत्वात् । अत एव 'नवेति विभाषा' इति सूत्रभाष्येऽपि भाषितेन 'नैतद्विचार्यंत अनड्वाह्मानड्वानिति। किंतर्हि ? 'आलब्धव्यो नालब्धव्य इति' इति सिद्धान्तेन संवादोपि भवतीति मयाऽस्यापि सिद्धान्तिवाक्यत्वसंपत्तये 'शङ्कितारमाह' इति पाठं कृत्वा सिद्धान्तिभाष्यव्याख्यायामेवोचितत्वेन योजित इति बोध्यम् ॥ दाधिमथः ॥

पृष्ठे भागे ग्रन्थे पङ्क्तौ

४१० द. २भा. ८ तत्रगुणः पाठा०

४१३ वा. २भा. ३ {आदिश्यते यः स त्वादेशः / य आदिश्यन्ते त आदेशाः} पाठा०

२उ० ३/४ {आदिश्यन्त इति । ,,

४१४ वामे २वा. २ {स्थानप्रयोगात् । ,,

द० भा. ४ भूतपूर्वोपि भवति ॥ ,,

४१४ द. ३भा. १ सन्ति चैवोत्तरपदिकानि ,,

द. ६भा. १ {कथं चेदं परिहारान्तरं स्यात्? ॥ ,,

टि० गौतमसूत्रे पठनीयम्

४१५ वा. ३ भा. ८ {न्यग्रोधांश्चाधीयमानान् / न्यग्रोधांश्चोपादीयमानान्} पाठा०

१४ {भवतिं चाधीयमानम् / भवतिं चोपादीयमानम्} ,,

द. १भा. १ {अपवादे तु उत्सर्गकृतं च प्राप्नोति ॥ / अपवादे उत्सर्गकृतं च प्राप्नोति । ,,

४१६ वा. उ० ८ विदूराद् ञ्य पठनीयम्

४१६ द. ८टि. १ किंचेति ॥[विशेषः—नित्त्वे तु ऋकारोऽनुदात्तः, पित्त्वे तूदात्तः स्यादिति दाधिमथाः॥]

४१७ द. १वा. १ जात्याख्यायां बहुवचनातिदेशे पाठा०

४१७ द० १भा. १ जात्याख्यायां बहुवचनातिदेशे ,,

४१८ द. ३उ० ४ न चेदं तथा ,,

४२० द. प्र० २/३ {निघातः प्राप्नोति निपातै ,,

टि० २ 'भाष्य' इत्यतःपरमेव मुद्रकप्रमादात् सर्वांधस्थितं "इव चात्र भाष्येऽपि द्विपदमनेकोपलक्षणम्—" इत्यादिकं पङ्क्तिनवकं पठनीयम्

४२२ वा. ३भा. १ {आम्विधौ स्नन्तस्य पाठा०

४२२ द. २प्र. १ {प्रत्याहारान्तर्भावात् ,,

४२४ द. प्र० ५ तकारच्छकारयोः समुदायनिर्देशात्सतुक् छकारः स्थानी । समुदायनिर्देशसामर्थ्या— पठ०

४२५ द. प्र. २ जाशब्दाकारस्य लोपो पाठा०

४२६ द. प्र. २/३ {लुक् । तस्य स्थानिवद्भावेन परनेकाच ,,

४२८ वा. १प्र० १/२ {पूर्वसेति षष्ठ्या ,,

४२८ द.० उ० १ {यलोपेऽवशिष्टस्य वेमिदित्यस्य पाठा०

४३० वा. २प्र० ३ संयोगान्तलोपोपलक्षणार्थत्वात् ,,

द० प्रदीपे ३ ननु चापरविधावित्युच्यमाने ,,

४ निमित्तापेक्षयाऽपरत्वविधानात् ,,

६ विधिरस्ति । ,,

११ स्थानिवद्भावाभावः ॥ ,,

४३१ द. २प्र० २ इत्यस्यानुपस्थानमिति भावः ॥ ,,

द० २उ. ४ वरेग्रहणाच्च ,,

४३२ वामे १प्र० १ विज्ञास्यते । ,,

२प्र. ३/४ {पदिक इत्येव भवति ॥ उदकं वहतीत्यण् । ,,

४३३ वा. १भा. ५ कुर्यां कुर्यां पठनीयम्

वा. ३प्र. १ अपर आह—परयणादेशोपीति ॥ पाठा०

४३४ वा. २उ. १/२ {नैतदस्योदाहरणमिति ,,

द. उद्द्योते १ दाहरणविषयपूर्वनिमित्तक ,,

४३५ वा. ,, १५ {मन्तरङ्गत्वं पूर्वयणादेशस्य, परयणा-
१६ {देशस्य वहिरङ्गत्वं तु निमित्ता- ,,

द०१भा०१ बहुखट्वक पठ०

४३७ वामे १ वा. तस्मात् स्थानिवद्वचनम् ॥ * ॥ पाठा०

द. १प्र. ५ असत्त्वावगतौ तु न सन्तीति ॥ ,,

द. २प्र. १ अमीषां ब्राह्मणानां मध्येऽन्त्या ,,

४३८ वा. २भा. ४ लुनीह्यत्र पुनीह्यत्र पठनीयम्

३भा. १ पञ्चारत्न्यः दशारत्न्यः ,,

४भा. यत् प्रपुनीह्यत्र यत् प्रलुनीह्यत्र ,,

४३८ द. १प्र. १ भावाद् गतिर्गतावित्यस्याप्रसङ्गः । अपपा[1]

४४० वा. १भा. ३ ततो ऽन्यतरद् व्यपदेष्टुम् । पाठा०

३प्र० १ वर्णग्रहणे तावज्जातिग्रहणा ,,

४४२ द. २भा. १ {णायामपि प्रकृताविति ,,

द. ३प्र. १ आदयतेर्णिच्चि लोपे कृते ,,

,, ,, ३ घात्यादिति लिङि वधादेशप्रसङ्गः ॥ ,,

४४४ वा. २प्र. २ नैतदुच्यते ॥ तत्र वेतसशब्दा ,,

द. प्रदीपे २ {न तु निर्वृत्तादिषु / दित्याश्रित्यैवमुच्यते ,,

द. २प्र. ३ {विघातव्ये स्थानिवत्त्व / सकारान्तस्य पदान्तत्वाद्रुत्व—} ,,

४४५ वा. १प्र. ३ स्थानिवद्भावनिषेधाद्दिना ,,

वा. ४भा. ३ {इदं च ब्रह्मन्ध्वा ,,

१ गतिसंज्ञकद्वयप्रयोगाभावादिति भावः ॥

| पृष्ठे | भागे | ग्रन्थे | पङ्क्तौ | | |
|---|---|---|---|---|---|
| ४४५ | द. | १प्र. | ३ | पदसंज्ञायां सत्यां धकारस्य | पाठा० |
| ४४५ | | २प्रदीपे | २ | सिध्यत्येवेति रूपमुपन्यस्तम् | ” |
| | | | ७ | यस्येति चेति लोपे | ” |
| ४४६ | वा. | १प्र० | १ | सिद्धः पदान्तत्वेनेति | ” |
| | | | २ | विधीयमानत्वान्नास्ति —कारलोपस्य स्थानिवत्त्वा- | ” |
| | | | ६ | तुल्यावधिकतया | ” |
| ४४६ | वामे | २प्र० | २ | प्रसङ्गः ॥ पङ्क्तिसिद्धिः । | ” |
| | द० | १उ. | ३ | पूर्वोदाहरणे डत्ववदत्रापि | ” |
| ४४७ | वा. | २प्र. | २ | नास्ति स्थानिवद्भावनिषेधः ॥ | ” |
| | द० | उ० | १० | वद्भावः प्रतिषिध्यते तथा | ” |
| ४४९ | वा. | ४भा. | १ | आकर्षिकः चिकीर्षकः जिहीर्षकः | पठ० |
| | | | २<br>३ | पञ्चारत्न्यो दशारत्न्यः | ” |
| | वा. | २प्र० | ८ | नाश्रीयते । व्यवधाने भविष्यतीति | पाठा० |
| | | | ९ | स्थानिवत्त्वनिषेधः कर्तव्यः । | ” |
| ४५० | वा. | ३प्र. | २ | लोपाजादेश इति विज्ञायते | ” |
| ४५० | द० | १उ. | ७ | धः, तत्र च तात्पर्यं | ” |
| ४५२ | वा. | ३प्र. | ४ | तस्य स्थानिवद्भावाचणः | ” |
| ४५२ | वा. | ५भा. | १ | यजादौ च भत्वं भवति यजादौ च भं भवति यजादौ भसंज्ञा भवति | ” |
| ४५३ | वा. | उ० | ५ | आनुग्रक्षणमेव पूर्वविधि- | ” |
| ४५४ | वा. | ३भा. | १ | औणादिक एष कप्रत्ययस्त— | ” |
| | | ७टि. | ८ | त्वम् । | पठनीयम् |
| | द० | टि. | १७ | लभ्यमानः | ” |
| | | | २० | भगवच्छब्दा·········ओष्ठशब्दादेव | ” |
| | | | २३ | संनिकृष्टावोष्ठौ | ” |
| ४५७ | वा. | ४भा. | ४ | रूपं स्थानिवद्भवतीति । | पाठा० |
| ४५७ | वामे | प्र. | २ | नन्वन्यदज्ग्रहणस्य | ” |
| ४५८ | द. | १प्र. | २ | जग्ल इत्यत्रापरिहृतम् | ” |
| | | २प्र. | ३<br>४ | अथवा द्विरुच्यतेऽस्मिन्निति अधि-करणे ल्युट् ॥ | ” |
| | द. | ५भा. | १ | कियन्तं कालमसौ स्थानि | ” |
| ४५९ | वा. | ३भा. | १ | कियन्तं कालमसावादे— | ” |
| | द. | ४भा. | २ | भवति णौ स्थानिवद् इति ॥ | ” |
| ४६० | वा. | प्र. | ४ | पु इति पवर्गग्रहणात् | ” |
| | | उ. | १० | तत्रानेन ज्ञापनेन व्यवाये | ” |
| | | | १३ | द्वित्वे यणाद्यभावे | ” |
| ६० | द. | २उ. | १ | कुतोऽपीति पृच्छति | ” |

| पृष्ठे | भागे | ग्रन्थे | पङ्क्तौ | | |
|---|---|---|---|---|---|
| ४६१ | द. | प्र. | ७ | संज्ञाप्रवृत्तिकालेऽस्ति ॥ | पाठा० |
| ४६२ | द० | प्र. | ३ | त्यत्रोत्त्वबाधनार्थं वक्तव्यम् ॥ | पठ० |
| | | | ९ | तथा च सति चक्रुरित्यादि | पाठा० |
| ४६३ | द. | १प्र. | २ | क्तस्यान्वाख्यानमनेन क्रियते | ” |
| | | २प्र. | २ | प्रत्ययस्य ञ्णितो विधानम् | ” |
| ४६४ | वा. | वार्ति. | २ | लोपसंज्ञित्वात् ॥ | ” |
| | | २उ. | २ | एकवचनमुत्सर्गत | ” |
| | | | ८ | नहि तत्सूत्रे | ” |
| ४६७ | द. | प्र. | ८ | इति सिध्यतीति षष्ठीनिर्देशार्थं प्रत्यय-ग्रहणम् । भाष्य— | ” |
| | | | १८ | षष्ठीनिर्देशार्थत्वमनवस्थितम् । तद-र्थत्वे हि प्रत्ययस्ये— | ” |
| ४३८ | वामे | भा. | ३ | दन्त्ये” इति “घोर्लोपो लेटि वा” इति लोपे | ” |
| ४६८ | वा. | वार्तिं. | | ॥*॥ उत्तरार्थं वा ॥*॥ | ” |
| ४६९ | वा. | २भा. | ५ | सेनानिकुलम् औत्तरपदिके | ” |
| | | २प्र. | २<br>३ | तल्लोपेऽपि भवति | ” |
| ४७० | वा. | प्र. | २<br>३ | प्रत्ययस्वरूपाश्रयेण प्रत्ययत्वरूपाश्रयेण | ” |
| ४७१ | वा. | १भा. | ५ | लक्षणवचनम् । एवमर्थमिद-मुच्यते ॥ | ” |
| | | प्रदीपे | ५ | स्वतन्त्रत्वमन्वाख्याने पूर्वसाह्याख्याना | ” |
| | द. | १प्र. | २ | लुगादिसंज्ञाभिर्बाधनादिति भावः ॥ | ” |
| ४७२ | ” | १प्र. | ३ | व्यापारा वा लुगादय आश्रीयन्ते | ” |
| | द. | २भा. | ५ | गोमतीभूतेति । | ” |
| ४७३ | द. | १भा. | १ | येषां कार्याणां न निमित्तं | ” |
| ४७५ | वा. | उ. | १ | निमित्तव्यपदेशमित्यर्थः ॥ | ” |
| | द. | १भा. | १ | “यचि—” इति | ” |
| | | उ. | ५ | जातगतस्त्रीत्वबोधन | पठ० |
| ४७६ | वा. | २भा. | २ | “यचि—” इति | पाठा० |
| ४७६ | द. | २उ. | १० | कार्यप्रवर्तकत्वम् । एवं च | ” |
| ४७७ | वा. | २प्र. | ४ | इयर्तेर्लेट् सिप् इतर्तेर्लङ् सिप् | ” |
| ४७७ | वा. | २उ. | ४ | भावः । न्यायेन पूर्वं लोपप्राप्तेरल्प-रूपविषयत्वात् ॥ विशेषविहितत्वा- | ” |
| | | २टि० | | लोभ इति पाठस्तु प्रकृतसंदर्भाविरुद्धश्च | ” |

पृष्ठे भागे ग्रन्थे पङ्क्तौ

४७७ वा. २टि. अम्करणवेलायां संबुद्धेर्वर्तमानत्वेन-
प्रत्ययलक्षणप्रक्तेः प्रयोजनाभावात् पठ०

४८० द. २भा.१ सर्वँस्तोमः सर्वँपृष्ठः ,,
३भा.१ सर्पिरागच्छ सप्तागच्छत ,,
४भा.१ माहि दाताम् माहि धाताम् ,,

४८१ वा. १प्र. १/२ गातिस्थाघ्विति लेर्लुक् । लेरेव लुकि पाठा०
२उ. ३ लुकि[1] पठ०
२भा. गर्गाः वत्साः विदाः उर्वाः ,,
२ उष्ट्रग्रीवाः ,,
१ च 'अत्रयः ,,
२प्र. ४ प्रतिषेधमिति शेषः ॥ ,,

४८१ द० १भा. १ पथिमथोः सर्वनामस्थाने लुमता
लुप्ते प्रत्ययलक्षणं न
भवतीति वक्तव्यम् । अपपा०
भा. २ पृथिप्रियो मथिप्रियः पठ०

४८२ वा. २भा. ४ इत्येष विधिर्न पाठा०
द. ३प्र. २ पदग्रहणमनुवर्तते ,,

४८३ वा. १प्र. १/२ वेङः पदान्तादतीति पदा ,,

४८४ द. १भा. १ पूर्वां प्राप्तिं बाधेत । ,,

४८६ द. २प्र. १ तिष्ठतिरहानौ वर्तते ,,
३ समयं मा हासीरिति गम्यते । ,,

४८७ वा. १प्र. २ सर्वस्य प्रयोगार्हस्य पदस्य ,,
२भा. १ चक्षुष्कामं याजयां चकार पठ०

४८८ द. १प्र. १/२ विषयस्यापहारा पाठा०
३भा० १ सर्वँस्तोमः सर्वँपृष्ठः पठ०

४९० द. १भा. ४ अनर्थके ऽलोन्त्यस्य विधिर्न पाठा०

४९१ वा. १प्र. १ आम्रेडितस्य वेत्येव ,,

४९५ द. १उ. ८ बहुवचनविभज्योपपदत्वादाह—
भाष्यकारेति । ,,
११ तत्रस्थभाष्येणाविरोध ,,

४९६ वा १प्रदीपे ४ अत्रायमर्थः स्यात्— ,,
४९६ द. १प्र. ३ कार्यमिति लभ्यते ,,

४९७ वा. २प्र. ३ परस्मिन् पूर्वं उपश्लिष्टस्तथा पूर्व— ,,
द. अधष्टि. १ अतएव 'द्वितीयसूत्रोदाहरणम्'
इति मूलग्रन्थः 'दृश्यते चातिङः

परस्य' इति भाष्यग्रन्थश्च संग-
च्छते । 'पचत्योदनम्' इत्यस्य
व्यावर्त्योदाहरणत्वेनेष्टोदाहरणोप-
न्यासस्याप्यवश्यकरणीयत्वात् । द-
ध्युदकमित्यत्रैवेति भावः । वस्तु-
तस्तु 'नियमार्थम्' इत्युक्त्यनुरोधेन
व्यावर्त्योदाहरणोपन्यासस्यैवावश्य-
करणीयत्वेन च्छायोक्तिश्चिन्त्यैवेति
बोध्यम् ॥ दाधिमथाः ॥ पठनीयम्

५०१ वा. १भा. ३ तत्रापि कृता प्रकृतौ षष्ठी इक
इति पाठा०

५०४ वा. १भा. ६ शब्दपूर्वकश्चार्थस्य संप्रत्ययः । ,,
१प्र. ५ अर्थस्योपलब्धुः शब्दपूर्वक ,,

५०५ वा. ३भा. १ नहि षकारान्ता संज्ञा ॥ ,,
३प्र. २ अत्र डकारान्तः शब्द ,,
द. ४प्र. ३ नहि तथाविधं ,,

५०६ वा. २भा. ५/६ धनपोषम् विद्यापोषम् अश्व-
पोषम् ,,
द. १प्र. १ तेन राजसदृशानां पाठा०
२ टिप्प. ५ सप्तमीबहुवचने तु भाष्यवार्तिकयोः
'अप्सु' इति कुत्वमङ्गीकृतम् पठनीयम्

५०८ वा. १भा. १ यत्नाधिक्याच्च भविष्यति ॥ पाठा०
द. २प्र. ५ अणादिकार्यं लभन्ते ,,

५०९ वा. ३भा. ४ संज्ञा क्रियते तथा— ,,
वा. २प्र. ३ यस्येति चेति चेति / यस्येति चेति च ,,
द० २भा. १ ह्रस्वसंप्रत्ययाद् इति चेत् ।
तन्न । किं कारणम् ? उच्चार्य-
माणः ,,

५१० द. २भा. ५/६ सैषोपदेशोत्तरकालाऽवरकाला
सती वर्णाना ,,

५११ द. प्र. ३/४ नान्तरीयकं तु व्यक्त्युच्चारणम् । ,,

५१३ वा. १प्र. २/३ व्यक्तिपक्षे तु ,,
द० प्र. ४ स्थिते तु सूत्रे ,,

५१४ वा. उ. ३ वाक्यभेदः । अनुवादे तु ,,

---

१ अस्य एकपदस्वरप्रतिषेधवचनप्रयोजनवार्तिकत्वेनैवोपपत्तौ प्रतिषेधवार्तिकान्तरत्वकल्पने फलाभावात् । स्वरातिरिक्तकार्येपि प्रतिषेधार्थमिति तु वक्तुमशक्यम् । पूर्वपदस्य पदत्वाद्युपपत्तौ लोपाद्युपपत्तेः ॥ दाधिमथाः.

| पृष्ठे | भागे | ग्रन्थे पङ्क्तौ | | |
|---|---|---|---|---|
| ५१६ | वा. २प्र. | ३ | मनणुसु ग्रहणे चरितार्थम् ॥ | पाठा० |
| | द. १प्र. | ६ ७ | ऋत इद्धातोरित्यादौ यथा ॥ | ,, |
| ५१७ | वा. १भा. | ७ ९ | कश्चिच्चिरतरेण । (एतदन्तमेव) | ,, |
| | | १० ११ | पदातिश्चिरतरेण । (एतदन्तमेव) | ,, |
| ५१९ | द. प्र. | २ | मध्यगानामेव | ,, |
| | | ३ | स्वरूपस्य च ॥ / सहग्रहणाद्यन्तौ | ,, |
| ५२० | द. १प्र. | ३ | इत्यत्र नाश्रितं परिहारा— | ,, |
| | उ० | २ | प्रकरणेति ॥ | पठ० |
| ५२१ | द. प्रदीपे | २ | अन्त्यालन्त्यस्य / कार्येण भवितव्य | पाठा० ,, |
| ५२२ | द. प्रदीपे | ६ | अत्र च सूत्रार्थे | ,, |
| ५२३ | द. भा. | ४ | प्रत्ययविधौ नडस्यापत्यम् | ,, |
| | प्र० | ६ | हे कष्टं परमश्रितेति | ,, |
| ५२४ | वा. प्र० | ६ | ङीषि हि सति नद्या उदात्तत्व— | ,, |
| ५२५ | वा. २प्र. | ४ ५ | वृद्ध्युत्पादात्तदवयवा | ,, |
| | द. २उ. | १ २ | उक्तपरिमाणमानुपूर्वी | पठ० |
| ५२७ | द. प्रदीपे | १ | पूर्वग्रहणेऽकृते | पाठा० |
| ५२८ | वा. १प्र. | २ | सूत्रेणैवोपात्तम् | ,, |
| ५२९ | वा. प्र० | १ | द्वे षष्टी प्रमाणमस्येति | ,, |
| ५३० | ,, ५भा. | २ | पदाधिकारस्येदं प्रयोजनमुक्तम् | ,, |
| ५३० | द० १भा. | ३ | पदोपहतम्, अत्रापि स्यात् | ,, |
| | द. ४भा. | १ | पादयतेः क्विप् प्रत्ययः | ,, |
| ५३१ | वा. १भा. | ४ | परमसखायौ । चत्वारः | ,, |

| पृष्ठे | भागे | ग्रन्थे पङ्क्तौ | | |
|---|---|---|---|---|
| | द. प्रदीपे | २ | प्रत्ययग्रहणे यस्मात्स इति सिद्धे | पाठा० |
| | | ५ | अत्र हि तदन्तविधौ | ,, |
| | | ६ | यो निष्ठान्तस्तस्य नत्वं | ,, |
| | | ७ | ग्रहणे तदन्तग्रहणं नास्तीति | ,, |
| | द. प्रदीपे | १० | किं प्रयोजनम् । उच्यते | ,, |
| | | १४ | यत्र पञ्चम्यन्तात्परः प्रत्ययो विधीयते | ,, |
| | | १७ | अत्र गार्ग्यायण इत्येवोदाहरणम् / गार्ग्यायण इत्येवोदाहरणम् | ,, |
| ५३२ | द. भा. | १ | अलैवानर्थकेन तदन्तविधिर्भवति नान्येनानर्थकेनेति वक्तव्यम् | ,, |
| | | ४ ५ | पायसंकरोतीति मा भूत् | ,, |
| | प्र. | १० | ,, पायसं करोतीति । संपर्युपेभ्य | ,, |
| ५३३ | द. २प्र. | ४ ५ | अतिमहच्छब्दस्योत्तरपदत्वा | ,, |
| ५३५ | द. ३प्र. | ४ | चान्त्यनिवृत्त्यर्थं स्यात् | ,, |
| ५३६ | वा. २वार्ति. | | व्यञ्जनस्याविद्यमानवत्त्वं | ,, |
| | द. भा. | २ | वा नामधेयस्य वृद्धसंज्ञा वक्तव्या । पठ० / वृद्धसंज्ञा–वक्तव्या | पाठा० |
| ५३७ | वा. | २ | पिङ्गलकाण्व्यस्य पुत्राः | ,, |
| ५३७ | द. १भा. | १ | त्वात्पुत्राः मात्पुत्रा इति / त्वात्पुत्राः । | ,, |
| | द० १प्र. | २ | आदिग्रहणान्यथानुपपत्त्या | ,, |
| ५३७ | द. ४भा. | ६ | स यदा निष्क्रान्तकान्तारीभूतो भवति | ,, |
| | द. २प्रदीपे | ४ | बह्वादिग्रहणमनुवर्तेत इति | ,, |
| ५३८ | वा. प्रदीपे | २ | व्यवस्थितविभाषार्थं चेति / व्यवस्थितविभाषा चेति | ,, |

अधः कोष्ठके ( 'पाणिनेः' इत्यस्याधोभागे ) 'वृद्धि–तरप्–शिसर्व–प्रत्ययलोपे चतुर्दश' ॥ इति पठनीयम्

**सूत्रसंख्याकोष्ठकादधः—**

'वक्ष्यमाणस्यापि बुद्ध्या निरूपितत्वाद्भूतनिर्देशः' इत्यङ्गीकारेण 'उक्तपदघटितानां वार्तिकत्वम्' इति कथयतां प्राचां मते वार्तिकसंख्या

| १म आह्निके | २य आह्निके | ३य आह्निके | ४र्थ आह्निके | ५म आह्निके | ६ष्ठ आह्निके | ७म आह्निके | ८म आह्निके | ९म आह्निके | सर्वयोगः |
|---|---|---|---|---|---|---|---|---|---|
| २४ | ६७ | २६ | ३३ | ६६ | ८८ | ५८ | ७५ | १३१ | ५६८ |

'हेतुंकालसंप्रेक्षित्वाद्भूतनिर्देशः' इत्यङ्गीकारेण 'उक्तपदघटितानां भाष्यग्रन्थत्वम्' इति कथयतां नूतनानां मते वार्तिकसंख्या

| १म आह्निके | २य आह्निके | ३य आह्निके | ४र्थ आह्निके | ५म आह्निके | ६ष्ठ आह्निके | ७म आह्निके | ८म आह्निके | ९म आह्निके | सर्वयोगः |
|---|---|---|---|---|---|---|---|---|---|
| २४ | ६७ | २६ | ३१ | ६५ | ८८ | ५७ | ७२ | १२९ | ५५९ |

१ अस्य व्याकरणस्य वेदाङ्गत्वेन वेदानुकृतेरेवावश्यकरणीयत्वेन वेदे 'यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्' ( ऋ. ८।५।१३ ) इत्यादौ बहुत्रानद्यतनभूतप्रयोगस्य भाविति दर्शनादत्रापि तथैव प्रयुक्तमिति ऋषीणां त्रिकालज्ञत्ववादिन आस्तिकशिरोमणयः ॥

२ एतन्मतस्योपपादनं 'पूर्वसदृशसमोनार्थ—' इति ( २।१ पादे ) सूत्रे भविष्यति ॥ पठनीयम्

# ( निवेदना )

अयि गीर्वाणवाणी-विलासाऽऽसादिताऽमन्दाऽऽनन्दसन्दोहतरङ्गोत्तरङ्गान्तःकरणाः, सद्योऽनवद्यविद्या-विद्युद्विद्योतद्योतमानाः, भव्यभारतीनिकेतनायमानाः, शास्त्रपरिशीलनचातुरीधुरीणाः, विज्ञानेनाऽनिशं शास्त्रेषु पठितिनः सुकृतिनः कृतिनः ! विदितमस्तु तत्रभवतां भवतां यत्—सुरपतिमुकुटमन्दारमाल-ललितपरागरागरञ्जितपादारविन्दस्य भगवतो जगदवतो रमारमणस्य प्रसादात् इदं पातञ्जलमहाभाष्यस्य द्वितीयं संस्करणं प्रकाशयितुं लब्धावसरोऽस्मि । अस्मिन् संस्करणे यत्र तत्र टिप्पणी परिवर्द्धिता । मुद्रणानन्तरमुद्भूता नव्याः स्फूर्तयश्च पाठान्तरप्रदर्शकपत्रेषु योजिताः—इति ता—अपि यथास्थानं ततोऽवलोक्य पठनपाठने समुपयोज्याः ।

किञ्च—

"यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित् किञ्चिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥"

इति श्लोकस्योत्तरार्धमननुसरता मया एतत्संस्करणगतायां टिप्पण्यां निरर्गलं कल्पनाजालं प्रसारितम् । अतश्च प्रार्थये यत् सुधीवराः ! यद्यपि "निसर्गस्वैरिणी स्वरुच्यनुरोधिनी च भवति महतां मतिः" इत्यस्ति, तथापि पूर्वं तावद् विचारदृष्ट्याऽवलोकयन्त्विमाम्, अनन्तरंच स्तुवन्तु निन्दन्तु वा मामिति—भवद्रुच्य-धीनमिति ।

निवेदयामि वयं* शिवदत्तः ॥

(महेश्वरीय वैश्यान्तर्गतसोमाणीकुलगुरु-कुदालकुलोत्पन्नः)

---

* "अस्मदो द्वयोश्च" इत्यनेन साधु.

## ॥ श्रीदधिमथी जयति ॥

# महाभाष्यप्रदीपोद्द्योतटिप्पणी प्रारभ्यते ।

दधिर्भक्तजनान्धात्री मथी तदरिमाथिनी ।
देवी दधिमथी नाम धन्वदेशे विराजते ॥

[1]यत्क्षेत्रजाता जगतीतले जना गच्छन्त्यमी दाधि[2]मथाख्यया प्रथाम् ।
देवस्तुता श्रीदधिमथ्यसंशयं सोपासकानां विजयं सदा क्रियात् ॥
[3]वाराणसीयतु सदा जयपत्तनं मे विद्याविलासिभिरिदं सुमनीषिवर्यैः ।
श्रीरामसिंहनृपमालिक इत्यवेत्य विद्यालतामवपदादृतधीरवीरः ॥
उप्तां तु तां समवलोक्य निजेन पित्रा विद्यालतां नृपतिमाधवसिंहवीरः ।
संजीव[4]नादिपरिरक्षणसक्तचित्तः संवर्धयत्यनिशमात्मयशोभिवृध्यै ॥

अर्जुनयशसो जिष्णोः क्षितिपतितिलकस्य यस्य धात्रैव । क्लृप्तो न[5]न्दकिशोरो नन्दकिशोरोपमो मन्त्री ॥
मयि माधवेऽपि चास्मिन्नन्दकिशोरे च को भेदः । येनेतीव ज्ञात्वा नन्दकिशोरेऽर्पितो निजो भारः ॥
सद्धजनिवासनिरते नन्दकिशोरे विहारमाचरति । मा[6]धवजनितानन्दे को न सुखी जयपुरारामे ॥

पा[7]रं चेत्तु भवान् परं सुबहुशः सम्प्राप्तवान् मित्र—क
हित्वा तर्हि मदं नृणामपमतिं हृत्वा च धीमद्र—र ।
श्रीलोभं मनसा वहाय हृदया—नन्दापहं भूरि—शो
माचन्तं नृपमा—धवं प्रतिगिर—न्दक्षं सुशंसेत—कि ॥

धन्वदेशे ख्यातमस्ति डीडवाणाख्यपत्तनम् । तत्तु हित्वा दाधिमथो विप्रः कुद्दालगोत्रजः ॥
वंशीधरसुतो राधाकृष्णभक्तो महामतिः । राधाकृष्णः सूर्यमल्लवासुदेवान्वितो ययौ ॥
सुप्रसिद्धे जयपुरे दूणीनगरपालकम् । गोगावतं शंभुसिंहं पुत्रदर्शनलालसम् ॥
पुत्रार्थं प्रार्थितस्तेन सुतं साहेबरामकम् । प्रेषयामास च प्रीतो दूणीं प्रार्थितसिद्धये ॥
पुत्रेष्टिसंजातसुतः प्रहृष्टो दूणीशगोगावतशंभुसिंहः । यस्मै ददौ गेहसमन्वितं सद्ग्रामत्रयाधिष्ठितभूमिभागम् ॥
सा[8]नन्दरामस्तनयो बभूव साहेबरामस्य सुधीवरस्य । अनन्तपादार्चनलब्धसिद्धिरनन्तविद्वत्कुलपूजिताङ्घ्रिः ॥
यत्कनिष्ठः सतां मान्यो युवा भ्रातृसमन्वितः । नाम्ना युगलकिशोरो मित्रोद्वाहे बहिर्गतः ॥
सितौदनमभुक्त्वैव निरपत्यो दिवं गतः । यत्तृप्त्यै नः कुलेऽद्यापि भोज्यते हि सितौदनम् ॥
व्र[9]जनिधिपूजानिरतश्छोटेलालः सुधीः सुतस्तस्य । विदुषः सदासुखाख्यात्तथा मनीरामतोऽवरजः ॥
जातस्तस्मात्सुधीः पुत्रो भक्तादेव्याः सुगर्भजः । प्रथमो ब[10]दरीनाथः सुमनोवृन्दवन्दितः ॥
द्विसंधानस्य टीकाकृच् शास्त्रगूढरहस्यवित् । पितृभक्तः सतां सेव्यः संततिभ्रातृवत्सलः ॥
परो रामकुमाराख्यो विद्वान्व्युत्पत्तिनिश्चलः । अनेकनगरग्रामपाठशालासु पाठकः ॥
प्रथमस्य तु पत्न्यौ द्वे प्रभूते भर्तृदैवते । पूर्वा गोदावरी यस्याः कुक्षितोऽहं विनिर्गतः ॥
गोविन्दीनामिकाऽन्या तु यस्यां जातः सुतोऽवरः । गोविन्ददत्तनामा यः काव्योपाध्यायशब्दभाक् ॥
विलोक्य मत्कृतिं धीरैः स्तुत्योहं वाच्य एव वा । यथैवास्मि तथैवास्मि किं वृथोक्तेन सूरिषु ॥
गुरुप्रसादलब्धार्थः शिवदत्तः सतां मतः । छायादिग्रन्थानालोच्य सारं संगृह्य यत्नतः ॥
प्रदीपोद्द्योतभाष्येऽहं टिप्पणीं कर्तुमुद्यतः । तत्र मात्सर्यमुत्सार्य क्षमितव्यं दयालुभिः ॥

तत्र पायगुण्डोपाख्यमहादेवसुतवेणीगर्भजवैद्यनाथकृता भाष्यप्रदीपोद्द्योतव्याख्या छायाख्या ।

---

१ दधिमथ्याः परं क्षेत्रं पुष्करादष्टयोजनम्' इत्युक्तेः पुष्करक्षेत्रादुत्तरभागेऽष्टयोजनान्तरे वर्तते ॥
२ प्राकृतभाषया "दाहिमह" इति नाम्ना प्रसिद्धाः इत्यर्थः । शत्रुचेतोदाहिमहत्त्वेन संस्कृतमपीदं सार्थकं नाम ॥
३ जन इति कर्तृभूतमध्याहार्यम् । आत्मानमिति कर्म वाऽध्याहार्यम् ॥ ४ संजीवनं मासिकदानादि ॥
५ नन्दकिशोरसिंहो गौडक्षत्रियः पितृभूतरामकृष्णभक्तानुनयो जयपुरप्रधानमन्त्री राजते । ६ माधवेन राज्ञा वसन्तर्तुना, मधुकर्तुनैव ।
७ प्रसादपद्यात् "पाहि श्रीमाधवनृप सहनन्दकिशोरक" इत्यर्थपद्यं निस्सरति । तत्र 'प्रकृत्याशिषि' इति 'वोपसर्जनस्य' इति वा सहस्य सादेशाभावः ॥
८ सः आनन्दराम इति च्छेदे 'सोचि लोपे चेत्' इति सोर्लोपः ॥ अस्य "अणदराम" नाम्ना प्रसिद्धिः ॥
९ व्रजनिधिरिति जयपुरमहाराजपूर्वपुरुषप्रतापसिंहप्रतिष्ठापितविष्णुमूर्तेर्नाम ॥ तस्य आनन्दरामस्य ॥ १० लोके 'बदरीलाल' नाम्ना प्रसिद्धिः ॥

## छायायाः आरम्भो यथा—

श्रीगणेशाय नमः।

पतञ्जलिमुमाकान्तं कमनीयविभूषणम्। सहस्रवदनाम्भोजं सुवासितजगद्गुणम्॥
योगिहृत्पद्मवसनं मूलमात्रविदारणम्। स्फोटाभिधं स्फोटमूलं रूपकारणकारणम्॥
**वैद्यनाथः पायगुण्डो** ध्यात्वा ध्यात्वा परं गुरुम्। भाष्यप्रदीपसदृद्योतान् व्याचष्टे गूढसंविदे॥
शास्त्रं निर्णायकं न्याय्यकत्वालापं (ऽ) मुनिसत्तमाः। सूत्ररूपेण कुर्वन्ति शिवस्यैवाज्ञयैव तु॥
अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम्। अस्तोभमनवद्यं च **सूत्रं** सूत्रविदो विदुः॥
मुनयश्च मनुष्याश्च प्रसादादेव शूलिनः। सूत्रव्याख्यां प्रकुर्वन्ति वार्तिकानां स्वरूपतः॥
'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते। तं ग्रन्थं ( **वार्तिकं** प्राहुः ) वार्तिकज्ञा मनीषिणः॥'
... ... ... ... ... ... ... ... ... । सूत्रार्थं भाष्यरूपेण यथावद्दर्शयन्ति च॥
'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुका(सा)रिभिः। स्वपदानि च वर्ण्यन्ते **भाष्यं** भाष्यविदो विदुः॥'
प्रसादादेव रुद्रस्य भवानीसहितस्य तु। कुर्वन्ति केचिद् व्याख्यानं भाष्यस्यैव तपोबलात्॥
पदच्छेदः पदार्थश्च विग्रहो वाक्ययोजना। आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम्॥
स्वबुद्ध्यधीतभाष्यार्थसंग्रहेणैव वाथवा। विस्तरेण प्रकुर्वन्ति केचित् प्रकरणात्मना॥
शास्त्रैकदेशसंसिद्धं शास्त्रकार्यान्तरे स्थितम्। आहुः **प्रकरणं** नाम शास्त्रभेदविचक्षणाः॥
सूत्रभाष्यादिभिः शास्त्रं साक्षाद्वेदनसाधनम्। श्रोतव्यं स्वगुरोः स्वात्मस्वरूपप्रतिपत्तये॥
आत्मलाभात् परं नास्ति किञ्चिन्मात्रमपि द्विजाः। **पराशरपुराणे** वै स्पष्टमेतन्निबोधत॥
जीर्णैरनुक्तमत्रोक्तं सूत्राद्यर्थप्रतीतये। ... ... ... ... ... ... ... ... ... ॥
**विष्णुधर्मोत्तरे** प्रोक्तं मार्कण्डेयेन धीमता। वज्रं प्रति यथा सर्वं प्रोच्यतेऽथ सैमा शृणु॥
तत्राज्ञायुक्तमदैर्घं दीप्तं गम्भीरशब्दवत्। क्वचिन्निरुक्तसंयुक्तं वाक्यमेतत्स्वयंभुवः॥ १॥
यत्किंचिन्मिश्रसंयुक्तं युक्तं नामविभक्तिभिः। प्रत्यक्षाभिहितं यच्च तदृषीणां वचः स्मृतम्॥ २॥
नैगमैर्विविधैः शब्दैर्निपातबहुलं च सत्। न चापि सुमहद्वाक्यं ऋषिकाणां वचः स्मृतम्॥ ३॥
अवि[स्प]ष्टपदं ज्ञेयमृषिपुत्रवचो नृप। भूतभव्यभवज्ञानं जन्मदुःखविकत्थनम्॥ ४॥
मित्राणां तु भवेद्वाक्यं गर्भेष्वार्षप्रवर्तनम्। आज्ञायुक्तं तु वचनं यथाहेतुविवर्जितम्॥ ५॥
**राजर्षीणां** तु विज्ञेयं बह्वर्थं बहुविस्तरम्। बह्वभिधानं बह्वर्थं **देवतानां** प्रकीर्तितम्॥ ६॥
बह्वभिधानमल्पार्थं **दानवानां** प्रकीर्तितम्। अल्पाभिधानमल्पार्थं **गन्धर्वाणां** तथा भवेत्॥ ७॥
दुर्बोधं विषमं चैव **राक्षसानां** प्रकीर्तितम्। गूढाक्षरं तु **यक्षाणां किन्नरै**रुक्तवत्तथा ?॥ ८॥
**नागाना**मतिविस्पष्टं पुनरुक्तसमन्वितम्। रागद्वेषसमायुक्तं हेतुमत्**पौरुषं** भवेत्॥ ९॥

इति चतुर्थोऽध्यायः॥

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च **सूत्रं** सूत्रविदो विदुः॥ १॥
उत्सर्गेणापवादेन द्विविधं तत्प्रकीर्तितम्। सूत्रेष्वेव हि तत् सर्वं यद्वृत्तौ समुदाहृतम्॥ २॥
सूत्रं व्युदासश्च तथा तथोदाहरणं नृप। प्रत्युदाहरणं चैव चतुरङ्गं प्रकीर्तितम्॥ ३॥
वाक्यं चैवाथ वाक्यार्थः पदार्थः पदमेव च। चतुरङ्गमिदं वेद तथैवान्यत्प्रकीर्तितम्॥ ४॥
प्रतिज्ञाहेतुदृष्टान्तमुपसंहार एव च। तथा निगमनं चैव पञ्चावयवमिष्यते॥ ५॥
आरम्भोऽथापि संबन्धः सूत्रार्थस्तद्विशेषणम्। चोदकं परिहारश्च व्याख्या सूत्रस्य षड्विधा॥ ६॥
विस्तरोक्तं मतिं हन्ति समासोक्तं न गृह्यते। समासविस्तरौ हित्वा वक्तव्यं यद्विवक्षितम्॥ ७॥
अपार्थं व्याहतं चैव पुनरुक्तं तथैव च। तथा विभिन्नसंस्थानं युक्तिहीनं विवर्जयेत्॥ ८॥

---

१ 'न्याय्यकलापं' इति पाठो भवेत्॥ २ 'नान्यथा' इति पाठो भवेत्॥ ३–३ ये खण्डे ४ थे ऽध्याये॥ ४ 'समासतः' इति पाठो भवेत्॥ ५ 'सूचीकानाम्' इति पाठ आसीत्॥

क्रमभेदो विभक्तश्च गुरुसूत्रं तथैव च। अभिधानस्य चान्यत्वं नैतानि स्युरकारणात् ॥ ९ ॥
पूर्वं कृत्वा पदच्छेदं समासं तदनन्तरम्। समासे तु कृते पश्चादर्थं ब्रूयाद्विचक्षणः ॥ १० ॥
सूत्रार्थश्च पदार्थश्च हेतुश्च क्रमशस्तथा। निरुक्तमथ विन्यासो व्याख्या योगस्य षड्विधा ॥ ११ ॥
उपोद्घातः प्रथमतः पदार्थः पदविग्रहः (हौ)। अविमर्शः प्रत्यवस्था व्याख्या तन्त्रस्य षड्विधा ॥ १२ ॥
प्रत्यक्षमनुमानं च तथाप्तवचनं भवेत्। त्रिभिः प्रमाणैः संयुक्तं तन्त्रं प्रामाण्यमर्हति ॥ १३ ॥
**प्रत्यक्षाभास**मप्युक्तं त(य)था वै मृगतृष्णिका। ............................ ॥ १४ ॥
**आभासमनुमानं** च बाष्परेणुचयौ यथा। धूमशङ्कां जनयतो नचैतद्[च वह्न्यु]पलब्धये ॥ १५ ॥
आप्तत्वं दर्शयित्वा तु यदनाप्तेन भाषितम्। तदाप्तवचनाभासं वदन्ति नृपसत्तम ॥ १६ ॥
रागद्वेषविनिर्मुक्त **आप्त** इत्यभिधीयते। नैरुक्तं द्विविधं विद्धि सिद्धमौत्पत्तिकं तथा ॥ १७ ॥
निर्वक्तव्यं तु तत्सिद्धमर्थसिद्धिस्तु सर्वदा। तत्र त्वौत्पत्तिकं सर्वं गौरश्वः पुरुषो यथा ॥ १८ ॥
दशधा तु गणोद्दीतं (क्षेप) (?) तद्वक्ष्यामि यथामतम्। ............................ ॥ १९ ॥
गौणो नैमित्तिको भाक्तः सांवादः कार्तकस्तथा। औपचारश्च सांबन्धः क्रैयिको यौगिकैच्छिकौ ॥ २० ॥
गुणात्तु **गौणं** पश्यामो महदित्येवमादयः। निमित्ततस्तु **नैमित्तं** खण्ड(ञ्ज)मुञ्जा (ण्डा)दिकं यथा ॥ २१ ॥
भक्त्या **भाक्तो** नृसिंहः स्यादमातरि च मातृवत्। समं वदन्ति यस्मिन् स **सांवादो** जित्वरी यथा ॥ २२ ॥
**कार्तकः** स्यात्तु कृतको देवदत्तादिको यथा। **औपचारश्चो**पचाराच्चैलं पाशं तुला यथा ॥ २३ ॥
संबन्धतस्तु **सांबन्ध**श्छत्री मीमांसको यथा। संयोगादपि **सांयोगः** क्रियायाः **क्रैयिकः** स्मृतः ॥ २४ ॥
षट्कुक्षुगुडश्चैचो जेयः शाकटिकस्तथा (?)। एवं परेषां च परं स्यात्रै(ग)मतिषण्डकम् ॥ २५ ॥
साध्योऽर्थो न प्रसिध्येत साधनानां विधिं शृणु। यद्विपन्नं तु दृश्येत तत्साध्यं साधनैः परैः ॥ २६ ॥
आत्मेन्द्रियमनोर्थानां संयोग उपदिश्यते। ज्ञानदेशादिसंदिष्टं **प्रत्यक्ष**मिति तद्भवेत् ॥ २७ ॥
बुद्ध्या शरीरयुक्तात्मा यश्च युक्तोऽनुमीयते। सोऽग्निं धूमाद्यथा विद्या**मनुमानं** तदिष्यते ॥ २८ ॥
वेदविद्याविरुद्धं यत्सा स्मृतिः शिष्टसंमता। अप्रत्यक्षफलं विद्यात्साधनं **शास्त्रसंज्ञितम्** ॥ २९ ॥
द्वयोः सदृशयोरेकं निर्दिष्टं साधयेत्परम्। गवयादिवं गोसिद्धि**रुपमानं** तदिष्यते ॥ ३० ॥
साध्योऽर्थश्चेदनुक्तोऽर्थाद्वाक्ये यस्मिन्प्रकल्प्यते। **सार्थापत्ति**र्दिवाऽभुङ्क्ते देवदत्त इतीति यत् ॥ ३१ ॥
निपातनाद्योगविभागदर्शनाद्गुरूपदेशादनुवार्तिकादपि ॥ स्वातन्त्र्यसिद्धेः परतन्त्रदर्शनात्प्रसादयेल्लक्षणतोऽथ षड्विधः ॥ ३२ ॥

इति विष्णुधर्मोत्तरे ३यखण्डे ५मोध्यायः ॥

अधिकरणं योगः पदार्थो हेत्वर्थः उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्गो वाक्यशेषोऽर्थापत्तिः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयो विधानं विपर्ययोऽतिक्रान्तवीक्षणमनागतवीक्षणं संशयो व्याख्यानमनुमतं स्वसंज्ञा निर्वचनं दृष्टान्तो नियोगो विकल्पः समुच्चय ऊह्यमिति ॥ तत्र यमर्थमधिकृत्योच्यते तद**धिकरणम्** ॥ येन वाक्यार्थो युज्यते स **योगः** ॥ योर्थोऽविकृतसूत्रपदे स **पदार्थः** ॥ यदन्ययुक्तिमदर्थस्य साधनं स **हेत्वर्थः** ॥ समासवचन**मुद्देशः** ॥ विस्तरवचनं **निर्देशः** ॥ एवमेवेत्यु**पदेशः** ॥ अनेन कारणेनेत्य**पदेशः** ॥ प्रकृतस्यानागतेन साधनं **प्रदेशः** ॥ अतिक्रान्तेनाति**देशः** ॥ अभिप्रायानुकर्षण**मपवर्गः** ॥ येनार्थः परिसमाप्यते पदेनाहार्येण स **वाक्यशेषः** ॥ यदकीर्तितमर्थमापाद्यते **सार्थापत्तिः** ॥ प्रकरणाभिहितोर्थः केनचिदुपोद्घातेन पुनरुच्यमानः **प्रसङ्गः** ॥ सर्वत्र यस्तथा स **एकान्तः** ॥ क्वचित्तथा क्वचिदन्यथा सो**ऽनेकान्तः** ॥ प्रतिषेधं (क्षेप) वचनं **पूर्वपक्षः** ॥ तस्योत्तरवचनं **निर्णयः** ॥ प्रकरणानुपूर्व्यं **विधानम्** ॥ तस्य प्रातिलोम्यं **विपर्ययः** ॥ इत्युक्तमित्यतिक्रान्त**वीक्षणम्** ॥ परत्र वक्ष्यामीत्य**नागतवीक्षणम्** ॥ उभयतो हेतुदर्शनं **संशयः** ॥ तत्रातिशयवर्णना **व्याख्यानम्** ॥ परमताप्रतिषिद्ध**मनुमतम्** ॥ परैरसंमतः शब्दः **स्वसंज्ञा** ॥ लोके प्रतीतमुदाहरणं **निर्वचनम्** ॥ तद्युक्तिनिदर्शनं **दृष्टान्तः** ॥ इदमेवेति **नियोगः** ॥ इदं वेदं वेति **विकल्पः** ॥ इदं चेदं चेति **समुच्चयः** ॥ यदनिर्दिष्टं युक्तिगम्यं तदू**ह्यम्** ॥ इति।

प्रयोजनं संशयनिर्णयौ च व्याख्याविशेषो गुणलाघवं च। कृतव्युदासोऽकृतशासनं च स वार्तिको धर्मगुणोऽष्टकश्च ॥

इति विष्णुधर्मोत्तरे ३यखण्डे ६ष्ठोध्यायः ॥

यद्यपि नोन्नितमिदं दुर्बद्धेऽस्मिन् मन्दतः। तथापि श्रीमद्दयया प्रवृत्तोऽहं समीरितः ॥

॥ श्रीः ॥

## श्रीमद्भगवत्पतञ्जलिमुनिरचितं

# महाभाष्यम् ।



## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः

## तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतश्च प्रारभ्यते ।

## प्रथमाध्याये प्रथमपादे प्रथमाह्निकम् ।

### श्रीगणेशाय नमः ॥

**(उद्द्योतः)** नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् । पाणिन्यादिमुनीन् वन्द्यान् पितरौ च सतीशिवौ ॥ १ ॥
नागेशभट्टो नागेशभाषितार्थविचक्षणः । हरिदीक्षितपादाब्जसेवनावाप्तसन्मतिः ॥ २ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् । शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः ॥ ३ ॥
नातिविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् । भाष्यप्रदीपव्याख्यानं कुर्वेऽहं तु यथामति ॥ ४ ॥

भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति—

**(प्रदीपः)** सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् ॥ सदसद्रूपतातीतमदृश्यं मायया वृतैः ॥ १ ॥
ज्ञानलोचनसंलक्ष्यं नारायणमजं विभुम् ॥ प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ॥ २ ॥
पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् ॥ सरस्वतीं च तां नत्वा सर्वविद्याधिदेवताम् ॥ ३ ॥
पदवाक्यप्रमाणानां पारं यातस्य धीमतः ॥ गुरोर्महेश्वरस्यापि कृत्वा चरणवन्दनम् ॥ ४ ॥
महाभाष्यार्णवावारपारीणं विवृतिप्लवम् ॥ यथागमं विधास्येऽहं कैयटो जैयटात्मजः ॥ ५ ॥

**(उद्द्योतः)** **सर्वेति** । क्त्वान्तानां पञ्चमश्लोकोत्तरार्धेनान्वयः । **सर्वाकारत्वं** सर्वोपादानकारणत्वान्मृदादिवत् ॥ कार्यातिरिक्तदृश्यस्वरूपाभावाद् **निराकारत्वम्** ॥ कर्तृत्वाद् **विश्वाध्यक्षत्वम्** । स ऐक्षतेति श्रुतेः ॥ **अतीन्द्रियत्वं** विगतेन्द्रियत्वेन—**पश्यत्यचक्षुः** इत्यादिश्रुतेः ॥ सर्वप्रत्यक्षीकरणं तु स्वरूपचैतन्येनैव । इन्द्रियाविषयत्वेन वातीन्द्रियत्वम् ॥ **सदसद्रूपता** प्रपञ्चधर्मः । एतच्च **स्त्रियामिति** सूत्रे वक्ष्यते । तामतीतं तद्रहितमित्यर्थः । एवं च सदेवेति भावः ॥ नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह—**अदृश्यमित्यादि** ॥ **मायया वृतैरित्यस्य** कृत्यमाह—**ज्ञानेति** । **तत्त्वमस्यादिमहावाक्यजनिताखण्डाद्वितीयसच्चिदानन्दब्रह्माकारा** वृत्तिर्ज्ञानं तदेव लोचनं तेन संप्रेक्ष्यमित्यर्थः ॥ **नारायणमित्यादि** । सर्वनरसमूहान्तर्यामिणमित्यर्थः ॥ **सर्वविद्याः** वेदरूपाः । तद्विधायिनम् ॥ वचनसंदर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवतां नमति—**पुरुषा इति** । **देवत्वं** पाण्डित्यम् ॥ संप्रदायशुद्धिं द्योतयन् गुरुं

---

**(छाया)-उद्द्योते**—प्रारिप्सितप्रतिबन्धकशमनाय कृतं समुचितस्वेष्टदेवतानत्यात्मकं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च क्रमशो निबध्नाति—**नत्वेति** । पद्योक्तसर्वद्वितीयान्तानामत्रान्वयः । अस्य च कुर्वे इत्यत्रान्वयः ॥ **वागेति** । सरस्वतीमित्यर्थः ॥ इष्टदेवतानत्युत्तरं समुचितसरस्वतीनत्युत्तरं समुचितमुनिनतिमाह—**गुरूनित्यादि** । **गुरून्** जगद्गुरून् ॥ गुरुनत्युत्तरं मुनिनत्युक्तेर्भेदेन व्याख्यानमयुक्तमिति बोध्यम् ॥ पित्रादिस्मर्गायाह—**पितराविति** ॥ **चः** सर्वेषां [पूज्यानां] समुच्चायकः ॥ स्वकीर्तय आह—**नागेशेति** । **भट्टः** सकलशास्त्रज्ञः ॥ स्पष्टं चेदं **वेणीसंहरणव्याख्यायाम्** ॥ **नागेशेति** । फणिभाषितभाष्यमब्धिप्रारब्ध इत्यर्थः ॥ **प्रतच्छा-**

**सिद्ध इति । तद्यथा-देवदत्तो दत्तः, सत्यभामा भामेति ॥**

(प्रदीपः) **अथवेति** । कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते । न ह्यसौ संज्ञात्वेन विनियुक्तः । नचैकदेशात्स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते । प्रतीयमानस्य प्रत्यायकत्वासंभवादुच्चार्यमाणस्यैव वाचकत्वात् । एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः संज्ञा विनियोगकाले विनियुक्ता एव । लोपस्तु वर्णानां साधुत्वं मा भूदित्यन्वाख्यायते । इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात्सिद्धश्रुतिरुपात्ता प्रकर्षं गमयति— **अत्यन्तसिद्ध इति ॥**

(उद्द्योतः) **अथवेति** । मनुष्यवृक्षाद्यपेक्षयाकाशादीनामप्यत्यन्तं सिद्धत्वमिति भावः ॥ **प्रतीयमानस्येति** । एतदणुदित्सूत्रे उपपादयिष्यते ॥ **एवं तर्हीति** । एवमेव घटपदं कलशपर्याय इत्यादिप्रयोगाः । अन्यथा पर्यायवाचीति प्रयोज्यं स्यात् ॥ **विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप** इति लोपविधायकं तर्हि किमर्थमत आह—**लोपस्त्विति** । **वर्णानाम्** देइत्यादीनाम् । तत्रापि क्वचित्पूर्वपदस्यैव क्वचिदुत्तरपदस्यैव क्वचिदुभयोरिति लोकव्यवहारेण निर्णेयम् । एवं वर्णानां शक्त्यभावोपि तत एव निर्णेय इति तत्त्वम् ॥ **निष्पन्नत्वेति** । विद्यमानकालसंबन्धो निष्पन्नत्वम् ॥

(समाधानान्तरभाष्यम्)

**अथवा "व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः ॥**

(प्रदीपः) न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह— **अथवेति** । नहि संदेहमात्रादलक्षणता भवति, पुनः प्रमाणान्तरेण निश्चयोत्पादात् ॥

(उद्द्योतः) ननु निर्युक्तिकं व्याख्यानमयुक्तं [illegible] संभवादत आह—**न्यायाद्वेति** । वृद्धव्यवहारादे[illegible]न्धानां नित्यत्वं सङ्ग्रहादौ स्थितमिति व्याख्यानतः तदेवोपात्तमित्यर्थः ॥

(आक्षेपभाष्यम्)

**किं पुनरनेन वर्ण्येन । किं न महता कण्ठेन नित्यशब्द एवोपात्तः यस्मिन्नुपादीयमानेऽसंदेहः स्यात्? ॥**

(प्रदीपः) **वर्ण्येनेति** । प्रयत्नव्याख्यातव्येनेत्यर्थः ॥

(समाधानभाष्यम्)

**मङ्गलार्थम् ॥**

**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति ॥**

(प्रदीपः) **माङ्गलिक इति** । अग[illegible]ष्टार्थसिद्धिर्मङ्गलं तत्प्रयोजन आचार्यो माङ्गलिकः ॥ **प्रथ**[illegible] । अध्ययनस्याविच्छेदात् ॥ **वीरपुरुषाणीति** । श्रोतॄणां परैरपराजयात् ॥ **आयुष्मत्पुरुषाणीति** । शास्त्रानुष्ठाने धर्मोपचयादायुर्वर्धनात् ॥ **सिद्धार्था इति** । अध्ययननिर्वृत्तिरेव तेषां सिद्धिः ॥

(उद्द्योतः) **सिद्धिर्मङ्गलमिति** । तस्या मङ्गलत्वं च कार्ये [illegible]चारादिति बोध्यम् ॥ **तत्प्रयोजनमस्येति** प्राग्वती[illegible]तत्र मङ्गलानुष्ठानप्रयोजनान्याह—भाष्ये **मङ्गलादीनी**[illegible] ॥ ग्रन्थे तन्निबन्धनस्य फलमाह—**अध्येतारश्चेत्या**[illegible] आनुषङ्गिकमङ्गलसंपत्त्येत्यर्थः ॥ **अध्ययननिर्वृत्तिः** [illegible] ॥ **सिद्धिः** । सिद्धिविषयोऽर्थः ॥ **मङ्गलार्थमित्यनेनेत** प्रवृत्तिः सूचिता ॥

(समाधानभाष्यशेषभाष्यम्)

**अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते ॥**

**किं तर्हि ! ॥**

**आभीक्ष्ण्येपि वर्तते । तद्यथा नित्यप्रहसितो नित्यप्रजल्पित इति । यावताभीक्ष्ण्येऽपि वर्तते तत्रा-**

---

१ अयं भावः—समुदायैकदेशः श्रुत एकसंबन्धिज्ञानमि[illegible]स्कारपाटवादेव शब्दस्मारकस्तत एव बुद्ध्युपारूढात्संघातादेवार्थप्र[illegible]

२ अस्यार्थस्य लोकसिद्धत्वेन कृष्णसर्पादावनतिप्रसङ्गः । अ[illegible]नादौ सेन इत्यादेर्न तत्त्वम् । अतएवानुभवविरुद्धत्वस्याव्यवहा[illegible] भावः ॥ छाया ॥

३ महता कण्ठेनेति । दोपयुक्तवाक्यमुपांशूच्यते निर्दुष्टं तूच्चैरिति लोकप्रसिद्धमिति निर्दुष्टतानेन सूचिता ॥ छाया ॥

४ क्वचित् 'मङ्गलार्थं च' इति पाठः । तत्र चेन नित्यार्थधीसमुच्चयः ॥ अर्थशब्दः प्रयोजनवाची ॥ छाया ॥

५ कार्ये कारणेति ॥ अन्नाशयेन तण्डुलमानयेति प्रयोगे पच्यते ओदन[illegible]त्यत्र च ओदने तण्डुलत्वोपचारवद् आयुर्वै घृतमितिवच्च समाप्तौ नत्यादि[illegible]वोपचार इत्यर्थः ॥ समाप्तावगार्हितत्वं च विघ्नाभावानुगृहीतत्वम् । तथाच [illegible]ागेनापूर्वद्वारा स्वर्ग इव नत्यादिना प्रतिबन्धकदुरितनिवृत्तिद्वाराभीष्टसमाप्तिः [illegible]साध्येत्युक्तं भवति । तथाच तत्र सिद्धशब्दप्रयोगस्य हेतुतास्तीति तदर्थं शास्त्रारम्भे तत्प्रयोग इति भावः ॥ छाया ॥

६ खलुरप्यर्थे । अयं नित्यशब्दोऽपीत्यर्थः ॥ क्वचित्—खल्वपीति पाठः । तत्र खलु निश्चये ॥ छाया ॥

७ यावतेति । यत इत्यर्थः ॥ छाया ॥

८ तत्रेति । अत इत्यादिः ॥ छाया ॥

---

1 (५।३।८२) सूत्रे 'अप्रत्यये तथैवेष्टः' इति वार्तिकार्थभूतमिदं "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति सूत्रेण विहितस्य ल्यबादेशस्य समासमन्तरानुपपन्नस्य समासज्ञापकपूर्वपदाप्रयोगेऽपि स्वकीये जाम्बवतीजयापराभिधाने पातालविजयकाव्ये "संध्यावधूं गृह्य करेण भानुः" इत्यत्र ल्यबादेशप्रयोगं कुर्वतो भगवतः सूत्रकारस्यापि संमतमेव ॥ एवं च रुद्रटालंकारव्याख्यायामस्य प्रयोगस्यापशब्दत्वं प्रकाशयन्नमिसाधुस्तु व्याकरणमर्मानभिज्ञ एवेति बोध्यम् ॥ इति दाधिमथाः ॥

प्यनेनैवार्थः स्यात्—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति । पश्यति त्वाचार्यो मङ्गलार्थश्चैव[1] सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति । अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः ॥

(प्रदीपः) नावश्यमिति । ततश्चाभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाङ्गनं तेषामेवान्वाख्यानं स्याद् न विरलप्रयोगाणाम् । विनापि च क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते । यथा आश्चर्यमनित्ये नित्यवीप्सयोरिति ॥

(उद्द्योतः) असंदिग्धो नित्यशब्दः किं न प्रयुक्त इत्युक्तम् । तत्रापि संदेहमा[illegible] अयं खल्विति ॥ आभीक्ष्ण्येन बाहुल्येन । अभीक्ष्णमिति पाठेऽप्ययमेवार्थः ॥ प्रयुज्यन्त इति । साक्षाच्छब्दे आभीक्ष्ण्यासंभवात्प्रयोगद्वारा तद् ग्राह्यम् । एवंच नित्यशब्दोपादानेऽपि सप्रयोजनकोऽत्यन्तरसंभवेन तत्रापि संदेह एवेति भावः ॥ नित्ये शब्दार्थसंबन्धे इत्यस्य शब्दार्थसंबन्धे ज्ञाते सति नित्ये नित्यप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति तात्पर्यम् ॥ नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथं केवलस्य प्रयोगोऽत आह—विनापि चेति ॥

(नित्यतासाधकपक्षनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

अथ[2] कं पुनः पदार्थं मत्वा एष विग्रहः क्रियते-सिद्धे शब्देऽर्थे संबन्धे चेति ! ॥

(समाधानभाष्यम्)

आकृतिमित्याह ॥

कुत एतत् ! ॥

आकृतिर्हि नित्या द्रव्यमनित्यम् ॥

(आक्षेपभाष्यम्)

अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः ! ॥

(समाधानभाष्यम्)

सिद्धे शब्दे अर्थसंबन्धे चेति । नित्यो ह्यर्थवतामर्थैरभिसंबन्धः ॥

(प्रदीपः) अर्थसंबन्धे चेति । द्रव्यपक्षे द्रव्यस्यानित्यत्वादर्थग्रहणं संबन्धविशेषणार्थमुपात्तम् ॥ अनित्येऽर्थे कथं संबन्धस्य नित्यतेति चेद्, योग्यतालक्षणत्वात्संबन्धस्य । तस्याश्च शब्दाश्रयत्वाच्छब्दस्य च नित्यत्वाददोषः ॥

(उद्द्योतः) नन्वेवमर्थग्रहणं व्यर्थमत आह—द्रव्यपक्षे इति । योग्यता बोधजनकत्वयोग्यता तादात्म्यम् । तदुक्तं भाष्ये नित्यो ह्यर्थवतामिति । शब्दानामित्यर्थः[3] ॥ ननु तादात्म्यस्य संबन्धत्वे कथं तस्य नित्यत्वमिति चेन्न । नष्टभाविवस्तुनोऽपि शब्देन बोधाद्बौद्धार्थेन तस्य तादात्म्यं नित्यमित्याशयात् । शब्दवृत्तिधर्मस्यैवार्थवृत्तिधर्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च ॥ शब्दस्य च नित्यत्वादिति । आकाशवत्तन्निष्ठः शब्दोऽपि नित्यः । व्यञ्जकाभावात्तु न सर्वदोपलम्भ इति भावः ॥

(द्रव्यपदार्थाभ्युपगमभाष्यम्)

अथवा द्रव्य एव पदार्थे एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे संबन्धे चेति । द्रव्यं हि नित्यमाकृतिरनित्या ॥

कथं ज्ञायते !

एवं हि दृश्यते लोके मृत्कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते । तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते । पुनरावृत्तः सुवर्णपिण्डः पुनरपरया कृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः । आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव । आकृत्युपमर्दैन द्रव्यमेवावशिष्यते ॥

(प्रदीपः) द्रव्यं हि नित्यमिति । असत्योपाध्यवच्छिन्नं ब्रह्म तत्त्वं द्रव्यशब्दवाच्यमित्यर्थः ॥ आकृतिरिति । संस्थानम् । ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम्, 'आत्मैवेदं सर्वम्' इति श्रुतिवचनात् ॥

(उद्द्योतः) ननु घटादिद्रव्यस्य कथं नित्यतेत्यत आह—असत्येति । स च कम्बुग्रीवादिमदाकारादिरूपस्तद्व्यङ्ग्यजातिरूपो

१ स्वरूपेण तस्य मङ्गलार्थत्वमिति सूचयन्नाह—मङ्गलार्थश्चैवेति । सिद्धशब्द एवादौ प्रयुक्तो मङ्गलफलकोऽपीत्यर्थः । मङ्गलातिशये फलातिशयसंभवेन मङ्गलांशत्वमुपेक्ष्यान्यथासिद्धत्वकथनं तस्यायुक्तमिति भावः ॥ छाया ॥

२ भगवदुक्तौ शिष्यः शङ्कते—अथेति । पदार्थद्वयस्य प्राक् प्रक्रान्तत्वादिति भावः ॥ छाया ॥

३ अर्थवतामित्यस्य जातिमतामिति एकार्थविशेषणामन्यार्थानामिति चार्थनिरासायाह—शब्दानामिति ॥ छाया ॥

४ कथमिति । तस्योभयरूपत्वादर्थस्य चानित्यत्वादिति भावः ॥ छाया ॥

५ 'पूर्वावयवसंयोगस्य द्रव्यारम्भकस्य विनाशेन पूर्वद्रव्यनाशे तेषामेव संयोगान्तराद्द्रव्यान्तरमुत्पद्यते' इति वैशेषिकमतनिरासायाह—आकृतिरन्या चान्या च भवति । द्रव्यं पुनस्तदेवेति ॥ छाया ॥

1 एतन्नित्यशब्दस्य बाहुल्यसमानार्थकत्वं "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति नित्यपदघटितसूत्रेण ङमुडागमं विधायापि "इको यणचि" इत्यादौ ङमुडभावं कुर्वतः "शप्श्यनोर्नित्यम्" इति नित्यं नुमं विधायापि "अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुंकरोति ।" इति स्वोपज्ञपातालविजयकाव्ये 'अपश्यती' इत्यत्र नुममकुर्वतः सूत्रकृतोऽपि संमतमेव ॥ एतेनास्य प्रयोगस्यापशब्दत्वं प्रकाशयन् रुद्रटालंकारव्याख्याता नमिसाधुरपास्तः ॥ इति दाधिमथाः ॥

वा ॥ भाष्ये यद्याकृतिशब्देन तद्व्यञ्जकमुच्यते तर्हि तदप्याविचकत्वेन व्यञ्जकानित्यत्वेनं चानित्यमित्याह—जातेरपीति । अनेनैतत्प्रकरणस्थाकृतिपदस्य व्यञ्जयव्यञ्जकोभयपरतां सूचयति । गौतमेनाप्युक्तं "जात्याकृतिव्यक्तयः पदार्थः" इति ॥ भाष्ये खदिराङ्गारसवर्णे कुण्डले भवत इति प्रयोगादच्व्यन्ते विकृतेः कर्तृत्वं बोध्यम् ॥

( आकृतिपदार्थाभ्युपगमभाष्यम् )

**आकृतावपि पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे संबन्धे चेति ॥**

(उद्योतः) आकृतिपदेन जातिरित्यभिप्रायेण भाष्ये आकृतावपि पदार्थ इति ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्-आकृतिरनित्या-इति ॥**

( समाधानभाष्यम् )

**नैतदस्ति । नित्याऽऽकृतिः ॥**

**कथम् ? ॥**

**न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति । द्रव्यान्तरस्था तूपलभ्यते ॥**

(प्रदीपः) **न क्वचिदुपरतेति** । अनभिव्यक्तेत्यर्थः । अद्वैतेन लोके व्यवहाराभावाद् व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम् ॥

(उद्योतः) क्वचिदुपरतेति कृत्वा न सर्वत्रोपरतेत्यन्वयः ॥ ननूपरमो नाशश्चेत्तत्काले एवान्यत्र सत्त्वं विरुद्धमत आह—अनभीति ॥ ननु परमार्थदृष्ट्या सर्वमनित्यमत आह—अद्वैतेनेति ॥ नित्यत्वमिति । सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालं तस्या अपि ध्रुवादित्वेन नित्यत्वमिति भावः ॥

( समाधानसाधकनित्यलक्षणभाष्यम् )

**अथवा नेदमेव नित्यलक्षणम्—ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति । तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते ॥**

**किं पुनस्तत्त्वम् ? ॥**

**तद्भावस्तत्त्वम् ॥ आकृतावपि तत्त्वं न विहन्यते ॥**

(प्रदीपः) **अथवेति** । असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते । त्रिविधा चानित्यता, **संसर्गानित्यता** यथा—स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः । उपधानापगमे स्वरूपप्रतिभास इति परिणामाभावः ॥ **परिणामानित्यता** यथा—बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः ॥ **प्रध्वंसानित्यता** सर्वात्मना विनाशः । एतत्त्रिविधानित्यताप्रतिक्षेपेण नित्यतां प्रतिपादयितुमुक्तं **ध्रुवमित्यादि** । तत्र **ध्रुवं कूटस्थमिति** संसर्गानित्यता परिहृता, **अविचालीति** परिणामानित्यता, **अनपायेत्यादिना** प्रध्वंसानित्यता ॥

(उद्योतः) अथावयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह—भाष्ये अथवेति । नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानं कूटस्थमिति । रूपान्तरापत्तिर्विचालः । यथा पयसो [illegible]रूपता । अनेन परिणामानित्यता परास्ता । उत्पत्तेः [illegible]त्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ नि[illegible]वृद्धीत्यनेन तृतीयो वृद्धिलक्षणः । अनुपजनेति [illegible]णामः । अनपायेति पञ्चमोपचयः । एतद्रूपविका[illegible] तदर्थः ॥ अव्ययेति षष्ठो विनाशः । इदं च ब्रह्म[illegible]त्वं यावद्व्यवहारमेकरूपस्थितपदार्थविषयं च ॥ अयमेव [illegible]दार्थः प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादि[illegible]ये तदपीति ॥ यस्मिंस्तत्त्वमिति । यस्मिन्विहतेऽपि [illegible] विहन्यते इत्यर्थः ॥ प्रवाहनित्यता चानेनोक्ता । [illegible]र्न नश्यति । आश्रयप्रवाहाविच्छेदादिति भावः ॥

( नित्यानित्यत्वविचारस्याप्रकृतत्वबोधकभाष्यम् )

**अथवा किं न एतेन-इदं नित्यमिदमनित्यमिति । यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्देऽर्थे संबन्धे चेति ॥**

(प्रदीपः) **यन्नित्यमिति** । बुद्धिप्रतिभासः शब्दार्थौ यदा-

१ च्व्यन्ते प्रकृतेः कर्तृत्वादाह—अच्व्यन्ते विकृतेरिति ॥ छाया ॥

२ मतान्तरमाह—आकृतावपीति । अपिना द्रव्यपरिग्रहः । अत एव मतान्तरत्वम् ॥ अथवेत्यादिः ॥ छाया ॥

३ नित्येति ॥ एकाकारानुगतधीहेतुत्वाज्जातेर्व्यवहारदशायां सर्वदा नित्यत्वमित्यन्ये ॥ छाया ॥

४ उपसंहरति—आकृतावपीति । अवयवसंस्थानरूपायामाकृतौ नष्टायामपि तत्त्वं तद्व्यञ्जयस्तद्वृत्तिधर्मो न विहन्यते आश्रयप्रवाहाविच्छेदादिति सापि नित्येत्यर्थः ॥ छाया ॥

५ जातेरिति । तद्व्यञ्जकावयवसंस्थानरूपाकृतेरित्यर्थः ॥ छाया ॥

६ ननु लक्षणे किमर्थबहूनि विशेषणानीत्यत आह—त्रिविधा चेति ॥ छाया ॥

७ परिणामाभाव इति । रूपान्तरप्रतिभासाभाव इत्यर्थः ॥ छाया ॥

८ प्रतिक्षेपेण निरसनेन ॥ छाया ॥

९ यथाश्रुतकैयटोक्तार्थाङ्गीकारे पौनरुक्त्यापत्तिरितोऽन्यथाव्याख्यानमाह—अथेति ॥ छाया ॥

१० यद्यप्यनपायेत्यादिना कैयटोक्तं प्रतिपाद्यं स्फुटमेव तथापि तावन्मात्रप्रतिपादनेऽन्तिमविशेषणेनैव सिद्धेऽनेकविशेषणोपादानं व्यर्थमतस्तस्य तात्पर्यान्तरमप्यस्तीत्याशयेन भाष्यीयक्रममुल्लिख्य षड्भावविकारक्रमेणाह—उत्पत्तेरिति ॥ छाया ॥

११ अत्र भगवता द्विविधं नित्यत्वं प्रतिपादितम् । कैयटोक्तमेकम् । जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंरूपषड्भावविकारशून्यत्वमपरम् । तदाह—इदं चेति । द्विविधमुक्तमित्यर्थः ॥ छाया ॥

१२ नित्यत्वानित्यत्वसाधनाग्रहे नास्माकं प्रयोजनमित्याशयेनाह—अथवेति ॥ छाया ॥

यदा शब्द उच्चारितस्तदातदाऽर्थाकारा बुद्धिरुपजायते इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः ॥

**(उद्द्योतः) यन्नित्यमिति** । व्यक्तिजात्याकृतीनां मध्ये यन्नित्यमित्यर्थः ॥ ननु शशशृङ्गादिपदार्थानां कथं नित्यत्वं तेषां स्वरूपस्यैवाभावादत आह—**बुद्धिप्रतिभास इति** । बाह्यः पदार्थो न शाब्दबोधे विषयः, किंतु बौद्धः । स च प्रवाहनित्य इति भावः ॥ एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

(प्रत्याक्षेपभाष्यम्)

**कथं पुनर्ज्ञायते-सिद्धः शब्दोऽर्थः संबन्धश्चेति!॥**

(१ प्रत्याक्षेपसमाधानवार्तिकद्वितीयखण्डम् ॥ २ ॥)

## ॥ * ॥ लोकतः ॥ * ॥

(भाष्यम्)

**यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति । ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते । तद्यथा-घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामीति । न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान्प्रयोक्ष्ये इति । तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते ॥**

**(प्रदीपः) लोकत इति** । अन्यथा कार्येषु वस्तुषु लोके व्यवहारः; अन्यथा नित्येषु । शब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वक इति शब्दादीनां नित्यत्वम् । घटादयः स्वार्थक्रियार्थिभिरन्यत आनीयन्त उत्पादविनाशयुक्ताश्चोपलभ्यन्ते । नैवं शब्दादयः ॥ **तावत्येवार्थमिति** । बुद्ध्या वस्तु निरूप्येत्यर्थः ॥

**(उद्द्योतः) शब्दादीनां नित्यत्वमिति** । व्याकरणानिष्पाद्यत्वमित्यर्थः ॥ **तावत्येवेति** । वैयाकरणकुलमगत्वैवेत्यर्थः ॥

(आक्षेपोपसंहारभाष्यम्)

**यदि तर्हि लोक एषु प्रमाणम्, किं शास्त्रेण क्रियते!॥**

(१ समाधानभूतं तृतीयखण्डम् ॥ ३ ॥)

## ॥ * ॥ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॥ * ॥

(भाष्यम्)

**लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते ॥**

**किमिदं धर्मनियम इति!॥**

**धर्माय नियमो धर्मनियमः, धर्मार्थो वा नियमो धर्मनियमः, धर्मप्रयोजनो वा नियमो धर्मनियमः ॥**

(प्रदीपः) अत्र भाष्यकारेण संभवन्तीमप्येकवाक्यतामनाश्रित्य वाक्यत्रयं व्यवस्थापितम् । **सिद्धे शब्दार्थसंबन्धे** शास्त्रं प्रवृत्तमित्येकं वाक्यम् । कथं ज्ञायत इति प्रश्ने **लोकतो** ज्ञायते इति द्वितीयम् । लोकत इत्यस्यावृत्त्या **लोकतोऽर्थप्रयुक्त** इत्यादि तृतीयम् ॥ **शब्दप्रयोग इति** प्रयोगग्रहणेन 'प्रयोगाद्धर्मो न तु ज्ञानमात्राद्' इत्युक्तं भवति । अर्थेनात्मप्रत्यायनाय प्रयुक्तोऽर्थप्रयुक्तः ॥ **धर्माय नियम इति** । चतुर्थ्या तादर्थ्यं प्रतिपाद्यते । संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानात् ॥ **धर्मार्थ इति** । धर्मार्थत्वान्नियम एव धर्मशब्देनाभि- इति कर्मधारयः समासः ॥ **धर्मप्रयोजन इति** । विषयेण नियोगाख्येन धर्मेण प्रयुक्त इत्यर्थः ॥

(उद्द्योतः) ननु सकृदन्वितस्य **लोकत** इत्यस्य पुनरर्थप्रश्नेनान्वयः कथम् । वार्तिके चैकवाक्यतयैवान्वयः प्रती- आह—**अत्रेति** ॥ **अनाश्रित्येति** । न्यूनतापरिहारायेत्यर्थः । **लोकत** इत्यस्य च लोकव्यवहारत इत्यर्थः ॥ भाष्ये **अर्थप्रयुक्ते इति** । अर्थज्ञानप्रयोजनेन कृत इत्यर्थः । परस्य विशिष्टार्थबोधो भवत्विति शब्दः प्रयुज्यते प्रयोगेर्णाविर्भूतशब्दज्ञानेनार्थज्ञानादिति भावः ॥ एवं प्राप्ते शब्दप्रयोगे शास्त्रेणास्येयं प्रकृतिरयं प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनकाः, न गाव्यादय इति नियमः क्रियत इति तात्पर्यम् ॥ **विधानादिति** । तादर्थ्यस्य पष्ठ्यर्थत्वबोधनाय त्वेवं प्रयोग इति भावः ॥ **चतुर्थीति** योगविभागो न भाष्यारूढः । सुप्सुपेति समास इत्यप्यगतिकगतिरित्येवं व्याख्यातम् ॥ द्वितीयपक्षात्ततीयं विशेषं दर्शयति—**लिङ्गादीति** । प्रभाकराङ्गीकृतमतेनेदम् ।

---

१ अर्थसंबन्धयोर्व्याकरणानिष्पाद्यत्वेन नित्यत्ववच्छब्दस्तेन तथेति तु केन प्रकारेण निश्चीयते इत्यर्थः । शास्त्रस्य निष्पादकत्वाच्छब्दस्यानादिपरम्परयासिद्धत्वात् । अन्यथा इन्द्रादीनां तत्कारणप्रवृत्त्यानर्थक्यापत्तेरिति भावः ॥ छाया ॥

२ नन्वेवं शास्त्रानर्थक्यम् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादित्याशयेन तृतीयं खण्डं व्याख्यातुं पृच्छति—यदि तर्हीति ॥ छाया ॥

३ वाक्यत्रयमिति । दृष्टान्तवाक्यं तु सर्वत्र भिन्नमेवेति नैकवाक्यताहानिरिति भावः ॥

४ तृतीयमिति । अत एव प्रश्नवाक्येषु क्रमेण 'प्रवृत्तम्' 'ज्ञायते' 'क्रियते' इति क्रियाभेदोक्तिरिति भावः ॥ छाया ॥

५ 'लोकत एव शब्दार्थसंबन्धे सिद्धे अर्थज्ञानप्रयोजनकृते शब्दप्रयोगेऽपि च सिद्धे शास्त्रेण गवादय एव प्रयुक्ता धर्मजनका न गाव्यादय इत्येवं धर्मनियमः क्रियते' इत्येकवाक्यतेत्यर्थः ॥ छाया ॥

६ ननु कथं प्रयोगस्यार्थज्ञानजनकत्वमिति चेत् । शृणु—शब्दप्रयोगेण हि शब्दाविर्भावः । आविर्भूतश्च शब्दः परेण श्रूयते । श्रवणेन च तदर्थस्मरणम् । ततो बोध इत्येवं शब्दप्रयोगस्यार्थधीजनकत्वमिति । तदाह—प्रयोगेणेति ॥ छा.

तन्मते हि लिङादीनामपूर्वकं कार्यं वाच्यम् । तदेव च स्वस्मिन् पुरुषं प्रयुञ्जानं नियोग इत्युच्यते । स एव धर्मस्तेन प्रयुज्यते आक्षिप्यते इति कर्मल्युडन्तः प्रयोजनशब्दः । स चासाधुनिवृत्तिरूपो नियमः । **धर्मप्रयोजन** इति षष्ठीसमासः । एवंच द्वितीये धर्मफलको नियम इत्यर्थः । तृतीये धर्मप्रयोज्य इत्यर्थं इति भेदः ॥ केचित्तु **धर्माय नियम** इत्यनेन प्रत्यवायपरिहाररूपधर्मायायं नियमः ॥ असाधुप्रयोगेऽधर्मोत्पत्तेः ॥ **धर्मार्थो नियम** इत्यनेन धर्मस्य यज्ञादेरङ्गभूत इत्यर्थः । **नानृतं वदेदिति** क्रत्वङ्गवाक्येन क्रतुवैगुण्यस्य बोधनात् ॥ **धर्मप्रयोजनो नियम** इत्यनेनैकः शब्द इति श्रुतेर्नियमादृष्टं पुरुषार्थकरं सूचितमित्याहुः ॥

( १ वार्तिकचतुर्थखण्डम् ॥ ४ ॥)

## ॥ * ॥ यथा लौकिकवैदिकेषु ॥ * ॥

(भाष्यम्)

**प्रियतद्धिता दाक्षिणात्याः[1]—'यथा लोके वेदे चे'ति प्रयोक्तव्ये 'यथा लौकिकवैदिके'ष्विति प्रयुञ्जते ॥ अथवा युक्त एवात्र तद्धितार्थः । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥**

**लोके तावद् 'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर' इत्युच्यते । भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते । शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तत्र नियमः क्रियते–इदं भक्ष्यमिदमभक्ष्यमिति ॥ तथा—खेदात्स्त्रीषु प्रवृत्तिर्भवति । समानश्च खेदविगमो गम्यायां चागम्यायां च । तत्र नियमः क्रियते–इयं गम्येयमगम्येति ॥**

(प्रदीपः) **प्रियतद्धिता इति ।** नायमपशब्दः किंतु ये लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते । आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः । यथा कश्चिद्वनसप्तय इति प्रयुङ्क्ते कश्चिद्वानसप्त्यमिति समूहप्रत्ययान्तम् ॥ **अथवेति ।** नात्रावयवावयविविभागः किं तर्हि लोकवेदव्यतिरिक्तसिद्धान्तशब्दार्थो[2]भयरूप इत्यर्थः ॥ **लौकिकः**, स्मृत्युपनिबद्धः । **वैदिकः**, श्रुत्युपनिबद्धः ॥ **शक्यं चानेनेति ।** [3]शंकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः । ततः पदान्तरसंबन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते इति **शक्यं क्षुदित्युक्तम् ।** यदा तु पूर्वमेव विशेषविवक्षा तदा शक्या क्षुदिति भवत्येव । यदा तु प्रतिघातस्यैव क्षुत्कर्म शकेस्तु प्रतिघातस्तदा क्षुधं प्रतिहन्तुं शक्यमिति भवति ॥ **खेदादिति ।** खेदयतीति खेदो रागः, इन्द्रियनियमासामर्थ्यं वा खेदः ॥

(उद्द्योतः) नन्वीदृशो धर्मनियमः क्व दृष्टोऽत आह भाष्ये **यथेति** ॥ ननु लोकवेदयोरित्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह—**प्रियतद्धिता इति** ॥ नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह—**नायमिति** ॥ **ते वेदलोकेति** । अवयवे समुदायशब्दप्रयोगदर्शनादिति भावः ॥ **आधाराधेयकल्पनया त्विति** । लोकवेदरूपसमुदायतदवयवयोरित्यादिः ॥ **नात्रावयवावयविविभाग इति** । तत्र भव इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः ॥ **कृतान्तेषु** । कृतान्तः सिद्धान्तः । तत्प्रतिपादकवाक्येष्वित्यर्थः ॥ **भक्ष्यं च नामे**त्यस्य तद्भवति यदिति शेषः ॥ शक्यं क्षुदिति सामानाधिकरण्यं कथं भिन्नलिङ्गत्वादत आह—**शकेरिति** । **तदा क्षुधमिति** ॥ ननु [5]प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य **स्वादुमि णमुलि**त्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न । प्रधानतिङन्तार्[6]थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात् । वस्तु[7]त इदमयुक्तमेवेति **स्वादुमी**त्यत्र निरूपयिष्यामः ॥ **खेद इति** । एवंच ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यकतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते तेषां साधुत्वबोधनात् । अर्थादपशब्दानामधर्मजनकत्वं बोध्यते, एकविधेस्तदितरनिषेधफलकत्वात् । यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमिति भावः । दृष्टान्तता त्वंशेन, वक्ष्यमाणवैदिकानां तु सर्वांशेनेति बोध्यम् ॥

(भाष्यम्)

**वेदे खल्वपि—"पयो[2]व्रतो ब्राह्मणो यवागूव्रतो**

---

१ वार्तिककृत इति शेषः । अनेन वार्तिककारस्य दाक्षिणात्यत्वं सूचितम् । निरर्थकशब्दाडम्बरकारित्वस्वभावेनोपहसनीयता तेषां तदन्तर्गतत्वादुपहासश्च कृत इति बोध्यम् । छाया ॥

२ भावनाद्वैविध्येन तत्स्वरूपमाह—शब्दार्थोभयेति॥तद्धितार्थ इति शेषः॥ इति च्छाया ॥

३ शकेरिति । क्षुत्सामानाधिकरण्यात्पूर्वमिति शेषः ॥ छाया ॥

४ इन्द्रियेति । तन्निग्रहाशक्तिजनितपीडेति तु तत्त्वम् ॥ छाया ॥

५ 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥'
इति हर्युक्तेः ॥

६ तिङन्तेति । प्रकृते तु कृदन्तमिति न तस्य विषय इति भावः ॥ छाया ॥

७ अभिमानपदसूचितामरुचिमाह—वस्तुत इति ॥ छाया ॥

८ धर्मोत्पत्तिश्चेति बोध्यम् ॥ छाया ॥

९ दोषश्चेत्यपि बोध्यम् ॥ छाया ॥

---

1 वस्तुतस्तु—उद्द्योते 'तत्र भव–' इत्यादि भवरूपतद्धितार्थप्रदर्शनात् 'शब्दार्थो भव–' इति क्वाचित्कः पाठः साधीयान् ॥ इति दाधिमथाः ॥

2 ब्राह्मणेऽप्यपि दयानन्दस्वामिरचितसंस्कारविधिग्रन्थ–प्रथमावृत्तिप्रकाशितब्राह्मणीयत्वस्यास्य 'वेदे खल्वपि' इत्युपक्रम्योक्तत्वेन 'शेषे ब्राह्मणशब्दः' इति ( पू० मी २।१।३१ ) जैमिनिमहर्षिप्रोक्तवेदभागत्वे संमतिर्दर्शिता ॥ इति दाधिमथाः ॥

**राजन्य आमिक्षाव्रतो वैश्यः" इत्युच्यते। व्रतं च नामाभ्यवहारार्थमुपादीयते। शक्यं[1] चानेन शालिमांसादीन्यपि व्रतयितुम् । तत्र नियमः क्रियते॥**

**तथा-"बैल्वः खादिरो वा यूपः स्याद्"इत्युच्यते । यूपश्च नाम पश्वनुबन्धार्थमुपादीयते। शक्यं चानेन यत्किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम्। तत्र नियमः क्रियते॥**

**तथा "अग्नौ कपालान्यधिश्रित्याभिमन्त्रयते—भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्" इति। अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति। तत्र च नियमः क्रियते—एवं क्रियमाणमभ्युदयकारि भवतीति॥**

(प्रदीपः) **पयोव्रत इति**। सत्यामर्थितायां पय व्रतयतीति नियमोऽयं न तु विधिरर्थित्वाभावे कारणाभावा

(उद्योतः) **व्रतयतीति**। अभ्यवहार्यत्वेनोपादत्ते, इत्य भाष्ये उच्छ्रित्यानुच्छ्रित्य वेति । संतक्ष्यासंतक्ष्य वेत्य निखन्यानिखन्य वेत्यर्थ इत्यन्ये॥

( दार्ष्टान्तिक उपसंहारभाष्यम् )

**एवमिहापि[2] समानायामर्थावगतौ शब्देन शब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति॥ एवं क्रियमाणमभ्युदयभवतीति॥**

(प्रदीपः) **समानायामिति**। यद्यपि साक्षादपभ्रंवाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनार्थं प्रत्याय केचिच्चापभ्रंशाः परम्परया निरूढिमागताःसाधुशब्दानस्मारयन्त एवार्थं प्रत्याययन्ति॥ अन्ये तु मन्यन्ते—साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति॥

(उद्योतः) ननु अपभ्रंशा न वाचका वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेः शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात्। तदनुसारेणैव चापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः **समानाया**मित्यनुपपन्नमिति शङ्कते—**यद्यपीति** ॥ **तथापीति** । एवंच वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाविशेषेण **समानायामित्युक्तम्** ॥ **निरूढिमागता इति**। ते च शक्तिभ्रमेण बोधका इति भावः॥ शक्तिभ्रमश्चेत्थम्—केनचित् गावीति प्रयुक्ते गौरिति साधुस्मरणात् प्रयोज्यस्य बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इति भ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति॥ वस्तुतो विनिगमनाविरहाद् भाषाशब्देष्वपि शक्तिरेवेत्याहुः[3]—**अन्ये त्विति** । साधुत्वं चैतन्मते शब्दगतधर्मसाधनतावच्छेदकवैजात्यमेव । यद्यपि **साधूनेव भाषेतेति** न श्रूयते, तथापि फलनिर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते। तत्र के साधव इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन निष्पादनात्तद्वारा शास्त्रेण धर्मनियमो विधीयत इति बोध्यम्॥ भाष्ये **शब्देनैवेति**। साधुनेत्यर्थः ॥ **एवं क्रियमा**णेति। शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः॥

इति शास्त्रस्य धर्मजनकताधिकरणम्॥

—०॰॰०—

( अनुपलब्धप्रयोगसाधुशब्दसाधकशास्त्रसार्थक्याधिकरणम् )

( २ आक्षेपवार्तिकम्॥ १॥)

॥ * ॥ अस्त्यप्रयुक्तः[1] ॥ * ॥

( भाष्यम् )

**सन्ति[4] वै शब्दा अप्रयुक्ताः। तद्यथा—ऊष, तेर, चक्र, पेचेति॥**

**किमतो[5] यत्सन्त्यप्रयुक्ताः ?॥**

**प्रयोगाद्धि भवाञ्छब्दानां साधुत्वमध्यवस्यति। य इदानीमप्रयुक्ता नामी साधवः स्युः॥**

(प्रदीपः) **अस्त्यप्रयुक्त[6] इति** । प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामप्यन्वाख्यानादप्रामाण्यमाशङ्कते॥

(उद्योतः) **अस्त्यप्रयुक्त** इत्यादेः प्रकृतोपयोगमाह—**प्रयोगमूलत्वादिति** । ॐलोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॐ इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्मः प्रयुक्तासाधुष्वधर्म इत्यर्थकेनेदं सूचितम्। एवंचाप्रयुक्तानामप्रयोगेणैवासाधुत्वानुमानादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमिति भावः॥ वार्तिकोक्तनियमानुपपत्तिश्चेत्यपि[7] बोध्यम्॥

१ शक्यमिति। भावेऽत्र प्रत्ययः । व्रतयितुमित्यत्रास्यान्वयः । शालिमांसादेस्तत्र। अत एव न काचिदनुपपत्तिर्नवा 'स्वादुमि णमुल्' इत्यत्रत्यसिद्धान्तविरोध इति बोध्यम्॥ छाया॥

२ दृष्टान्त उपपादितं दार्ष्टान्तिके योजयति—एवमिति॥ छाया॥

३ अत एव प्रकृतभाष्यसंगतिः। अनुभवोऽप्येवम्। सुशब्दाज्ञानां पामराणामपशब्दैर्जायमानस्यार्थबोधस्य सुशब्दस्मारणद्वारकत्वासंभवश्च॥ छाया॥

४ वार्तिके जात्यभिप्रायमेकवचनमिति सूचयन्व्याचष्टे—सन्तीति॥ छाया॥

५ दोषदातुराशयं तन्मुखादेवावगन्तुं तटस्थः शङ्कते किमत इति॥ छाया॥

६ ननु 'अस्त्यप्रयुक्तः' इति वार्तिकादिः 'तनूनाम्' इत्यन्तो ग्रन्थः प्रकृतानुपयोगादसंबद्धोऽत आह—अस्त्येति॥ छाया॥

७ वार्तिकोक्तेति॥ लोकतः प्रयोगे सिद्धे वैयर्थ्याच्छास्त्रं नियामकमिति तेनोक्तम्। यदि तु तेषामप्यन्वाख्यानं तर्हि शास्त्रस्यापूर्वविधित्वेन तस्य नोपपत्तिरिति भावः॥ एवं सत्याक्षेपिकी संगतिः स्फुटतरेति बोध्यम्॥ छाया॥

1 'अस्त्यप्रयुक्तः' इत्यस्य भागस्याग्रिमवार्तिकेऽपि सत्त्वेन पौनरुक्त्यवापत्त्या न वार्तिकत्वम्। किंतु आक्षेपबाधकवार्तिके प्रतिषेध्यनिरूपणाय भाष्यकृदुत्प्रेक्षितत्वमिति वदन्ति॥ यथा पूर्वमीमांसायां (१।२।२०) 'लोकवदिति चेत्' इति शङ्कासूत्रस्य 'न पूर्वत्वात्' इति दूषणसूत्रमुपलभ्यते। तथैवात्रापि पूर्वमाक्षेपवार्तिकमावश्यकम्। अत एव छायाकारेणाप्यस्याक्षेपवार्तिकस्योद्द्योतव्याख्यायां वार्तिकत्वमुपदर्शितम्। आक्षेपबाधकवार्तिके 'अस्त्यप्रयुक्तः' इत्यंशस्य स्पष्टार्थं वार्तिककारस्यैव पौनरुक्त्यमस्तु । भाष्यकारस्य वा प्रतिषेध्यग्रन्थपूरणम्॥ आक्षेपवार्तिकमन्तरा आक्षेपसाधकवार्तिकेन साधनीयमेव न स्यादिति तु दाधिमथा वदन्ति॥

भाष्ये किमत इति । अप्रयुक्तसत्त्वं नास्माकमनिष्टं साधुमात्रार्थत्वाद्व्याकरणस्येत्यर्थः ॥ उत्तरम्—प्रयोगादिति । तथा चाप्रयोगादसाधुत्वानुमानमिति भावः ॥

(आक्षेपासंगतिभाष्यम्।)

**इदं तावद्विप्रतिषिद्धम्—यदुच्यते—'सन्ति वै शब्दा अप्रयुक्ता' इति। यदि सन्ति नाप्रयुक्ताः, अथाप्रयुक्ता न सन्ति, सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम्। प्रयुञ्जान एव खलु भवानाह—सन्ति शब्दा अप्रयुक्ता इति। कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात्?॥**

(प्रदीपः) यथा घटादीनां विनाप्यर्थक्रियया सत्त्वं गम्यते नैवं शब्दानां, ते हि सर्वदा व्यवहाराय प्रयुज्यमानाः सन्तः सत्त्वेनावसीयन्ते इत्याह—इदमिति॥ कश्चेदानीमिति। उपहासपरम्॥

(उद्योतः) विप्रतिषिद्धत्वमुपपादयति—यथेति । एवं च सत्त्वे प्रयोग आवश्यक एव अप्रयोगे च सत्त्वमेव न स्यादिति भावः ॥ ननु लक्षणवशेन सत्त्वं केनाप्यप्रयोगाच्चाप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये—प्रयुञ्जान एवेति ॥ ननु मया प्रयुक्ताश्चेत्कि, तत्र सोपहासमाह—कश्चेदानीमिति । स्वयमेव प्रयोगं कृत्वा सन्ति चाप्रयुक्ता इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यः स्यादित्यर्थः । त्वत्प्रयोगेणैव प्रयुक्तत्वावगमेऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः ॥

(आक्षेपासंगतिबाधकभाष्यम्।)

**नैतद्विप्रतिषिद्धम्। सन्तीति तावद्ब्रूमः। यदेताञ्शास्त्रविदः शास्त्रेणानुविदधते॥ अप्रयुक्ता इति ब्रूमः। यल्लोकेऽप्रयुक्ता इति॥ यदप्युच्यते—कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यादिति। न ब्रूमोऽस्माभिरप्रयुक्ता इति॥**

**किं तर्हि?॥**

**लोकेऽप्रयुक्ता इति॥**

(प्रदीपः) उत्तरं तु शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाः, व्यवहारे तु न दृश्यन्त इत्युक्तम्॥

(आक्षेपभाष्यम्।)

**ननु च भवानप्यभ्यन्तरो लोके॥**

(समाधानभाष्यम्)

**अभ्यन्तरोऽहं लोके, न त्वहं लोकः॥**

(प्रदीपः) न त्वहं लोक इति। यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैवं मयैतेर्थे प्रयुक्ता अपि तु स्वरूपपदार्थका इत्यर्थः॥

(उद्योतः) ननु लोकान्तर्भूतस्य न त्वहं लोक इति वचो विरुद्धमत आह—यथेति। अर्थबोधाय शब्दान्प्रयुञ्जानो हि मम लोकत्वेनाभिमत इत्यर्थः॥

(३ आक्षेपबाधकवार्तिकम्॥ २॥)

## ॥ * ॥ अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात्॥ * ॥

(भाष्यम्)

**अस्त्यप्रयुक्त इति चेत्। तन्न॥ किं कारणम्?॥ अर्थे शब्दप्रयोगात्। अर्थे शब्दाः प्रयुज्यन्ते। सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते॥**

(प्रदीपः) अर्थे शब्दप्रयोगादिति। अर्थसद्भावः शब्दप्रयोगे लिङ्गम्। न हि विना शब्देनार्थप्रत्यायनमुपपद्यते॥

(उद्योतः) भाष्ये अर्थे शब्दप्रयोगादिति। अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः। तदाशयमाह—अर्थसद्भाव इति॥

(४ आक्षेपसाधकवार्तिकम्॥ ३॥)

## ॥ * ॥ अप्रयोगः प्रयोगान्यत्वात्॥ * ॥

(भाष्यम्)

**अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः॥ कुतः?॥ प्रयोगान्यत्वात्। यदेषां शब्दानामर्थेऽन्याञ्छब्दान्प्रयुञ्जते। तद्यथा—ऊषेत्यस्य शब्दस्यार्थे—क यूयमुषिताः, तेरेत्यस्यार्थे—क यूयं तीर्णाः, चक्रेत्यस्यार्थे—क यूयं कृतवन्तः। पेचेत्यस्यार्थे—क यूयं पक्वन्त इति॥**

(प्रदीपः) इतरोऽन्यथासिद्धतामाह—अप्रयोग इति। यतोऽन्ये तेषामर्थानां सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते। यद्यप्यूषेत्यस्य उषिता इति समानार्थौ न भवति परो-

---

१ पूर्वपक्षे तटस्थो दोषमाह—इदमिति॥ छाया॥

२ इतीति। इदं मिथ इति शेषः॥ छाया॥

३ शब्दानां सत्त्वस्य प्रयोगैकनिबन्धनत्वात्तदभावेऽपि तत्सत्ताङ्गीकरणं विरुद्धं प्रमाणाभावादित्याह—एवं चेति॥ छाया॥

४ इदं तावदित्याशङ्कां समाधत्ते—नैतदिति॥ छाया॥

५ अनुविधानं संस्कारः॥ छाया॥

६ लोके इति। अर्थबोधायेति शेषः॥ छाया॥

७ एवं विरोधं परिहृत्योपहासं परिहर्तुमनुवदति—यदपीति॥ छाया॥

८ मत्प्रयोगो न लोकप्रयोग इत्याशयेन परिहरति—न ब्रूम इति॥ छाया॥

९ 'अस्त्यप्रयुक्त' इत्याशङ्कां दूषयति—अस्त्यप्रेति॥ छाया॥

१० सन्तीति। सर्वथा मूलप्रयोगं विना न शास्त्रोपदेशः। यद्येषामसन्तोर्थास्तर्हि शब्दार्थयोरप्रसिद्ध्या शशशृङ्गादितोऽपि विप्रकृष्टतरत्वं स्यात्। तस्मादर्थाः कालादयः सन्ति। न च तेषां प्रतीतिः शब्दं विना संभवति। अत एव वक्ष्यति—शब्दपूर्वको ह्यर्थे संप्रत्ययः इति। तस्मादर्थे सति शब्दस्याप्रयोगो दुरवधारण इत्यर्थः॥ छाया॥

११ अन्यथासिद्धतामिति॥ अर्थप्रतीतेरिति भावः॥ एवंचोषादीनामर्थसद्भावात्प्रयोगसद्भावानुमानं न सिध्यति तत्प्रतीतेरन्यथाप्युपपत्तेरिति भावः॥ छाया॥

क्षतादेर्विशेषस्यानवगमात्तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते ॥

(उद्द्योतः) भाष्ये—प्रयोगान्यत्वादिति । प्रयुज्यत इति प्रयोगः शब्दः सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः । सर्वनाम्नां परनिपातः पूर्वनिपातप्रकरणानित्यत्वात् ॥ पदान्तरसहित इति । पदान्तरं क यूयमिति । तत्र क्तेत्यनेन साधनपारोक्ष्यं, निष्ठया भूतत्वं कर्तृत्वं च, यूयमित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं वा बहुत्वं च, वसेः साक्षाद् गत्यर्थाकर्मकेत्यत्र निर्देशात् तरतेर्गत्यर्थत्वात् कर्तरि क्तः ॥ नन्वाख्याते[1] क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक इति कथं लिङन्तसमानार्थत्वमिति चेन्न । विषयताविशेषानादरेण[2] तथोक्तेः । न चाख्याते क्रियाविशेष्यकबोधे पक्ष्यति भवति अपाक्षीद्भवतीति भूवादिसूत्रस्थभाष्यप्र... विरोधः, अतीतानागतपाककर्तृकसत्ताया वर्तमानत्वासङ्गते... वाच्यम् । वर्तमानसामीप्ये तत्र लटः सत्त्वात् । तरति ब्र... हत्यां योऽश्वमेधेन यजते इत्यादौ यत्कर्तृको यागस्तत्क... तरणमिति बोधः । अत एव ह्रस्वो नपुंसके इति सूत्रे र... ब्राह्मणकुलमिति क्रियाप्रधानमिति भाष्ये उक्तम् ॥

( ५ सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ अप्रयुक्ते दीर्घसत्रवत् ॥ * ॥

( भाष्यम् )

**यद्यप्यप्रयुक्ताः अवश्यं[3] दीर्घसत्रवल्लक्षणेना... विधेयाः । तद्यथा दीर्घसत्राणि वार्षशतिका... वार्षसहस्रिकाणि च । न चाद्यत्वे कश्चिदप्या... रति । केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिक... शास्त्रेणानुविदधते ॥**

(प्रदीपः) संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशा... कर्तव्यमित्याह—अप्रयुक्त इति ॥ ऋषिसंप्रदाय इति । वेदाध्ययनमित्यर्थः ॥

(उद्द्योतः) नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याप्रामाण्यं स्यादत आह—संप्रतीति । पाणिनेर्व्याकरणप्रणयनकाले इत्यर्थः । पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयत इति भावः । इदमपि यत्र भाष्यवार्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रायकमनुमानं बोध्यम् ॥ वार्षशतिकानीति । वर्षशब्दो दिवसपरः । यथाश्रुत एव वा ॥ आहरति । सामर्थ्यभावादिति भावः ॥ ननु सत्राणां बहुयजमानकानामृषिभिर्वसिष्ठादिभिः संप्रदीयमानत्वाभावादृषिसंप्रदाय इत्ययुक्तमत आह—वेदेति ॥ भाष्ये कृत्वेत्यनन्तरमधीयते इति शेषः । याज्ञिकाश्च कल्पसूत्रेणान्वाचक्षत इत्यर्थः । अत्र सत्राणां कर्मत्वम् ॥

( ६ सिद्धान्तसमाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सर्वे[4] देशान्तरे ॥ * ॥

( भाष्यम् )

**सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते[5] ॥**

(प्रदीपः) सर्वे इति । इदमत्र तात्पर्यम्—यस्य कस्यचिद्वचनात्प्रयोगाप्रयोगौ न व्यवतिष्ठेते, अपितु शिष्टानामेव वचनात् ॥

( आक्षेपभाष्यम् )

**नचैवोपलभ्यन्ते ॥**

(उद्द्योतः) अनुपलब्ध्या[6]ऽप्रयुक्तत्वं शङ्कते[7]—भाष्ये न चैवेति ॥

**उपलब्धौ[8] यत्नः क्रियताम् ॥ महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो[9] लोकाः; चत्वारो वेदाः[2] साङ्गाः सरहस्या बहुधा भिन्ना**

---

१ एतद्वार्तिकभाष्यसंमतत्वादाख्यातार्थविशेष्यक एव शाब्दबोधो न धात्वर्थविशेष्यक इति तथा वदन्तो वैयाकरणंमन्या अयुक्ता एवेति रत्नोत्तयसांगत्यं ध्वनयन्नाह—नन्वाख्यात इत्यादि ॥ छाया ॥

२ नादरेणेति । तथा च तत्समानविषयकत्वात्तत्त्वम्, नतु तत्समानविशेष्यकत्वादिनेति भावः ॥ छाया ॥

३ अवश्यमिति । तथापीत्यादिः ॥ छाया ॥

४ इदानींसमयेपि प्राक्प्रयोगा लक्षणेनानुमेया इत्युक्तं प्राक् । संप्रति 'प्रयोगोपि तेषां क्वचिदस्ति' इत्याह—सर्वे इति ॥ छाया ॥

५ एवं चैकत्र देशेऽप्रयुक्तत्वमात्रेण शास्त्रविषयत्वं नेति भावः ॥ छाया ॥

६ अनुपलब्ध्येति । योग्यानुपलब्ध्येत्यर्थः । यदि ते प्रयुज्यन्ते तर्ह्यवश्यं तेषामुपलब्ध्या भवितव्यं योग्यत्वात् यतो नोपलभ्यन्तेऽस्माभिरतस्तेऽप्रयुक्ता इति भावः ॥ छाया ॥

७ शङ्कत इति । आक्षेपक एवेति भावः ॥ छाया ॥

८ समाधत्ते—उपेति । योगाभ्यासः कर्तव्य इति भावः ॥ यद्वा—अन्यदेशस्थप्रयोगस्य तत्त्वेनायोग्यत्वादनुपलब्धेरनयोग्यानुपलब्धेश्चाभावासाधकत्वान्न तत्त्वम् । किं त्वन्यदेशस्थेनापि तद्देशाऽगमनं तत आगतेभ्यः श्रवणं च कार्यमित्यर्थः ॥ छाया ॥

९ सप्तद्वीपात्मकवसुमत्येव पारं गन्तुमशक्या का कथा लोकान्तरपारगमनस्येत्याह—त्रयो लोका इति ॥ छाया ॥

---

1 'समा मासा अहोरात्रास्तुल्या ब्राह्मणचोदिताः,' इति गृह्यासंग्रहोक्तिः "आदित्यो वा सर्व ऋतवः स यदैवोदेत्यथ वसन्तो यदा सङ्गवोथ ग्रीष्मो यदा मध्यन्दिनोथ वर्षा यदाऽपराह्णोथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ" इति ब्राह्मणमूलिकात्र प्रमाणम् । अत एव "सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु" इति पूर्वपक्षे "अहानि वाभिसंख्यत्वात्" (पू. मी. ६।७।३१-४०) इति जैमिनिनापि सिद्धान्तितं संगच्छते ॥ इति दाधिमथाः ॥

2 अत्र वेदशब्देनैव मन्त्रभागस्येव ब्राह्मणभागस्यापि ग्रहणम् 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति बहुभिरापस्तम्बादिभिरुक्तत्वात् । अत एव 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति सूत्रे जैमिनिमुनेरपि ब्राह्मणभागस्याम्नायपदेनाभिधानं संगच्छते । न्यायभाष्यकर्तुर्वात्स्यायनस्यापि 'विभागश्च ब्राह्मणवाक्यानां त्रिविधः' इत्युपक्रम्य—'एवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हति' इत्युपसंहारात्स्पष्टमेव मन्त्रब्राह्मणयोर्वेदशब्दाभिधेयत्वं संमतम् । 'उदितेनुऽदिते चैव' इति मनुस्मृतावपि ब्राह्मणभागस्य वेदत्वोक्तिः स्पष्टा । छन्दोब्राह्मणानि च तद्विषयाणि" इत्यत्र तु "नामाख्यातोपसर्गनिपाताश्च" इति भाष्यनिरुक्तवाक्ये गोबलीवर्दन्यायेन विशेषसमवधाने सामान्यपदस्य तद्विशेषातिरिक्तपरत्वाङ्गीकारेण निपातपदस्योपसर्गातिरिक्तपरत्वस्येव छन्दःपदस्य ब्राह्मणातिरिक्तपरत्वाङ्गीकारे न कोपि दोष इति दिक् ॥ इति दाधिमथाः ॥

एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः, एकविंशतिधा वाह्वृच्यं[1] नवधाथर्वणो[2] वेदः वाकोवाक्यमितिहासः पुराणं वैद्यकमित्[3]येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य 'सन्त्यप्रयुक्ता' इति वचनं केवलं साहसमात्रमेव ॥

(प्रदीपः) वाकोवाक्यमिति । वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते—यथा–"किं स्विदावपनं महद् भूमिरावपनं महद्" इति ॥ पूर्वचरितसंकीर्तनमितिहासः । वंशाद्यनुकीर्तनं पुराणम् ॥

(उद्योतः) [[4]त्रयो लोका इति । भूर्भुवःस्वरात्मका इत्यर्थः ॥] इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् । भुवरित्यनेनान्त्यपातालपर्यन्तसंग्रहः । स्वस्त्वेनोपरितनसकलसंग्रहः । रहस्यम् उपनिपत् । मन्वादिस्मृतयो वा वेदनि[5]गूढार्थप्रकाशकत्वात् । एवं च देशान्तरशब्दः शाखान्तरवेदान्तरोपलक्षक इति बोध्यम् ॥

एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा–शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते ।.दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ॥

(प्रदीपः) विकार इति । जीवतो मृतावस्था विकारस्तत्रेत्यर्थः ॥

(उद्योतः) भाष्ये—हंमतिरित्यत्र रंहतिरित्यत्र च गतिकर्मेत्यनुकर्पः ॥ दातिर्लवनार्थे इति । क्तिन्नन्तं क्तिजन्तं वा । लवनेऽर्थे दातिशब्दं प्राच्याः प्रयुञ्जते, तत्रार्थे दात्रशब्दमुदीच्या इत्यर्थः ॥

ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते ॥ क्व ? ॥ वेदे । तद्यथा–"सप्तास्ये रेवतीरेवदूष, यद्वो रेवतीरेवत्यां तमूष, यन्मे नरः श्रुत्यं ब्रह्म चक्र, यत्रा नश्चक्रा जरसं तनूनाम्" इति ॥

इति शास्त्ररचनावश्यत्वनिरूपणम् ॥

अथ शब्दज्ञानस्य धर्मजनकताधिकरणम् ।

( आक्षेपभाष्यम् )

किं पुनः-शब्दस्य ज्ञाने धर्मः, आहोस्वित्प्रयोगे?॥

(प्रदीपः) किं पुनरिति । "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति श्रुतिः । तत्र किं सम्यग् ज्ञातः कामधुग् भवति सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थः, आहोस्वित्सुप्रयुक्तः कामधुग् भवति सुप्रयुक्तत्वं तु सम्यग्ज्ञानादित्यर्थ इति प्रश्नः ॥

(उद्योतः) वार्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यामुभयोः श्रवणात्प्रश्न इत्याह—एकः शब्द इति । तत्र यदैकस्मादपूर्वं तदितरत्तदर्थमिति (पू० मी०) न्यायाद् द्वयोः साम्येन फलसंबन्धाभावाद्विकल्पायोगेनैकस्य प्राधान्यमपरस्याङ्गत्वं कल्प्यम् ॥ तत्र प्रथमं वा नियम्येतेति (पू० मी० ११।२।४३) न्यायाश्रयेणाह—तत्र किमिति ॥

सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते ।
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥

इति न्यायेन ज्ञानस्य ज्ञेयशेषतया धर्महेतुत्वाभावात् प्रयोगाङ्गतयादृष्टार्थत्वाच्च प्रयोगस्य फलं प्रति संनिहितत्वाच्चाह—आहोस्विदिति ॥

(प्रत्याक्षेपभाष्यम्)

कश्चात्र विशेषः ? ॥

( ७ ज्ञानपक्षदूषणवार्तिकम् ॥ १ ॥ )

॥ * ॥ ज्ञाने धर्म इति चेत्तथाऽधर्मः ॥ * ॥

( भाष्यम् )

ज्ञाने धर्म इति चेत्तथाऽधर्मोऽपि प्राप्नोति । यो

---

१ बह्वृचानामाम्नायो बाह्वृच्यम् । छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः इति ञ्यः प्रत्यय इति ॥ श० कौ० ॥

२ अथर्वणा ऋषिणा प्रोक्तो वेद आथर्वणः 'अन्' इति प्रकृतिभावः । तमधीयते आथर्वणिकाः । वसन्तादित्वाट्ठक् । तेषामाम्नाय आथर्वणः 'आथर्वणिकस्य–' इत्यण् इकलोपश्चेत्यर्थः ॥ छाया ॥

३ वैद्यकमिति । चरकादीत्यर्थः । वसन्तराजादिप्रणीताः शकुनाद्यागमा अपि ज्योतिःशास्त्रस्यैव वेदाङ्गस्य शेषभूताः । कल्पसूत्रादयो गाथाधनुर्वेदगान्धर्ववेदार्थशास्त्रादय उपवेदाश्च यथायथं चतुर्दशविद्यास्थानेष्वेवान्तर्भवन्तीति न पृथगुक्ताः । पाखण्डाद्यागमाः काव्यनाटकादयश्च नात्यन्तं वर्जितापशब्दा इति न पृथग्गणिताः ॥ वस्तुतस्तु—भाष्ये न परिगणनं किंतु दिक्प्रदर्शनम् । प्राधान्याद्वेदप्रपञ्चस्योक्तिरिति न कोऽपि दोप इति बोध्यम् ॥ छाया ॥

४ तस्यार्थमाह—भूरिति ॥ नन्वनेनैव वसुमत्या ग्रहणं सिद्धमत आह—इतरेति ॥ वस्विति । सप्तद्वीपवत्यामित्यर्थः । तथाच तत्र तद्बाहुल्यसूचनायैव पृथग्ग्रहणमिति भावः । भाष्यीयन्यूनतां परिहरति—भुवरित्येत्यादिना ॥ स्वर्ग्यपि न "रित्यनेनेत्यर्थः ॥ छाया ॥

५ वाक्यं गूढीभूतेति । स्पष्टं चेदं स्मृतिप्रामाण्याधिकरणे (पू. मी० १।३।१) इति भावः ॥ छाया ॥

---

1 अत्र वैद्यकम् इत्युक्त्वा "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति (२।१।६७) सूत्रे "दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणम्" इति "य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम्"–इति न्यायभाष्यकारोक्तदिशा वेदैकगम्ये धर्मे दृष्टविरोधकुतर्कानवकाश इति ध्वनितम् ॥ इति दाधिमथाः ॥

2 अत्र यद्यपि सर्वेषु पुस्तकेषु विकृतत्रुटित एव पाठ उपलभ्यते तथापि छायानुसारेणास्माभिः शोधितः ॥ इति दाधिमथाः ॥

हि शब्दाज्ञानात्यपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः ॥

(प्रदीपः) ज्ञाने धर्म इति चेदिति । यथा श्लेष्मणः प्रकोपनं स्नेहद्रव्यं रूक्षं तु वायोस्तथेहापि प्राप्तमिति भावः ॥

(उद्योतः) यथा श्लेष्मण इति । तथा धर्मजनकज्ञानविपरीतत्वात् तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः ॥

( अधर्माधिक्यभाष्यम् )

अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः ॥

( ८ ज्ञानपक्षे दूषणान्तरवार्तिकम् ॥ २ )

॥ * ॥ आचारे नियमः ॥ * ॥

( भाष्यम् )

आचारे पुनर्ऋषिर्नियमं वेदयते—"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः" इति ॥

(प्रदीपः) आचारे प्रयोगे ॥ ऋषिर्वेदः ॥

(उद्योतः) प्रयोगे इति । एवंच प्रयोगादेवाधर्मवद्धर्मोऽपीति ज्ञानाद्धर्म इति वेदविरुद्धमिति भावः ॥

इति ज्ञानपक्षनिराकरणम् ॥

( अथ प्रयोगपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि प्रयोगे ॥

( ९ प्रयोगपक्षे दूषणवार्तिकम् ॥ ३ ॥ )

॥ * ॥ प्रयोगे सर्वलोकस्य ॥ * ॥

(भाष्यम्)

यदि प्रयोगे धर्मः, सर्वो लोकोऽभ्युदयेन युज्येत ॥

( आक्षेपभाष्यम् )

कश्चेदानीं भवतो मत्सरो, यदि सर्वो लोकोऽभ्युदयेन युज्येत ? ॥

( समाधानभाष्यम् )

न खलु कश्चिन्मत्सरः । प्रयत्नानर्थक्यं तु भवति । फलवता च नाम प्रयत्नेन भवितव्यम् । न च प्रयत्नः फलाद्व्यतिरेच्यः ॥

(प्रदीपः) नच प्रयत्न इति । यदि प्रयत्नेन विना फलं स्यात् प्रयत्नवैयर्थ्यमापद्येतेत्यर्थः ॥

(उद्योतः) भाष्ये फलाद्व्यतिरेच्य इति । फलवद्वृत्त्यभावप्रतियोगी न कार्य इत्यर्थः ॥ प्रयत्नवैयर्थ्यमिति । व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः ॥

( समाधानबाधकभाष्यम् )

ननु च ये कृतप्रयत्नास्ते साधीयः शब्दान्प्रयोक्ष्यन्ते, त एव साधीयोऽभ्युदयेन योक्ष्यन्ते ॥

(उद्योतः) साधीय इति । क्रियाविशेषणम् । शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबहुपूर्वद्वारा बहुतराभ्युदयफलत्वमित्यर्थः ॥

( समाधानसाधकभाष्यम् )

व्यतिरेकोऽपि वै लक्ष्यते । दृश्यन्ते हि—कृतप्रयत्नाश्चाप्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः । तत्र फलव्यतिरेकोऽपि स्यात् ॥

(प्रदीपः) व्यतिरेक इति । परिहासः ॥

(उद्योतः) भाष्ये—तत्र फलव्यतिरेक इति । कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाध्ययनं व्यर्थमेव स्यादिति भावः ॥

( पक्षद्वयनिराकरणोपसंहारभाष्यम् )

एवं तर्हि—नापि ज्ञान एव धर्मो नापि प्रयोग एव ॥

---

१ तद्विपेति । धर्मविपेत्यर्थः । तथाच शास्त्रादेव शब्दज्ञाननान्तरीयकतया जायमानापशब्दज्ञानस्य तुल्यन्यायेनाधर्महेतुतापत्त्याऽनुपादेयत्वं शास्त्रस्य स्यादिति भावः ॥ छाया ॥

२ अनर्थभूयस्त्वाद्विपसंप्रयुक्तमध्वन्नवद्वर्ज्यमेव व्याकरणमित्याह—अथवेति ॥ अयं साधुरयमसाधुरिति ज्ञानं स्वरूपनिर्देशं विना [illegible]ीति सम्यक्प्रयुक्त इत्येतदत्र मते निर्देशार्थं स्यादिति भावः ॥ छाया ॥

३ 'प्रयोगे सर्वलोकस्य' इति वार्तिके 'धर्म इति चेत्' इत्यस्यानुषङ्गः । 'धर्मः स्यात्' इति शेषः ॥ छाया ॥

४ सर्वो लोक इति । अयं भावः—'सम्यग्ज्ञात इति नान्तरीयकज्ञानानुवादः । शास्त्रान्वित इत्यस्य च न शास्त्रज्ञानपूर्वक इत्यर्थः । किंतु शास्त्रव्युत्पादितरूपमनतिक्रान्त इति । एवंच शास्त्रकरणकृतश्रमोऽकृतश्रमोऽनधीतव्याकरणः सर्वोऽपि प्रयोगमात्राद्धर्मेण युज्येतेति ॥ छाया ॥

५ ननु प्रमाणवल्प्राप्ते किमस्माभिः कर्तुं शक्यम् । नहि परीक्षकाणां प्रामाणिकार्थत्यागात् किंचिदनिष्टमित्याक्षिपति—कश्चेदानीमिति ॥ छाया ॥

६ उत्तरयति—न खल्विति ॥ छाया ॥

७ तथाहि—केचिदप्रतिभया सत्त्वं निश्चेतुं न शक्ताः, निश्चितेऽपि सत्त्वे केचिद्व्यवहारप्रत्युत्पन्नमतित्वाभावान्न प्रयोगप्रौढाः अनधीतव्याकरणा अप्यन्ये परप्रत्ययावगतशब्दाः प्रयोगकुशला भवन्ति । तथाच मुग्धवैया[1]करणापेक्षया प्रौढोऽवैयाकरणः साधुशब्दान्प्रयुङ्क्ते इति भावः ॥ छाया ॥

८ एवं पक्षद्वये दोष उक्ते सिद्धान्तवार्तिकमवतारयति—एवंतर्हीति ॥ नापीति । नैवेत्यर्थः । तस्यैव समुच्चायको वा ॥ सर्वं वाक्यमिति न्यायेन प्रकृते तथेष्टमित्याह—ज्ञान एवेति ॥ एवमग्रेपि छाया ॥

1 वैयाकरणे मुग्धत्वविशेषणेन "यथो एतद्—'अविस्पष्टार्था भवन्ति' इति । नैष स्थाणोरपराधो यदेनमन्धो न पश्यति । पुरुषापराधः स भवति । यथा जानपदीषु विद्यातः पुरुषविशेषो भवति । पारोवर्यवित्सु तु वेदितृषु भूयोविद्यः प्रशस्यो भवति" ( १।१६।१० ) "योऽनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः सैषा पुरुषगर्हा न शास्त्रगर्हा" ( १।१४।६ ) इति निरुक्तं स्मारितं भवतीति दाधिमथाः ॥

किं तर्हि? ।

( १० सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥ * ॥

( भाष्यम् )

**शास्त्रपूर्वकं यः शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यते । तत्तुल्यं वेदशब्देन । वेदशब्दा अप्येवमभिवदन्ति "योऽग्निष्टोमेन यजते य उ चैनमेवं वेद" "योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद" ॥**

(प्रदीपः) तत्तुल्यमिति । वेदः शब्दो यस्यार्थस्य स वेदशब्दस्तस्य यथा ज्ञात्वानुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः ॥

(उद्योतः) शास्त्रपूर्वके इति । व्याकरणाध्ययनपूर्वके इत्यर्थः ॥ तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति प्रामाणिकाः ॥ वेदः शब्द इति । बोधक इत्यर्थः । प्रमाणमित्यर्थो वा ॥ तस्य यथेति । तस्य यथा य उ चैनमेवं वेदेति ग्रन्थेन वेदतो ज्ञात्वानुष्ठानं फलायोक्तम् । तथास्यापि शास्त्रज्ञानपूर्वकः प्रयोगः फलायेत्येकः शब्द इत्यादिनोक्तमित्यर्थः ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—तत्तुल्यं वेदशब्देनेति । यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्त्येवं यः शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति ॥**

(प्रदीपः) अपर आहेति । वेदश्चासौ शब्दश्च वेदशब्द इति कर्मधारयः ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु—ज्ञान एव धर्म इति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम् *ज्ञाने धर्म इति चेत्तथाधर्म* इति ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः, शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम् ॥ यच्च पुनरशिष्टाप्रतिषिद्धम्, नैव तद्दोषाय भवति, नाभ्युदयाय । तद्यथा हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति, नाभ्युदयाय ॥**

(उद्योतः) भाष्ये प्रमाणमिति । प्रामाणिकमित्यर्थः ॥ शब्दश्च शब्दज्ञाने इति । एकः शब्दः सम्यग् ज्ञात इत्यादिः ॥ हेलयो हेलय इत्यादि तु अपशब्दप्रयोगेऽधर्ममाह,

---

१ किं तर्हीति । तर्हि कः सिद्धान्त इत्यर्थः । शास्त्रान्वित इत्यस्यावलम्बेन ॥ छाया ॥

२ तत्राह—शास्त्रेति ॥ एकः शब्द इत्यादि श्रुतिप्रामाण्यादित्यर्थः ॥ तत्र सम्यग्ज्ञातः सम्यक्त्वेन साधुत्वेन ज्ञातः । शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेणानुसंहितः । सुप्रयुक्तः शिक्षोक्तरीत्या प्रयुक्त इत्यर्थो बोध्यः ॥ वेदेऽपि शास्त्रतो ज्ञानपूर्वकानुष्ठाने फलातिशयव्यवहारात् तच्छायानुकारिण्या अस्या अपि स्मृतेरेवं व्याख्यैव युक्तेत्याह—तत्तुल्यमिति ॥ तदिति । प्रयोगरूपमित्यर्थः ॥ छाया ॥

३ वार्तिकं व्याचष्टे—शास्त्रेत्यादि ॥ ननु ज्ञानपूर्वकानुष्ठितेनाग्निष्टोमादिना फलं भवतीत्यत्रैव किं मानमिति चेत्, वेद एवेत्याशयेनाह—वेदशब्दा अप्येवमिति षष्ठीतत्पुरुषः कर्मधारयो वा । अपिरेवार्थे ॥ एवमिति । यथा मयोक्तं तथेत्यर्थः ॥ छाया ॥

४ शास्त्रान्तरनिरासायाह—व्याकरणाध्ययनेति । अयमाशयः—द्वयोरन्यतरस्योक्तरीत्या तादर्थ्ये सति संदेहज्ञानस्य ज्ञेयसंस्कारकत्वेनापि निराकाङ्क्षस्य साध्यान्तराभावेनेतिकर्तव्यताकाङ्क्षाविरहः । प्रयोगस्तु "सुप्रयुक्तः स्वर्गे लोक" इत्यादिवाक्येन फलार्थतयाऽवगतः प्रयोज्यकर्मीभूतशब्दसंस्कारमपेक्षमाणस्तत्र समभिव्याहृतेन 'सम्यग्ज्ञातः' इत्यनेन तदङ्गतया ज्ञानस्य विनियोगे सति तस्य चान्यथाप्युपपत्तौ प्रागुक्तदोषापातात् शास्त्रान्वितः इति विशेषणसामर्थ्याच्छास्त्रानुगतज्ञानस्य विनियोगे तादृशप्रयोगाद्धर्मो भवतीति न कोऽपि दोष इति ॥ तस्येति । अग्निष्टोमादेरित्यर्थः ॥ फलायोक्तमिति । फलायेत्युक्तमित्यर्थः ॥ तथास्यापि सुशब्दस्यापि ॥ ननु 'य उ चैनम्' इत्यत्रैव चकारादुभयोः फलसंबन्धो युक्त इति प्रकृतेऽपि तथैवास्तु । किं च 'तरति शोकमात्मवित्' इत्यात्मज्ञानविनियुक्ततया शब्दज्ञानस्यैव फलसाधनताया युक्तत्वमितिचेत्, न । तस्य समुच्चयार्थकत्वेऽपि गुणप्रधानभावपूर्वकसुवचतेत्याशयेन पक्षान्तरत्वात् ॥ ज्ञानेन चानुष्ठानस्य प्रत्यक्षमुपकारदर्शनात् । ज्ञानस्यच 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति श्रुत्या सामर्थ्येन च पारार्थ्यावगमात् । ज्ञानेनैव सिद्धेर्थे बह्वायाससाध्यानुष्ठानवैयर्थ्यापत्तेः ॥ अत्यन्ताशेषभूते तु ज्ञाने स्वतन्त्रफलसाधनता यथात्मज्ञानस्य शोकतरणोपलक्षितात्मस्वरूपं प्रति । तदुक्तम्

"सर्वत्रैव हि विज्ञानं संस्कारित्वेन गण्यते ।
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥" इति ॥ छाया ॥

५ वेदशब्देनेत्यत्र वेदशब्दतुल्यत्वस्यैव प्रतीतेरर्थतुल्यत्वपरत्वे लक्षणापत्तेर्बहुव्रीह्यङ्गीकारे पुरःस्फूर्तिकार्थत्यागः प्रतिपत्तिगौरवं चेत्यस्वरसादाह—अपर आहेति ॥ अस्य व्याख्या प्राग्वत् ॥ ब्दा नियमेति । "आहूतश्चाप्यधीयीत—" इत्यादि धर्मशास्त्रोक्तनियमपूर्वकमधीताः सन्तः फलवन्तो ज्योतिष्टोमादिकर्मानुष्ठानाङ्गविशिष्टबोधेन फलवन्तो भवन्तीत्यर्थः ॥ एवमिति । अर्थबोधनाय प्रयुक्ताः पचति देवदत्त इत्यादयो लौकिकशब्दा व्याकरणानुगतप्रकृत्यादिविभागधर्मवत्तया तस्मादेव विदिताः सन्तः पुरुषैरुच्चारितास्तद्गतनियमपूर्वकहेतुकाभ्युदयेन फलवन्तो भवन्तीत्यर्थः ॥ शास्त्रेति ॥ क्रियाविशेषणम् ॥ एवं प्रागपि ॥ छाया ॥

६ एवं विशिष्टपक्षादरेण समाधौ विनिगमनाविरहाज्ज्ञानस्यान्याविशिष्टस्य तद्धेतुत्वमाश्रित्यापि समाधिः सुवच इत्याशयेन पक्षान्तरमाह—अथवा पुनरिति ॥ एवेनान्यप्रधान्यव्यावृत्तिः । अप्यर्थो वा सः ॥ शब्देति । शब्द एव प्रमाणं येषामित्यर्थः । फलसाधनशक्तेरप्रत्यक्षत्वात् । संगतेरग्रहादनुमानाद्यपि न ॥ यद्यपि शब्दोपि संबन्धग्रहसापेक्षः तथापि स्वर्गकामो यजेतेति वाक्यं गृहीतसंबन्धपदार्थं बोधयन्संसर्गमलौकिकमप्याकाङ्क्षादिमहिम्ना बोधयति । मन्वादीनां धर्मसाक्षात्कारोपि यथाशास्त्रमेव । अस्माकं तु नित्यपरोक्ष इतियावत् ॥ तदाह—यच्छब्द इत्यादि ॥ अविहितानिषिद्धव्यवहारे दोषगुणौ नेत्यत्र दृष्टान्तमाह—तद्यथेति ॥ नाभ्युदयायेति । नाप्यभ्युदयायेत्यर्थः ॥ एवं प्रागपि ॥ छाया ॥

७ ननु 'तेऽसुरा हेलयः' इत्यादिना तदप्युक्तमत आह—हेऽलय इति ॥ इत्यप्युक्तमिति । एवंचोभयोः स्वर्गसाधनत्वं वचनेनैव बोध्यते इति 'शब्दश्च ज्ञाने धर्ममाह' इत्ययुक्तमिति भावः ॥ धर्मेति । स्वर्गसंपादकेत्यादिः ॥ छाया ॥

न तु ज्ञाने इति भावः ॥ यद्यपि तत्र प्रयुक्त इत्यप्युक्तं, तथाप्यवैयाकरणस्य सम्यक् प्रयोगादपि धर्माभावेन ज्ञानमेव तद्धेतुः । प्रयोगस्तु तस्य द्वारमिति भावः ॥

( समाधानान्तरभाष्यम् )

**[1]अथ वाभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने । यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति । तदेवं 'ज्ञाने धर्मः' इति ब्रुवतोऽर्थादापन्नं भवति—'अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः' इति ॥**

(प्रदीपः) **अथवेति** । अपशब्दज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक् फलमपशब्दज्ञानस्य नास्तीत्यर्थः ॥

(उद्योतः) भाष्ये **अभ्युपाय एवेति** । [2]अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारितैवापशब्दज्ञानस्य न पृथक्फलतेति भावः ॥ **अपशब्दज्ञानम्** अपशब्दत्वेन तज्ज्ञानम् । एवं शब्दज्ञाने इत्यपि ॥ अपशब्दत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानं भवति ॥ **यो ह्येति** भाष्यस्य य एव अपशब्दान् जानाति असावेव शब्दान् जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेति भावः ॥ तदाह—**अपशब्दज्ञाननान्तरीयकत्वादिति** । बहुव्रीहिः । न हि वह्न्यानयननान्तरीयकं ततः पात्रानयनं पृथक्फलं भवति ॥

( समाधानान्तरभाष्यम् )

**अथ वा कूपखानकवदे[3]तद्भविष्यति । तद्यथा कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति । सोऽप्सु संजातासु तत एव तं गुणमासादयति । येन च स दोषो निर्हण्यते; भूयसा चाभ्युदयेन योगो भवति ॥ एवमिहापि यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घा[4]निष्यते भूयसा चाभ्युदयेन योगो भविष्यति ॥**

(प्रदीपः) **दोष इति** । उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः ॥

(उद्योतः) तुष्यतु दुर्जन इति न्यायेनाप[5]शब्दज्ञानस्य विपरीतत्वमात्रेणाधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाध्यन्तरमाह—**अथ वा कूपेति** । मृद् आर्द्रा । पांसुः शुष्का । [6]यत्कर्मनान्तरीयककर्मजन्यो यो विपरीतत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यो यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतो दृष्टानुमानात्तन्नाशानुमानमिति बोध्यम् ॥ **उत्कृष्टधर्मे[7]ति** । धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् । अधर्मस्य तु वचनाबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याल्पत्वेन [8]तत्फलधर्मनाश्यत्वम् ॥ यागीयहिंसाया न हिंस्यादितिवचनेन दुष्टताबोधनाद्दुष्टत्वमेवेत्यन्यत्र विस्तरः ॥

( द्वितीयदूषणनिरासभाष्यम् )

**यदप्युच्यते—*आचारे नियमः* इति ॥**

**याज्ञे कर्मणि स नियमोऽन्यत्रानियमः । [9]एवं हि श्रूयते—'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परापरज्ञाः विदितवेदितव्या अधिगतयाथातथ्याः ।' ते तत्रभवन्तो यद्वा[10]नस्तद्वा न इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे**

---

१ ननु शास्त्रविहिताभिक्षाव्यापारनान्तरीयकतयोत्पन्नवाजिनस्य कार्यविशेषे 'वाजिभ्यो वाजिनम्' इति शास्त्रेण विनियोगदर्शनादत्रापि शब्दज्ञाननान्तरीयकतयोत्पन्नस्यापशब्दज्ञानस्य साक्षाद्विनियोजकप्रमाणभावेऽपि तस्याकल्पना स्यादत आह—अथवेति ॥ उपसंहरति—तदेवमिति आपन्नं प्राप्तम् ॥छाया ॥

२ यद्यपि द्वयोरेकशास्त्रविहितव्यापारजत्वम्, तथाप्येकस्य श्रुत्या साक्षात्फले विनियोगकल्पनापेक्षया फलवदङ्गत्वविनियोगकत्वमेव कल्पयितुं युक्तम् 'फलवत्संनिधौ—' (          ) इति न्यायात् । तत्र तु तथा शास्त्रमस्तीति वैषम्यमिति भावमभिप्रेत्याह—अपशब्देति ॥ बहुव्रीहिः ॥ गाव्याद्यपशब्दस्य यथाकथंचिद्ज्ञानस्य त्वनभ्युपायत्वादाह—अपशब्दत्वेनेति ॥ तज्ज्ञानमिति । अपशब्दज्ञानमित्यर्थः ॥ उक्तहेतोरेवाह—एवमिति ॥ तदुपपादयति—अपेति ॥ नन्वेवं भाष्यविरोधोऽत आह—योह्येतीति । इत्यादि भाष्यस्येत्यर्थः ॥ भाव इत्यत्रान्वयः ॥ हिरपिश्चार्थे इत्याह य—एवेत्यादि ॥ तज्ज्ञानेति । अपशब्देत्यर्थः ॥ ततः अपशब्दज्ञानात् ॥ तत्पुरुषव्यावृत्तय आह—बह्विति ॥ वह्न्यानयनेति । तत्पुरुषः । ततः अन्यानयनात् ॥ छाया ॥

३ एतत् अपशब्दज्ञानरूपं वस्तु कूपखानकेन तुल्यं भविष्यतीत्यर्थः ॥ अवकीर्णो मिलितः ॥ तत एव अद्भ्य एव । तं गुणं स्नानपानादिरूपेष्टसाधनातिशयमित्यर्थः ॥ येनेति । कर्तरि तृतीया ॥ कर्मणि क्तः ॥ इवौ मिथः समुच्चायकौ ॥ इहापि शब्दज्ञानस्थलेऽपि ॥ यदि यद्यपि ॥ छाया ॥

४ 'निर्घेति णिजन्तरूपम्' इति छायानुरोधेन तु 'निर्घानिष्यते' इति पाठः प्रतीयते ।

५ नापशब्दस्येति ॥ तन्नान्तरीयकेत्यादिः ॥ समाध्यन्तरमिति । समाधिविशेषमित्यर्थः । यथाश्रुतेऽनुपपत्तिः स्पष्टैव ॥ कूपेतीति । कूपस्य खानक इत्यनित्यसमासत्वात्स्वपदविग्रहः ॥ खननकर्तृत्वमात्रमिह विवक्षितं, नतु शिल्पित्वम् । तेन स्वरूपेणापि शिल्पिनि 'शिल्पिनि ष्वुन्' इति ष्वुना ण्वुलो न बाधः । अत्र कर्मण्यण् तु न 'वासरूपः' इत्युक्तेः ॥ तृतीयासमर्थोद्धृतिः ॥ शुष्केति । ब्राह्मणवसिष्ठन्यायेन निर्देश इति भावः ॥ छाया ॥

६ यत्तु—इदमयुक्तम्—शब्दज्ञानस्य धर्मसाधनत्ववदधर्मघातने मानाभावात् । विपमश्च दृष्टान्तः खननजातेन जलेन रजोनिर्हणनद्वारा पूर्वस्थितनैर्मल्यलक्षणगुणप्राप्तेरन्वयव्यतिरेकसिद्धत्वात् । प्रयुक्तशब्दज्ञानजनितपूर्वहेतुकाभ्युदयमात्रस्य शास्त्रसिद्धत्वादिति कृष्णः । तदयुक्तमिति ध्वनयन्नाह—यत्कर्मेति ॥ छाया ॥

७ अधर्मभूयस्त्वस्यैव प्रागुक्तत्वेन तदल्पत्वोक्तिरयुक्तेत्यत आह—धर्मस्येति ॥ छाया ॥

८ तत्फलेति । शब्दज्ञानफलेत्यर्थः ॥

९ यद्यपि 'ब्राह्मणेन न म्लेच्छितवै' इति निषेधवाक्ये ब्राह्मणमात्रसंयोगः श्रुतः तथापि यज्ञसंबद्धब्राह्मणसंस्कारत्वे मानमाह—एवं हीति ॥ छाया ॥

१० यद्वा यद्वस्तु तद्वा तद्वस्तु वर्ततां नोऽस्माकं किमित्यर्थप्रतिपिपादयिषया 'यद्वा नस्तद्वा न' इति वाच्ये 'यर्वाणस्तर्वाण' इति प्रयुक्तवन्तस्ततस्तन्नामका एव च ऋषयः संपन्ना इत्यर्थः ॥ छाया ॥

**पुनः कर्मणि नापभाषन्ते ॥ तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितम्, ततस्ते पराभूताः ॥**

**(प्रदीपः) प्रत्यक्षधर्माण इति ।** योगजप्रत्यक्षेण सर्वं विदितवन्तः ॥ **परापरज्ञा इति ।** विद्याविद्याविभागज्ञाः ॥

**(उद्द्योतः)** भाष्येऽन्यत्रानियम इति । यज्ञे सुशब्दप्रयोगाद्धर्मोऽपशब्दप्रयोगादधर्म इति तत्रैव तयोः प्रयोगनियमः । तदतिरिक्तस्थले तु सुशब्दापशब्दयोः प्रयोगेऽनियमः । योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसंकल्पोहादिविषये एव । श्रुतौ **हेलयो हेलयो** नश्यध्वमित्यूह एव ॥ **विदितवेदितव्या** इत्यनेन श्रवणमनननिदिध्यासनसंपदुक्ता ॥ **अधिगतयाथातथ्या** इत्यनेन साक्षात्कार उक्तः ॥ याथातथ्ये स्वार्थे ष्यञ् । वेदितव्यस्य यथाथातथास्वरूपं सत्यं स्वरूपं शुद्धचिदानन्दरूपं तदधिगतं प्रत्यक्षेण प्राप्तं यैरित्यर्थः ॥ **याज्ञे पुनरिति ।** अनेन तत्त्वज्ञानिनामपि कर्माधिकारं सूचयति ॥ **प्रयुञ्जत** इति वर्तमानसमीपे भूते लट् । एवं **नापभाषन्त** इत्यपि । अत एव तन्नामानो बभूवुरित्यर्थः ॥

इति शब्दज्ञानस्य धर्मजनकतानिर्णयप्रकरणम् ।



( अथ व्याकरणपदार्थनिरूपण आक्षेपभाष्यम् )

**अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः ॥**

**(प्रदीपः) अथेति ।** उक्तमिदं **न चान्तरेण व्याकरणमित्यादि ।** तत्र पक्षद्वयेऽपि दोषदर्शनात् पदार्थप्रश्नः ॥

**(उद्द्योतः)** व्याकरणपदार्थविचारस्य सङ्गतिं दर्शयितुमाह—**उक्तमिदमिति ।** आदिना **तस्मादध्येयं व्याकरणमित्यादि** पुनः पुनरुक्तिर्गृह्यते ॥

( समाधानभाष्यम् )

**सूत्रम् ॥**

( ११ सूत्रपक्षे आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ॥ * ॥**

(भाष्यम्)

**सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—'व्याकरणस्य सूत्रम्' इति ॥ किं हि तदन्यत्सूत्राद् व्याकरणम्, यस्यादः सूत्रं स्यात् ॥**

**(प्रदीपः) षष्ठ्यर्थ इति ।** द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद्व्यतिरेकाभावः । सामान्यविशेषशब्दतया तु द्वयोः सहप्रयोगो न विरुध्यते, यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते तदा षष्ठ्यर्थोऽप्युपपद्यते ॥

**(उद्द्योतः)** ननु सूत्रसमुदायस्य व्याकरणस्येदं सूत्रमित्युपपद्यतेऽत आह—**द्वाभ्यामिति ।** सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयं प्रयोगः, स न सिध्येदित्यर्थः ॥ ननु किमुच्यते—**षष्ठ्यर्थोऽनुपपन्न** इति, पर्यायतया सहप्रयोगोऽपि न स्यादत आह—**सामान्यविशेषेति ।** सूत्रं सामान्यं व्याकरणं विशेषः । सूत्रशब्देनाष्टाध्याय्येव, तदेकदेशे तु योगव्यवहार एव **योगे योगे उपतिष्ठत** इत्यादौ ॥ **यदा त्विति ।** **सूत्राणि चाप्यधीयान** इति भाष्ये वक्ष्यमाणत्वादिति भावः । वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात्षष्ठ्यर्थानुपपत्तिरेवेति तत्त्वम् ॥

( १२ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ शब्दाप्रतिपत्तिः ॥ * ॥**

( भाष्यम् )

**शब्दानां चाप्रतिपत्तिः प्राप्नोति—'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥**

**किं तर्हि ? ॥**

**व्याख्यानतश्च ॥**

**(प्रदीपः) शब्दाप्रतिपत्तिरिति ।** न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते ॥

**(उद्द्योतः)** समुदायस्यातिरिक्तत्वेऽपि दोषमाह—भाष्ये '**शब्दाप्रतिपत्तिरिति ।** व्याकरणाच्छब्दान्प्रतिपद्यामह इति शब्दविषयव्यवहारासिद्धिः प्राप्नोतीत्यर्थः । यतः केवलसूत्रेभ्यः शब्दप्रतिपत्तिर्न दृश्यते, व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वं च लोकसिद्धम् । व्याकरणाच्छब्दान्प्रतिपद्यामह इति व्यवहारात् । सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्तमाना तद्व्याप्यां व्याकरणशब्दवाच्यतां व्यावर्तयतीति भावस्तदाह—**नहीति** ॥

( आक्षेपसाधकभाष्यम् )

**ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति ॥**

( आक्षेपबाधकभाष्यम् )

**न केवलानि चर्चापदानि व्याख्यानम्—'वृद्धिः, आत्, ऐज्' इति ॥**

**किं तर्हि ! ॥**

**उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति ॥**

**(प्रदीपः) समुदितमिति ।** समुदायादेवार्थावसायोत्पादादित्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**चर्चापदानि ।** चर्च्यमानानि विभ-

---

१ यज्ञ इति। 'एकः शब्दः' इति शब्दमात्रसंयोगात्पुरुषार्थोऽयं विधिः 'न म्लेच्छितवै' 'आहिताग्निः—' इति निषेधप्रायश्चित्तयोस्तु ज्योतिष्टोमप्रकरणाक्रत्वर्थत्वयोः पुरुषार्थमूलता संभवति यद्विरोधो ज्ञानधर्मपक्षस्य स्यात् इति भावः ॥ इति छाया ॥

ज्यमानानीत्यर्थः ॥ वाक्याध्याहार[1] इति । वाक्यघटकपदानां सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाध्याहारः कल्पनमित्यर्थः । यद्वा वाक्याध्याहार इत्यनेन वार्तिककृद्व्याख्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन[2] सूचिता ॥

( पक्षान्तरभाष्यम् )

**एवं[1] तर्हि शब्दः ।**

(उद्द्योतः) शब्द इति । लक्ष्यमित्यर्थः[2] । अत्र[3] पक्षे षष्ठ्यर्थ उपपद्यते । शब्दाप्रतिपत्तिहेतुता तु तदवस्था ॥

( १३ आक्षेपवार्तिकम् ॥ ३ ॥)

**॥ * ॥ शब्दे ल्युडर्थः ॥ * ॥**

( भाष्यम् )

**यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् । नहि शब्देन किंचिद् व्याक्रियते ॥**

**केन तर्हि ? ॥**

**सूत्रेण ॥**

( प्रदीपः ) शब्द इति । करणे ल्युड्विधीयते व्याक्रियमाणत्वात्कर्म[4] न तु करणमिति भावः ॥

(उद्द्योतः) ननु राजभोजना इतिवत्कर्मणि ल्युटि आह—करणे इति । कर्मणि स तु काचित्क इति भ

( १४ आक्षेपान्तरवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ भवे[5] च तद्धितः ॥ * ॥**

( भाष्यम् )

**भवे च तद्धितो नोपपद्यते—'व्याकरणे भवो योगो वैयाकरणः' इति । नहि शब्दे भवो योगः ॥**

**क्व तर्हि ?**

**सूत्रे ॥**

(प्रदीपः) भवे चेति । शब्देऽप्यन्वाख्यापकत्वेन[6] भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं[7] प्रति विचारकत्वाद्वैयाकरणत्वप्रसङ्गः ॥

( १५ आक्षेपान्तरवार्तिकम् ॥ ५ ॥)

**॥ * ॥ प्रोक्तादयश्च तद्धिताः ॥ * ॥**

( भाष्यम् )

**प्रोक्तादयश्च तद्धिता नोपपद्यन्ते ॥ पाणिनिना प्रोक्तं पाणिनीयम् । आपिशलं काशकृत्स्नमिति । नहि पाणिनिना शब्दाः प्रोक्ताः ॥**

**किं तर्हि ? ॥**

**सूत्रम् ॥**

( आक्षेपभाष्यम् )

**किमर्थमिदमुभयमुच्यते *भवे* *प्रोक्तादयश्च तद्धिताः* इति । न *प्रोक्तादयश्च तद्धिताः* इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ? ॥**

( परिहारभाष्यम् )

**पुरस्तादिदमाचार्येण दृष्टम् *भवे च तद्धितः* इति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम् *प्रोक्तादयश्च तद्धिताः* इति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥**

(प्रदीपः) नचेदानीमिति । लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः ॥

(उद्द्योतः) लक्षणप्रपञ्चाभ्यामिति । यथा कर्मधारयप्रकरणे अलुक्प्रकरणे च । विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय । इह तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः ॥

---

१ यक्षानुरूपो बलिरिति न्यायेनैकदेशो व्याक्रियत इति कर्मव्युत्पत्त्या शब्दो व्याकरणमित्याह—एवंतर्हीति ॥ छाया ॥

२ लक्ष्यमिति । अष्टाध्याय्या इति शेषः । तथा चानया प्रतिपाद्यः शब्दो व्याकरणपदवाच्य इत्यर्थो बोध्यः । एवं च नातिप्रसङ्ग इति भावः ॥ सूत्रं त्वत्र पक्षे तत्संबन्धादुपचारादुच्यते ॥ छाया ॥

३ अत्र पक्षे प्रागुक्तदोषद्वयोद्धार इति भ्रमनिरासायाह—अत्रेति ॥ शब्दाप्रेति । 'व्याकरणाच्छब्दान् प्रतिपद्यामहे' इति शब्दविषयकव्यवहारासिद्धिहेतुतेत्यर्थः । शब्देन शब्दप्रतीतेरसंभवादिति भावः ॥ छाया ॥

४ कर्मेति । कर्मत्वकरणत्वयोर्गुणप्रधानरूपत्वेन तत्कर्मणां तेषां तत्करणत्वासंभवादिति भावः ॥ छाया ॥

५ दोषान्तरमाह—भवे च तद्धित इति । एवमेव वार्तिकपाठः । उत्तरभाष्यस्वारस्यात् । अतएव च परिहारग्रन्थे 'भवे च तद्धितः' इत्येव पठितम् ॥ इति छाया ॥

६ अन्वाख्यापकत्वेन संस्कारत्वेन ॥ छाया ॥

७ शब्दं प्रति वेदशब्दं प्रति ॥ आदिनैतत्सूचितम्—कथंचिच्छब्दसंबन्धानपायात्सर्वमपि वाक्यं तादृशं स्यादतो व्याकरणान्यग्रन्थेष्वभवत्वेन स्थित इति वाच्यम् । तच्च न संभवतीति भावः ॥ छाया ॥

८ प्रोक्तादिमध्ये भवार्थस्याप्यन्तर्भावात्पौनरुक्त्यमाशङ्कते—किमर्थमिति । 'भवे च तद्धितः' 'प्रोक्तादयश्च' इतीति पाठः इत्येव इत्यनेनैव । तथापि स किं न चोदितः स्यादिति काकुः ॥ छाया ॥

९ परिहरति—पुरस्तादिति ॥ आचार्येण वार्तिककृता ॥ इदानीं द्वितीयप्रणयनकाले । अनेन वार्तिकादावपि सूत्रत्वव्यवहारः सूचितः ॥छाया ॥

१० लक्षणेति । सामान्यसूत्रत्वविशेषसूत्रत्वाभ्यामित्यर्थः ॥ मूलसूत्रेति । पाणिनीयसूत्रेत्यर्थः ॥ छाया ॥

११ यथेति । 'विशेषणमित्यस्याग्रिमसूत्राणि प्रपञ्चभूतानि । तथा 'अलुगुत्तरपदे' इत्यस्याग्रिमाणि ॥ छाया ॥

---

1 वाराणसीमुद्रिते Bangâl Asiatic Society मुद्रितपुस्तके च इतः प्राक् शब्द इतीति प्रतीकं तद्व्याख्यानं च प्रमादेन मुद्रितवन्तः ॥ अस्माभिर्यथायोग्यस्थाने पाठः कृतश्छायासंवादात् ॥ इति दाधिमथाः ॥

2 वाक्यैकदेशेति । यथा "अनाम्नवतिनगरीणामुपसंख्यानम्" इति वार्तिकस्य 'न पदान्ताट्टोरनाम्' इति सूत्रस्थनिर्विभक्तिकेनानाम्पदेन शेषपूर्तित्वसूचनमिति भावः ॥ इति दाधिमथाः ॥

पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ॥

( प्रथमाक्षेपकबाधकभाष्यम् )

**अयं तावददोषः—यदुच्यते *शब्दे ल्युडर्थः* इति । नावश्यं करणाधिकरणयोरेव ल्युड्विधीयते ॥**

**किं तर्हि ?**

**अन्येष्वपि कारकेषु—"कृत्यल्युटो बहुलम्" इति । तद्यथा प्रस्कन्दनं प्रपतनमिति ॥**

(प्रदीपः) प्रस्कन्दनमिति । यद्यप्ययं भीमादिस्तथापि कृत्युल्युटो बहुलमित्यस्यैव भीमादयोऽपादान इत्ययं प्रपञ्च इति भावः ॥

( करणल्युट्समर्थनभाष्यम् )

**अथ वा शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा गौरित्युक्ते सर्वे संदेहा निवर्तन्ते, नाश्वो न गर्दभ इति ॥**

(प्रदीपः) गौरित्युक्ते इति । सास्नादिमति यदा क[ं] [प्र]त्यति 'अयं गौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृ[त्तिः] कृता भवति एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्स्[था]नानि शब्दान्तराणि प्रतीयन्ते ॥

(उद्द्योतः) प्रतीयन्त इति । एवंच विपरीतव्यावृत्तिः स्[व]शसंग्रहश्च व्याकृतिरिति भावः ॥ एतेन शब्दाप्रतिपत्तिर[्] पक्षे उद्धृता ॥

( अनुद्धृतदोषप्रदर्शकभाष्यम् )

**अयं तर्हि दोषः—*'[३]भवे* *प्रोक्तादयश्च त[द्]द्धिताः'* इति ॥**

( समाधानभाष्यम् )

**एवं तर्हि—**

( १९ सिद्धान्तवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ लक्ष्यलक्षणे व्याकरणम् ॥ * ॥**

( भाष्यम् )

**लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति॥**

**किं पुनर्लक्ष्यम् किं वा लक्षणम् ? ॥**

**शब्दो लक्ष्यः, सूत्रं लक्षणम् ॥**

(उद्द्योतः) व्यावर्त्यव्यावर्तकरूपलक्षणस्यातिप्रसक्तत्वात्पृच्छति —भाष्ये किं पुनरिति ॥

( समाधानबाधकभाष्यम् )

**एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाप्यधीयान इष्यते—वैयाकरण इति ॥**

( समाधानसाधकभाष्यम् )

**नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । तद्यथा पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो नीलः कपिलः कृष्ण इति ॥ एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते ॥**

(प्रदीपः) पूर्वे पञ्चाला इति । जनपदान्तरनिवृत्तिवि[व]क्षयामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः ॥ **तैलमिति ।** [औ]षधसंस्कृता घृततैलमात्रा भवति तदेदमुदाहरणम् । आ[रो]पाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र [एव] वृत्तिः ॥ **शुक्ल इति ।** अशुक्लेऽप्यवयवेऽवयवान्तरस्य [शौक्ल्या]त्समुदायस्य शुक्लत्वे सत्या(तस्या)रोपात्प्रयोगः ॥

(उद्द्योतः) जनपदान्तरेति । भावप्रधानो निर्देशः ॥ [मात्रे]ति । मात्रा । परिच्छिन्नोंऽशः । औषधसंस्कृते तत्र समुदाये [घृत]शब्दस्य रूढिरिति भावः ॥ अशुक्लेऽप्यवयवे इति । [...]' इत्यनेनान्वेति ॥ आरोपादिति समुदायस्य शुक्लत्वे [अ]वयवे प्रयोगे च हेतुः । तत्र समुदाये शुक्लत्वारोपे [अ]वयवान्तरस्य शौक्ल्यादिति । वनैकदेशे 'पुष्पितं वनम्' [एक]देकदेशेऽपि शुक्ले 'शुक्लः पटः' इति व्यवहार इति बोध्यम् ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु सूत्रम् ॥**

( प्रथमाक्षेपसारणभाष्यम् )

**ननु चोक्तम् *सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः* इति ॥**

( प्रथमाक्षेपनिरासभाष्यम् )

**नैष दोषः, व्यपदेशिवद्भावेन भविष्यति ॥**

---

१ आचार्या महर्षयो वेदसंमिता आल्मोक्तं न निवर्तयन्ति हि [...] व्युत्पादनाय व्याख्येयेऽर्थे तेषां तात्पर्यात् । आत्यन्तिकदोपासंभवान्नेह [...] वादरस्तेपामित्येवं भाष्यस्य युक्तत्वेऽपि कैयटोक्ता दृष्टान्तेनोपपत्तिरयुक्ते[ति] येनाह—पूर्वमिति ॥ छाया ॥

२ करणल्युटमन्यत्र पक्षे समर्थयते—भाष्ये—अथवेति ॥ छाया ॥

३ भवे चेति । प्राग्वत् पाठः । दोषैक्यसूचनाय तथानुवादो वा ॥ [...]

४ सिद्धान्तभूततृतीयपक्षमाह—एवं तर्हीति । पक्षद्वयस्योकरीत्या [...] इत्यर्थः ॥ वार्तिके लक्ष्यलक्षणे इति द्विवचनेन तत्वस्य व्यासज्यवृ[त्तित्वं] सूचिता ॥ छा० ॥

५ व्याकरणशब्दो योगरूढ्या तत्पर इति भावः । अत्र पक्षे क[...]

[...]स्यापि । अत एव प्रतिपत्तिरपि । समुदायावयवयोर्भेदात्षष्ठ्यर्थोपपत्ति[...] [...]ख्येतिवत् । भवे तद्धितस्यासंदेह एव प्रोक्ततद्धितोऽपि समुदायस्या[...] [...]तुं शक्य इति न प्रागुक्तदोष इति बोध्यम् ॥ छाया ॥

[...]न्वारोपितस्यान्यत्रारोपाभावेन कथमेतदितिचेत् । न । भाष्यमाभाष्या[...] [...]ङ्गीकारात् । वस्तुत इतएवास्वेः प्रकारान्तरेण भाष्यं योजयन्नाह— [...] इति । पुष्पिते सतीति शेषः ॥ शुक्ले वाससे । पट इति । पटत्वा[...] [...] भावः ॥ छाया ॥

[...]व्यवहारानुरोधेनोक्तमाद्यपक्षं समर्थयते—अथवेति ॥ छाया ॥

[...]ति । मुख्यव्यवहारतुल्यत्वकरणेन तदुपपत्तिर्भविष्यतीत्यर्थः ॥

**(प्रदीपः) व्यपदेशिवद्भावेनेति ।** यथा राहोः शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते ॥

**(उद्द्योतः) शब्दार्थभेदादिति ।** अनेकावस्थायुक्तं शिरो राहुशब्दार्थः यत्किञ्चिदेकावस्थायुक्तं तच्च शिरःशब्दर्थः । तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरिति भावः ॥ **सूत्रशब्देन तु समुदायरूपतेति ।** अनेकावस्थायुक्तस्य[1] तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्यायं समुदाय इत्यर्थः ॥ ईदृशस्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये ॥

( द्वितीयाक्षेपनिरासभाष्यम् )

**यदप्युच्यते*शब्दाप्रतिपत्तिः*इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥ किं तर्हि ? ॥ व्याख्यानतश्चेति ॥ परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति ॥**

( परिहारबाधकस्मारणभाष्यम् )

**ननु चोक्तम्—न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः आत् ऐजिति, ॥**

**किं तर्हि ? ॥**

**उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति" इति ॥**

( परिहारसाधकभाष्यम् )

**अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यन्ते ॥ आतश्च[2] सूत्रत एव । यो ह्युत्सूत्रं कथयेन्नादो गृह्येत ॥**

**(प्रदीपः) सूत्रत एवेति ।** पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात् ॥ **आत** इति निपातः । अतश्च हेतोरित्यर्थः ॥ **नाद इति ।** नैतदित्यर्थः ॥ अथवा नादोऽर्थरहितत्वाद् घोषमात्रमेवेत्यर्थः ॥

**(उद्द्योतः)** भाष्ये—**अविजानत इति ।** मन्दबुद्धेरित्यर्थः ॥ **सूत्रत एवेति ।** एतन्मूलमेव पठ्यते "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके" इति ।

( इति व्याकरणपदार्थनिरूपणम् ॥ )

( अथ वर्णोपदेशप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ किमर्थो वर्णानामुपदेशः ? ।**

**(प्रदीपः) किमर्थ इति ।** नहि वर्णोपदेशेन कस्यचित्साधुशब्दस्यानुशासनमिति भावः ॥

**(उद्द्योतः)** ननु लोके[3]प्रसिद्धमातृकापाठेनैव वर्णज्ञानसंभवान्माहेश्वरो वर्णसमाम्नायः किमर्थ इति पृच्छति—भाष्ये **किमर्थ इति ।** पाणिनये[4] महादेवकृत इत्यर्थः ॥ ननु साधुत्वान्वाख्यानं फलमत आह—**नहीति ॥**

( १७ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ वृत्तिसमवायार्थ उपदेशः ॥ * ॥

( भाष्यम् )

**वृत्तिसमवायार्थो वर्णानामुपदेशः ॥**

**किमिदं वृत्तिसमवायार्थ इति ? ।**

**वृत्तये समवायो वृत्तिसमवायः । वृत्त्यर्थो वा समवायो वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः ॥**

**का पुनर्वृत्तिः ? ॥**

**शास्त्रप्रवृत्तिः ॥**

**अथ कः समवायः ? ॥**

**वर्णानामानुपूर्व्येण संनिवेशः ॥**

**अथ क उपदेशः ? ॥**

**उच्चारणम् ॥**

**कुत एतत् ? ॥**

**दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति ॥**

**(प्रदीपः) वृत्तिसमवायार्थ इति ।** लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः । धर्मनियमवत्समासः[5] ॥ **वृत्त्यर्थ इति ।** शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समवायस्य दर्शयति । **इग्यण** इत्यादौ हि **यथासंख्यशास्त्रं** वर्णसंनिवेशमात्रादेवावतिष्ठते ॥ **वृत्तिप्रयोजन इति ।** पारम्पर्येण शास्त्रप्रवृत्तावस्याङ्गत्वम् । सति हि समवाये इत्संज्ञा । तत **आदिरन्त्येनेति** [प्रत्याहारः ।] ततो **ढूलोप** इत्यादिशास्त्रप्रवृत्तिः ॥

**(उद्द्योतः)** उत्तरम्—**वृत्तिसमवायार्थ इति ।** वृत्तिः शास्त्रप्रवृत्तिस्तदुपयोगी समवायो वर्णगतः क्रमविशेषः, स बोध्यत्वेनार्थः प्रयोजनं यस्य स तथोक्तः । सै[6]ति ह्यक्षरसमाम्नायेऽजा-

---

१ ननूभाभ्यामपि शब्दाभ्यामष्टाध्यायी प्रतिपाद्यते इति प्रागुक्तत्वात् सूत्रशब्देन तु समुदायरूपतेत्यसंगतमत आह—अनेकेति ॥ अवयवावयविभावस्य तुल्यत्वेन समानविषयतया दृष्टान्तता ननु समानविशेष्यकत्वादिनेति ध्वनयन्नुदाहरणार्थमाह—तद्रूपेति । अमुख्येऽपि भेदे औपाधिकभेदकल्पनमुभयत्र तुल्यमिति यावत् ॥ छाया ॥

२ एवमन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाह—आतश्चेति ॥ छाया ॥

३ ननु वर्णज्ञानमेव प्रयोजनमिति कथं शङ्काऽत आह—लोकेति ॥

४ ननु गुरुशिष्यव्यवहारविशेषे उपदेशशब्दप्रवृत्तेरत्र कथं तत्प्रयोगः सर्वस्या अपि अष्टाध्याय्याः पाणिनिप्रोक्तत्वादत आह—पाणिनय इति ॥ छाया ॥

५ आद्यसमासफलमाह—सतीति ॥ द्वितीयसमासप्रयोजनमाह—इग्यण इति ॥ चेन तृतीयसमासप्रयोजनेत्संज्ञादिप्रवृत्तेरपि संग्रहः ॥

दिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिरिग्यण इत्यादौ यथासङ्ख्यप्र वृत्तिश्चेति भावः । अनेनास्य शास्त्रवहिर्भूतत्वं सूचितम् । अत एव मङ्गलार्थं महतः शास्त्रौघस्यादितोवृद्धिशब्दं पठतीति वक्ष्यति । अन्यकर्तृकत्वं च सूचितम् । पाणिनिशास्त्रप्रवृत्त्यर्थ उपदेश इत्युक्ते उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेः सिद्धो च्चारणेपि मन्त्रोपदेश इत्यादावुपदेशव्यवहारात् ॥ अनुबन्धकर णार्थं इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात् । तत्करणं चोपदे शकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः ॥ भाष्ये—किमिदमिति कोऽयं समास इति प्रश्नः ॥ धर्मनियमवदिति । षष्ठीसमासः । पक्षत्रयभेदमुपपादयति—शास्त्रेति । आद्यतात्पर्यं तूक्तं लाघवेन शास्त्रप्रवृत्त्यर्थं इति ॥ ननु नेदमाद्योच्चारणमस्यानादित्वात् तत्कथमुपदेशत्वव्यवहारोऽत आह—भाष्ये उच्चारणमिति ढक्कानिनादेनाभिव्यक्तिरित्यर्थः ॥

( १८ वर्णोपदेशप्रयोजनान्तरवार्तिकम् ॥ २ ॥ )

**॥ *॥ अनुबन्धकरणार्थश्च ॥ * ॥**

( भाष्यम् )

**अनुबन्धकरणार्थश्च वर्णानामुपदेशः—अनुब न्धानासङ्क्ष्यामीति । नह्यनुपदिश्य वर्णाननुब न्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च । वृत्तिसम वायश्चानुबन्धकरणं च प्रत्याहारार्थम् । प्रत्या हारो वृत्त्यर्थः ॥**

(प्रदीपः) **प्रत्याहारार्थमिति** । प्रत्याहारशब्देनाणा दिकाः संज्ञा उच्यन्ते ॥

(उद्योतः) फलान्तरमाह—**अनुबन्धकरणार्थश्चेति** । अनु बन्धबोधनार्थं इत्यर्थः । चेनाकारस्य विवृतगुणत्वसंग्रहः । उपल क्षणत्वेन वा । अनुबन्धत्वं च समुदायान्त्यत्वे सति नान्यथेति तात्पर्यम् ॥ ननु प्रत्याहारशब्देन सूत्रं चेत् तादर्थ्यमनुबन्धाना मनुपपन्नमत आह—**प्रत्याहारशब्देनेति** । अधिकरणव्युत्पत्त्या अर्थआद्यचा वेति भावः ॥ भाष्ये—**वृत्त्यर्थं इति** । लाघवेन शास्त्रप्रवृत्त्यर्थं इत्यर्थः ॥ एतेन प्रत्याहारद्वारा समवायस्य वृत्त्यर्थता दर्शिता ॥

( १९ वर्णोपदेशप्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ इष्टबुद्ध्यर्थश्च ॥ * ॥**

( भाष्यम् )

**इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः—'इष्टान्वर्णान् भोत्स्यामहे' इति । नह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ॥**

(प्रदीपः) **इष्टबुद्ध्यर्थश्चेति** । सति ह्युपदेशे कलादिदोषरहिता ये वर्णा निर्दिष्टास्तथैव प्रयोक्तव्या इत्युक्तं भवति ॥

(उद्योतः) **भोत्स्यामहे इति** । अन्तर्भावितण्यर्थः । बोधयामह इत्यर्थः ॥ एवं विज्ञातुमित्यस्य विज्ञापयितुमित्यर्थः ॥ सति ह्युपदेशे इति । एवं च व्याकरणाध्येतॄणामक्षरसमाम्नायेऽवश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थं मातृका पाठनीयेति भावः ॥

( २० आक्षेपवार्तिकम् ॥ ४ ॥ )

*** ॥ इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ॥ * ॥**

( भाष्यम् )

**इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवंगुणा अपि हि वर्णा इष्यन्ते ॥**

(प्रदीपः) एकश्रुत्या हि सूत्राणां पाठात्सर्वेषामुदात्तादीनामुपदेशः कर्तव्य इत्याह—**इष्टबुद्ध्यर्थश्चेति चेदिति** ॥

(उद्योतः) **एकश्रुत्येति** । त्रैस्वर्यपाठे तु द्वयोरेव कर्तव्यतां स्यादित्यर्थः । तेषां लोकतः सिद्धौ तु दोषरहितानामपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरिति भावः ॥ त्रैस्वर्येण पाठेपि अन्यतमपाठेऽन्यस्य कर्तव्यत्वाभिप्रायेण सर्वेषां ग्रहणमित्यन्ये ॥

( २१ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ आकृत्युपदेशात्सिद्धम् ॥ * ॥**

( भाष्यम् )

**अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिः । तथोवर्णाकृतिः ॥**

---

१ अनेन । उक्तार्थकोक्तवार्तिकेन । अ[illegible]

२ व्युत्पत्त्येति । सरूढयेति भावः ॥ छाया ॥

३ प्रत्याहारशब्दस्तु अणादिसंज्ञापरः, प्रत्याह्रियन्ते वर्णा एष्विति व्युत्पत्तेः ॥ नच ग्रहणकशास्त्रेण निष्पादितास्वकारादिसंज्ञास्वतिप्रसक्तिः, योगरूढ्यभ्युपगमात् । तस्मादादिरन्त्येनेत्येतत्सूत्रसिद्धाः संज्ञाः प्रत्याहारशब्दवाच्यास्तन्निष्पत्तये वर्णोपदेश इति श० कौ० ॥

४ समाधित्रयतात्पर्यमाह—एवंचेति । तस्य फलत्रयसत्त्वेचेत्यर्थः ॥ छाया ॥

५ ननु तथा प्रतीतिरपि लोकत एव सिद्धा । अन्यथोदात्तादीनामपि उपदेशापत्तिरित्याशयेन शङ्कते—इष्टेति ॥ छाया ॥

६ त्रैस्वर्यपाठेस्त्विति । तृतीयाम[illegible] । एकस्योच्चारणादेव सिद्धत्वाते भावः ॥ छाया ॥

७ अस्य तात्पर्यमा[illegible]दात्तादीनामित्यर्थः । ज्ञानस्येति[illegible] ॥ छाया ॥

८ ननु त्रैस्वर्येणैव पाठो नैकश्रुत्या अष्टाध्याय्याः क्वापि तथा पाठोऽथापि कथं दृष्टान्तेनाभीष्टसाधनमतः सिद्धान्तमतमाह—त्रैस्वर्येणेति ॥ छाया ॥

९ इमामाशङ्कां समाधत्ते—आकृत्युपेति ॥ जातिराकृतिः । जातिपरे निर्देशे व्यक्तिविशेषनिर्देशस्य नान्तरीयकत्वाद्व्यक्त्यन्तरग्रहणाप्रतिबन्धकता ज्ञेया तदाह—अवर्णाकृतिरित्यादिना ॥ कुलं समूहम् ॥ छाया ॥

(प्रदीपः) आकृत्युपदेशादिति । उपात्तोऽपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षायां न विवक्ष्यत इत्यर्थः ॥

(उद्द्योतः) आकृत्युपदेशे किमित्यकारादिहस्वव्यक्तिविशेषोपादानं तदुपादाने व्यक्त्यन्तरग्रहणानापत्तिश्चेत्यत आह—उपात्त इति । नान्तरीयकत्वं च तं विना जातेरुच्चारयितुमशक्यत्वात् ॥

( २२ आक्षेपवार्तिकम् ॥ ६ ॥ )

॥ * ॥ आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधः ॥ * ॥

( भाष्यम् )

आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः ॥

के पुनः संवृतादयः ? ॥

संवृतः, कलो, ध्मात, एणीकृतो, ऽम्बूकृतो ऽर्द्धको, ग्रस्तो, निरस्तः, प्रगीत, उपगीतः, क्ष्विण्णो रोमश, इति ॥ अपर आह—

"ग्रस्तं निरस्तमवलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम् ।

संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः" इति ॥

अतोऽन्ये व्यञ्जनदोषाः ॥

(प्रदीपः) संवृतादीनामिति । ऐकारादीनां[1] दोषो न लकारस्य तस्य संवृतगुणत्वात्, तत्र सं विवृततमेषूचार्येषु संवृतत्वं दोषः । कलः स्थानान्तर काकलिकत्वेन प्रसिद्धः । ध्मातः श्वासभूयिष्ठतया दीर्घ इव लक्ष्यते । एणीकृतोऽविशिष्टः किमयमोका कार इति यत्र संदेहः । अम्बूकृतो यो व्यक्तोऽप्य इव श्रूयते । अर्धको दीर्घोऽपि ह्रस्व इव । ग्रस्तो निगृहीतः, अव्यक्त इत्यपरे । निरस्तो निष्ठुरः । सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीत्यानु क्ष्विण्णः कम्पमान इव । रोमशो गम्भीरः । म्बितो वर्णान्तरासंभिन्नः । निर्हतो रूक्षः । सन्दष्ट इव । विकीर्णो वर्णान्तरे प्रसृतः । एकोऽप्यनेकनिर्भास

स्वरदोषभावना इति । स्वरदोषगोत्राणि । अनन्ता हि दोषा अशक्तिप्रमादकृताः ॥

(उद्द्योतः) संवृतादीनामिति भाष्ये तादृशदोषसहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः ॥ तदाह—एकारादीनां संवृतत्वमिति ॥ अविशिष्ट इति । संश्लिष्टः संदिग्ध इति यावत् ॥ ह्रस्व इवेति । तद्वत्कालसङ्कोचेनोच्चारित इत्यर्थः । निष्ठुर इति । त्वरित इत्यन्ये ॥ गोत्राणीति । स्वरदोषजातय इत्यर्थः ॥

( सिद्धान्तिभाष्यम् )

नैष दोषः, ॥

( २३ समाधानवार्तिकम् ॥ ७ ॥ )

[॥ * ॥ गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिः ॥ * ॥]

( भाष्यम् )

गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति ॥

(उद्द्योतः) भाष्ये गर्गादिबिदादिपाठादिति । संवृतादिदोषरहितानामेव तत्र पाठादिति भावः ॥

( आक्षेपभाष्यम् )

अस्त्यन्यद् गर्गादिबिदादिपाठे प्रयोजनम् ॥ किम् ? ॥

समुदायानां साधुत्वं यथा स्यादिति ॥

(प्रदीपः) अस्त्यन्यदिति । गर्ग इत्यादिनैव संनिवेशेन गर्गादीनां साधुत्वं यथा स्याद् गार्ग्य इत्यादीनां मा भूत् । ततश्च तद्गतानामेवाकारादीनां[3] दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम्[4] । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात्समुदायसाधुत्वार्थोऽपि भवति ॥

(उद्द्योतः) साधुत्वमिति । निवृत्तकलादिदोषवत्त्वमित्यर्थः ॥ गार्ग्य इत्यादीनामिति । तत्रत्यानां कलादिदोषनिवृत्तिर्न स्यादित्यर्थः । तदाह—ततश्चेति ॥ परे[5]तु समुदायानामेतत्प्रकृतिकयावन्तसमुदायानां साधुत्वं यथा स्यादित्यर्थं पाठश्चरितार्थो न कलादिदोषं निवर्तयेदित्येव भाष्यार्थः । पाठश्चैव विशेष्यत इत्यग्रिमभाष्यस्वरसादित्याहुः ॥

१ एकारादीति । अत्र आकारादीनामिति वक्तुमुचितम्, तावत्पर्यन्तधावने बीजाभावात् ॥ छाया ॥

२ ननु ह्रस्वावर्णस्य संवृतगुणकस्य प्रतिषेधो नेष्ट इति वार्ति आह—ताद्दशेति ॥ तथा च स येषां दोषस्तेषां नत्वन्येषामि

३ तद्गतानां गर्ग इत्यादिस्थानाम् ॥ छाया ॥

४ समुदायान्तरस्थानां गार्ग्य इत्यादिस्थानामित्यर्थः ॥ छाया ॥

५ वस्तुतस्तु कैयटोक्तं चिन्त्यमेवेति ध्वनयन्नाह—परेत्विति ॥ छाया ॥

1 Bengal Asiatic Society मुद्रितपुस्तके 'व्युत्पत्त्यन्तरे' इति पाठः शोधकप्रमादमन्तरा किं बोधयेत् ॥ इति दाधिमथाः ॥

2 यद्यप्याधुनिकोपलब्धपुस्तकेष्वस्य वार्तिकस्यानुपलम्भः । तथापि व्याख्याभाष्येण—तथा वार्तिकपाठ आसीत्, आधुनिकपुस्तकेषु चिरंतनलेखकप्रमादात् त्रुटितो भवेदित्यनुमीयते । यथा—"नैष दोषः" इत्युत्तरं "पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम्" इति वार्तिकस्यैव 'पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति' इति व्याख्याभाष्यमुपलभ्यते ॥ इति दाधिमथाः ॥

( समाधानैकदेशिभाष्यम् )

**एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकाम्**
**वर्णस्य प्रत्यापत्तिं वक्ष्यामि ॥**

(प्रदीपः) निवृत्तकलादिकामिति । अकारस्य संवृ
त्वान्निवृत्तसंवृतत्वादिकामिति नोक्तम् । अकारस्य निदर्शना-
त्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः ॥

(उद्योतः) निदर्शनार्थत्वादिति । तत्रावर्णस्य अ अ
कृतैव, तद्वत्तदनन्तरमन्येषामपि करिष्यामीति भावः ॥ एतेन
र्णप्रत्यापत्तेः कृतत्वाद्वक्ष्यामीत्यनुपपन्नमिति परास्तम् ॥

( आक्षेपभाष्यम् )

**सा तर्हि वक्तव्या ॥**

(उद्योतः) भाष्ये—सा तर्हि वक्तव्येति । तथा च प्रत्
पत्त्याश्रवणे गौरवमिति भावः ॥

( २४ एकदेशिसमाधानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ लिङ्गार्था तु प्रत्यापत्तिः ॥ * ॥**

( भाष्यम् )

**लिङ्गार्था सा तर्हि भवति ॥**

(उद्योतः) लिङ्गार्था त्विति ॥ अनुबन्धस्थानीयतत्तद्धा
दिगतकलादिलिङ्गनिवृत्त्यर्थेत्यर्थः ॥ नाकृतिनिर्देशप्रयुक्तदोषपरि
रमात्रप्रयोजना प्रत्यापत्तिः, किं तु सर्वानुबन्धेत्संज्ञाशास्त्राबाधक
फलिकापीति न गौरवमिति भावः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

(उद्योतः) तदेव विवृणोति—तत्तर्हीत्यादिना । धात
दिगतकलादिलिङ्गमित्यर्थः ॥

( समाधानभाष्यम् )

**यद्यप्येतदुच्यते । अथवैतर्हि अनेकमनुबन्ध**
**शतं नोच्चार्यमित्संज्ञा च न वक्तव्या, लोपश्च**
**वक्तव्यः । यदनुबन्धैः क्रियते तत्कलादिभि**
**करिष्यते ॥**

(प्रदीपः) यदनुबन्धैरिति । यथा स्वरितत्वमधिकारा-
र्थमात्मनेपदार्थं कलादिकं प्रतिज्ञाय कलादात्मनेपद-
मादि करिष्यते न लनुदात्तङित इत्यादि ॥ ननु चानु-
बन्धाभावे कथमणादिकाः संज्ञा उपपद्यन्ते ॥ आदिरन्त्ये-
नेत्यत्रादिः कलैः सहेत्युक्त्वा अ उ इत्यादिकाः संज्ञाः
करिष्यन्ते स्वरसन्धिश्वासन्देहाय न करिष्यते इत्यदोषः ॥

(उद्योतः) अथ वै तर्हीत्यस्य तथापीत्यर्थः ॥ अनेकमनु-
बन्धशतमिति । एकैकस्यानुबन्धस्य शतश उच्चारणं तादृशा-
नेक उच्चारणीया इत्यर्थः ॥ यथेति । एधङ्यादयोऽनुदात्तङितः
कलादोषयुक्ताः पाठ्याः । स्वरितञितश्च ध्माताः । तत्र 'कलादा-
त्मनेपदम्' 'ध्मातात्कर्तृगामिनि क्रियाफले' इति सूत्रे
स्तः । एवं टकितौ कलध्मातौ पठित्वाद्यन्तौ कलध्मातावविति
बोध्यम् । एवं ङ्वितोऽङ्ककदोषयुक्तान् पठित्वा अङ्कात्क्त्विरिति ।
तश्च प्रस्तान्पठित्वा प्रस्तादथुच् इत्यादि बोध्यम् । एते च
कलादयः प्रक्रियादशायामेव । प्रयोगे तु शुद्ध एव शास्त्रान्ते
प्रत्यापत्तिकरणात् । आदिः कलैः सहेति पाठः ॥

( आक्षेपभाष्यम् )

**सिध्यत्येवम् । अपाणिनीयं तु भवति ॥**

(उद्योतः) भाष्ये—अपाणिनीयमिति । वर्णसमाम्नायस-
म्नाय प्रवृत्तस्य एकदोषपरिहाराय सकलशास्त्रस्य व्याख्यान-
सापेक्ष्यगुरुप्रकारेणान्यथाकरणे वृश्चिकभियेत्यादिन्याय आपत-
ति भावः ॥

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपसारणभाष्यम् )

**ननु चोक्तम् *आकृत्युपदेशात्सिद्धमिति चेत्सं-**
**वृतादीनां प्रतिषेधः *इति ॥**

( समाधानभाष्यम् )

**परिहृतमेतत्,—गर्गादिबिदादिपाठात् संवृता-**
**दीनांनिवृत्तिर्भविष्यति—इति ॥**

( समाधानबाधकभाष्यम् )

**ननु चान्यद् गर्गादिबिदादिपाठे प्रयोजनमु-**

---

१ तस्मात्संवृतादीनां प्रतिषेधे कर्तव्यत्वेन प्राप्ते आह—एवंतर्हीति
वर्णसमाम्नाये निर्दिष्टानामकारादिचतुर्णां प्रत्येकमष्टादश भेदाः सन्तीत्याशयेन
दमुक्तम् ॥ छा० ॥

२ नन्ववर्णे प्रत्यापत्तिः कृतैव । किं च तावता न सर्वत्र निर्वाहो
आह—अकारस्येति । अष्टादशधाभिन्नामित्युक्तेर्न तदकारादिचतुष्टयोपलक्ष
किं तु वर्णमात्रस्य, तदाह—सर्ववर्णेति ॥ छाया ॥

३ तथाचेवर्णादौ तस्या अवश्यंवक्तव्यत्वमाह—सा तर्हीति ॥ छाया ॥

४ नाकृतीति । सर्वानुबन्धानपहाय तत्फललाभाय कलादिदोषविशिष्ट
वर्णघटितान् धात्वादीन्पठित्वा तद्दोषनिवृत्त्यर्थापि प्रत्यापत्तिरित्यनुबन्धादि
न वाच्यमिति भावः ॥ छाया ॥

५ यद्यपीत्यस्य यदेत्यर्थः । अथवैतर्हीत्यस्य तदेत्यर्थः इत्यन्ये ॥ छा० ॥

प्रार्थं प्रतिज्ञायत इति शेषः ॥ छाया ॥

समाधत्ते—आदिरित्यादिना ॥

नन्वनेकमनुबन्धशतमित्यत्र पौनरुक्त्यमित्यत आह—एकैकस्येति ।
अनेकेति । चो भिन्नक्रमे । तादृशा अनेके, उच्चारणीयाश्चेत्यर्थः ॥ अत-
स्योभयत्रसंबन्धः । त्वया तु तथा करणीयमिति त्वत्पक्ष एव गौरवं
क्ष इति भावः ॥ छाया ॥

अत्र दोषमाह—सिध्यत्येवमिति ॥ तथापीति शेषः ॥ छाया ॥

कचिकमप्रमादात्प्राचीनतरे यत्र पुस्तके वार्तिकपाठस्त्रुटितस्तत्र व्याख्या-
नमेव हृष्टमतस्तस्यैवानुकरणे कर्तव्ये 'भविष्यति' इति वर्धितमिति
बोध्यम् ॥ यद्वा स्वतश्चेच्छत्वादत्र भाष्यमेवानूदितं न वार्तिकम् । यथा—
'यदप्युच्यते द्रव्यवचोपचाराः प्राप्नुवन्ति' इति, अनूदितम् ॥ दाधि० ॥

कम् । किम्? । समुदायानां साधुत्वं यथा स्यादिति ॥

( समानसाधकभाष्यम् )

एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते, कलादयश्च निवर्त्यन्ते ॥

कथं पुनरेकेन यत्नेनोभयं लभ्यम्? ।

लभ्यमित्याह ॥

कथम्? ॥

द्विगता अपि हेतवो भवन्ति । तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणिता इति । तथा वाक्यानि द्विष्ठानि भवन्ति—श्वेतो धावति अलम्बुसानां यातेति ॥

(प्रदीपः) उभयमिति । यथाभूता गर्गादिस्था [illegible] दयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यते [illegible] द्विगता इति । द्वावर्थौ गताः प्रयोजनद्वयसंपादका [illegible] तथा वाक्यान्यपीति । शब्दस्याप्यर्थवद् द्विगतत्व[illegible]

(उद्द्योतः) नन्वपठितेषु दोषनिवृत्तिर्न कृता स्यादत [illegible] यथाभूता इति । गर्गाद्यकारादि[illegible] पठितेषु [illegible] एव ते सर्[illegible] पाठश्चैवे[illegible]यते द्विष्ठानी[illegible]दस्य तत्र कः[illegible]रम् इति च्छेदेन क इत्यस्योत्तरम्, श्व[illegible] कीदृश[illegible]त्तरमिदम् ॥ एवं केषां जनपदानां गन्ता को वा समर्थ[illegible] उत्तरम्—अलमित्यादि । अलंबुसा देशविशेषाः । बुस[illegible] लवर्णानां याता प्राप्तिमान् अलं समर्थ इति चार्थः [illegible] क्वचित्पाठः । पा रक्षणे इत्यस्य रूपम् ॥

( भाष्यम् )

अथ वा इदं तावदयं प्रष्टव्यः—क्वेमे संवृतादयः श्रूयेरन्निति? ॥

आगमेषु ।

आगमाः शुद्धाः पठ्यन्ते ॥

विकारेषु तर्हि ॥

विकारा अपि शुद्धाः पठ्यन्ते ॥

प्रत्ययेषु तर्हि ॥

प्रत्यया अपि शुद्धाः पठ्यन्ते ॥

धातुषु तर्हि ॥

धातवोऽपि शुद्धाः पठ्यन्ते ॥

प्रातिपदिकेषु तर्हि ॥

प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते ॥

यानि तर्ह्यग्रहणानि प्रातिपदिकानि ॥

एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थं उपदेशः कर्तव्यः । शशः षष इति मा भूत् । पलाशः पलाष इति मा भूत् । मञ्चको मञ्जक इति मा भूत् ॥

'आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः ।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः' ॥ १ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥

(प्रदीपः) अथ वेति । केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद्दोषः ॥ यानि तर्हीति । डित्थादीनि ॥ एतेषामपीति । शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात्सर्वेषामत्र सङ्ग्रहः सिद्धः ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ १ ॥

(उद्द्योतः) केवलानामिति । एवं च कलादिदोषाणां न कुत्रापि प्रसक्तिरिति भावः ॥ भाष्ये यानि तर्ह्यग्रहणानीति । कार्यविधावकृतानुवादानीत्यर्थः ॥ उपदेश इति । ङ्याप्प्रातिपदिकादित्यादावनुवादरूपेण ग्रहणमित्यर्थः ॥ एतेनोद्देशश्च प्रातिपदिकानां नोपदेश इत्यादेच इति सूत्रस्थभाष्यविरोध इत्यपास्तम् ॥ नन्वेवमतिप्रसङ्गः स्यादत आह—शिष्टेति । एवं संवृतादीनां प्रतिषेध इत्यस्मिन् प्रत्याख्याते इष्टबुद्ध्यर्थ इत्यपि प्रत्याख्यातप्रायमेवेत्यलम् ॥ इति शिवभट्टसुतसतीगर्भसंभवनागोजीभट्टेन कृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पाद आद्यमाह्निकम् ॥

॥ इति प्रथमं पस्पशाह्निकम् ॥

## द्वितीयं प्रत्याहाराह्निकम् ॥

### ( शिवसूत्रम् )

### अइउण् ॥ १ ॥

( २५ विवृतोपदेशप्रतिज्ञावार्तिकम् ॥ १ ॥ )

॥ * ॥ अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥ * ॥

(भाष्यम्)

अकारस्य विवृतोपदेशः कर्तव्यः ।

किं प्रयोजनम्? ।

१ एवं सति वर्णोपदेशस्य प्रयोजनद्वयमेव न तृतीयमित्या[illegible] मिति ॥ छाया ॥

**आकारग्रहणार्थः । अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् ॥**

**(प्रदीपः) अइउण्** ॥ सर्ववर्णानविशेषेण विचा... षेणात्र विचारः क्रियते—**अकारस्येति** । अत्राव... स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वा... त्पत्तिः । स्वरसन्धिस्तु न प्रवर्तते वर्णोपदेशकालेऽज... नामनिष्पादात् ॥ तत्राकारस्य संवृतत्वाद्दीर्घप्लुतयोर्विवृ... यत्नभेदात्सवर्णसंज्ञाया अप्रसङ्गात्प्रदेशेष्वकारेण दीर्घप... हणं न प्राप्नोतीति विवृतत्वमस्योपदिश्यते । विवृतस्य... पदेशो विवृतोपदेशः । तत्र गुणस्य नित्यसापेक्षत्वाद... त्वेऽपि समासः । यथा—देवदत्तस्य गुरुकुलमिति ॥ ... **रग्रहणार्थं इति** । विवृतोपदेश आकारग्रहणार्थं इति... नाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयो... सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदन... **सवर्णग्रहणेनेति** । येन शास्त्रेणाणुदित्सवर्णस... सवर्णो गृह्यन्ते तेन कारणेनेत्यर्थः ॥

**(उद्योतः)** ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तर्हि... रत्र तद्ग्रहणेनेत्याशङ्क्याह—**सर्वेति** ॥ **विशेषेण** । तच्च... प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह—**स्वरूपेणेति** । शब्द... नविषयो हि शब्दस्यार्थः । एवं च स्वरूपमपि स्वजन्यबो... त्वेनार्थः । अनुकार्यमर्थं इति तु स्पष्टमेव । एवं विद्यमानस... वत्त्वस्याविवक्षितत्वादर्थवत्सूत्रेऽग्रहणादित्यर्थः । स्वरूपस्य ... हीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या । अ... च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः । वृत्त्यर्थव... चार्थवत्त्वमर्थवत्सूत्रे निविष्टमिति भावः ॥ अनुकरणत्वभङ्ग... भक्तिरिति तत्त्वम् । सौत्रत्वाद्वा । कारप्रत्ययोऽपि बाहुल्या... **स्वरसंधिस्त्विति** । सौत्रत्वात्संहिताया अविवक्षणाद्वेति भा... **अजादिसंज्ञानामनिष्पादादिति** तु चिन्त्यं वर्णोपदेशे इत्... मच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां सुत... इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि... दुर्वारत्वात् । अन्यथा तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घ...

...स्यात् ॥ अत्र सूत्रे ॥ तत्रेति पाठेऽप्ययमेवार्थः ॥ वाक्यापरिसमा... न्यायेनेह ग्रहणकशास्त्राप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति ... विवृतोपदेशोऽत आह—**प्रदेशेष्विति** । **अकः सवर्ण** ...दौ । तत्राप्यकारः संवृत एवेति भावः ॥ ननु विवृतपदस्य ...परत्वे सविशेषणत्वात्समासो न स्यादत आह—**विवृतस्य** **स्येति** ॥ भाष्ये कर्तव्य इत्यस्य प्रतिज्ञेय इत्यर्थः । एतेन ...च्चारयितुमशक्यत्वमित्यपास्तम् ॥ भाष्ये **किं प्रयोजनम्** इत्यत्र ...इयेत्यध्याहारः । कर्तव्य इत्यनुपङ्गश्च ॥ नन्वाकारग्रहणं सव... हणमेवेति भेदाभावात्कथं तस्य करणत्वमत आह—**येन** ...स्त्रेणेति ॥

## (आक्षेपभाष्यम्)

**किं च कारणं न गृह्णीयात्?** ॥

**(प्रदीपः) किं च कारणमिति** । आकृतिपक्षाश्रयेण ...णकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात् ...द्धं ग्रहणमिति भावः । अत्र च ****निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्**** इति प्रथमा कृता । तेन कस्मा... ...रणादित्यर्थः संपद्यते ॥

**(उद्योतः)** नन्वाकृतिभेदात् कथं तत्पक्षेऽप्यकारेणाकारग्रहण... ...त आह—**आकारस्यापीति** । केवलकण्ठ्यत्वे सति स्वरत्वमत्व... ...तिव्यञ्जकमिति दीर्घप्लुतयोरपि सेति भावः ॥ प्रातिपदिकार्थमात्रे ...प्रमायां यथाश्रुतेऽन्वयो न जायतेऽत आह—**अत्रचेति** ॥

## (समाधानभाष्यम्)

**विवारभेदात्** ॥

**(प्रदीपः) विवारभेदादित्यत्र** तु कारणशब्दप्रयोगा... ...त्प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावाद् **वि... ...षा गुणे स्त्रियामिति** पञ्चमी विहिता ॥ विवारयति ...कासयति आस्यमिति विवारः प्रयत्नः ॥ व्यक्तिपक्षे ग्रहण... ...शास्त्रारम्भाद्दोषापत्तिः ॥

**(उद्योतः)** उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह—**प्रयो... ...भावादिति** । निमित्तादिशब्दप्रयोगाभावेऽपि तदर्थे गम्यमाने ...दिव विभक्तिरत आह—**प्रायग्रहणादिति** । **विभाषा गुणे**

---

१ अनुकार्यमिति । अनुकरणमिति शेषः । तच्च कर्तृ । अनु... करणयोरभेदविवक्षायामिदम् ॥ नन्वेवमपीदृशार्थवत्त्वमादायैव तत्र ये... कुतो नात आह—वृत्त्येति ॥ अपदं न प्रयुञ्जीतेति निषेधस्तु अपरिनि... परः ॥ छाया ॥

२ भेदविवक्षायामाह—अनुकरणेति ॥

३ अनेन सूत्र एव तथा प्रयोगो नान्यत्रेति सूचितम् । अन्यथा... नादिति वदेत् । एतेन—छन्दोवदित्यतिदेशाद्विभक्तेर्लुगिति, चादिषु तु... निपातत्वेनाव्ययत्वाद्विभक्तेर्लुगिति चापास्तम् ॥ वस्तुत इयमेवमानुपूर्वीका... रेवेति सुपामिति लुगिति तत्त्वम् ॥ छाया ॥

४ यद्यमी वर्णाः कारप्रत्ययः कस्मान्नभवति ॥ उच्यते वर्णात्कार... नायमर्थो वर्णाद्युच्चार्यमाणात्कारः प्रत्ययो भवतीति ॥ एवंहि विज्ञाय... कार इत्यादावुच्चार्यमाणस्याऽऽदृस्समुदायस्यावर्णत्वात्कारप्रत्ययो न स्यात् । किं तर्हि निर्देश इत्यनुवृत्तेर्यस्योच्चार्यमाणस्य प्रयोगस्थो वर्णो निर्दिश्यः प्रति...

...स्यसाहचर्याद्वर्णस्य प्रतिपादकात् कारप्रत्यय इत्यर्थः ॥ अत्र चानुपूर्वीसम्पादन... तात्पर्यम्, ननु कविपुत्र इत्यादिषु दृष्टानामकारादीनां प्रतिपादन इति ...त्ययभाव इति ॥ प. म. श. कौ. ॥

५ ननूक्तरीत्या सुपोऽभावेनावयवत्वाद्वाक्यीयाऽविवक्षा कथमनेति चेत् । ...परिनिष्ठितत्वेन सुबन्तपदतुल्यपरिनिष्ठितसमूहस्यापि वाक्यत्वेन ग्रहणेनादो... ...त् ॥ छाया ॥ सुपामिति लुक्पक्षे तु सर्वमवदातम् ॥

६ एतेन—यदि तु वर्णोपदेशकाले इत्यस्यैवान्वयेन तदा संधिवारण... ...र एव कैयटः । अनन्तरं तु तद्वारणमुक्तरीत्या स्पष्टम्—अविवक्षितत्वादिति ...नागुक्तायामुदाहृतमित्युपेक्षितमित्युच्यते तदा सम्यगेव कैयटः ॥ इति छाया ॥

७ तस्येतरव्यावर्तकत्वमात्रेण तत्त्वेन तद्वैशिष्ट्यादित्यर्थः ॥

८ नचात्र पक्षेऽकारस्य विवृतस्योच्चारयितुमशक्यत्वेनाननुष्ठेयतया विधि... वैयर्थ्यमिति वाच्यम्, करोतिना प्रतिज्ञानस्य लक्षणात् । अत एव वि... ...त्त्वेऽपि संदेहोपपत्तिरिति ध्वनयन्नाह—**प्रतिज्ञेय इति** ॥ छाया ॥

इति । निमित्तेत्यादिवार्तिके सर्वासामित्येतत्र पञ्चमीतृतीयाविधायकं किं तु हेताविति विभाषागुणेति सिद्धयोस्तयोरन्याभिरवाधायानुवादकमेवेति भावः ॥ विवारयतीति । सं चाभ्यन्तरप्रयत्नः ॥ दोषापत्तिरिति । दण्डाढकमित्यादौ दीर्घानापत्तिदोष इत्यर्थः ॥

( आक्षेपभाष्यम् )

**किमुच्यते—विवारभेदादिति, न पुनः कालभेदादपि । यथैव ह्ययं विवारभिन्नः, एवं कालभिन्नोऽपि? ॥**

(प्रदीपः) व्यक्तिपक्षे भेदान्तरसद्भावादाह-किमुच्यत इति ॥

(उद्द्योतः) ननु प्रयत्नभेदेऽपि जातिसद्भावात्स्यादेव ग्रहणमत उक्तम्—व्यक्तिपक्ष इति ॥

( समाधानभाष्यम् )

**सत्यमेव तत् । वक्ष्यति "तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्रास्यग्रहणस्य प्रयोजनम्—आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति । बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणम्, न पुनर्विवारभिन्नस्य ॥**

(प्रदीपः) बाह्यश्चेति । प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणवस्त्वन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य बाह्यत्वं कालस्य । यथा व्रीहेः प्रस्थादिव्यवहारः परिमाणद्रव्यकृतः, एवमत्रापि मात्रादिव्यपदेशो निमेषादिक्रियाभेदकृतः ॥ अथ वा नाभिप्रदेश एव विशिष्टप्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नामे[illegible] स्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीनां चास्यवर्ति[illegible] यत्ननिष्पाद्यत्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न मे[illegible] कास्तथा तपरसूत्रे वक्ष्यते ॥

(उद्द्योतः) ननु कालस्य व्यापकत्वाद् बाह्यत्वेन समाधा[illegible] मयुक्तम् ॥ किं च कालो न प्रयत्न इति तद्भेदे कथं सवर्णत्वाप्र[illegible] ग्निरत आह—प्रयत्नाभिनीति ॥ बाह्यत्वं व्युत्पादयति—प्र[illegible] द्धेति । प्रसिद्धपरिमाणं यद्वस्त्वन्तरगतं परिच्छेदकक्रियान्तरं प[illegible] च्छेद्यक्रियापेक्षयान्यत्तदपेक्षणादित्यर्थः । एवंच बाह्यपरिच्छेदक[illegible] यापेक्षया बाह्यत्वोक्तिरिति भावः ॥ क्रियैव कालो नातिरिक्त[illegible] मते इदम् ॥ अतिरिक्तः क्षणसमूहः काल इति मते परिहरति—

अथ वेति । अयं भावः नाभिप्रदेशावच्छिन्नयत्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ स्पष्टम् । वायोरल्पत्वाधिक्यानि च ह्रस्वदीर्घत्वादिरूपकालव्यञ्जकानीति ॥ [illegible] ह्रस्वदीर्घयोः कालभेदादतोभिन्न इत्यादौ दीर्घग्रहणवद्विलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतमध्यापेक्षया कालाधिक्याद् ऐसुभावविधायके ग्रहणानापत्तिरत आह—द्रुतादीति ॥

( आक्षेपभाष्यम् )

**किं पुनरिदं विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते, आहोस्वित् संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते ? ॥**

(प्रदीपः) किं पुनरिति । किं सूत्रकारेणैव विवृतोपदेशः कृतो वार्तिककारेण तु तस्य प्रयोजनमुक्तम्, अथाकृत एव विवृतोपदेशो वार्तिककृता चोद्यत्वेनोपन्यस्त इति प्रश्नः । दुरवधारत्वादुपदिष्टोऽपि विवृतो व्याख्यानेन विना न शक्यते ज्ञातुमिति प्रत्यक्षेऽप्याकारे प्रश्नोऽयं नासमञ्जसः ।

(उद्द्योतः) उपदिश्यमानस्येत्यत्र वार्तिककृतः कर्तृत्वे पक्षयोर्भेदो न स्यादत आह—किं सूत्रकारेणेति । सूत्रकारो महेश्वरो वेदपुरुषो वा 'येनाक्षरसमाम्नायमि' त्यादौवैतिह्यादित्याहुः ॥ ननु प्रत्यक्षे [illegible]कारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नोऽयमसङ्गतोऽत आह—दुरवधारत्वादिति । विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावा[illegible]ते भावः ॥

( समाधानभाष्यम् )

[illegible]तम् ।

**तादीन[illegible]तस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ॥ [illegible]ख्यातव्यं ज्ञायते ? ॥**

**[illegible]यम्—"अ अ"—इत्यकारस्य विवृतस्य संवृतापत्तिं शास्ति ॥**

[illegible]ीपः) तत्र प्रत्यापत्त्या पूर्वः पक्ष आश्रितः । अन्यथा [illegible] प्रत्यापत्तिवचनमनर्थकं स्यात्, स्वरूपप्रच्यवाभावात् ॥

[illegible]द्योतः) अन्यथा संवृतत्वे । स्वरूपप्रच्यवे हि पुनः [illegible]ानं युक्तं स्यादिति भावः ॥

( समाधानबाधकभाष्यम् )

**[illegible]तदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने [illegible]जनम् ॥**

**[illegible]म् ? ॥**

१ तावतापि तस्य बाह्ये प्रसिद्धेस्तस्य सवर्णसंज्ञायामप्रहादनुपपत्तिरेवा[illegible] आह सचेति । तथाच विवारपदं विवृतपरं तेन भेदादित्यर्थः । कर्तृकरणे इति समासः ॥ छाया ॥

२ 'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते' इत्यादि ॥

[illegible] विवृतादयः शब्दा द्रव्यमाहुर्गुणं च यथा शुक्लादयः तद्गुणविशिष्टमित्यर्थः [illegible] प० म० ॥

[illegible]सिद्धान्तमतेनाह—वेदेति ॥ छा. ॥

[illegible]र्तुरस्मरणादाह—त्याद्यैतिह्यादिति ॥ छा. ॥

[illegible]र्वे इति प्रथम इत्यर्थः ॥ छा. ॥

[illegible]ष्ये 'यदयम्' इत्यनेन लिङ्गत्वेनोक्तमत्यापत्तेस्तत्त्वमुपपादयति—अन्यथेति ॥ छा. ॥

अतिखट्वः अतिमाल इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्था प्रत्यापत्तिः ॥

(प्रदीपः) अस्ति ह्यन्यदिति । प्रयोग एव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादित्यज्ञापकमेतदित्यर्थः ॥ नन्विहासति विवृतोपदेशे सावर्ण्याभावादकारेणाकारस्याग्रहणादचूत्वाभावात्कथमतिखट्व इति ह्रस्वः ॥ नैष दोषः, उदीचामातः स्थाने इति ज्ञापकाद्भवत्याकारस्य ह्रस्वः ॥

(उद्द्योतः) प्रयोग एवेति । अतिखट्व इत्यादिप्रयोगे ह्रस्वेनान्तरतम्याद्विवृतोऽकारः प्राप्तः संवृत एव भवत्वित्यर्थं प्रत्यापत्तिवच इति भावः ॥ नन्विति । अचश्चेत्युक्तेरच एव ह्रस्वत्वेन भाव्यमिति भावः । गोस्त्रियोरित्यत्रैतद्वारणार्थमेवोपस्थितिः स्यादिति तात्पर्यम् ॥ उदीचामात इति ॥ न चापोन्यतरस्यामिति ह्रस्वे चरितार्थमिदम् । न चात्राच्परिभाषो तिष्ठते, फलाभावादिति वाच्यम् । शास्त्रस्याल्पविषयतापत्तेर्गोशब्दसाहचर्येण स्वयंशेऽप्यचश्चेत्यस्याप्रवृत्तेश्च । तदंशे हि फलाभावान्न प्रवर्तते इति दिक् ॥

( समाधानसाधकभाष्यम् )

नैतदस्ति । नैव लोके न च वेदेऽकारो विवृतोऽस्ति ॥

कस्तर्हि ? ।

संवृतः योऽस्ति, स भविष्यति । तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति 'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते' इति ॥

(प्रदीपः) नैव लोक इति । प्रयुक्तानामनुशासन प्रयोगे च विवृतस्याकारस्यासंभवात्संवृत एव भविष्यत प्रत्यापत्तिर्ज्ञापिकैव ॥

( आक्षेपभाष्यम् )

कः पुनरत्र विशेषः—विवृतस्योपदिश्यमान प्रयोजनमन्वाख्यायेत, संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्येतेति ? ॥

(प्रदीपः) कः पुनरिति । विवृतोपदेश इत्यत्र कृत इति वा, कर्तव्य इति वा वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः ॥

(उद्द्योतः) नन्वाद्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं, द्वितीये विवृतोपदेशपरत्वमपीति विशेषस्य स्पष्टत्वादत आह—विवृतोपदेश इत्यन्त्रेति ॥

( समाधानभाष्यम् )

न खलु कश्चिद्विशेषः । आहोपुरुषिकामात्रं तु भवानाह—संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यत इति । वयं तु ब्रूमो—विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति ॥

(प्रदीपः) आहोपुरुषिकेति । अहो अहं पुरुष इत्यहङ्कारवानहोपुरुषस्तस्य भाव इति मनोज्ञादित्वाद्वुञ् । अहंकारत्वमित्यर्थः ॥

(उद्द्योतः) आहोपुरुषिकेत्यत्र वुञः प्राग् मयूरव्यंसकादित्वात्समासः । अहो इति अहमित्यर्थे । तत्र प्रयोजनान्वाख्यानमित्येव ज्यायः प्रत्यापत्तेः । अकर्तृके आज्ञापादनाभावाच्चेत्याहुः ॥

( ॥ २६ ॥ धात्वादिषु विवृतत्वप्रतिज्ञावार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ॥ * ॥

( भाष्यम् )

तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्तव्यः ॥

क्वान्यत्र? । धातुप्रातिपदिकप्रत्ययनिपातस्थस्य ॥

किं प्रयोजनम् ? । सवर्णग्रहणार्थः । आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात् ॥

किं च कारणं न स्यात् ? ।

विवारभेदादेव ॥

(प्रदीपः) तस्येति । यदा प्रत्याहारे विवृतोऽकार उपदा प्रयत्नभेदात्तेन संवृतस्याकारस्य ग्रहणाभावादचूकार्यं दिति तत्सिद्धये सर्वस्याकारस्य विवृतत्वं कर्तव्यमित्यर्थः । म्यतीत्यादौ दीर्घादि सिध्यति ॥ ननु च सर्वेषामकायत्सामान्यं तदनुकरणमत्राकारः । तस्य च विवृतत्वे प्रमाने सर्वेषां तत्प्रतिज्ञातं भवतीति किमुच्यते–तस्य पदेशादिति ॥ एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुस्वरूपपदार्थको वाऽकारस्तदेदमुच्यत इत्यदोषः ॥

(उद्द्योतः) प्रत्यापत्त्या अइउणित्यत्रैव प्रक्रियादशायां सर्वाकारो विवृतः प्रतिज्ञात इत्यजानन् शङ्कते—भाष्ये तस्य विवृतोपदेशादिति । तस्येत्यस्य वर्णसमाम्नायस्थस्येत्यर्थः ॥ संवृतस्येति । धात्वादिस्थस्येत्यर्थः ॥ ननु अइउणित्यादौ कस्यानुकरणमित्यत्र विनिगमकाभावादाह—स्वरूपपदेति । स्वरूपपदार्थकत्वं यथा तथोक्तम् ॥ भाष्ये विवारभेदादिति । प्रयत्नभेदादित्यर्थः । ग्राहकस्य विवृतत्वाद् ग्राह्यस्य संवृतत्वादिति भावः ॥

१ दिगर्थस्तु 'आपोन्यतरस्याम्' इत्यस्यैवोदाहरणत्वमस्तु भाष्यस्थातिखट्वादेरुपलक्षणत्वात् । पूर्वपक्षयुक्तित्वेन तथोक्तौ न बाधकम् । तावतापि सिद्धान्ताहानिश्चेति ॥ छाया ॥

२ ज्ञापकस्यान्यथासिद्धिं निरस्यति—भाष्ये नैतदिति ॥ युक्तम् । यत इति शेषः ॥ छाया ॥

३ इत्यनेनेत्यर्थः ॥

४ आन्तर्यस्यासंभवप्रसक्तत्वादिति भावः ॥ छाया ॥

५ अन्यत्र विद्यमानस्यापीत्यर्थः ॥ छा० ॥

६ कुत्रान्यत्र विद्यमानस्येत्यर्थः । एतेन प्रश्नोत्तरयोरनानुरूप्यमित्यपास्तम् ॥ छा० ॥

न्तर इति पूर्वपदप्रकृतिस्वरे, वर्ज्यमानस्वरेण शिष्टस्यानुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितत्वम् ॥ अनृत इति निषेधस्तु न ऋदिदॢदिदिति पृथगनुबन्धकरणेन क्वचित्परस्पराग्रहणज्ञापनात् ॥

( अथ प्रयोजननिराकरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि ।**

( ४३ प्रयोजनप्रत्याख्यानवार्तिकम् ॥ २ ॥ )

**॥*॥ न्याय्यभावात्कल्पनं संज्ञादिषु ॥*॥**

( भाष्यम् )

**न्याय्यस्य ऋतकशब्दस्य भावात् कल्पनं संज्ञादिषु साधु मन्यन्ते—ऋतक एवासौ, न लृतक इति॥**

**(प्रदीपः) न्याय्यभावादिति ।** ऋतकशब्दो न्याय्यः **कृदन्तं नाम कुर्यादिति** स्मृतावुक्तत्वात् । ऋतिः सौत्रो धातुः, तत औणादिकः **कुन्शिल्पिसंज्ञयोरपूर्वस्यापीति** कुन्प्रत्ययः ॥ **संज्ञादिष्विति ।** आदिशब्देनैतद्दर्शयति—जातिगुणक्रियानिमित्ता अपि शास्त्रान्विता एव प्रयोक्तव्या इति ॥ सर्वशब्दव्युत्पत्तिपक्षे किमर्थवत्सूत्रेणेति चेत् शिष्टप्रयुक्तानामेवाव्युत्पत्तिपक्षोऽप्यस्तीति ज्ञापनायार्थवत्सूत्रोपादानम् । अनुकरणशब्दानामव्युत्पन्नत्वात्तदर्थं च ॥

**(उद्द्योतः) न्याय्य इति ।** संज्ञात्वेन कल्पयितुमिति शेषः ॥ तत्र हेतुमाह—**कृदन्तमिति** ॥ प्रकृतिप्रत्ययादिविभागेनान्वाख्यातत्वमेव न्याय्यत्वमित्याशयेन शङ्कते—**सर्वशब्देति** । शिष्टप्रयुक्तत्वमपि न्याय्यत्वमिति परिहारः ॥ न च तस्यैव प्रयोगे लृतकशब्दो बोधकोऽपि न स्यादिति वाच्यम् । बोधकत्वेऽप्यसाधुत्वान्न शास्त्रीयकार्यनिमित्तत्वमित्याशयात् । तद्ध्वनितं भाष्ये "साधु मन्यन्ते" इति ग्रन्थेन ॥ **ऋतक एवासाविति ।** ऋतकशब्दप्रतिपाद्य एवासौ, न लृतकशब्दप्रतिपाद्य इत्यर्थः ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—न्याय्य ऋतकशब्दः शास्त्रान्वितोऽस्ति । स कल्पयितव्यः साधुः संज्ञादिषु—ऋतक एवासौ, न लृतकः ॥**

**(प्रदीपः) अपर आहेति ।** पूर्वमुक्तम् ऋतक एव न्याय्यत्वात्प्रयोक्तव्यो ननु लृतकशब्द इति, इदानीं तु ऋतकशब्दस्यैवायमपभ्रंशोऽशक्तिजत्वाद् लृतक इत्युच्यते ॥

**(उद्द्योतः) इदानींत्विति ।** भाष्ये कल्पयितव्य इत्यस्य विनियुक्तत्वेन ज्ञेय इत्यर्थः । साधुर्ऋतक एव नामत्वेन कृतो न लृतकः । अशक्त्या तु तथोच्चारणमित्यपभ्रंशत्वान्न शास्त्रविषय इति भावः ॥ **अशक्तिजत्वादिति ।** जिह्वाऽपाटवजत्वादित्यर्थः । एवं चासाधुरेवेति भावः ॥

( प्रत्याख्यानबाधकभाष्यम् )

**अयं तर्हि यदृच्छाशब्दोऽपरिहार्यः—लृफिडः लृफिड्डश्चेति ॥**

**(प्रदीपः) अयं तर्हीति ।** ऋतकशब्दोऽन्वाख्यातत्वाद्भवतु वा लृतकशब्दस्य निवर्तकः । ऋफिड ऋफिड्ड इत्येतौ त्वनन्वाख्याताविति कथम् लृफिडलृफिड्डइत्येतयोर्निवर्तकौ स्यातामिति भावः ॥

**(उद्द्योतः)** लृतकाद्लृफिडे वैषम्यं दर्शयति—**ऋतकशब्द इति** ॥ **लृतकशब्दस्येति ।** अनन्वाख्यातस्येत्यादिः ॥

( प्रत्याख्यानसाधकभाष्यम् )

**एषोपि ऋफिडः, ऋफिड्डश्च । कथम्? । अर्तिप्रवृत्तिश्चैवं हि लोके लक्ष्यते । फिडफिड्डावौणादिकौ प्रत्ययौ ॥ त्रयी च शब्दानां प्रवृत्तिः—जातिशब्दा गुणशब्दाः क्रियाशब्दा इति । न सन्ति यदृच्छाशब्दाः ॥**

**(प्रदीपः) एषोऽपीति ।** उणादयो बहुलमित्येवान्वाख्याताविति भावः ॥ **अर्तिप्रवृत्तिरिति ।** अर्तेः प्रकृतित्वेन प्रवृत्तिरित्यर्थः ॥ **न सन्तीति ।** अद्यत्वेऽपि यदा नाम क्रियते, तदा प्रशस्यरूपा क्रिया गुणो वाध्यारोप्यत इति भावः ॥

**(उद्द्योतः)** फिडफिड्डयोरुणादिष्वदर्शनादाह—**उणादय इति ।** बाहुलकसिद्धावेतावित्यर्थः ॥ **अर्तिप्रवृत्तिश्चैवेति ।** तथा च फिडफिड्डयोः स एव प्रकृतिर्न तु लृ इति धात्वन्तरं कल्प्यम् । संज्ञासु धातुरूपाणीति तु अनादिशिष्टप्रयोगसाधने उपायमात्रं न त्वाधुनिकक्रियमाणसंज्ञानुग्राहकमिति भावः ॥ एवं च देशभाषानुसारेण क्रियमाणं कूचीमञ्चीत्याद्यसाधु, शास्त्राविषयश्चेत्युक्तम् ॥ **अर्तेरिति ।** यतस्तस्य लोके प्रवृत्तिर्लक्ष्यतेऽतः फिडादिप्रकृतित्वेनापि तस्यैव प्रवृत्तिरित्यर्थः ॥ एवं यदृच्छाशब्दानङ्गीकृत्य शास्त्रान्वितानां क्वचिच्छिष्टप्रयुक्तानामेव यत्रकुत्रचित्संज्ञात्वेन विनियोगो नान्येषामित्येवम् लृतकलृफिडादीनां शास्त्रविषयत्वाभावान्न तदर्थं लृकारोपदेश इत्युक्तम् ॥ इदानीं न सन्त्येव यदृच्छाशब्दा इति पक्षावष्टम्भेन तदर्थत्वं प्रत्याचष्टे—[भाष्ये]

१ ननु च नाचः स्वरितो विधीयते । सत्यम्, अनुदात्तसंज्ञा त्वचो विधीयते स्वरितसंज्ञाप्येवम् । ततश्च स्थान्यादेशयोरुभयोरपि लृकारयोरनच्त्वात्स्वरितो न स्यादेवेति । प० मं० स्पष्टम् ॥

२ शास्त्रान्विता एवेति । तथा च जातिशब्दादौ यथा गवादयो गाव्यादिनिवर्तकास्तथा ऋतकादय लृतकादिनिवर्तका इति दृष्टान्तलाभः ॥ छाया ॥

३ युक्त इति शेषः ।

४ ननु येन नाम कृतम्—लृतक इति, तेनैव लृतक इति व्यवह्रियमाणत्वेन 'ऋतक एवासौ न लृतकः' इति कल्पनमयुक्तमत आह—ऋतकेति । तच्छब्दप्रतिपादनीय एवासावित्यर्थः ॥ छाया ॥

५ न्याय्य इत्यस्य व्याख्या—शास्त्रेति ॥ छाया ॥

६ एवं च वदता शास्त्राननुगतं देशभाषया यत्कूचीमञ्चीत्यादि नाम क्रियते तदसाध्विति स्फुटीकृतमिति ॥ उ० कौ० ॥

७ प्रयोजनवादी आह—भाष्ये—अयं तर्हीति ॥ छाया ॥

८ खण्डयिता परिहरति—एषोऽपीति ॥ तौ विनियोक्तुकामैर्भ्रान्त्या लृफिड्डादि प्रयुक्तमित्यारोप्यस्याधिष्ठानानन्यत्वादेवमुक्तिः ॥ छाया ॥

९ एवो भिन्नक्रमः लक्ष्यत एवेत्यर्थः । चोपि भिन्नक्रमोऽप्यर्थः । लोकेऽपीत्यर्थः ॥ तेन वेदपरिग्रहः । छाया ॥

**त्रयी चेति** । चेनेदं ध्वनितम् ॥ नन्वेवं डित्थादीनां क्रान्तर्भावोऽत आह—**अद्यत्वेऽपीति** । एवं च सर्वेऽपि व्युत्पन्नाः क्रियादिशब्दा एवेति भावः ॥ **प्रशस्यरूपेति** । अत्यन्तप्रशंसायोग्येत्यर्थः—एवं च येषां क्रियागुणादिप्रवृत्तिनिमित्तकत्वं तेषां क्रियाद्यारोपेणार्थबोधकत्वमिति तात्पर्यम् । यद्वा पूर्वपूर्वडित्थादिगतप्रशस्तगुणक्रियारोपेण तत्प्रवृत्तिनिमित्तक एव डित्थादिभ्यो बोधः । आद्ये डित्थे तु तद्व्यक्तेरेव विषयताद्वयेन भानमिति सैव प्रवृत्तिनिमित्तमपीति **तस्य भाव** इति सूत्रे भाष्ये उपपादयिष्यते ॥

( प्रयोजनवादिभाष्यम् । )

**अ[1]न्यथा कृत्वा प्रयोजनमुक्तम्, अन्यथा कृत्वा परिहारः । सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तम्, न सन्तीति परिहारः । समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति । तद्यथा देवदत्तशब्दो देवदिण्णशब्दं निवर्तयति, न गाव्यादीन् ॥**

(प्रदीपः) **अन्यथा कृत्वेति** । अव्युत्पत्तिपक्षाश्रयेणाचार्येणोपदिष्ट लृकारः । वार्तिककारस्तु व्युत्पत्तिपक्षाश्रयणेन प्रत्याचष्टे[2]—**समाने चेति** । इह च भिन्नार्थत्वम् । लृतकशब्दो हि यदा संज्ञात्वेन विनियुज्यते क्वचित् पिण्डे तदा तच्छब्दरूपाध्यासः, ऋतके तु विपर्ययः । भिन्नस्वरूपौ चैतौ शब्दाविति भावः ॥

(उद्द्योतः) **अव्युत्पत्तीति** । संज्ञाशब्दा अव्युत्पन्ना इति पक्षाश्रयणेनेत्यर्थः ॥ **आचार्येणेति** । शिवो वेदपुरुषो वात्राचार्यः । [5]एवंच यदृच्छाशब्दसद्भावाश्रयेण प्रयोजने उक्ते तदनाश्रयणेन तत्—प्रयोजननिराकरणमयुक्तमिति भावः ॥ ऋतकशब्द लृतकशब्दस्य साधुत्वाभावकल्पक इत्याद्यं दूषणमप्ययुक्तमित्याह—भाष्ये **समाने चेति** ॥ तत्रार्थशब्दः प्रवृत्तिनिमित्ताभिप्राय इत्याह—**इह चेति** ॥ **तच्छब्दस्वरूपस्य** व्यक्तिस्वरूपस्य वार्थे प्रवृत्तिनिमित्तत्वेनाध्यास इत्यर्थः ॥ **विपर्यय इति** । क्रियाप्रवृत्तिनिमित्तमित्यर्थः ॥ **भिन्नस्वरूपौ** भिन्नप्रवृत्तिनिमित्तौ । यदि तु ऋतकोऽपि शब्दप्रवृत्तिनिमित्तकस्तदा भिन्नस्वरूपत्वादेव प्रवृत्तिनिमित्तविपर्ययः । व्यक्तेरेव प्रवृत्तिनिमित्तत्वमिति पक्षे ऋतकसङ्केतविषयव्यक्तेर्लृतकसङ्केतविषयव्यक्तिभिन्नैवेति तद्विपर्ययोऽस्त्येवेति बोध्यम् ॥

( प्रत्याख्यानभाष्यम् )

**नैष दोषः । पक्षान्तरैरपि परिहारा भवन्ति ॥**

(प्रदीपः) **पक्षान्तरैरपीति** । यथा द्रव्यपक्षे सरूपाणामित्यस्यारम्भः जातिपक्षे तु प्रत्याख्यानम् । एवमस्यापीत्यर्थः । अव्युत्पन्नसंज्ञाशब्दपक्षेऽपि पारम्पर्यागताः शिष्टप्रयुक्ता एव संज्ञाः कर्तव्याः ॥

(उद्द्योतः) भाष्ये [3]समाधत्ते—**पक्षान्तरैरपीति** ॥ **जातिपक्षे त्विति** । यत्तु—अक्षादिनानार्थानामेकशेषाय तत्पक्षेप्यारम्भकम्—इति । तत्तु [4]जातिगतजातिस्वीकारेण परिहृतम् । **पक्षान्तरैरपि परिहारा भवन्तीति** वार्तिककृतैवमुक्तम् ॥ वस्तुतश्चतुष्टयीपक्षेऽपि दो[6]षपरिहारः सुकरः ॥ यदुक्तम्—ऋतको न लृतकनिव[7]र्तक इति । माभूत्तस्य निवर्तकत्वम्, शिष्टप्रयोगाभावात्तु तन्निवृत्तिः ॥ न्याय्यत्वमपि वार्तिके शिष्टप्रयुक्तत्वमेवेत्यभिसन्धाय भगवतानुक्तमपि स्वयं मन्दबुद्ध्यनुग्रहाय स्फुटमाह—**अव्युत्पन्नेति ॥ पारम्पर्यायाताः** अनादयः । एवं च शिष्टाप्रयुक्तयदृच्छाशब्दा असाधुत्वेन शास्त्राविषया इति भाष्यतात्पर्यम् ॥ यत्तु—चतुष्टयीति पक्षे लृतकादीनां टिघुभादिवच्छास्त्रविषयत्वमेवेत्यसाद्भाष्याल्लभ्यत—इति ॥ तन्न, पक्षभेदेनैकस्य शास्त्रविषयत्वतदविषयत्वाङ्गीकारे **न वेति** सूत्रस्थभाष्यविरोधात् । टिघुभादीनां पाणिन्यादिशिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वेऽपि अन्येषां तद्विषयत्वे मानाभावाच्च । किं च साध्वसाधुबहिर्भूतानामपि शास्त्रविषयत्वे **साध्वनुशासनेऽस्मिञ्शास्त्रे** इति तत्र तत्र भाष्योक्त्यसङ्गतिः । किं च शास्त्रविषयत्वमथ तद्व्यञ्ज्यसाधुत्वाभाव इत्यशक्यमिति दिक् ॥

(इति यदृच्छाशब्दनिराकरणम् ॥)



१ त्रयी चेत्युक्तौ दोषमाह—अन्यथा कृत्वेत्यादिना ॥

२ 'प्रत्याचष्टे' इति कैयटीयं पूर्वान्वयीति ध्वनयंस्तदाशयमाह—एवं चेति ॥ छाया ॥

३ समाधत्ते इति । उभयाशङ्कामित्यादिः । अनेन—'भाष्ये—नैष दोषः' इत्यपपाठः—इति सूचितम् ॥ तत्पाठे तु—खण्डको दोषद्वयं खण्डयति—नैष दोष इति । जातावेकवचनम् । तत्र हेतुमाह—पक्षान्तरैरिति । यत इत्यादिः—इति भाष्यार्थो बोध्यः ॥ छाया ॥

४ सकलसाधारणप्रवृत्तिनिमित्तकल्पनेनानेकार्थतोन्मूलनहेतुना तत्प्रत्याख्यानानौचित्यमिति दोषान्तरनिरासायाह—जातिगतजातीति ॥ छाया ॥

५ तथा हि—'*व्यर्थेषु च मुक्तसंशयम्*' इति वार्तिकेन 'आकृतावपि पदार्थे एकशेषो वक्तव्यः—अक्षाः पादा माषाः' इत्यर्थकेन जातिपक्षेऽप्येकशेषारम्भावश्यकत्वमुक्त्वा '*व्यर्थेषु च सामान्यात्सिद्धम्*' इति सिद्धान्तवार्तिकेन 'विभिन्नार्थेषु च सामान्यात्सिद्धम्—सर्व अश्नोतेरक्षः, पद्यते पादः, मिमीतेर्माषः । तत्र क्रियासामान्यात्सिद्धम्' इत्यर्थकेन समाहितं भाष्ये । तत्र कैयटेन प्रदीपे 'क्रियासामान्यादिति । भिन्नासु क्रियासु अभिन्नप्रत्ययाभिधाननिमित्तं यत्सामान्यं तदेव द्रव्येष्वपि तन्निमित्तं भवति । यथा पाचक इत्याश्रयान्तरगतमपि हि सामान्यं समवेतसमवायाद्द्रव्ये उपकरोति । यथा—गैरिकादिगतं लौहित्यं संयुक्तसमवायात् पटे लोहितप्रत्ययमादधाति' इति स्पष्टीकृतमाशयं नागेशभट्ट उद्द्योते 'आश्रयान्तरगतं पाकक्रियागतं सामान्यं पाकत्वादि । परम्परयोपकर्तृत्वे दृष्टान्तमाह—यथेति । एवं च व्याप्यादिगतसामान्यस्य परम्परया द्रव्ये सत्त्वेन तत्तज्जातिविशिष्टस्य द्रव्यस्य वाच्यत्वमिति भावः । न चैवं नानार्थोच्छेदः, नानाजातीनां संबन्धघटकत्वेन नानार्थत्वोपपत्तेः । तत्तत्क्रियारूपसामान्यसमनियतस्याक्षत्वादेर्जातिरूपस्याक्षपदार्थत्रयसाधारणस्यापि शक्यत्वावच्छेदकत्वशक्यत्वान्यतराङ्गीकारात् सिद्धमिति भाष्यार्थं मन्ये" इति ग्रन्थेन स्पष्टतरीकृतवान् ॥ इति दाधिमथाः ॥

६ दोषेति । समाने चेत्याद्युक्तेत्यादिः ॥ छाया ॥

७ एवं च तत्सत्त्वेन तदर्थम् लृकारोपदेश आवश्यक इति भावः । छाया ॥

( ४४ द्वितीयप्रयोजनप्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ॥ * ॥

(भाष्यम्)

**अनुकरणं हि शिष्टस्य वा साधु भवति, अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति, नाभ्युदयाय ॥ यथा लौकिकवैदिकेषु । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावद्—य एवमसौ ददाति य एवमसौ यजते, य एवमसावधीते, इति । तस्यानुकुर्वन् दद्याच्च यजेत चाधीयीत च । सोऽप्यभ्युदयेन युज्यते ॥ वेदेऽपि—"य एवं विश्वसृजः सत्राण्यध्यासते" इति, तेषामनुकुर्वन् तद्वत्सत्राण्यध्यासीत । सोऽप्यभ्युदयेन युज्यते ॥ अशिष्टाप्रतिषिद्धं यथा—य एवमसौ हिक्कति, य एवमसौ हसति, य एवमसौ कण्डूयतीति । तस्यानुकुर्वन् हिक्केच्च हसेच्च कण्डूयेच्च, नैव तद्दोषाय स्यान्नाभ्युदयाय ॥ यस्तु खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां पिवतीति तस्यानुकुर्वन् ब्राह्मणं हन्यात्सुरां वा पिबेत्, सोऽपि मन्ये पतितः[3] स्यात् ॥**

(प्रदीपः) प्रयोजनान्तरमपि[4] वार्तिककारः प्रत्याचष्टे—**अनुकरणमिति** । अनुकार्यस्य दुष्टत्वादनुकरणस्यापि दुष्टत्वं मन्यते सुरापानानुकरणवत् ॥

(उद्द्योतः) अनुकरणं[5] शिष्टस्य वा अशिष्टाप्रतिषिद्धस्य वा भवति । तत्राद्यं साधु, अन्त्यं न दोषाय नाप्यभ्युदयायेति भाष्येऽन्वयः । अर्थात्प्रतिषिद्धानुकरणस्य दुष्टत्वं बोध्यम् ॥ ननु शिष्टानुकरणं नासाधु, अशिष्टाप्रतिषिद्धस्य वा नासाधु । आद्यस्याभ्युदयजनकत्वाद्, अन्त्यस्याभ्युदयाजनकत्वेऽपि दोषाजनकत्वात् । एवंच प्रकृते किमायातमत आह—**अनुकार्यस्य दुष्टत्वादिति** । [6]अर्थंलब्धं तदादाय प्रकृतोपयोग इत्यर्थः ॥ अत एव भाष्ये तद्दृष्टान्तेनोपपादयिष्यति—यस्तु खल्विति । एवं चासाध्वनुकरणस्यासाधुत्वाच्छास्त्राविषयत्वात्तदर्थता ऌकारोपदेशस्य न युज्यत इति भावः ॥ भाष्ये यजेत वेति । यागोऽत्र[7] स्मार्तो ग्राह्यः ॥

( प्रयोजनसमर्थनभाष्यम् )

**विषम उपन्यासः । यश्चैवं हन्ति, यश्चानुहन्ति, उभौ तौ हतः । यश्चापि पिवति, यश्चानुपिवति, उभौ तौ पिवतः ॥ यस्तु[8] खल्वेवमसौ ब्राह्मणं हन्ति एवमसौ सुरां वा पिवतीति तस्यानुकुर्वन्स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्पयो वा पिबेत्, न स मंन्ये[9] पतितः स्यात् ॥**

( प्रदीपः ) भाष्यकारस्त्वनुकरणार्थत्वं समर्थयते—**विषम इति** । न ह्यनुकार्यस्य दोषेणानुकरणस्य दुष्टत्वमिति दर्शयति—**यश्चेति** । विहितकरणाद्धर्मोत्पत्तिः प्रतिषिद्धाचरणाच्चाधर्मोत्पत्तिर्न त्वनुमानेन धर्माधर्मयोर्व्यवस्थेति मन्यते । सुरापानादौ तु तस्या एव क्रियाया अनुष्ठानात्सादृश्याभावान्नास्त्यनुकरणत्वम् । दानादीनां स्मार्तत्वाल्लौकिकत्वमुच्यते ॥ **स्नातानुलिप्त इति** । स्वस्थचित्तत्वं दर्शयति । अस्वस्थेन हि चित्तेनाकार्यं क्रियते ॥ **माल्यगुणकण्ठ इति** । लोकमध्ये प्रकाशते इत्यर्थः । अकार्यं ह्यप्रकाशं क्रियते । तत्र ऌतकशब्दोऽपि यदा ऋतकार्थे प्रयुज्यते तदापशब्दः यदा त्वनुकार्यं प्रत्याययति तदा साधुरेवार्थभेदाद् अस्वगोण्यादिवत् ॥

(उद्द्योतः) **सादृश्याभावादिति** । न चैकजातीयेष्वपि व्यक्तिभेदेन सादृश्यसंभवः । सुरापानत्वादेरेव तादृशस्थले सादृश्येन[10] तदतिरिक्तसादृश्याभावादित्याशयात् । तदाह—**नास्त्येति** ॥ दानादीनां कथं लौकिकत्वेनोपन्यासोऽत आह—**स्मार्तत्वादिति** ॥ **अस्वस्थेनेति** । आस्तिकत्वे[11] सत्यपीति भावः ॥ **माल्यगुणकण्ठ इति** ॥ मालायां साधूनि माल्यानि पुष्पाणि तैर्युक्तो गुणः सूत्रं कण्ठे यस्येत्यर्थः ।- गड्वादित्वात्परनिपातः ॥ **अकार्यं हीति** ।

---

१ वैदिकस्यात्राभावादनुक्तिः । अतो लौकिकमात्रोदाहरणम् ॥ छाया ॥

२ प्रकृतोपयोग्यर्थमाधिकमाह—यस्त्वित्यादिना ॥ छाया ॥

३ पतित इति । तथा च तदनुकरणवत्तदनुकरणं निषिद्धमिति न तदर्थतास्येति भावः ॥ छाया ॥

४ प्रयोजनान्तरमिति । एवमाद्यं प्रयोजनं निरस्येत्यादिः ॥ छाया ॥

५ यद्यप्यस्य ( वार्तिकस्य ) प्रकृतानुपयोग्यर्थकत्वेनानुपयुक्तत्वं तथाप्येतत्सूचितभगवद्वक्ष्यमाण 'यस्तु खलु' इति प्रकृतोपयोग्युपबृंहकतयास्य प्रकृतोपयोगः । तद्ध्वनयन् वार्तिकार्थभूतभाष्ये सशेषपूरणे हेर्निश्चयार्थकत्वेऽपि वाकारद्वयोल्लेखात्साध्वित्यादेरग्रे संबन्धेन वाक्यसमाप्तिः, नैवेत्यादि वाक्यान्तरम् । तत्र तत्पदेनोभयपरामर्शेन तत्र तदुभयं प्रतिपाद्यत इत्यर्थः प्रतीयते । स चोभयत्राविरुद्धः दृष्टान्तोपपादनविरुद्धश्च । अतोऽनुकरणमित्यस्य तदित्यस्य चोभयत्र संबन्धेन भवतीत्यस्य चोभयत्र सत्त्वेन वाक्यभेद इत्याशयेन तदर्थमाह—अनुकरणमिति ॥ वार्तिके बहुवचनं प्रयोगभेदाभिप्रायम् । संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी ॥ भगवता वक्ष्यमाणमुक्तहेतोरनैवाधिकमाह—अर्थादिति ॥ छाया ॥

६ नन्विदं न वार्तिकप्रतिपाद्यमत आह—अर्थेति । तत्प्रतिषिद्धानुकार्यस्य दुष्टत्वात्तस्यापि तत्त्वम् ॥ छाया ॥

७ वैदिके कर्मण्यधिकारिण एवाशौचादिसत्त्वेप्यधिकारादन्येन दुष्करत्वादनुकरणासंभवादाह—यागोत्रेति ॥ यद्वा—यागस्य श्रौतस्य कथं लौकिकत्वेनोक्तिरत आह—यागोऽत्रेति ॥ छाया ॥

८ अनुकार्यविजातीयानुकरणस्य तत्त्वे सत्यपि अनुकार्यसमानफलकत्वाभावमाह—यस्त्विति भाष्ये ॥ छाया ॥

९ 'मन्यते' इति रहितपाठस्तु युक्त एव ॥ छाया ॥

१० सादृश्येन तद्रूपतया । तथा च तत्रानुकरणमप्यनुकार्यसजातीयं ब्राह्मणहननत्वादिकमेव पातित्यजनकमिति साजात्यसत्त्वेपि ब्राह्मणहननत्वादिकमेव तत्र पातित्यहेतुतावच्छेदकं न त्वनुकरणत्वमिति अनुकरणत्वाभावप्रतिपादनतात्पर्यम् । नतु तदभावे इति भावः ॥ छाया ॥

११ अनास्तिकत्वे स्वस्थेनापि क्रियत इत्यत आह—आस्तीति ॥ छाया ॥

इह[1] लोके भीरुणेत्यर्थः ॥ [अर्थभेदेन साधुत्वे दृष्टान्तमाह—अस्त्वेति ॥]

(प्रयोजनप्रत्याख्यानभाष्यम्)

**एव[2]मिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत, सोऽप्यपशब्दभाक् स्यात् ॥**

(उद्द्योतः) भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते—एवमिहापीति ॥

(समाधानभाष्यम्)

**अयं त्वन्योपशब्दपदार्थकः शब्दो, यदर्थं उपदेशः कर्तव्यः। न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति। अ[3]वश्यं चैतदेवं विज्ञेयम्। यो हि मन्यतेऽपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति, अपशब्द इत्येव तस्यापशब्दः स्यात् । न चैषोऽपशब्दः ॥**

(प्रदीपः) **अपशब्द इत्येवेति** । अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः ॥

(उद्द्योतः) प्रयोजनवादी समाधत्ते—अयं त्वन्य इति ॥ अस्य हीति । एवं च तत्तदर्थे व्याकरणाननुगतत्वमपशब्दत्वमिति भावः ॥

(प्रयोजनभाष्यम्)

**अयं खल्वपि भूयोनुकरणशब्दोऽपरिहार्यः, यदर्थं उपदेशः कर्तव्यः—साध्व्लकारमधीते म[4]ध्व्लकारमधीत इति ॥**

(प्रदीपः) **अयमिति** । असाधोरनुकरणमित्येतदप्यत्र नास्तीति भावः ॥

(उद्द्योतः) भाष्ये तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वं लृकारोपदेशस्याह—अयं खल्वपीति । यद्यप्यर्थशून्यवर्णानां न साधुत्वम्, तथापि वर्णात्कारविधानेन तेषां साधुत्वमिति भावः ॥

(खण्डनभाष्यम्)

**क[6]स्थस्य पुनरेतदनुकरणम्? ॥**

**कॢपिस्थ[7]स्य ॥**

**य[8]दि कॢपिस्थस्य, कॢपेश्च लत्वमसिद्धम् । तस्यासिद्धत्वादृकार एवाच्कार्याणि भविष्यन्ति ॥**

(प्रयोजनभाष्यम्)

**भ[9]वेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः कॢपिस्थपदार्थकः शब्दः, यदर्थं उपदेशः कर्तव्यः ॥**

(प्रदीपः) **भवेदिति** । प्रयोगस्थस्येदमनुकरणम् । प्रयोगे च नास्ति **पूर्वत्रासिद्धमिति** भावः ॥

(उद्द्योतः) भवेत्तदर्थेनेति । तदर्थेन कॢपिस्थलकारार्थेन लकारस्योपदेशेन प्रयोजनं न भवति—एवं यद्यपि भवेत्तथापि तदनुकरणार्थेनार्थ इत्यर्थः । ननु कॢपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह—प्रयोगस्थस्येति ॥ प्रयोगे अ[10]नुकरणप्रयोगे । शास्त्रे तदीयकार्ये वाऽसिद्धत्वं पौर्वापर्यस्य तत्रैव संभवात् । न चैवं प्रकृते इति भावः ॥

(खण्डनभाष्यम्)

**न[11] कर्तव्यः । इदमवश्यं कर्तव्यम्—"प्रकृतिवदनुकरणं भवति" इति ॥ किं प्रयोजनम्? ॥ 'द्विः पचन्त्वित्याह' "तिङ्ङतिङः" इति निघातो यथा स्यात् । 'अग्नी इत्याह' "ईदूदेद्द्विवचनं प्रगृह्यम्" [...] प्रगृह्यसंज्ञा यथा स्यात् ॥**

[...]दीपः) **प्रकृतिवदिति** । तत्र यथा कॢपेर्लत्वस्यासि[...]कारद्वारेण लकारस्याच्कार्यं तथानुकरणस्यापीत्यर्थः । [...]ते । पचन्तु पचन्त्विति केनचिदुक्ते **द्विःपचन्त्वित्य**[...]म् । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तं न भवति । [...] इत्यनुकरणं द्व्यर्थानभिधानान्न द्विवचनान्तम् ॥ न[12]नु [...] इत्यादिस्थस्य यदानुकरणं तदा कथं प्रकृतिवद्भावः । [...]ऌदित इति लकारे परतो यणादेशकरणादित्संज्ञानुवादाच्च धात्वनुबन्धस्य लकारस्याच्कार्याण्यनुमीयन्ते ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः ॥

(उद्द्योतः) ऋकारद्वारेणेति । ऋकारबुद्ध्येत्यर्थः ॥ भाष्ये—द्विःपचन्त्विति । पचन्त्विति द्विराहेत्यन्वयः । असत्यतिदेशे तिङन्तत्वाभावे हेतुमाह—**एतच्चेति** । **द्व्यर्थेति** । एतदर्थमेव द्विवचनमित्यन्वर्थसंज्ञाकरणम् ॥ **नन्विति** । एवंच पाठाभावे

---

१ इहेति । भयं च लोकत एवेति बोध्यम् । तथा च स्वस्थेन जनमध्ये प्रकाशं तथा करणेऽप्यकार्यशङ्का न कस्यापीति भावः । एवंचानुकरणस्यादुष्टत्वेन तदर्थम् लृकारोपदेशः कार्य इति भगवदभिमतम् ॥ छाया ॥

२ हननानुहननवत्पानानुपानवदित्यर्थः । तथा च तस्यापशब्दत्वेच्छाविषयत्वान्न तादर्थ्यं तस्येत्याशयः ॥ छाया ॥

३ अन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाह—अवश्यमिति ॥

४ मधु मनोहरम् ॥

1 अयं कोष्टकान्तर्गतः पाठोऽग्रे 'अयं त्वन्य इति ।' इति प्रतीकोत्तरमेव Bangal Asiatic Society मुद्रितपुस्तकेऽपि यद्यपि समुपलभ्यते तथापि लेखकप्रमादजत्वेन तथा पाठस्त्यक्तो योग्यस्थाने स्थापित इति बोध्यम् ॥ इति दाधिमथाः ॥

५ तथा चासंदिग्धत्वमत्रेति तदर्थमेतदुक्तिरिति भावः ॥ छाया ॥

६ तदर्थत्वमपि न युक्तमित्याशयेन पृच्छति—क्वेति ॥ छाया ॥

७ सिद्धान्ती आह—कॢपिस्थेति ॥ छाया ॥

८ खण्डक आह—यदीति ॥ छाया ॥

[९] सिद्धान्ती आह—भवेदिति ॥ छाया ॥

१० नन्वनुकार्यप्रयोगे कार्यप्रवृत्तिवेलायां तत्प्रवृत्तिसत्त्वेन कथं तत्र तदभावोक्तिरत आह—अनुकरणेति ॥ छाया ॥

११ प्रष्टा आह—न कर्तव्य इति ॥ कुत इत्यत आह—इदमिति ॥ छाया ॥

१२ एवं साध्वनुकरणार्थेऽतिदेशाश्रयेण भगवता खण्डिते तदसांगत्यं ध्वनयन् कश्चिदेकदेशाविषयतया तदर्थत्वं प्रतिपादयन्नाह—नन्विति ॥ छाया ॥

मूलस्यैवाच्त्वाभावात्कथं तदनुकरणेऽच्कार्यमिति तदर्थं उपदेश आवश्यक इति भावः ॥ अनुमीयन्त इति । इदं चिन्त्यम् । आनु[1]मानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानायोगात् । तस्माद्गम्ऌ इत्यादिस्थ ऌकारो धर्माजनकत्वान्न साधुरिति वक्तुं युक्तम्[2] । एवं चाशक्तिजानुकरणेति वार्तिकेऽशक्तिजपदं व्यर्थमिति कैयटतात्पर्यम् ॥

(खण्डनोपसंहारभाष्यम्)

**यदि-प्रकृतिवदनुकरणं भवतीत्युच्यते, अपशब्द एवासौ भवति कुमार्यृलतक इत्याह ब्राह्मण्यृलतक इत्याह । अपशब्दो ह्यस्य प्रकृतिः ॥**

(उद्द्योतः) एवं साध्वनुकरणार्थत्वे ऌकारोपदेशस्य प्रकृतिवदित्याश्रयणेन खण्डिते तेनैवा[3]शक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी भाष्ये यदि प्रकृतिवदिति ॥

(प्रयोजनभाष्यम्)

**नै[4] चापशब्दः प्रकृतिः । नह्यपशब्दा उपदिश्यन्ते । न चानुपदिष्टा प्रकृतिरस्ति ॥**

(प्रदीपः) नचापशब्द इति । सिद्धान्तवादी । प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते, शास्त्रनिबन्धनं च कार्यमतिदिश्यते, अपशब्दश्च न शास्त्रीया प्रकृतिरनुपदिष्टत्वात् । नचापशब्दत्वं शास्त्रीयं कार्यं नापि तदतिदेष्टुं शक्यम् । नहि साधोरसाधुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणाशक्तिजानुकरणार्थत्वं ऌकारोपदेशस्य स्थापितम् ॥

(उद्द्योतः) ननु मा भूदपशब्दोपदेशः प्रकृतित्वं तु कथं नेत्यत आह—प्रकरणादिति । अतिदेशस्य शास्त्रीयत्वमनेन दर्शयते । तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः ॥ उपलक्षणं भाष्यमित्याह—शास्त्रनिबन्धनं चेति ॥ नापि तदतिदेष्टुमित्यादि चिन्त्यम् । अब्राह्मणे ब्राह्मणत्वाद्यतिदेशवत्संभवादिति कश्चित् ॥ तदेवमिति । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावादच्कार्यसिद्ध्यर्थं ऌकारोपदेश इत्यर्थः ॥

(इत्यशक्तिजानुकरणखण्डनमण्डनम्)

(४५ तृतीयप्रयोजनप्रत्याख्यानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ॥ * ॥

(भाष्यम्)

**"एकदेशविकृतमनन्यवद्भवति" इति प्लुत्यादयोऽपि भविष्यन्ति ॥**

(प्रदीपः) एकदेशविकृतस्येति । ऋकारे रेफभागस्य ले कृते सैं एव ऋकार इति प्रत्यभिज्ञानादिति भावः ॥

(उद्द्योतः) इदानीं प्लुत्याद्यर्थत्वं तस्य परिहरति भाष्ये—एकदेशेति ॥ रेफभागस्येति । वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे इत्यर्थः ॥ प्रत्यभिज्ञानादिति । एवं च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य ऋत्वमित्यर्थः । व्याख्यानभाष्ये अनन्यवद् इत्यस्यान्यवन्नेत्यर्थः । अन्यसादृश्यस्यापि निषेधे तत्त्वं दृढीकृतम् ॥

(प्रयोजनबाधाक्षेपभाष्यम्)

**यदि 'एकदेशविकृतमनन्यवद्भवति' इत्युच्येत, "राज्ञः क च:" राजकीयम् "अल्लोपोऽन" इति लोपः प्राप्नोति ॥**

(प्रत्याख्यातृसमाधानभाष्यम्)

**एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्टस्य ॥**

(प्रदीपः) षष्ठीनिर्दिष्टस्येति । राज्ञः क चेत्यत्र राजन्शब्दः षष्ठीनिर्दिष्टो न लन् इति लोपाभावः ॥

(उद्द्योतः) सिद्धान्त्येकदेशी वर्तिं दृष्ट्वा स्थानिवत्सूत्रमनेनोपन्यस्तमित्याशयेनाह—षष्ठीनिर्दिष्टस्येति ॥ तत्संबन्ध्येकदेशविकृतमादेशरूपमित्यर्थः । नन्वल्लोपोऽन इत्यत्रान्नपि षष्ठीनिर्दिष्ट एवेत्यत आह—राज्ञ इति । येन[15] विकारेण यस्य विकृतस्य यद्रूप-

---

१ आनुमानिकेति । अतिप्रसङ्गापत्तेर्गौरवाच्च । इष्टापत्तिस्तु न । 'स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः' इति न्यायापातादिति भावः॥ छाया ॥

२ एवं च तदनुकरणे सुतरां तत्त्वमुक्तरीत्येति न तदर्थत्वं तस्येति भावः ॥ छाया ॥

३ तेनैव प्रकृतिवदित्यनेनैवार्थत्वमपि भगवता स्थापितम् ॥ छाया ॥

४ सिद्धान्ती परिहरति—नचापशब्द इति ॥ छाया ॥

५ ननु प्रकृत्यादिलक्षणस्य शास्त्रेऽकृतत्वात्प्रकरणाभावात्कथं तेन तदाश्रयणमत आह—अतीति ॥ छाया ॥

६ विकृतमिति । कर्मणि क्तः बहुव्रीहिः । '* साधनं कृता *' इति तत्पुरुषो वा । सामान्ये नपुंसकम् ॥ छाया ॥

७ ननु अल्विधित्वात्स्थानिवत्सूत्रस्य न विषयोऽत आह—स एवेति ॥ छाया ॥

८ परिहरतीति । एकदेशीति भावः ॥

९ वर्णैकेति । अन्यथा तस्याखण्डत्वेन तस्यानेकदेशत्वेन न्यायाप्राप्त्या भाष्यासंगतिरेव स्यादिति भावः ॥ छाया ॥

१० लोकेति ॥ अर्धविकारेऽप्ययं प्रवर्तत इत्यभिमानः ॥ छाया ॥

११ ननु अनन्यवदित्यस्यान्यभिन्नवदित्यर्थसंभवो वैयर्थ्यं वा स्यादत आह—व्याख्यानेति ॥ छाया ॥

१२ नन्वेवमन्यसादृश्यनिषेधेऽप्यन्यत्वसत्त्वादन्यदोषस्तदवस्थ एवात आह—[...]येति । अपिनार्थिकावश्यिकान्यत्वसमुच्चयः । तन्निषेधे तदभावस्य सुतरां [...]भावः ॥ छाया ॥

[...]द्धान्त्येकदेशी शङ्कते—यद्येकेति ॥ छाया ॥

[...] सिद्धान्त्येकेति । न्यायाङ्गीकारात्तत्त्वमित्यभिमानः । सिद्धान्तिनामेक[...]र्थो वा । खण्डकानां सिद्धान्तिनामिति वा । षष्ठीति करणादेकदेशित्व[...]ति भावः ॥

१५ येन ककाररूपादेशेन । यस्य अकः । यद्रूपम् अन्त्वम् । तदवच्छिन्नस्य तस्येति शेषः । नन्वन्त्वावच्छिन्नस्यानो राजन्त्वेन षष्ठीनिर्दिष्टत्वस्य सत्त्वमेवात आह—तेन रूपेणेति । तन्मात्रनिष्ठसामान्यविशेषान्यतररूपेणेत्यर्थः ॥ छाया ॥

मेकदेशविकृतन्यायेन प्रार्थ्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्ट[1]स्येति तदर्थं इति भावः ॥

(प्रयोजनवादिभाष्यम्)

**यदि—षष्ठीनिर्दिष्टस्येत्युच्यते, 'क्लृ३प्तशिख' इति प्लुतो न प्राप्नोति । नेह्य[2]त्र ऋकारः षष्ठीनिर्दिष्टः ॥ कस्तर्हि? ॥ रेफः ॥**

(प्रदीपः) यद्येवं **कृपो रो ल** इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट[3] इत्यनन्यत्वं न प्राप्नोतीत्या[4]ह—**यदीति** ॥

(उद्योतः) भाष्ये **प्लुतो न प्राप्नोतीति** द्विर्वचनादेरप्युपलक्षणम् ॥ **कस्तर्हि रेफ इति** । कृ[5]प इति त्ववयवषष्ठीति भावः ॥

(प्रत्याख्यातृभाष्यम्)

**ऋ[6]कारोऽप्यत्र षष्ठीनिर्दिष्टः ॥ कथम्? ॥ अविभक्तिको निर्देशः—कृप उः रः लः "कृपो रो ल" इति ॥**

(उद्योतः) **कृप उरिति** ॥ कृपे रेफस्य लस्तदवयवऋकारस्य च लकारघटित आदेश इत्यर्थः । स्था[7]निनिर्देश एव तादृशादेशकल्पक इति भावः ॥ ए[8]तेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाभावादिदं चिन्त्यमित्यपास्तम् ॥

(प्रत्याख्यातुरेव भाष्यम्)

**अथवा पुनरस्तु अविशेषेण ॥**

(प्रदीपः) **अथवेति** । षष्ठीनिर्दिष्टस्येति [illegible]

(उद्योतः) ननु स्थानिवत्सूत्रे हि तथा [illegible] तेनातिदेश उच्यते, किं तु च्छिन्नपुच्छश्वदृष्टान्तेन [illegible]न्यत्वमुच्यते । तत्र षष्ठीनिर्दिष्टस्येति वक्तुमेवाशक्य[illegible] भाष्ये **अथवेति** ॥

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तं—"राज्ञः क च" राजकीयम् "अल्लोपोनः" इति प्राप्नोतीति ॥**

(आक्षेपबाधकभाष्यम्)

**नैष दोषः । वक्ष्यत्येतत्—"* श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् *" इति । तत्प्रकृतमुत्तरत्रानुवर्तिष्यते—"अल्लोपोनः" नकारान्तस्येति ।**

(प्रदीपः) **नकारान्तस्येति** । न च राजन्शब्दः कादेशे कृते नकारान्तो भवति, श्वेव पुच्छे छिन्ने न पुच्छवानिति भावः ॥

(उद्योतः) ननु कादेशेऽन्त्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह—**न च राजन्निति** । एकदेशपदेन ससंबन्धिकतयोपस्थितावयविधर्म एव विकारविशिष्टे आरोप्यते, न त्ववयव एव, लोकव्यवहारादिति भावः ॥

(प्रयोजनवाद्याक्षेपभाष्यम्)

**इ[10]ह तर्हि क्लृ३प्तशिख "अनृत" इति प्रतिषेधः प्राप्नोति ॥**

(४६ प्रत्याख्यातृसमाधानवार्तिकम् ॥ ५ ॥)

**॥ * ॥ र[11]वत्प्रतिषेधाच्च ॥ * ॥**

(भाष्यम्)

**रवत्प्रतिषेधाच्चैतत्सिध्यति । "गुरोररवतः" इति वक्ष्यामि ॥**

(प्रदीपः) **अरवत इति** । रोऽस्यास्ति नित्यमिति—नित्ययोगे मतुप् । तेन ऋकार एव रवान् न तु वर्तक इत्यादावकारः । न रवानरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतो—**गुरोररस्येति** ॥

(उद्योतः) भाष्ये **इह तर्हीति** । एकदेशविकृतन्यायेन ऋत्वादिति भावः ॥ **रोस्यास्तीति** । इदं चिन्त्यम्—अवयवादावेव मत्वर्थो नानन्तरा[12]दाविति वर्तक इत्यादौ रवत्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनमफलमिति[13] ॥

---

१ निर्दिष्टस्येति । एकदेशे विकृतमनन्यवद्भवतीति शेषः ॥ तदर्थः वार्तिकार्थः ॥ छाया ॥

२ नन्वत एवानृत इति प्रतिषेधाभावात् प्लुतस्य सिद्धिरेवात आह—नह्यत्रेति ॥ लत्वविधावित्यर्थः ॥ छाया ॥

३ किं तु धातुरेव तथा निर्दिष्ट इति तत्प्रयुक्तकार्यस्य तद्वत्सिद्धावपि ऋप्रयुक्तकार्यासिद्धिरिति तदाश्रयणे तदप्राप्त्या प्लुत्यादिकमेव न स्यादित्युद्देश्यविस्मृतिरेवेत्यर्थः ॥ छाया ॥

४ इत्याहेति । सिद्धान्त्येकदेशीति भावः ॥

५ कृप इतीति । 'कृपो रो लः' इति पाठपक्ष इति भावः । कृपे रो ल इति पाठान्तरे तु कृपेरितीति बोध्यम् । तथा च 'कथम्' इति भाष्ये शङ्कापि 'कृपेः' इति पाठाशयेन ॥ 'कृपो रः' इति पाठाशयेनोत्तरम्—अवीति ॥ छायानि० ॥

६ खण्डक एव परिहरति—ऋकारोप्यत्रेति ॥ छाया ॥

७ ननु ल इत्युक्त्या कथं तद्घटितादेशोऽत आह—स्थानीति ॥ ['एरुः' इत्यादाविवेति भावः] ॥ छाया ॥

८ ननु कृपेरवयवरेफस्येतिवत् 'कृपेरवयवऋकारावयवरेफस्य' इत्येव कुतो न व्याख्यातम् । अत एवैऔङितिसूत्रभाष्यकैयटादिसंगतिरिति चेत्, न । तथासति तस्य निर्देशेऽपि स्थानषष्ठीनिर्दिष्टत्वाभावेन तदप्राप्त्या तदसिद्ध्यापत्तेः 'ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः' इति भाष्यविरोधापत्तेश्च । एवं च तत्रत्यमग्रहणपक्षप्रवृत्तं सिद्धान्तरूपम्, अत्रत्यं तु ग्रहणपक्षाभिप्रायकमेकदेश्युक्तिरूपं चेति मिथो न विरोध इत्याह—एतेनेति ॥ छाया ॥

९ नाहेति । स [ खण्डक ] एवेति भावः ॥

१० लौकिकन्यायेन प्लुत्यादिसिद्धिरिति एकदेशिना ( खण्डकेन ) वार्तिककृतोक्तम् । तत्र सिद्धान्त्येकदेश्येतावता द्वित्वस्वरितयोः सिद्धावपि तेनैवाच्त्वेऽपि प्लुतो नैव स्यादित्यशक्तिजानुकरणार्थत्ववत्प्लुत्यर्थतापि तस्य युक्तेत्याशयेन शङ्कते—इहेति ॥ छाया ॥

११ एकदेशी ( खण्डकः ) समाधत्ते—रवदिति ॥ छाया ॥ नह्येकदेशविकृतन्यायेन रेफवत्ताप्यायाति । लोकेऽपि हि छिन्नपुच्छस्य पुच्छवत्त्वप्रयुक्तं कार्यं नायात्येव ॥ श. कौ.

१२ प्रकृतेऽवयवे मतुप्यपीति शेषः ॥ छाया ॥

१३ तथा च वर्तक इत्यादाविवोक्तलक्ष्येऽपि लकारस्य रेफावयवऋकारान्यत्वात्प्लुतसिद्धिः ॥ छाया ॥

(आक्षेपभाष्यम्)

**य[1]दि 'अरवतः, इत्युच्यते, होतृ+ऋकार 'होतृ३कार'अत्र न प्राप्नोति ॥**

(आक्षेपबाधकभाष्यम्)

**"गुरो[2]रवतो ह्रस्वस्य" इति वक्ष्यामि ॥**

**(प्रदीपः) ह्रस्वस्येति ।** तेन[3] ह्रस्वस्यैव रवतः प्लुतनिषेधो न दीर्घस्य ॥

(सिद्धान्तिभाष्यम्)

**स[4] एष सूत्रभेदेन ऌकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते ॥ २ ॥**

**(प्रदीपः)** वार्तिककारस्य ऌकारप्रत्याख्यानं निष्प्रयोजनमित्याह—**सैषेति** ॥ २ ॥

**(उद्द्योतः)** भाष्ये **स एष इति** प्लुत्याद्यर्थं विद्यमान ऌकारोपदेशोऽरवतो **ह्रस्वस्येति** गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः ॥ कुत इत्यत आह—**सैषेति** । यतः सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लट्वानुकर्षाभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लट्वानुकर्षणमयुक्तमेवम् ऌकारप्रत्याख्यानमिति गम्यते । तदाह—**निष्प्रयोजनमिति** । सूत्रभेदपरिकल्पनं विना कॢप्तशिखे प्लुतसाधनस्याशक्यत्वान्निष्प्रयोजनमित्यर्थः ॥ **वंशस्तम्बादिति** । ल्यब्लोपे पञ्चमी । तमवलम्ब्येत्यर्थः । **लट्वा** पक्षिविशेषः फलविशेषो वा[5] । तद्यथा बह्वायाससाध्यमल्पफलं न युक्तं तथा ऌकारोपदेशप्रत्याख्यानमपीत्यर्थः[6] ॥ २ ॥



(शिवसूत्रे)

**ए[7]ओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥**

(संध्यक्षरेषु अतपरत्वस्थापनभाष्यम्)

**इ[8]दं विचार्यते—'इमानि संध्यक्षराणि तपराणि वोपदिश्येरन् 'एत् ओत् ङ्' 'ऐत् औत् च्' इति, अतपराणि वा यथान्यासम्–'इति ॥**

**(प्रदीपः) एओङ् ॥ ऐऔच् ॥ इदं विचार्यत इति ।** तपरातपरसन्ध्यक्षरोपदेशो विचार्यत इत्यर्थः ॥ तत्रोपदिश्येरन्नित्यत्रासत्त्वभूता यद्यपि क्रियाभिधीयते, तथापि बुद्ध्या परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति । यथा पश्य मृगो धावतीति सरणं दर्शने ॥

**(उद्द्योतः) एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ विचार्यत-इति ।** कृ[9]त्वाचिन्तान्यायेनायं विचार इति बोध्यम् ॥ इदंपदा[10]र्थमाह—**तपरेति** ॥ **असत्त्वभूतेति** । एवंचेदमा परामर्शोऽनुपपन्न इति भावः ॥ **बुद्ध्या परामृष्टेति** । उपदेशपदार्थभूतेत्यर्थः ॥ **कर्मभावमिति** । इदंपदवाच्यत्वेनेति भावः ॥ **यथेति** । इदं चिन्त्यम् । क[11]र्तृकर्मेतरकारकाभाववत्त्वस्यैवासत्त्वपदार्थत्वात् ॥

(भाष्यम्)

**कश्चात्र विशेषः ? ॥**

**(प्रदीपः) कश्चात्रेति ।** कार्ये को विशेष इति प्रश्नः ॥

**(उद्द्योतः)** पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितोऽत आह—**कार्ये इति** ॥

---

१ अत्रापि सिद्धान्त्येकदेशी (प्रयोजनवादी) दोषमाह—यद्येति ॥ छाया ॥

२ एकदेशी (खण्डकः) आह—गुरोरिति ॥ छाया ॥

३ 'अमानोनाः प्रतिषेधे' इत्युक्तेरस्य व्यस्तस्य तदर्थकस्य ग्रहणम् । तेन 'ह्रस्वस्य रवतो न' इत्यर्थेन दीर्घे रवत्त्वसत्त्वेपि ह्रस्वत्वाभावान्निषेधाप्रवृत्त्या तत्सिद्धिरिति भावस्तद्ध्वनयन्नाह—तेनेति ॥ छाया ॥

४ एवं प्लुत्यर्थनिरासो न युक्तो गौरवात् । अन्यथा सकलशास्त्रस्यान्यथात्वापत्तेरित्याशयेन भगवान्भाष्यकारस्तदुपसंहरति—स एषेति ॥ छाया ॥

५ 'लट लौल्ये' इति धातोरशूप्रुषिलटिकणिखटिविशिभ्यः क्वनित्यौणादिकः क्वन् नेड्वशि कृतीतीडभावः । 'लट्वा करञ्जभेदे स्यात् फले मद्ये खगान्तरे ।' इति विश्वः ॥ श० कौ० ॥

६ अत्रेदं तत्वम्—अशक्तिजानुकरणार्थवत्प्लुतादित्रयार्थमप्यावश्यकत्वम् ॥ शास्त्रीयैकेतिन्यायस्योक्तरीत्या संचाराभावात् अर्धविकारेण लौकिकन्यायस्याप्रवृत्तेश्च तत्र प्रत्यभिज्ञाया अभावात् । ऌकारघटितादेशकल्पने एकदेशविकाराभावाच्च । अतएव राजकीयमित्यादावपि न दोषः । अलोन्त्यपरिभाषयान्त्यादेशत्वेनाल्धर्मत्वादनुपयोगात् । 'सर्वे' इति न्यायेन समुदायादेशत्वे राजन्त्वसत्त्वेप्यन्त्वस्य सर्वथा शास्त्रीयेण दुर्वचत्वात् । लौकिकस्योक्तरीत्याप्राप्तेश्च । अत एव षष्ठीनिर्दिष्टस्येति न वाच्यम्, कर्ताराविल्या[1]दावनिर्वाहाच्च । अत एव श्वयुवेत्यादौ नकारान्तग्रहणमपि न कार्यम् । अग्रे नाकर्षणीयं च । किं त्वन इत्यस्यापकर्षमात्रं कर्तव्यम् । मघवत इत्यादावुक्तरीत्या द्वयोरप्रवृत्त्याऽन्नन्तत्वाभावेनैव वारणेन फलाभावात् । न्यासभेदप्रयुक्तगौरवं तु भाष्य एवोक्तम् । तेनापाणिनीयत्वमपि सूचितमेव । सिद्धान्ते यथा प्लुतस्तथोक्तमेव । एवं चैकदेशेत्यादि सर्वमेकदेश्युक्तमेव इति ॥ छाया ॥

७ तुल्यन्यायत्वात्सूत्रद्वये सहविचारः ॥ छाया ॥

८ ननु वाक्यकृतः 'संध्यक्षरेषु' इति दोषोक्तिरसंबद्धप्रलपिता प्रत्यक्षशुद्धोपदेशानुभवेन विपरीतशङ्कानुदयादतः संगत्यर्थमाह—इदमिति । इदमुपदेशरूपं वस्तु तपरातपरसंबन्धित्वभेदेन विविधं नानाप्रकारं चरति गच्छतीति हेतोः विचार्यते तादृक्संशयविषयतो नियम्यते इत्यर्थः ॥ छाया ॥

९ स्वारसिकशङ्काया अभावादाह—कृत्वेति ॥ संशयस्य केनचिदप्रतिबन्धादिति भावः ॥ छाया ॥

१० पदार्थमिति । कोटिद्वयविशिष्टमित्यर्थः । अत एव तस्य विचारविषयत्वम् । तथा चोक्तं पद्मश्रयाम्—

'कोटिद्वयस्य विज्ञानं विचार इति कथ्यते ।
विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते' इति ॥

११ 'पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इति भूवादिसूत्रभाष्ये कर्तृत्वस्य, "क्रियापि क्रिययेप्सिततमा भवति । कया क्रियया ? । संदर्शनक्रियया प्रार्थनक्रियया अध्यवस्यतिक्रियया" इति संप्रदानसंज्ञासूत्रभाष्ये कर्मत्वस्य चाङ्गीकारादिति भावः ॥ दाधिमथाः ॥

---

1 षष्ठीनिर्दिष्टस्येत्युक्तावपि कर्तारावित्यादौ गुणे कृते 'अप्तृन्तृच्' इति दीर्घो न स्यात् । तत्र तृन्तृचोरभावात् । नहि गुणविधौ तौ षष्ठीनिर्दिष्टौ येनैकदेशेति न्यायः प्रवर्तेत । न च वचनसामर्थ्याद्भूतपूर्वतृनाद्याश्रित्य दीर्घः सुकरः, सांप्रतिकाभावे भूतपूर्वगतिरिति न्यायस्यासाधारणोदाहरणशून्यस्य सिद्धान्तितत्वाभावेन मानाभावात् ॥ इति दोषस्य सत्त्वमिति भावः ॥दाधि०॥

( ४७ तपरपक्षदूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ॥ * ॥

( भाष्यम् )

**संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम् ।**

( प्रदीपः ) **तपरोपदेशश्चेदिति** । यद्यप्युपदेश उच्चारणं तथापि तपरोपदेशे फलं चेदस्ति ततस्तपरोच्चारणं कर्तव्यमित्यर्थः । **संध्यक्षराणी**त्यन्वर्था पूर्वाचार्यसंज्ञा संधीयमानावयवत्वात् ॥

(उद्योतः) भेदाभावादुद्देश्यविधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति—**यद्यपीत्यादि** ॥ **फलं चेदिति** । संप्रदाने घञिति भावः ॥ फलस्यैव करणत्वविवक्षया करणे घञित्यन्ये ॥ **सन्धीयमानावयवत्वादिति** । [1]अइउणिति शिष्यमाणवर्णसदृशावयवसन्धानेनास्य निष्पन्नत्वादित्यर्थः ॥

( ४८ तपरत्वपक्षदूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ प्लुत्यादिष्वज्विधिः ॥ * ॥

( भाष्यम् )

**प्लुत्यादिष्वजा[2]श्रयो विधिर्न सिध्यति ॥ गो३त्रात नौ४त्रात इत्यत्र "अनचि च" इत्यच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति । इह च प्रत्यङ्ङै४तिकायन उदङ्ङौ४पगव इति "अचि" इति ङमुडागमो न प्राप्नोति ॥**

( प्रदीपः ) **प्लुत्यादिष्विति** । [3]प्लुतसंज्ञामभ्युपगम्याच्कार्याणि न सिध्यन्तीत्युच्यते ॥

(उद्योतः) भाष्ये प्लुतिग्रहणं त्रिमात्रपरम् । आदिना चतुर्मात्रग्रहणम् ॥

( ४९ तपरत्वपक्षदूषणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ प्लुतसंज्ञा च ॥ * ॥

( भाष्यम् )

**प्लुतसंज्ञा च न सिध्यति ॥ ऐ३तिकायन[4] औ३पगव "ऊकालोऽज् ह्रस्वदीर्घप्लुतः" इति प्लुतसंज्ञा न प्राप्नोति ॥**

( प्रदीपः ) प्लुत एव न प्राप्नोतीति दर्शयितुमाह—**प्लुतसंज्ञा चेति** । त्रिमात्रस्याचः प्लुतसंज्ञा विधीयते, तपरत्वे च त्रिमात्रस्याग्रहणादच्त्वाभावः । तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ईकार ऊकारश्च स्यात् ॥

(उद्योतः) नन्वोमभ्यादाने इत्यादिनान्तरतमपरिभाषासंस्कृतेनैज्रूपप्लुतविधानादनच्त्वेपि तेषां प्लुतसंज्ञा भविष्यतीत्यत आह—**तत्रैचामिति** । ताभ्यामपि तेषां यथाकथंचिदान्तरतम्यसत्त्वादिति भावः ॥

( अतपरपक्षाभ्युपगमभाष्यम् )

**[5]सन्तु तर्ह्यतपराणि ।**

( ५० अतपरपक्षदूषणवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ [6]अतपर एच इग्घ्रस्वादेशे ॥ * ॥

( भाष्यम् )

**यद्यतपराणि "एच इग्घ्रस्वादेशे" इति वक्तव्यम् ॥ किं प्रयोजनम्? ॥ एचो (ङो) ह्रस्वादेशशासनेष्वर्ध एकारोऽर्ध ओकारो वा मा भूदिति ॥**

( प्रदीपः ) **अतपर इति** । असतीह तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्धैकारार्धौकारयोर्ग्रहणादच्त्वाद्ध्रस्वाद्विधानं स्यादिति[7] सूत्रं कर्तव्यम् । तपरत्वे तु तयोरग्रहणात्प्राप्त्यभावः ॥

(उद्योतः) भाष्ये अर्ध एकार इति । [8]मात्रिकत्वेनार्धत्वम् । समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात् ॥

---

१ अइउणित्यादौ अनुशिष्यमाणा ये वर्णास्तत्सदृशा येऽवयवा रमेशो गङ्गोदकम् देवैश्वर्यम् कृष्णौत्कण्ठ्यमित्यादिप्रयोगवाक्यस्थास्तत्संधानेन तत्रास्यैचो निष्पन्नत्वादित्यर्थः ॥ एवं च तत्सदृशावयवभासादेतेषां सर्वेषां सर्वत्र तत्त्वमिति भावः ॥ छाया ॥

२ उभयसंग्रहायाह—अजाश्रय इति । अत एव प्लुत्यादिष्विति न परसप्तमी किंतु विषयसप्तमीत्याशयेनोदाहरति—गो३त्रात इति ॥ संबोधनमिदं तृजन्तस्य । क्वचित्क्तान्तसंबोधनपाठः । क्वचित्तत्रैव प्रथमान्तपाठः । 'गुरोः' इति प्लुतस्तु सर्वपक्षे निर्बाधः ॥ नौ४त्रात इति । 'गुरोः' इति प्लुतः 'प्लुतावैच इदुतौ' इत्यौकारोत्तरभागे व्यवस्थापित इति चतुर्मात्रोयम् । एवमग्रिमयोरपि ज्ञेयम् ॥ छाया ॥

३ तपरोच्चारणे त्रिमात्रादीनामनच्त्वेन लक्ष्येषु नित्यत्वाद् [ द्वित्वादीनामसिद्धत्वाच्च ] प्लुते कृते तदाश्रितं द्वित्वं ङमुट् च न स्यात् । प्लुतप्रगृह्याः इति तु प्लुतान्तरे सावकाशत्वान्नात्र ज्ञापकमिति भावः । तदेतत्सर्वमभिप्रेत्याह—प्लुतसंज्ञामिति । प्लुतसहितसंज्ञामित्यर्थः । तत्संज्ञां प्लुतं चाभ्युपगम्येत्यर्थः ॥ तस्य संज्ञापूर्वकत्वात् ॥ छाया ॥

४ ऐ३तिकायन इत्यादि । 'प्लुतावैच इदुतौ' इति सूत्रमनालोचयत एवमुक्तिः । तदालोचने तु दे३वदत्त गो३त्रातेत्युक्तिरुचितेति रत्नकृत् ॥ वस्तुतस्तु—प्लुतवत्तयोरपि वैकल्पिकत्वेन तदभावे प्लुतमात्रं समुदायस्येष्टमित्येतद्भाष्यतात्पर्यमित्यनन्तरत्वात्तयोरुक्तावप्याद्ययोरन्येषां चोपलक्षणमिति यथाश्रुतमेव साध्विति बोध्यम् ॥ छाया ॥

५ सिद्धान्ती द्वितीयपक्षमालम्बते—सन्त्विति ॥ संध्यक्षराणीति शेषः ॥ छाया ॥

६ एकदेशी आह—अतपर इति ॥ धर्मपरो निर्देशः । जातावेकवचनं वा तद्ध्वनयन्नाह—यद्यतपराणीति ॥ छाया ॥

७ इतीति । अत इत्यर्थः । अनिष्टवारणायेति शेषः ॥

८ ननु स्वरूपतोऽर्धत्वे एकार इत्याद्यसंगतिरत आह—मात्रिकत्वेनेति । वर्णसमाम्नायस्थस्यैचो द्विमात्रत्वेन तदपेक्षया तस्य तत्त्वाङ्गीकारेण फलितेन तेनेत्यर्थः ॥ छाया ॥

( प्रतिबन्दीसमाधानभाष्यम् )

**ननु च यस्यापि तपराणि, तेनाप्येतद्वक्तव्यम् । इमावैचौ समाहारवर्णौ—मात्रावर्णस्य, मात्रेवर्णो-वर्णयोस्तयोर्ह्रस्वादेशशासनेषु कदाचिदवर्णः स्यात्, कदाचिदिवर्णोवर्णौ; मा कदाचिदवर्णो भूदिति ॥**

( प्रदीपः ) **ननु चेति** सूत्रारम्भं प्रति न कश्चिद्विशेष इत्यर्थः । अतपरत्वे एच इति वक्तव्यं, तपरत्वे त्वैच इति । ऐचोर्विश्लिष्टावर्णत्वात्संश्लिष्टावर्णावर्धैकारार्धौकारौ न भवतः ॥

(उद्योतः) भाष्ये तेनाप्येतद्वक्तव्यम् इत्यत्र एतच्छब्देन नियामकं सूत्रं परामृश्यते ॥ सूत्रन्यासभेदेऽपि गुरुलाघवकृतो विशेषो नास्तीत्याह—**सूत्रारम्भं प्रतीति** ॥ **विश्लिष्टेति** । उपलभ्यमानेत्यर्थः ॥ **संश्लिष्टेति** । स्पष्टमनुपलभ्यमानेत्यर्थः । एवं चैच्विषये नावर्णप्राप्तिः । अर्धेङोस्तु तपरनिर्देशेऽनच्त्वाद् ह्रस्वत्वमेव नेति भावः ॥ एङोः शुद्धतालव्यादित्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम् ॥ **संश्लिष्टावर्णाविति** कैयटस्याप्यत्रैव तात्पर्यम् ॥

( प्रतिबन्दीनिराकरणभाष्यम् )

**प्रत्याख्यायत एतत्,—"*ऐचोश्चोत्तरभूयस्त्वात्*" इति ॥**

( प्रदीपः ) **ऐचोश्चेति** । अर्धमात्रावर्णस्याध्यर्धमात्रेवर्णोवर्णयोर्भूयसा च व्यपदेशो मल्लग्रामादिवदितीकारोकारावेव भविष्यतः ॥

(उद्योतः) भाष्ये प्रत्याख्यायत एतदिति । एतत् ऐज्विषयमेच इगिति सूत्रम् । वर्तमानसामीप्ये लट् ॥ **भूयसा चेति** । तद्द्वारकभूयःस्थानसाम्यादित्यर्थः ॥ [इदं च मतमष्टमेऽपि भाष्ये स्पष्टम् ॥ शब्दपरविप्रतिषेधेनोत्तरभागसदृश इति विवरणोक्तं तु चिन्त्यम् । अन्तरङ्गत्वेन पूर्वसदृशस्यैवापत्तेः । स्पष्टं चेदं 'नित्यः परयणादेशः' इत्यादिना 'अचः परस्मिन्—' इत्यत्र भाष्ये ॥ ]

( समाधानसिद्धान्तिभाष्यम् )

**यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते—"*सिद्धमेङः सस्थानत्वात्*" इति ॥**

( प्रदीपः ) **सिद्धमेङ इति** । अर्धैकारार्धौकारौ न स्तः, तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थाने इकारोकारावेव भविष्यतः ॥

(उद्योतः) भाष्ये **इदमपीति** । एङ्विषयमपीत्यर्थः ॥ **सस्थानत्वादिति** । इकारोकाराभ्यां समानस्थानत्वादित्यर्थः । तदाह—**तालव्य इति** । तालव्य एवेत्यर्थः ॥

( आक्षेपभाष्यम् )

**ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारः॥**

( समाधानभाष्यम् )

**न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् ॥**

( प्रदीपः ) **तावेवेति** । ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीति भावः । गुणसंज्ञायां तु दीर्घावेकारौकारौ निर्देश्यौ ॥

(उद्योतः) भाष्ये **तावेवेति** । लाघवादिति भावः ॥ **ग्रहणमिति** । प्रदेशेष्विति शेषः ॥ नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यादत आह—**गुणेति** । एवमपि अत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवति ॥

( आक्षेपभाष्यम् )

**ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—सुजाते एश्वसूनृते, अध्वर्यो ओद्रिभिः सुतम्, शुक्रं ते एन्यद्, यजतं ते एन्यत्—इति ॥**

---

१ अतपरवादी [गौरवाभावं] शङ्कते—ननु चेति ॥

२ ननु सूत्रयोर्भिन्नस्वरूपत्वात् 'तेनाप्येतद्वक्तव्यम्' इति भाष्यासंगतिरत आह—सूत्रमिति ॥ छाया ॥

३ भाष्ये 'इमावैचौ' इत्युक्तितात्पर्यमाह—'एवंचेति' स्पष्टमनुपलभ्यमानावर्णत्वे चेत्यर्थः ॥ छाया ॥

४ संश्लिष्टावर्णावित्यनेन स्थानद्वयनिवृत्तिपूर्वकशुद्धतालव्यादित्वस्यैव प्रकटनेन तथैव भाष्यस्य सुयोजत्वेनान्ययोक्तेरयुक्तत्वादिति भावः ॥

५ सिद्धान्ती [तपरवादिमत] उत्तरमाह—प्रत्याख्यायत इति ॥ छाया ॥

६ इदं च मतमिति । 'अर्धमात्राऽवर्णस्य, अध्यर्धमात्रेवर्णोवर्णयोः' इति मतमित्यर्थः ॥ अष्टमे इति ॥ 'प्लुतावैच इदुतौ' इति सूत्रभाष्ये इत्यर्थः ॥

७ यद्यप्ययं कोष्ठकान्तर्गतः पाठः सर्वेषु पुस्तकेषु अनुपदमेव 'तालव्य एवेत्यर्थः' इत्युत्तरं समुपलभ्यते । व्याख्यातं च छायायामपि तथैव । तथापि तत्रास्यानुपयोगादत्रैवोपयुक्तत्वाच्चात्रैव मया स्थापितः । तथा च तत्र लेखकप्रमादादेव लिखित इति बोध्यम् । एवं च Bengal Asiatic Society मुद्रितपुस्तके लेखकप्रमादानाविष्करणं तत्रत्यभाष्यादर्शनमूलकमेवेति बोध्यम् ॥ दाधिमथाः ॥

८ अतपरवादी [सिद्धान्ती] आह—यदीति ॥ छाया ॥

९ एवं चातपरत्वेऽपि तत्सूत्रं प्रत्याख्यास्यत इति नास्ति विशेषः इति भावः ॥

१० ननु सस्थानतरयोः सत्त्वात्सूत्रमारब्धव्यमेवेति शङ्कते—ननु चेति॥ सस्थानतर इति पाठः । सस्थानतराविति पाठे तु—'ओकारः' इत्यग्रे 'च' इति शेषः ॥ छाया ॥

११ परिहरति—न तौ स्त इति ॥ एवं चाभावादेव तयोरप्राप्त्या तयोरेव सिद्ध्या तदनारम्भ्यमेवेति भावः ॥ छाया ॥

१२ दीर्घाविति ॥ स्वरूपेण तात्पराविति । प्रत्याहारेणानयोर्निर्देशासंभवात् । अनण्त्वेन तद्ग्राप्त्याऽन्यग्रहणमपि नेति भावः ॥ छाया ॥

१३ अणुरपीति न्यायात् सिद्धान्तेऽत्र दीर्घपाठे मात्राचतुष्टयम् । एङ्विषयस्य सार्धमात्राद्वयमिति मिलित्वा सार्धपञ्चमात्राः । इदानीं तु अत्र ह्रस्वपाठे मात्राद्वयम् । गुणसंज्ञायां तथा पाठे मात्राचतुष्टयमिति पडेव मात्रा इति भावः ॥ छाया ॥

१४ तयोरनुपदेशस्तदसत्त्वे न मानं लक्ष्यविरोधादिति शङ्कते—ननु चेति ॥ छाया ॥

(प्रदीपः) सुजात इति । अन्तःपादस्थस्याव्यपरस्याकारस्यार्धमेकारमर्धमोकारं च विदधति ॥

(उद्द्योतः) अकारस्यार्धमिति । सुजाते ए अश्वेति अकारलेखस्तु प्रामादिकः[1] ॥

( समाधानभाष्यम् )

**पारिषदकृतिरेषा[2] तत्रभवताम् । नैवं हि लोके नान्यस्मिन्वेदे[3]ऽर्ध एकारोर्ध ओकारो वास्ति ॥**

(प्रदीपः) पारिषदकृतिरिति । गीतिवशात्तथोच्चारणमित्यर्थः ॥

(उद्द्योतः) शाखाविशेषाध्यायिनां समवायः परिषत् पर्षद्वा तत्र भवा कृतिरित्यर्थः ॥

( ५१ अतपरपक्षदूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ एकादेशे दीर्घग्रहणम् ॥ * ॥

( भाष्यम् )

**एकादेशे दीर्घग्रहणं कर्तव्यम्—"आद्गुणो दीर्घः" "वृद्धिरेचि दीर्घः" इति ॥ किं प्रयोजनम्? ॥ आन्तर्यतस्त्रिमात्रचतुर्मात्राणां[4] स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकं, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति ॥**

(प्रदीपः) आन्तर्य इति । अन्यस्यासम्भवादिदमत्र नास्ति—प्लुतश्च विषये स्मृत इति ॥

(उद्द्योतः) तदेवं[5] मतपरतपरवादिमतसाधारण्येनैच इगितिसूत्रस्य कर्तव्यताकर्तव्यते उपपाद्यातपरवादिमतेऽसाधारणदूषणमाह—भाष्ये एकादेशे इति । एकः पूर्वपरयोर्दीर्घ इति सूत्रं कार्यमित्यर्थः ॥ अन्यस्यासंभवादिति । अयं भावः—यथा स्थाघ्वोरित्यत्रातपरत्वे स्थाघ्वोर्दीर्घस्य स्थाने घुमास्थेत्येव दीर्घेकारे सिद्धे पुनर्वचनमदीर्घार्थमित्य[6]विशेषाद् ह्रस्वप्लुतयोः प्रसङ्गे तदुक्तं प्लुतश्च विषये इति । एवं च दूराद्धूतादिविषयेऽप्यनेनैव प्लुते पक्षेऽनुवाददोषस्तत्र[7], इह तु प्लुत एव प्राप्नोतीति खट्वा इन्द्र इत्यादिविषयकशास्त्रवैयर्थ्यमेवे[8]त्यनुवाददोषः सोढव्य एवेति वैषम्यमिति ॥ [वस्तुतो[9]ऽस्य टित्वाभावादेतद्विषये प्लुताप्रवृत्तेश्चिन्त्यमेवेदमिति स्थाघ्वोरितिसूत्रे निरूपयिष्यामः ॥]

( आक्षेपभाष्यम् )

**तर्हि[10] दीर्घग्रहणं कर्तव्यम् ॥**

( समाधानभाष्यम् )

**न[11] कर्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते—"अकः सवर्णे" एको भवति ॥ ततो—"दीर्घः" दीर्घश्च स भवति, यः स 'एकः पूर्वपरयोः' इत्येवं निर्दिष्ट इति ॥**

(उद्द्योतः) भाष्ये यः स इति प्रसिद्ध्यर्थकम् ॥

( आक्षेपभाष्यम् )

**इहापि[12] तर्हि प्राप्नोति-पशुं, विद्धं, पचन्तीति ॥**

( समाधानभाष्यम् )

**नैष[13] दोषः । इह तावत्पशुमिति, "अम्येकः" इतीयता सिद्धम् । सोयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्—यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यादिति ॥**

**विद्धमिति । पूर्व इत्येवानुवर्तते ॥ अथवाचार्यप्रवृत्तिर्ज्ञापयति—नानेन संप्रसारणस्य दीर्घो भवतीति । यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ति ॥**

**पचन्तीति । "अतो गुणे पररूपम्" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्रूपग्रहणं करोति, तस्यैतत्प्रयोजनम्—यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यादिति ॥**

(प्रदीपः) अम्येक इति । प्रथमयोरिति सिद्ध एतदपि किमर्थमुच्यते इति चेद् वा छन्दसीत्यत्रानुवृत्त्यर्थम् ।

---

१ न चायं प्रमादः, वैदिकैरनादिपारम्पर्येणाप्रमादेनैवाङ्गीकारात् । तदीयप्रातिशाख्ये विशेषविधानाच्च 'प्रकृत्यान्तःपाद' इत्यत्र प्रकृत्येतिस्थाने तत्पाठ इति भावः ॥ छाया ॥

२ परिहरति—पार्षदेति ॥ छाया ॥

३ तथा च सर्वशाखासाधारणेऽत्र तदुपदेशोऽयुक्तः । किं चैवमन्यत्रापि प्रयोगापत्तिरिति तथैव युक्तम् । सवर्णग्रहणात्तयोरत्वादावपि सुजाते इत्यादौ प्रकृत्यान्तरिति प्रकृतिभावः तयोर्ग्रहणे दोषस्तु ह्रस्वविधावन्तरतमत्वात्तयोरेव प्रसङ्ग इति । तदर्थमेच इति सूत्रारम्भे तु गौरवमेवाधिकम् ॥ छाया ॥

४ ननु तथापि चतुर्मात्रः कथमापाद्यते तस्य लोकवेदयोरप्रसिद्धेरिति चेत् । न, छान्दोग्ये प्रसिद्धेरित्याहुः । वस्तुतस्तु—लोकेऽप्यस्ति प्रसिद्धिः । तथाच प्लुतावैच इदुताविति सूत्रे भाष्यकारो वक्ष्यति—'इष्यत एव चतुर्मात्रः प्लुत' इति ॥ शब्दकौ० ॥ छाया ॥

५ यद्यप्युभाभ्यामपि न कर्तव्यमिति सिद्धान्तादोष एव न, तथापि यदीत्युक्तिस्वारस्यात्पक्षान्तरे तु यदीत्यनेन सूचिते न्यास एव क्रियत इति विशेषाभावेनासाधारणदोषमाहेत्याह—तदेवमिति ॥ छाया ॥

६ अविशेषादिति । अनान्तर्याविशेषादित्यर्थः ॥ छाया ॥

७ पक्षे दूराद्धूतादिविषये । तत्र स्थाघ्वोरिच्चेत्यत्र ॥ छाया ॥

८ वैयर्थ्यमिति । गुरोरनृत इत्यनेनानन्त्यटेरविशिष्टाकारस्य एकारूपप्लुतसिद्धिर्यतोऽत्र स्थानिनोस्त्रिमात्रत्वेन त्रिमात्र एव स स्यादिति भावः ॥ छाया ॥

९ अयं कोष्ठकान्तर्गतः पाठः क्वचिदेवोपलभ्यते न सर्वत्र ॥ दाधि० ॥

१० मध्यस्थः पृच्छति—तत्तर्हीति ॥ छाया ॥

११ एकदेशी आह—नेति ॥ तत्र हेतुमाह—उपरीति ॥ यत इत्यादिः॥ एवं च तेन नियमेन सर्वत्रेष्टसिद्धिः ॥ छाया ॥

१२ तथा न्यासे योगविभागे चोभयत्रातिप्रसङ्गमाशङ्कते—इहापि तर्हीति ॥ छाया ॥

१३ अतिप्रसङ्गमुद्धरति—नैष इति ॥

तस्मात् पूर्वश्रुतिः पूर्वरूपार्था । सैवोत्तरत्रानुवर्तत इति विद्धमिति पूर्वरूपं भविष्यति ॥ **अथवेति । विधिनियमसंभवे विधिरेव बलीयानिति** विधेर्बलीयस्त्वान्नियमो न भवति [1]हल एव दीर्घत्वं यथा स्याद्, उत इत्यादौ मा भूदिति ॥

**(उद्द्योतः) वा छन्दसीत्यत्रेति ।** [2]वा छन्दसीत्यस्यात्रानुवृत्त्यर्थमित्यर्थः ॥ **पूर्वरूपार्थेति ।** पूर्वव्यक्त्यात्मकपूर्वरूपार्थेत्यर्थः ॥ **भाष्ये पर इतीयतेति** ह्रस्वत्वादिरूपमिति भावः ॥ सिद्धान्ते तु रूपग्रहणं स्पष्टार्थमेव, अस्य भाष्यस्य पूर्वपक्ष्युक्तित्वात् ॥

( आक्षेपभाष्यम् )

**[3]ईह तर्हि खट्वश्यौ मालश्यं इति दीर्घवचनादकारो न, अनान्तर्यादेकारौकारौ न ॥ [ तत्र को दोषः ? ॥ ] विगृहीतस्य श्रवणं प्रसज्येत ॥**

**(उद्द्योतः) अकारो नेति ।** रपरत्वेपि द्विमात्रत्वरूपदीर्घत्वासंभव एव ॥ **विगृहीतस्येति ।** दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुपप्लवादिति भावः ॥

( समाधानभाष्यम् )

**न [5]ब्रूमो—यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति ॥ किं तर्हि ? ॥ यत्र क्रियमाणे न दोषस्तत्र कर्तव्यमिति ॥**

( आक्षेपभाष्यम् )

**[6]क्व च क्रियमाणे न दोषः, ? ॥**

( समाधानभाष्यम् )

**[7]संज्ञाविधौ । वृद्धिरादैज् दीर्घः, अदेङ् गुणो दीर्घ इति ॥**

( आक्षेपभाष्यम् )

**[8]तर्त्तर्हि दीर्घग्रहणं कर्तव्यम् ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**[9]न कर्तव्यम् ॥**

( आक्षेपभाष्यम् )

**कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥**

( समाधानभाष्यम् )

**तपरे गुणवृद्धी ॥**

**( प्रदीपः ) तपरे इति ।** तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः ।

**(उद्द्योतः)** ननु गुणवृद्धिसंज्ञयोस्तपरत्वाभावात्पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह—**तपरसंज्ञीति ।** तपरशब्दनिर्दिष्टे संज्ञिनि गुणवृद्धिसंज्ञे प्रवर्तेते इत्यर्थः । एवं च त्रिमात्रादीनां तत्र संज्ञितयाऽनिर्देशान्नोक्तदोष इति भावः ॥

( आक्षेपभाष्यम् )

**[10]ननु च तः परो यस्मात्सोऽयं तपरः ॥**

**(उद्द्योतः)** भाष्ये **ननु चेति ।** एवंचेङैचौ न तपराविति भावः ॥

( समाधानभाष्यम् )

**नेत्याह, तादपि पर[11]स्तपर इति ॥**

**( प्रदीपः ) तादपीति ।** [12]तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः ॥

**( उद्द्योतः ) नेत्याहेति ।** स एव तपर इति नेत्याहेत्यर्थः ॥ अर्थभेदेन शब्दभेदे—**तन्त्रन्यायेति ।** तद्भेदेऽपि शब्दैक्यपक्षे आह—**एकस्यैव द्विशक्तित्वादिति ॥ एकशेषेति ।** समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं च्चिन्त्यम्[13] ॥

---

१ तदाकारमाह—हल एवेति । ततः परस्यैवेत्यर्थः । एवं सति तु विद्धमित्यादौ दीर्घवारणेन दोपस्तदवस्थ एवेति भावः ॥ वस्तुतो निरुतमित्यादौ वारणाय 'अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य' इत्यर्थावश्यकत्वे नियमेन फलमिति बोध्यम् ॥ छाया ॥

२ वाच्छन्दस्यमीत्येकयोगे तु जसि न स्यादिति योगविभागोऽप्यर्थवानिति भावः ॥ छाया ॥

३ पूर्वोक्तातिप्रसङ्गस्योद्धारेप्यतिप्रसङ्गान्तरमाह—इहेति ॥ छाया ॥

४ परीति । स्थानेन्तरतम इतीत्यर्थः ॥ छाया ॥

५ एवं वार्तिके तत्खण्डने च दूषिते वार्तिककृद्दोपवादी आह—न ब्रूम इति ॥ छाया ॥

६ ननु तत्राकरणे कथम् 'एकादेशे' इत्युक्तिरित्याशयेन पृच्छति—क्वेति ॥ छाया ॥

७ उत्तरयति—संज्ञेति । 'एकादेशे' इत्यस्य तन्मूलभूतसंज्ञाविधाविस्यर्थः । कार्यत्वाच्छेपत्वाच्च संज्ञाधिकारे 'एकादेशे' इत्यभिधानोपपत्तिः ॥ छाया ॥

८ पुनरपि मध्यस्थस्तत्त्वं श्रोतुं पृच्छति—तत्तर्हीति ॥ संज्ञाविधावित्युपज्यते ॥ छाया ॥

९ भगवानाह—नेति ॥ मध्यस्थस्य प्रश्नः—कस्मादिति । भगवत उत्तरम्—तपरे इति ॥ छाया ॥

१० ननु बहुफलबलाद्बहुव्रीहिरेवेत्यदातोस्तत्वेऽप्येङैचोस्तदभावादुक्तदोषस्तदवस्थ एवेति दोपवादी शङ्कते—ननु चेति ॥ छाया ॥

११ स्यादेतत्—संज्ञासूत्रे अदातोस्तपरकरणेऽप्येङैचोः कथं तत्कालग्राहकता सहिवहोरोदिति सूत्रे वर्णग्रहणेन तात्पर इति पञ्चमीसमासस्यापि ज्ञापितत्वादिति चेत् । एवमपि तात्पराभ्यामेङैच्शब्दाभ्यामस्तु दीर्घाणामेवोपस्थितिः । उपस्थितैस्तु दीर्घैः स्वसवर्णानां ग्रहणं दुर्वारमेव । नहि तेऽपि तात्पराः अनुच्चारितत्वात् ॥ ग्राहकत्वं परमनुच्चारितानामपि प्रत्याहारैरुपस्थितानामस्त्येव, दीर्घाज्जसि चेति ज्ञापकात् । स्वादिभ्य इति निर्देशाच्च । तेन चमूष्वित्यादिषु षत्वादिकं सिध्यतीति वक्ष्यते । तात्परस्तत्कालस्येति तूच्चारितेष्वेव स्यादिति चेत्सत्यम् । ङमो ह्रस्वादिति सूत्रे ङमुडिति प्रत्याहारे कृतं टित्त्वं संज्ञायां व्यर्थं सत् सामर्थ्यात् संज्ञिषु ङादिषूपकरोतीति यथा स्वीकृतम्, तथेहापि तात्परत्वं संज्ञायामनुपयुज्यमानं तदुपस्थाप्येषु संज्ञिषु तत्कालावधारणं सामर्थ्यात्करोतीति न कश्चिद्दोषः ॥ इति श० कौ० ॥

१२ अपिसूचितप्रागुक्तसमासस्यापि परिग्रहे बीजमाह—तत्रेति ॥ छाया ॥

१३ समेति ॥ वस्तुतस्तु तद्विषये तदभावेऽपीतरेतरयोगद्वन्द्वविषये एवैकशेषे पक्षान्तरवच्छान्दसैकवचनस्य संभवेन युक्त एव कैयटः ॥ किंच—एकशेषाभावेनैकवचनानुपपत्त्येति लेखेन एकशेष एकवचनोपपत्तौ कारणमिति प्रतीयते । तथा चैकशेषाभावो द्विवचनाद्युपपत्तौ कारणमिति प्रतीयेतेति सर्वविप्लवः ॥ समाहारद्वन्द्वे यद्यप्येकवचनविभक्त्युपपत्तिः । तथाप्येकशेषमन्तरा द्वितीयशब्दस्य निवृत्त्यभावेनैकस्यैव शब्दस्योच्चारणस्यानुपपत्तिरिति विभाव्यते,

(आक्षेपभाष्यम्)

**यदि[1] तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्-यवः स्तवः; लवः पव इत्यत्र न स्यात् ॥**

(समाधानभाष्यम्)

**नैष[2] तकारः ॥ कस्तर्हि ? ॥ दकारः ॥**

(आक्षेपभाष्यम्)

**किं दकारे प्रयोजनम्, ? ॥**

(प्रदीपः) बहुव्रीहिवादी चोदयति—**किं दकार इति** ॥

(प्रतिबन्दीसमाधानभाष्यम्)

**अथ किं तकारे ? । यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपीति ॥**

(प्रदीपः) समासद्वयवादी तं प्रत्याह—**अथ किं तकार इति** । तव केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम्, ऋकारस्यानण्त्वाद्भिन्नकालानां ग्रहणाप्रसङ्गाद्गुणानां चाभेदकत्वात्तत्प्राप्त्यर्थत्वाभावात् । अथ तवासन्देहार्थो मुखसुखार्थो वा तकार एवं मम दकार इत्यर्थः ॥ **तित्स्वरितमित्यत्रत्यभाष्येणास्य** विरोधः । तत्र हि-'**तिति प्रत्ययग्रहणं** चोदितम्, इह मा भूत्-**दिव उत्** द्युभ्यामिति, ततो दित्त्वाश्रयणेन प्रत्याख्यातम्, **तपरसूत्रे** चकारश्चर्त्वंभूतो निर्दिश्यते । तेन तत्कालस्य ग्राहको दकारः' —इत्युक्तम् । इह च दकाराभ्युपगमेन लवादिषु दोषः परिहृतः ॥ अत्राहुः—थकारस्थानिको धकारस्थानिको वा दकारोऽत्र विवक्षितः—**कस्तर्हि दकार इति**[3] ॥

(उद्योतः) **सुखमुखार्थ** इति पाठे मयूरव्यंसकादित्वात्समासः ॥ ननु **एङैजिति** संज्ञायास्तात्परत्वेऽपि संज्ञिनामेकारादीनां किमागतमिति चेत्, न तपरशब्दबोध्योऽपि वर्णस्तत्कालस्यैवसंज्ञेत्यर्थान्न दोषः ॥ **गुणानां चेति** । अण्सु[4] गुणानां तत्त्वाभावेऽपि अनण्त्वादेव दीर्घादिविषये तत्त्वमिति भावः ॥ ननु दित्त्वे **दिव उदित्यत्र** तत्कालग्रहणं न स्यादत आह—**तपरसूत्रे चेति** ॥ **इहेति** । **तपरसूत्रे** दकारानाश्रयणेन चेत्यपि बोध्यम् ॥ थकारस्थानिक इति । तस्य चैतद्दृष्ट्याऽसिद्धत्वान्न तत्र तपरसूत्रप्रवृत्तिरिति भावः ॥

(इति संध्यक्षरेष्वतपरपाठनिर्णयः ॥)

---

(अथ वर्णैकदेशग्रहणाग्रहणनिर्णयः ॥)

(भाष्यम्)

**इदं विचार्यते—य एते वर्णेषु[6] वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति ॥ कुतः[7] पुनरियं विचारणा ? ॥ इह हि समुदाया अप्युपदिश्यन्ते, अवयवा अपि । अभ्यन्तरश्च समुदायेऽवयवः, तद्यथा वृक्षः प्रचलन् सहावयवैः प्रचलति । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा ॥**

(प्रदीपः) **वर्णान्तरसमानाकृतय इति** । आकारादि[8]ष्वकारादिसदृशा अवयवा ऋकारऌकारयो रेफलकारसदृशाववयवौ संध्यक्षरेष्वकारेकारोकारसदृशाः, तत्र केवलवर्णकार्यमवयवेषु भवति नवेति विचारः ॥ **इह हि समुदाया अपीति** । ऋऌएओऐऔ इति ॥ **अवयवा अपीति** । अइउण्ऋऌक्णिति ॥ तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञां न लभन्ते, अवयवपरे च निर्देशे समुदायो न संज्ञाभाक् यथा **हयवे**त्यादावनचूकस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोऽप्यकारोऽन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञां न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते । तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति । एवं स्थिते अग्नइन्द्र इत्यादौ यत्रावयवकार्यं प्राप्नोति समुदायकार्यं च तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्परत्वाच्चावयवकार्यप्रसङ्गः । अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य

---

तदा एकवचनान्तत्वेऽपि हलन्त्यम्, अ अ इत्यादिष्वेकशेषाङ्गीकारस्य भाष्ये स्पष्टत्वाच्चिन्त्यत्वोक्तिरेव चिन्त्या ॥ इति दाधिमथाः ॥

१ दोषवादी शङ्कते—यदीति ॥ छाया ॥

२ सिद्धान्ती परिहरति—नैष इति ॥ छाया ॥

३ इतीति । इत्यत्रेत्यर्थः ॥ छाया ॥

४ अण्स्विति । तत्र सूत्रेऽणुग्रहणसामर्थ्यादिति भावः तत्त्वमभेदकत्वम् छाया ॥

५ वस्तुतस्तु 'तपरस्तत्कालस्य' इत्यत्र दकारो न निर्दिश्यते । प्रयोजनाभावात् । 'दिव उत्' 'ऋत उ'दित्यादौ तु तपरत्वादेवेष्टसिद्धिः । नन्वेवं 'तित्स्वरितम्' इत्यस्य प्रसङ्ग इति चेत् । न, 'प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम्' इति परिभाषया तत्समाधानात् 'अङ्गस्य' इति सूत्रभाष्ये तत्परिभाषाया उपन्यासाच्च दिव उदित्यादौ तित्स्वरितमित्यस्य प्राप्तेरेव विरहेण दकारप्रश्लेषादेर्निर्बीजत्वात् । तथा हि उदित्येषा उकारस्य संज्ञा तया प्रत्यायित उकारस्तु विधीयते । तथा च संज्ञायास्तित्त्वे संज्ञिनः किमायातम् । वस्तुतस्तु संज्ञापि तान्ता न तु तित् । तपर इति हि सूत्रितम्, न तु तिदिति । यदि हि संज्ञावत्संज्ञ्यपि तान्त एव तर्हि 'अतो भिस ऐस्' भवद्भिरित्यादावेव स्यात्, नतु वृक्षैरित्यादौ । तपरस्तत्कालस्येति सूत्रं च व्यर्थमेव स्यात् । स्वं रूपमित्यनेनैव गतार्थत्वात् । न च ङमुडादाविव संज्ञायां कृतं लिङ्गं संज्ञिनि लब्धुं शक्यम्, तद्वदिह सामर्थ्यविरहात् । एवं च तित्स्वरितमिति सूत्रे भाष्यवार्तिकग्रन्थः सर्वोऽप्यभ्युपेत्यवाद एव । स्थाघ्वोरिच्चेति सूत्रे भाष्यवार्तिकग्रन्थोऽप्येवमेव । तस्मान्नायं तकारः किं तर्हि दकार इतीहत्यभाष्यग्रन्थो यथाश्रुत एव साधुरिति सहृदयैराकलनीयम् ॥ इति शब्दकौ० ॥ अत्रत्यं तत्त्वं तपरसूत्रे वक्ष्यते ॥ दाधिमथैः ॥

६ वर्णेष्विति । वर्तमाना इति शेषः ॥

७ कोटिद्वयानुपस्थितौ कथं विचार इति पृच्छति—कुत इति ॥ छाया ॥

८ अत एव "तस्यादितः—" "पूर्वस्यार्धस्य—" "ऐचोश्चोत्तर—" इति संगच्छते । तत्राकारादयो वनादिवत्संघाताः । अनादिरूपप्रत्यभिज्ञानाक्रमेणोपलम्भाच्चैचः प्लुते प्रागकारः पश्चादिदुताविति विभागः 'ए ऐ तु कण्ठ—' इत्यादिना स्थानक्रमोक्तेश्च । नह्येकस्य स्थानक्रमेणोत्पत्तिरतः संघातमात्रास्ते इति सिद्धम् ॥ छाया ॥

समुदायकार्यं वहिरङ्गम् । अयादीनां चावकाशः—अग्न आयाहीति ॥ नन्वत्रापि यणादेशोऽवयवस्य प्राप्नोति ॥ येन नाप्राप्ते इति वा मध्येऽपवादा इति वा यण एवायादयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्य इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमेकारस्थोपि प्रतिपद्येत । प्रत्याहारे एओङ्ऐऔजित्यत्रावयवानां प्राधान्येनानिर्देशादित्येवं ग्रहणपक्षाशङ्काबीजमुपन्यस्तम् । इदानीमग्रहणपक्षाशङ्काबीजमुपन्यस्यते—अभ्यन्तरश्चेति । तिरोहितत्वादवयवानां समुदायकार्ये पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्तनादित्यर्थः ॥

(उद्योतः) अवयवग्रहणेनावयवसदृशवर्णग्रहणेन ग्रहणं स्यान्नवेति भाष्यार्थः । तत्फलितमाह—तत्र केवलेति ॥ नन्वकारेण एङवयवग्रहणसन्देहवद् अकारादीनामेङादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह—तत्र समुदायेति । अत एव प्राटतीत्यादौ न पररूपम् ॥ तत्र दृष्टान्तमाह—अवयवपरे चेति । यथावयवपरे निर्देशे समुदायो न संज्ञाभाग् एवं समुदायपरे निर्देशेऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति—यथेति ॥ अन्यत्रेति । सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव, सर्वस्यावयवस्यान्यत्रानिर्देशे तु समुदायनिर्देशो निर्दिष्टावयवपर इति विवेकः । नन्वेजादिसंज्ञानामवयवावृत्तित्वे कथमेचो निवर्तकेनायादिना तदवयवस्य निवृत्तिरत आह—तत्रासत्यामपीति । तन्निवृत्तिं विना समुदायनिवृत्तेः कर्तुमशक्यत्वादिति भावः ॥ अवयवकार्यं दीर्घः ॥ समुदायकार्यमय् ॥ तत्र च साक्षादिति । दीर्घे । अयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादिति भावः ॥ साक्षाच्चोदितत्वं प्रत्यक्षत्वे हेतुः ॥ नन्वयादिरनवकाशोऽत आह—अयादीनामिति ॥ नन्विति । ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः स्यादिति भावः ॥ परिहरति—येनेति ॥ प्राधान्येनानिर्देशादिति । असत्यैजादिसंज्ञाभावेऽपि स्वतन्त्राकारेण ग्रहणं स्यादिति शेषः ॥ भाष्ये आभ्यन्तरश्चेति । तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः ॥ तदाह—तद्यथा वृक्ष इति ॥ तदुपपादयति—तिरोहितत्वादित्यादिना ॥ समुदायकार्ये पारतन्त्र्यादिति । समुदायसंपादनरूपे कार्ये पारतन्त्र्यादित्यर्थः ॥ स्वकार्यस्याप्रयोजकत्वादिति । स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः ॥ तत्प्रयोजकत्वाभावे हेतुः—नरसिंहवदिति । तदवयवे नरत्वाद्यभाववदेतदवयवेऽप्यत्वाद्यभाव इति भावः ॥

( भाष्यम् )

कश्चात्र विशेषः ।

१ चेदिति । गृह्यन्ते, तदेति शेषः ॥ छाया ॥
२ दीर्घत्वमिति । अयादितः परत्वादिति भावः ॥ छाया ॥
३ दीर्घ इति । दीर्घे घटकीभूतो यो ह्रस्वस्तत्सदृशस्तत्प्रयुक्तो यो विधिः

( ५२ ग्रहणपक्ष आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षरविधिप्रतिषेधः ॥ * ॥

( भाष्यम् )

**वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति । स प्रतिषेध्यः ॥ अग्न इन्द्र, वायो उदकम्, "अकः सवर्णे दीर्घः" इति दीर्घत्वं प्राप्नोति ॥**

(प्रदीपः) समानाक्षरेति । समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते दश समाना इति वचनात् । तेन समानकार्यं प्राप्नोतीत्यर्थः ॥

(उद्योतः) वचनादिति । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ दश समाना इति पूर्वव्याकरणवचनादित्यर्थः ॥ समानकार्यम् । अग्रूपसमानाक्षरकार्यमित्यर्थः । सवर्णकार्यमिति पाठे सवर्णदीर्घरूपकार्यमित्यर्थः ॥

( ५३ आक्षेपान्तरवार्तिकम् ॥ ७ ॥ )

## ॥ * दीर्घे ह्रस्वविधिप्रतिषेधः ॥ * ॥

( भाष्यम् )

**[3]दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः । आलूय, प्रलूय "ह्रस्वस्य पिति कृति तुग्" इति तुक् प्राप्नोति ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति–'न दीर्घे ह्रस्वाश्रयो विधिर्भवति' इति' । यदयं दीर्घाच्छे तुकं शास्ति ॥**

(उद्योतः) भाष्ये दीर्घाच्छे इति । दीर्घस्य च्छे तुगिति हि तदर्थः ॥ ननु ह्रस्वस्येत्यत्राच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादिवतुग्नेति चेन्न । पदलाघवाभावादित्याशयात् ॥

( आक्षेपसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम्, अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ 'किम् ? ॥' "पदान्ताद्वा" इति विभाषां वक्ष्यामीति ॥**

(उद्योतः) अस्तिहीति । तत्र दीर्घादित्यस्याभावे कुड्यच्छायेत्यादावपि विकल्पः स्यादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**यत्तर्हि योगविभागं करोति । इतरथा हि "दीर्घात्पदान्ताद्वा" इत्येव ब्रूयात् ॥**

स्तस्य तदुत्तरस्य वा प्राप्तस्तस्य प्रतिषेध इत्यर्थः ॥ छाया ॥
४ दोषमुद्धरति—नैष इति ॥ छाया ॥

( आक्षेपभाष्यम् )

इह त[1]र्हि—खट्वाभिः, मालाभिः, "अतो भिस ऐस्" इत्यैस्भावः प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

तपरकरणसामर्थ्यान्न भविष्यति ॥

( आक्षेपभाष्यम् )

इह तर्हि—याता वाता "अतो लोप आर्धधातुके" इत्यकारलोपः प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति ॥

( आक्षेपसाधकभाष्यम् )

अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् ॥ किम् ? ॥ स[2]र्वस्य लोपो मा भूदिति ॥

( प्रयोजनबाधकभाष्यम् )

अथ[3] क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति ? ॥

( प्रयोजनसाधकभाष्यम् )

परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ॥

(प्रदीपः) असिद्धत्वाच्चेति । असिद्धवदत्राभादित्यनेन ।

(उद्द्योतः) असिद्धवदिति । चिणो लुङ्[4]न्यायेनेति भावः ।

( समाधानसाधकभाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'नाकारस्थस्याकारस्य लोपो भवति' इति । यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥ कथं कृत्वा ज्ञापकम् ? ॥ कित्करणे एतत्प्रयोजनम्—कितीत्याकारलोपो यथा स्यादिति । यद्याकारस्थस्याकारस्य लोपः स्यात्, कित्करणमनर्थकं स्यात् । परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्याद्—गोदः कम्बलद इति । पश्यति त्वाचार्यो—नाकारस्थस्याकारस्य लोपः स्यादिति, अतः ककारमनुबन्धं करोति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात्-"तुन्दशोकयोः परिमृजापनुदोः" इति ॥

(उद्द्योतः) भाष्ये उत्तरार्थमेतदिति । इह किंचिन्नपो इतीति न्यायस्[5]तु नाश्रितः । अत्र केवलाकारोच्चारणे उत्तरत्र ककाराकारयोरुच्चारणे गौरवा[6]दिति भावः ॥

( समाधानसाधकभाष्यम् )

यत्[7]तर्हि "गापोष्टग्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥

(प्रदीपः) यत्तर्हीति । न[8]न्वसति कित्त्वे आकारस्थस्याकारस्य[9] लोपे कृते द्वयोरकारयोः पररूपस्य धातुं प्रत्यन्तवद्भा[10]वाच्छन्दोगायेत्यत्रातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः, सन्निपातपरिभाषाया लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तम् । दीर्घत्वं तु कष्टायेति निपातनाद्भवति ॥

(उद्द्योतः) सन्निपातेति । न च दीर्घेणैव स निवर्तितो दीर्घेऽप्यत्वजातिसंबन्धसत्त्वेन न तथा सन्निपातक्षतिः । लोपे तु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः ॥ परे तु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति यत्वनिमित्तसन्निपातस्य[11] दीर्घेण निवृत्तिर्जातैव न कस्याप्यनुवृत्तिस्तस्माद्व्याप्यत्वजातिर्यञा[12]दिसंनिपातनिमित्तो दीर्घो न स्वसंनिपातविघात-

---

१ एवं सति द्वितीयवार्तिकस्य ज्ञापकस्य सजातीयापेक्षत्वात्तेनावारितलक्ष्यान्तरमाह—इह तर्हीति ॥ छाया ॥

२ सर्वस्येति । अतपरत्वे सवर्णग्रहणादाकारस्य संपूर्णस्य लोपो मा भूदित्यर्थः ॥

३ नेदं तपरव्यावर्त्यम्, तत्र तत्कालस्यापि विद्यमानत्वादित्याशङ्कते—अथेति ॥ छाया ॥

४ अपाचितरामित्यत्र चिणः परस्य तरामित्यस्य 'चिणोलुक्' इत्यनेन लुक् प्राप्तो यथा चिणोलुगित्यनेनैव जातस्य तमप्रत्ययलुकोऽसिद्धत्वमाश्रित्य तेन व्यवधानमाश्रित्य वार्यते तथात्रापि स्वजातलोपस्यैव पुनः स्वस्मिन्कर्तव्येऽसिद्धत्वाङ्गीकार इति भावः ॥ यत्तु—'आर्धधातुकोपदेशकाले यदकारान्तम्' इत्यर्थमनाश्रित्येदम् । तदाश्रयणे तु लोपस्य प्राप्तिरेव नेति तत्त्वम्' इत्युक्तं छायायाम्—तन्न सम्यक्, दीर्घे ह्रस्वद्वयाङ्गीकृतौ गोपायितेत्यत्रेवात्रापि तत्सत्त्वात् ॥ इति दाधिमथाः ॥

५ इकोचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ॥
दायात्वं तिसृभावश्च व्यवधानात्तुमा अपि ।
नुड्वाच्य उत्तरार्थं तु इह किंचित् त्रपो इति ॥'
इति—इकोचि विभक्ता इत्यत्र भाष्ये स्पष्टोयं न्यायः । तस्यायमर्थः प्रकृतोपयोगी—इकोचि विभक्ता इति सूत्रस्थमचीति अस्थिदधिसक्थ्यक्ष्णामित्युत्तरसूत्रार्थमावश्यकमित्युपपाद्य यदि तत्र प्रयोजनं तर्हि तत्रैवायं ब्रूयात् । इह करणेनापि किंचिज्ज्ञाप्यते । तेन न लुमतेति निषेधस्यानित्यत्वज्ञापनात् त्रपो इति संबुद्धौ गुणः साधितः । एवं प्रकृतसूत्रे करणेन तुज्ज्ञापनीयमेवेत्यत आह—नाश्रित इति ॥ दाधिमथाः ॥

६ सवर्णदीर्घेण पूर्वरूपेण वाकारप्रश्लेषाश्रयणेनोक्तगौरवपरिहारस्तु व्याख्यानसापेक्षत्वाज्ज्ञानगौरवग्रस्तत्वादकिंचित्कर इति भावः ॥ छाया ॥

७ अनन्यथासिद्धज्ञापकमाह—यत्तर्हीति ॥ छाया ॥

८ नन्वसत्यनन्यार्थत्वे ज्ञापकता, तदेव नेति भाष्यमयुक्तमित्याशङ्कते—नन्वसतीति ॥ छाया ॥

९ कारस्य उत्तरभागस्य ॥

१० वद्भावादिति । धात्ववयवत्वे तस्य सुपि चेति दीर्घे कृते तस्यैकदेशविकृतन्यायेन तत्त्वादिति शेषः ॥ कित्त्वे त्वातो लोप इटीत्यालोपेन प्रत्ययाकारस्य तेन दीर्घेऽपि तदप्रसङ्ग इति भावः ॥ छाया ॥

११ संनिपातस्य ह्रस्वाकारङेसंनिपातस्य ॥

१२ यञादीति । प्रत्ययेतिशेषः ॥ छाया ॥

कलोपनिमित्तम् । सन्निपात[1]परिभाषायाश्च स्वप्रवृत्तेः प्राङ् निमित्तभूतो यादृशः संनिपातः स्वातिरिक्तत्तद्विघातकस्य स्वयमनिमित्तमित्यर्थः । मात्रा[2]कालिकत्वसमानाधिकरणव्यापकजातिनिर्देशपक्षेऽप्यङ्गसंज्ञा तद्व्यनिमित्तं स्यादिति कृन्मेजन्तसूत्रवक्ष्यमाणभाष्यरीत्या यादेशनिमित्तसंनिपातस्य न लेशतोऽपि सत्तेति वदन्ति ॥ प्रा[3]तर्कृतं तद्लृकार इत्यादौ 'रो रि' तोर्लीति तु नापादितं तस्यामितोऽभागसत्त्वेन तेन व्यवधानात्तदप्राप्तेः ॥

( ५४ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ एकवर्णवच्च[5] ॥ * ॥

( भाष्यम् )

**एकवर्णवच्च दीर्घो भवतीति वक्तव्यम् ॥ किं प्रयोजनम्? ॥ वाचा तरतीति द्व्यज्लक्षणष्ठन्मा भूदिति । इह च वाचो निमित्तम्, "तस्य निमित्तं संयोगोत्पातौ" इत्यनुवर्तमाने "गोद्व्यचः" इति द्व्यज्लक्षणो यन्मा भूदिति ॥**

(प्रदीपः) **एकवर्णवदिति** । अवयवसंख्याश्रयणेन वाक्शब्दस्य द्व्यच्त्वात्तन्निमित्तं कार्यं प्राप्नोतीत्येकवर्णवदित्यतिदेशः[4] क्रियते ॥

( आक्षेपबाधकभाष्यम् )

**अत्रापि गोनौग्रहणं ज्ञापकम्—'दीर्घाद् द्व्यज्लक्षणोविधिर्न भवति' इति ॥**

(प्रदीपः) **गोनौग्रहणं ज्ञापकमिति** । सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभावस्येति अग्न एहीत्यादावेङः पदान्तादतीत्याद्यपि न भवति ॥

(उद्द्योतः) अग्ने इन्द्रेत्यादौ सवर्णदीर्घव्यावृत्तये आह—**सामान्येनेति** ॥ **गोद्व्यचोऽसङ्ख्येति गोग्रहणं नौद्व्यचष्ठन्निति नौग्रहणम्** ॥ **वर्णावयवाश्रयकार्याभावस्येति** । वर्णावयवेषु भेदेनाप्रतिभासमानेषु वर्णाश्रयकार्याभावस्येत्यर्थः । तेन मातॄणामित्यादौ णत्वादिसिद्धिः । भेदेन प्रतिभासात् ॥

( सर्वाक्षेपपरिहारभाष्यम् )

**अयं तु सर्वेषामेव परिहारः—**

( ५५ सिद्धान्तसमाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ नाव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु ॥ * ॥

( भाष्यम् )

**नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति यथा द्रव्येषु । तद्यथा द्रव्येषु "सप्तदश सामिधेन्यो भवन्ति" इति न सप्तदशारत्निमात्रं काष्ठमग्नावभ्याधीयते ॥**

(प्रदीपः) **नाव्यपवृक्तस्येति** । व्यपवर्गो व्यपवृक्तं भेदः । तेनाव्यपवृक्तस्याभिन्नबुद्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य समुदायस्य योऽवयवस्तस्मिंस्तद्विधिः पृथग्भूतवर्णविधिर्न भवतीत्यर्थः ॥ **अव्यपवृक्तस्यावयवस्येति** । व्यधिकरणे षष्ठ्यौ, अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थः । न हि संभवमात्रेण कार्याणि क्रियन्ते, अपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः । **माषा न भोक्तव्या** इति निषेधस्तु मिश्रेष्वपि प्रवर्तते ॥ तत्र तद्बुद्धिस्तद्रसास्वादनसंभवात् ॥ **सप्तदशेति** । सामिधेनीशब्द ऋचां वाचकः साहचर्यात्काष्ठेषु वर्तते । तत्र सप्तदशहस्ते काष्ठे सप्तदश काष्ठानीति बुद्धेरभावान्न तस्याभ्याधानम् ॥

(उद्द्योतः) सामान्यापेक्षज्ञापकं विनापि न्यायेन निर्वाहमाह—भाष्ये—**अयन्त्विति** । अभिन्नबुद्धिविषयस्येत्यस्य व्याख्या—**एकत्वालम्बनज्ञानग्राह्यस्येति** ॥ **समुदायस्य योऽवयव इति** वर्णसमुदायस्येत्यर्थः ॥ **व्यधिकरणे इति** । सामानाधिकरण्येनान्वयेऽव्यपवृक्तस्येति व्यर्थं सर्वस्याप्यवयवस्यावयविनाव्यपवृक्तत्वादिति भावः ॥ भाष्ये **अवयवाश्रयः** । अवयवसदृशस्वतन्त्रवर्णाश्रयः ॥ उक्तेऽर्थे युक्तिमाह—**नहीति** ॥ ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वेन काष्ठमग्नावाधीयत इति भाष्यमयुक्तमत आह—**साहचर्यादिति** । तदाधेयत्वेनेति भावः ॥ **तत्र सप्तदशेति** । यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति, एकस्यापि तावत्त्वमस्ति, तथाप्यव्यपवृक्तसमुदायावयवत्वात् न व्यपवृक्ताश्रयकार्यप्रसङ्ग इति भावः ॥

---

१ अयं भावः—यत्संनिपातं निमित्तीकृत्याग्रिमकार्योपजीव्यं कार्यं प्राप्तं तस्य लेशतस्तद्विघातकत्वेऽपि लेशतोऽनुवृत्तसंनिपातसर्वांशविघातकशास्त्रान्तरानिमित्तत्वमिति तदर्थः । यत्तदोर्नित्यसंबन्धात्प्रत्यासत्तेश्चेति ॥ छाया ॥

२ ननु न तपरसूत्रं व्याप्यजातिनिर्देशबोधकं किंतु गौरवसत्त्वेऽप्यक्षरमर्यादया विशिष्टजातिबोधकमित्येकदेशिमते कैयटरीत्या सा सुयोजैवेत्यत आह—मात्रेति ॥ रीत्येति । 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम् । दाक्षिः' इति दोषे वार्तिककृता दत्ते 'संनिपातशब्देन पूर्वापरसंनिपात एव गृह्यते' इत्याशयेन 'न प्रत्ययः संनिपातलक्षणः' इति खण्डिते बदभ्युपेत्यैवैकदेशिनोक्तम्—'अङ्गसंज्ञा—' इति । एवं च पूर्वपरसंनिपातस्य तन्निमित्तस्योभयनाशेन नाश एवेति भावः ॥ छाया ॥

३ ननु ऋकारऌकारयोरपि दोषोद्भावनं ( कुतो न ) कृतं भगवताऽत आह—प्रातरिति ॥ तथा च साम्प्रतमन्यथा लेखः सर्वेषां प्रामादिक एवेति भावः ॥ छाया ॥

४ दोषान्तरमाह—एकेति ॥ छाया ॥

५ ननु दीर्घे एकवर्णत्वस्य सिद्धत्वादुभयमप्ययुक्तमिति चेत् । न । द्व्यज्लक्षणकार्यस्य प्रतिषेधो वाच्य इति तात्पर्यात् ॥ अत एव खण्डनग्रन्थे तथा वक्ष्यति भगवान् ॥ छाया ॥

( दृष्टान्तवैषम्यभाष्यम् )

**विषम उपन्यासः, प्रत्यृचं चैव हि तत्कर्म चोद्यते । असंभवश्चाग्नौ वेद्यां च ॥**

**(प्रदीपः) असंभव इति ।** अर्धचतुर्हस्ता हि वेदिः ॥

**(उद्योतः)** न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किं तु असंभवनिबन्धनमित्याह—भाष्ये **विषम इति ।** आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः ॥ युक्त्यन्तरमाह—**असंभवश्चेति** ॥ तमुपपादयति—**अर्धचतुर्हस्तेति ।** अर्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोग्निवेदिबहिर्भावनिषेधाचासंभव इति भावः ॥

( दृष्टान्तान्तरभाष्यम् )

**यथा तर्हि "सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीत" इति न सप्तदशप्रादेशमात्रं काष्ठमग्नावभ्याधीयते ॥**

**(प्रदीपः) यथातर्हीति ।** अल्पप्रमाणत्वात्स्यात्संभव इति भावः ॥

( दृष्टान्तवैषम्यभाष्यम् )

**अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते । तुल्यश्चासंभवोऽग्नौ वेद्यां च ॥**

( सिद्धान्तिदृष्टान्तभाष्यम् )

**यथा तर्हि "तैलं न विक्रेतव्यम्" "मांसं न विक्रेतव्यम्" इति व्यपवृक्तं च न विक्रीयते, अव्यपवृक्तं—गावः सर्षपाश्च विक्रीयन्ते । तथा "लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्" इति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्, अव्यपवृक्ते कामचारः ॥**

**(प्रदीपः) अव्यपवृक्तमिति ।** व्यपवर्गस्याभावेनेत्यर्थः ॥

**(उद्योतः) अव्यपवृक्तमिति ।** अर्थाभावेऽव्ययीभावः ॥ तदाह—**व्यपवर्गस्येति ।** वस्तुतस्तत्पुरुष एवायं व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः । नञाव्ययीभावस्याभावादित्यग्रे वक्ष्यते ॥ भाष्ये **कामचार इति ।** स्पर्शे कामचारस्तेन शौचाभाव इत्यर्थः ॥

( आक्षेपभाष्यम् )

**यत्र तर्हि व्यपवर्गोऽस्ति ॥ क्व च व्यपवर्गोऽस्ति ? ॥ सन्ध्यक्षरेषु ॥**

**(प्रदीपः) यत्र तर्हीति ।** ऐ औ इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति ॥

**(उद्योतः)** एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह—**ऐऔ इति** ॥

( ५६ समाधानवार्तिकम् ॥ १० ॥ )

**॥ * ॥ सन्ध्यक्षरेषु विवृततरत्वात् ॥ * ॥**

( भाष्यम् )

**यदत्रावर्णम्, विवृततरं तदन्यस्मादवर्णात् । ये अपीवर्णोवर्णे, विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ॥**

**(प्रदीपः) विवृतत्वादिति ।** अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितः । तदाह—**विवृततरमिति ।** तत्र प्रयत्नभेदादसावर्ण्यादकारेण संध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः । तदेवैमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणम् । संध्यक्षरस्थस्य त्वसावर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यते इति नुडादिसिद्धिः ॥

**(उद्योतः) अकारस्येति ।** यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः ॥ प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः । एङो विवृततरत्वादैचो विवृततमत्वादिति बोध्यम् ॥ **नुडादीति ।** आनृजे इत्यत्र नुट् । आदिना चक्लृपे इत्यत्र लत्वम्, मातॄणामित्यादौ णत्वं चेति बोध्यम् ॥

( अग्रहणपक्षाभ्युपगमभाष्यम् )

**अथवापुनर्न गृह्यन्ते ।**

**(प्रदीपः) अथवेति ।** नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम् । समुदायवाचोयुक्तिरपि तत्र वर्णान्तरे न तात्त्विकी भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता ॥

---

१ एकदेश्युक्तं दृष्टान्तं सिद्धान्ती दूषयति—विषम इति ॥

२ ननु 'असंभवश्चाग्नौ' इत्येव वाच्ये 'वेद्याम्' इत्यधिकं भाष्ये, अथ तत्रापि प्रक्षेपे न बाधकमित्याशयेन तदुक्तिरिति ब्रूपे तर्हि तद्बहिर्भूतदेशे प्रक्षेपेऽपि न बाधकमित्यसंभव एवायुक्तोऽतो हेत्वन्तरमाह—समिध इति ॥छाया॥

३ एकदेशी प्राग्वदसंभवाभावेन संभवसंभावनया दृष्टान्तान्तरं तज्जातीयमाह—यथा तर्हीति ॥ छाया ॥

४ प्राग्वदस्यापि निरासमाह— अत्रापीति ॥

५ सिद्धान्ती आह—यथा तर्हीति ॥ छाया ॥

६ एकशेषप्रकरणान्तस्थभाष्यप्रामाण्येन गोशब्दः स्त्रीगवीणामेव वाचक इति बोध्यम् ॥ परं तु 'गाव उत्कालितपुंस्का वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते' इति भाष्येण 'वाहाय विक्रयाय च निष्कासितपुंस्का गावः स्त्रिय एवावशिष्यन्ते' इत्यर्थे विक्रयकर्मभूताः पुमांस एवेति प्रतीयते । तेन प्रायः स्त्रीगवीणां विक्रयो—नेति गम्यते ॥ कश्चित्तु पुंसोऽपीत्यस्यैकीयमतत्वेन 'स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते. न पुंसः' इति मतस्यैव निरुक्ते व्यापकत्वोक्त्या 'वाहाय निष्कासितपुंस्काः पृथक्स्थापितबलीवर्दा गावः स्त्रिय एव विक्रयायावशिष्यन्ते' इत्यर्थेन स्त्रीगवीणामेव विक्रयमिच्छन्ति ॥ अत एव न परस्परं भाष्यविरोधः ॥ गोशब्दस्य जातिवाचकत्वेन स्त्रीपुंससाधारणतयोभयवाचकत्वेनैकशेषसूत्रारम्भः । आपामरं लोकप्रसिद्ध्या गोशब्दस्य स्त्रीगवीमात्रवाचकत्वेनैकशेषसूत्रप्रत्याख्यानमिति गोशब्दस्य क्वचित्पुंगववाचकत्वं लोकप्रसिद्ध्या दुर्ग्रहमेवेति भावः ॥ अत्र तत्त्वं तत्रैव निरूपयिष्यामः ॥ इति दाधिमथा ॥

७ उपसंहरति—तदेवमिति । ग्रहणपक्ष इति भावः ॥

८ तथा च न काप्यनुपपत्तिरिति भावः ॥

९ अग्रहणपक्षेऽपि नुडादि वचनं विनैव सुसाधमित्याशयेनाह—अथवेति ॥ छाया ॥

(उद्द्योतः) सादृश्याचेति। चस्त्वर्थे। समुदाये सन्ध्यक्षरादौ॥ सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेति भावः॥ ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव अकारादिवत्। अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति तदेवाह—समुदायवाच इति॥ भ्रान्तिवशादिति। भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः। एवं च भ्रान्तिरेव ग्रहणपक्षे बीजमिति भावः॥ अत एव गोनौग्रहणं चरितार्थम्॥

( ५७ अग्रहणपक्षदूषणवार्तिकम्॥ ११॥ )

## ॥*॥ अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम्॥*॥

( भाष्यम् )

**अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम्। "तस्मान्नुड् द्विहलः" ऋकारे चेति वक्तव्यम्॥ इहापि यथा स्यात्—आनृधतुः, आनृधुरिति। यस्य पुनर्गृह्यन्ते 'द्विहलः' इत्येव तस्य सिद्धम्॥**

(उद्द्योतः) [वार्तिके] विनामो णत्वम्॥

( अग्रहणपक्षदूषणोद्धारभाष्यम् )

**यस्यापि न गृह्यन्ते, तस्याप्येष न दोषः। द्विहल्ग्रहणं न करिष्यते। तस्मान्नुड् भवतीत्येव॥**

( आक्षेपभाष्यम् )

**यदि न क्रियते, आटतुः, आटुरित्यत्रापि प्राप्नोति॥**

( आक्षेपबाधकभाष्यम् )

**अश्नोतिग्रहणं नियमार्थं भविष्यति—अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति॥ [नुड्विधि]॥**

(प्रदीपः) अश्नोतेरेवेति। सामान्येनावर्णोपधो निवर्तते, न लश्नातिरेव सामान्यापेक्षत्वान्नियमज्ञापकस्य॥

(उद्द्योतः) ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह—नत्वश्नातिरेवेति। तथा हि सति नाश्न इत्येव वदेदिति भावः॥ नियमज्ञापकस्य नियमबोधकस्य॥

( आक्षेपवार्तिकखण्डनभाष्यम् )

**लादेशे च ऋकारग्रहणं कर्तव्यम्। "कृपो रो लः" ऋकारस्य चेति वक्तव्यम्। इहापि यथा स्यात्—क्लृप्तः क्लृप्तवानिति। यस्य पुनर्गृह्यन्ते, र इत्येव तस्य सिद्धम्॥**

( आक्षेपनिरासभाष्यम् )

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः। ऋकारोऽप्यत्र निर्दिश्यते॥ कथम्?॥ अविभक्तिको निर्देशः—कृप, उः, रः, लः="कृपो रो लः" इति॥ अथवा उभयतः स्फोटमात्रं निर्दिश्यते-रश्रुतेर्लश्रुतिर्भवतीति॥ [लादेश]॥**

(प्रदीपः) अविभक्तिक इति। तत्र ऋकारनिर्देशसामर्थ्याद्विभागं प्रकल्प्यादेशो विधीयते॥ स्फोटमात्रमिति। जातिस्फोट इत्यर्थः॥ ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते॥

(उद्द्योतः) नन्वखण्डवर्णपक्ष ऋकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह—तत्र ऋकारेति। एवं च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम्॥ मात्रशब्दः सामान्याभिप्राय इत्याह—जातीति॥ जातिश्चावयवानवयवसाधारणीत्याशयेनाह—ततश्चेति। एवंविधा च रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न। स्थान्यादेशाभावश्च जातेर्व्यक्तिद्वारको बोध्यः। वस्तुतः स्फोट एव श्रोत्रग्राह्यः। वायुनिष्ठरत्वादिना च तस्याभिव्यक्तिः। एवं च साक्षाद्रत्ववतोऽभावेन कल्पत इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः॥ एवं च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः॥ एवं च कृपावपि तत्प्रवृत्तिः संभवत्येव। तत्रापि रेफावभाससत्त्वात्। आकारादौ तु नैवं ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः। तदुक्तम् रश्रुतेरित्यादि। यत्तु स्वतश्चास्वतश्चासाधारणजातिपरतैयतद्भाष्यव्याख्यानम्। तन्न। तादृशजातौ मानाभावात्। नरसिंहदृष्टान्तानुपपत्तेश्च। सादृश्यात्तु प्रत्यभिज्ञेत्यादि स्वोक्तिविरोधापत्तेश्च। किं चैवं सति रजातेरित्येव भगवान्वदेत्॥ किं च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्ध्या ग्रहणपक्षमुक्त्वाऽथ वा न गृह्यन्त इति पक्षे तत्समाधानपरमाष्यासङ्गतेः। अत एवाष्टमे रषाभ्यामिति सूत्रे—यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः, एवं वर्णवर्णैकदेशयोरपीति कैयट आहेति वदन्ति॥

( आक्षेपावार्तिकखण्डभाष्यम् )

**विनामे ऋकारग्रहणं कर्तव्यम्। "रषाभ्यां नो णः समानपदे" ऋकाराच्चेति वक्तव्यम्। इहापि यथा स्यात्—मातॄणां पितॄणामिति। यस्य पुनर्गृह्यन्ते रषाभ्यामित्येव तस्य सिद्धम्॥**

१ सत्त्वमित्यन्तकैयटाशयमाह—सत्यपीति। समागत्वेन प्रतीतावप्यकारादिवदेकत्वमेव तेषाम्। भागधीस्तु सदृशभागनिबन्धना, एकवर्णत्वेऽपि क्रमोपलब्धिरपि भागानामेव। वकारवत्तत्त्वेपि स्थानभेद उपपन्नः। पाणिन्यादेर्वचांसि "तस्यादितः" इत्यादीनि सदृशभागनिबन्धनान्येव। अतः प्रत्यभिज्ञानादेरन्यथापि सिद्धत्वादबाधितान्यथानुपपत्त्या चैकत्वबुद्धिरेकवर्णत्वे मानमिति भावः॥ छाया॥

२ युक्त्यन्तरमाह—ऐकारेति। एवं च 'समागत्वेन प्रतीताः एकवर्णाः एकेच्छापूर्वकैकप्रयत्नजन्यत्वाद् अकारादिवत्' इत्यनुमानप्रयोगो बोध्यः। नहि कश्चिदैकाराद्युच्चारयन्प्रयत्नस्य तत्कारणभूताया वा इच्छाया भिन्नत्वमुपैतीति भावः॥ छाया॥

( अग्रहणवादिभाष्यम् )

[1]न सिध्यति । यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति ॥

(प्रदीपः) यत्तदिति । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ ॥

( ग्रहणवादिभाष्यम् )

[2]मा भूदेवम् । अड्व्यवाय इत्येव सिद्धम् ॥

(प्रदीपः) अड्व्यवाये इति । ऋकारेण यथा दीर्घो गृह्यते एवमृकारभागोऽपीत्यर्थः ॥

(उद्द्योतः) ऋकारेणेति । ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केनचिदकारादिना ग्रहणादट्त्वमिति मन्यते ॥

( अग्रहणवादिभाष्यम् )

[3]न सिध्यति । वर्णैकदेशाः के वर्णग्रहणे गृह्यन्ते, ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेः, न तत्क्वचिदपि व्यपवृक्तं दृश्यते ॥

(प्रदीपः) न सिद्ध्यतीति । तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः ॥

(उद्द्योतः) जात्यभिव्यक्तीति । अत्वादिजातीत्यर्थः ॥ एवं च न केनाप्यचा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः । चो हेतौ । अतो न सिद्ध्यतीत्यर्थः ॥

( ग्रहणवादिभाष्यम् )

[4]एवं तर्हि योगविभागः करिष्यते, "रषाभ्यां नो णः समानपदे" ततः—"व्यवाये" व्यवाये च रषाभ्यां नो णो भवतीति । ततः—"अट्कुप्वाङ्नुम्भिः" इति ।

इदमिदानीं किमर्थम् ? ।

नियमार्थम्—'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैः' इति ॥

(प्रदीपः) एतैरेवेति । आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः । भक्तिस्तु न प्रत्याय्या न च प्रत्यायिकेति नियमेन न निवर्त्यते ॥

(उद्द्योतः) नन्वाकारादिभिर्व्यवायेऽपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह—[5]आकारादयोऽपीति ॥ भक्तिस्त्विति । असवर्णत्वादनुपदेशाच्चेति भावः ॥

( अग्रहणवादिभाष्यम् )

[6]यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यृकारान्नो णत्वमिति । [7]यदयं क्षुभ्नादिषु नृनमनशब्दं पठति ॥

(उद्द्योतः) भाष्ये नृनमनशब्दमिति । संज्ञाभूतमित्यभिप्रायः गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेपि णत्ववारणायाखण्डपदे इत्यर्थके समानपद इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सखण्डत्वेऽसंज्ञायां णत्वप्राप्त्यभावादिति बोध्यम् । छन्दस्यृदित्यस्य तु नात्र प्राप्तिः । ईदृशे विषयेऽवग्रहाभावादित्याहुः ॥

( ग्रहणवादिभाष्यम् )

[8]नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्—नार्नमनिः ॥

( अग्रहणवादिभाष्यम् )

[9]यत्तर्हि तृप्नोतिशब्दं पठति ॥

( एकदेशिभाष्यम् )

[10]यच्चापि नृनमनशब्दं पठति ॥

( बाधकस्मरणभाष्यम् )

ननु चोक्तम्—वृद्ध्यर्थमेतत्स्यात् ॥

( समाधानभाष्यम् )

बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥ [11]अथवा उपरिष्टाद्योगविभागः करिष्यते—"[12]ऋतः" नो णो भवति । ततः—"छन्दस्यवग्रहात्" ऋत इत्येव ॥

(उद्द्योतः) बहिरङ्गा वृद्धिरिति । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्तत इति वार्त्तिकमतेनैतत् । [13]भाष्यमते तु तृप्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या ॥ ऋतो नो ण इति । मातॄणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वाण्णत्वम् । यद्वा प्रशास्तॄणामिति निर्देशाण्णत्वम् । अत्र तपरत्वं मुखसुखार्थमेव । उत्तरत्राऽप्येवमेव । फलाभावाद् । ध्वनितं चेदं वृत्तौ ॥

( ५८ आक्षेपवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ प्लुतावैच इदुतौ ॥ * ॥

( भाष्यम् )

[14]एतच्च वक्तव्यम् । यस्य पुनर्गृह्यन्ते गुरोष्टेरित्येव प्लुत्या तस्य सिद्धम् ॥

---

१ अग्रहणवादी खण्डयति—न सिध्यतीति ॥

२ ग्रहणवादी स्वेष्टं साधयति—माभूदेवमिति ॥

३ अग्रहणवादी खण्डयति—नेति ॥

४ ग्रहणवादी स्वेष्टं साधयति—एवं तर्हीति ॥

५ वस्तुतस्तु—अयं पक्षो गुरुभूतत्वादयुक्तः, निर्देशस्य सौत्रत्वेनोपपत्ताविष्टासिद्धिश्चेति प्रथमपक्ष एव युक्त इति बोध्यम् ॥ छाया ॥

६ अग्रहणवादी सिद्धान्ती स्वमते गौरवं परिहरति—यस्यापीति ॥

७ एकदेशी आह—यदयमिति ॥

८ ग्रहणवादी खण्डयति—नैतदिति ॥

९ अग्रहणवादी सिद्धान्त्यनन्यथासिद्धं ज्ञापकमुपन्यस्यति—यत्तर्हीति ॥

१० पुनरेकदेशी स्वोक्तं समर्थयति—यच्चापीति ॥

११ अग्रहणवाद्येकदेशी प्रकारान्तरेण समाधत्ते—अथवेति ॥

१२ ऋत इति ॥ सूत्रे 'ऋद्' इति 'सुपां सुलुक्' इति लुप्तपञ्चमीकमिति भावः ॥

१३ तद् भाष्यमेकदेश्युक्तमेवेति दाधिमथाः ॥

१४ 'ऐचः प्लुतिप्रसङ्गे तदवयवाविदुतौ प्लुतौ भवतः' इत्यर्थकमैचां चतुर्मात्रत्वसाधकमिदं सूत्रं कर्तव्यमेवेति गौरवमग्रहणपक्षे । ग्रहणपक्षे तु गुरोरैचोऽवयवभूतस्य टेरिकारस्योकारस्य वा प्लुतिः 'गुरोरनृतः' इत्यनेनैव सिद्धेति लाघवम् इति भावः ॥ छाया ॥

(प्रदीपः) गुरोष्टेरिति । ऐकारो गुरुस्तस्य टेरिति सिद्धम् । तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति देवद३त्तेति ॥

(उद्द्योतः) ननु गुर्वंवयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह—तन्त्रेति । स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्वंवयवटिश्चैच एव संभवति, नान्यस्य आकारादेस्तदवयवस्य व्यपवृक्तत्वाभावादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**य[1]स्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत एतन्न्यास ए[2]व ॥**

(प्रदीपः) क्रियते न्यास एवेति । अ[3]वश्यकर्तव्यतां दर्शयति व्यपवृक्तत्वेपि भागयोर्विवृततरत्वात् प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात् ॥

(उद्द्योतः) अच्त्वाभावादिति । तन्मूलटित्वाभावाच्चेत्यपि बोध्यम् ॥

( ५९ आक्षेपवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ तु[4]ल्यरूपे संयोगे द्विव्यञ्जनविधिः ॥ * ॥**

( भाष्यम् )

**तुल्यरूपे संयोगे द्विव्य[5]ञ्जनाश्रयो विधिर्न सि[6]ध्यति—कुक्कुटः पिप्पली पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ ॥**

(प्रदीपः) तुल्यरूप इति । तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपस्तस्यैकवर्णत्वं पूर्वपक्षे, सिद्धान्ते तु वर्णद्वयरूपता । आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः ॥

(उद्द्योतः) संयोग इति । संयोगसंज्ञा[7]र्ह इत्यर्थः ॥ तस्यैकवर्णत्वमिति । एवं च संयोगसंज्ञा न स्यादिति भावः ॥

---

१ अग्रहणवादी सिद्धान्ती तस्य सूत्रस्यावश्यकर्तव्यतया 'आवश्यकं गौरवं न दोषाय' इति वदति—यस्यापीति ॥

२ भाष्य एवो व्युत्क्रमे । एतत्सूत्रपाठे क्रियत एवेत्यर्थः ॥ अस्य यत इत्यादिः ॥

३ एवकारसूचितमाह—अवश्येति ॥ छाया ॥

४ दूषणान्तरमाह—तुल्यरूपेति ॥ छाया ॥

५ द्विव्यञ्जनेति ॥ पात्रादित्वात्स्त्रीत्वं न । अनेन द्वयोरेव हलोः संयोगसंज्ञेति सूचितम् ॥

६ यद्यपि प्रक्रमानुरोधेन वक्तव्य इत्येव शेषपूरणं भाष्य उचितम्, तथापि वक्तव्यत्वस्यासिद्धिप्रयुक्तत्वादावश्यकशेषपूरणत्वाविशेषात् प्रागुपस्थितासिद्धिरेव तन्मूलभूता वक्तुमुचितेत्याशयेनाह—न सिध्यतीति ॥ छाया ॥

७ संज्ञार्ह इति । एवं च तुल्यरूपावयवके संयोगसंज्ञार्हे वर्णे द्विव्यञ्जनविधिर्हल्द्वयाश्रितविधिः संयोगसंज्ञा वक्तव्या स्यादग्रहणपक्षे इति गौरवमिति वार्तिकार्थः ॥ छाया ॥

८ शास्त्रकृतकल्पितप्रक्रियादशायामिति शेषः । परमार्थदशायां तु संयोगे इति भाष्यं तु संयोगार्ह इत्यर्थपरमिति तात्पर्यम् ॥ शिष्टसमाचारः । शिष्टव्यवहारः ॥

( आक्षेपबाधकभाष्यम् )

**यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ, द्वौ पकारौ द्वौ तकारौ ॥ कथम् ? ॥ मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ॥**

(उद्द्योतः) [भाष्ये] मात्राकालोऽत्रेति । बहुव्रीहिः संयोगोऽन्यपदार्थः ॥ मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः । कुक्कुट इत्याद्युच्चारणं तु न उपदेशः ॥ अनुपदिष्टत्वं नाम अक्षरसमाम्नायेऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वं च ॥ अनुपदिष्टं सत् सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः । एवं चानुपदिष्टस्यासत्त्वात् तत्प्रतिपत्तिरशक्येत्याह—असच्चेति । क्वचित्तु असच्चेत्यादिग्रन्थो न दृश्यते ॥ अनेन ऌकारापाठे तस्यासत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम् ॥

( आक्षेपसाधकभाष्यम् )

**य[9]द्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्ति—'अण् सवर्णान् गृह्णाति' इति । इह तु कथम्—सयँ्यन्ता, सवँ्वत्सरः, यलँ्लोकम्, तलँ्लोकमिति यत्रैतदस्त्यण् सवर्णान् गृह्णातीति ? ॥**

(उद्द्योतः) यत्रैतदस्तीति भाष्ये हलोऽनन्तरा इत्यत्र यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः ॥

( आक्षेपबाधकभाष्यम् )

**अत्रा[10]पि मात्राकालो गृह्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ॥ ४ ॥**

(प्रदीपः) अत्रापीति । सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः ॥

---

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥

इति वाक्यपदीयोक्तरीत्या स्फोटं सिद्धान्तयतां क्वास्य पूर्वपक्षस्यावसरः ॥ श० कौ० ॥

पदे पचतीत्यादौ न वर्णा विद्यन्ते नातो वर्णसमूहः पदम् । तत्र दृष्टान्तव्याजेनाह—वर्णेष्विति । ऋकारादिवर्णेषु प्रतीयमाना अप्यवयवा यथा वस्तुतो न तथेत्यर्थः । न चेति पाठस्तु सुगम एव । एवं वाक्येऽप्याह—वाक्यादिति । पदानामपि वाक्यादत्यन्तं प्रविवेको भेदो नास्तीत्यर्थः । अखण्डत्वरूपधर्मैक्यात्पदवाक्ययोरत्यन्तभेदो नास्तीति यावत् ॥ श० कौ० व्या० प्रभा ॥

९ उक्तदोषपरिहारेऽप्यन्यत्र दोष एवेत्याह—यद्यपीति ॥ तथा चैक एवं हल् यद्वयादिरिति संयोगसंज्ञाया अभावेन ततः पूर्वस्य प्लुतो न स्यादिति भावः ॥ छाया ॥

१० उक्तमेव परिहारमत्रातिदिशति—अत्रापीति ॥ छाया ॥

(उद्योतः) सानुनासिकेति । अणुदिच्छास्त्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव न त्वप्रसिद्धसवर्णकल्पकमिति भावः ॥

( शिवसूत्रम् )

## हयवरट् ॥ ५ ॥

( अथ हकारस्य द्विरुपदेशाधिकरणम् )

( आक्षेपभाष्यम् )

**सर्वे वर्णाः सकृदुपदिष्टाः, अयं हकारो द्विरुपदिश्यते—पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत, पर एव वा । कश्चात्र विशेषः ? ॥**

(प्रदीपः) हयवरट् ॥ पूर्वश्चेति । पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः ॥

(उद्योतः) हयवरट् ॥ नन्वयं हकार इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं पूर्वश्चेत्यादिना भेदाश्रयणमत आह—पूर्वपरेति । एतद्भाष्यादेकत्वं वर्णानामित्येवं पक्षो भगवतः संमत इति ज्ञायते ॥ भाष्ये यदि पुनरिति । न चैवं परहकाराभावे लकारस्याप्यभावेन तन्नाद्याश्रयणेन हलन्त्यमित्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम् । रन्त्यं हरिति न्यासेन लन्त्यं हलिति न्यासेन वा तत्परिहाराल्लाघवाभावेऽपि एवं कर्तुं शक्यं न वेत्येवं विचारतात्पर्यात् । यद्वा हरन्त्यमित्यस्यैवावृत्त्या हर्बोधकसूत्रसमुदायान्त्यमिदित्यर्थः ॥ परे तु परहकाराभावेऽपि "ल्" इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थम् । तदर्थं रान्तस्यापि शक्तिकल्पने गौरवात् । हलन्त्यमित्यस्यावृत्त्या 'हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिद्' इत्यप्यर्थ इत्यदोष इत्याहुः ॥

( ६० पूर्वत्रानुपदेशे दूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम् ॥ * ॥**

( भाष्यम् )

**हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणं कर्तव्यम् "आतोऽटि नित्यम्" "शश्छोऽटि" "दीर्घादटि समानपादे" हकारे चेति वक्तव्यम् ॥ इहापि यथा स्यात्-महाँ हि सः ॥**

(प्रदीपः) शश्छोटीति । हकारपरस्य शकारस्यासम्भवात् प्रसङ्गोच्चारितमेतत् ॥

(उद्योतः) अड्ग्रहणेष्विति । अड् गृह्यते येषु सूत्रेष्वित्यर्थः॥ शश्छोटीत्यस्योदाहरणादाने बीजमाह—हकारपरस्येति । न च तच् श् हित्याहेत्युदाहरणसंभवः । शास्त्रबोधितं सौत्रं च विहाय हलामुच्चारणार्थाचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयाद् । अत्र च भाष्ये एतदुदाहरणादानमेव मानम् । आतोऽटिदीर्घादटीत्युभयोरुदाहरणं महाँ हि स इति । अट्कुप्विति सूत्रेऽपि ग्रहणफलमहेणेति बोध्यम्॥

( ६१ पूर्वत्रानुपदेशे दूषणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उत्त्वे च ॥ * ॥**

( भाष्यम् )

**उत्त्वे च हकारग्रहणं कर्तव्यम् । "अतो रोरप्लुतादप्लुते हशि च" हकारे चेति वक्तव्यम् । इहापि यथा स्यात्—पुरुषो हसति, ब्राह्मणो हसतीति ॥**

(प्रदीपः) उत्त्वे चेति । अश्त्वमपि न प्राप्नोतीति वक्तव्यं भो हसतीति रोर्यत्वार्थम् ॥

(उद्योतः) अश्त्वमपीति । इदमिण्त्वस्याप्युपलक्षणम् । तेन लिलिहिढ्वे इत्यादौ विभाषेट इति ढत्वविकल्पसिद्धिरिति केचित् ॥ भाष्ये हशि चेति सिद्धान्तरीत्या निर्देशः । इदानीं तु यशिचेति सूत्रम् ॥

( पूर्वोपदेशाङ्गीकारभाष्यम् )

**अस्तु तर्हि पूर्वोपदेशः ।**

( ६२–६३ परत्रानुपदेशे दूषणवार्तिकम् ॥ ३–४ ॥ )

**॥ * ॥ पूर्वोपदेशे कित्त्वकसेड्विधयो झल्ग्रहणानि च ॥ * ॥**

( भाष्यम् )

**यदि पूर्वोपदेशः कित्त्वं विधेयम्—स्निहित्वा**

---

१ एवेन अइउण्सूत्राद्युक्ततदन्यपक्षव्यावृत्तिः ॥ 'अयं हकारो द्विरुपदिश्यते' इत्यत्रायमिति प्रत्यभिज्ञया नानात्वपक्षानङ्गीकारसूचनादिति भावः॥ छाया ॥

वस्तुतस्तु व्यक्तिभेदेऽपि "रूपसामान्याद्वा सिद्धम्" इत्युक्तरीत्या प्रत्यभिज्ञासिद्धौ एकत्वपक्षे दृढतरसाधकानुपलम्भेन चिन्त्यमिदमिति बोध्यम् । 'आन्यभाष्यम्' इति भाष्यस्य आकृतिभाष्यस्य चैकदेशिभाष्यत्वं छायोक्तं तु तत्प्रकरणच्छायोक्तसिद्धान्तिभाष्यत्वेन विरुद्धमेवेति तत्त्वम् ॥ इति दाधि०

२ उभयाभावे लाघवादाह—यद्वेति ॥ छाया ॥

३ महाँ हि स इति ॥ 'दीर्घादटि समानपादे' इति नकारस्य रुत्वे 'आतोऽटि नित्यम्' इत्यनुनासिकत्वे 'भोभगो'—इति यत्वे 'हलि सर्वेषाम्' इति यलोपः । यद्यपि तत्राश्ग्रहणं कृतमिति तत्राप्येतदेव फलं सुवचम् तथापि भगवता तस्य खण्डितत्वात्तन्नोक्तमत्रेति बोध्यम् ॥ छाया ॥

४ इदमुभयं सूत्ररीत्या न भाष्यरीत्येति यथाश्रुतमेव भाष्यं सम्यगिति प्रदर्शितं भावप्रकाशे । तद्भनयन्नाह—केचिदिति ॥ छाया ॥

५ विधिशब्दे कर्मणि किः । कित्त्वेतीतरेतरयोगद्वन्द्वः । पृथक्पदम् ॥ आर्षमेकवचनम् । क्रमस्य बोध्यत्वात् पूर्वनिपातस्तस्य । एते विधेया इत्यर्थः । छाया ॥ वस्तुतस्तु "सुपां सुलुक्" इति जसो लुक् इति बोध्यम् ॥ इति दाधिमथाः ॥

क्लेहित्वा सिक्लिहिषति सिक्लेहिषति "रलोऽव्युपधाद्धलादेः–" इति कित्त्वं न प्राप्नोति ॥

क्सविधिः—क्सश्च विधेयः—अधुक्षत् अलिक्षत् "शल इगुपधादनिटः क्सः" इति क्सो न प्राप्नोति ॥

इड्विधिः । इट् च विधेयः—रुदिहि । वलादिलक्षण इण् न प्राप्नोति ॥

झल्ग्रहणानि च ॥

किम् ? ॥

अहकाराणि स्युः ॥

तत्र को दोषः ? ॥

"झलो झलि" इतीह न स्यात्-अदाग्धाम् अदाग्धाम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च ॥

(उद्द्योतः) अहकाराणि स्युरिति । अतस्तत्र हकारग्रहणं कर्तव्यमिति भावः ॥ अदाग्धामिति । घत्वस्यासिद्धत्वादिति भावः ॥

( उपसंहारभाष्यम् )

यदि च किंचिदन्यत्राप्युपदेशे प्रयोजनमस्ति, तत्राप्युपदेशः कर्तव्यः ॥

(प्रदीपः) यदि च किंचिदिति । प्रयोजनार्थो हि वर्णानामुपदेशो न स्वरूपप्रतिपत्त्यर्थः ॥

(उद्द्योतः) स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति—भाष्ये यदि किंचिदिति । तद्व्याचष्टे—प्रयोजनार्थ इति । शास्त्रीयप्रयोजनार्थ इत्यर्थः । एवं चाद्यहकारस्याशिणोरपि प्रयोजनं सूचितम् । अत एव मह्वा ह्रसन्तीति पुंयोगादिति सूत्रे भाष्यप्रयोगः सङ्गच्छते । एतेन पूर्वहकारोपदेशप्रयोजनवार्तिके न्यूनता परिहृता ॥ कर्त्तव्य इत्यस्य स्यादिति शेषः । उपदेशोऽत्रोच्चारणमात्रम् ॥ अन्यत्रापि । प्रत्याहारान्तरे । सर्वथा हकारस्य द्वेधोपदेशः कर्त्तव्य इत्यत्रास्य तात्पर्यम् ॥

(इति हकारस्य द्विरुपदेशाधिकरणम्)

( अथ रेफोपदेशस्थानाधिकरणम् )

इदं विचार्यते— अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत-हरयवडिति, पर एव वा यथान्यासमिति । कश्चात्र विशेषः ? ॥

(प्रदीपः) इदमिति । उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः ॥

(उद्द्योतः) दोषप्रयोजनेति । अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् ॥

( ६४ यथान्यासोपदेशदूषणवार्तिकम् ॥ ५ ॥ )

॥ * ॥ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥ * ॥

( भाष्यम् )

रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ॥

अनुनासिकस्य—स्वर्नयति प्रातर्नयति । "यरोऽनुनासिकेऽनुनासिको वा" इत्यनुनासिकः प्राप्नोति ॥

द्विर्वचनस्य—मद्रह्रदः भद्रह्रदः "यरः" इति द्विर्वचनं प्राप्नोति । परसवर्णस्य—कुण्डं रथेन; वनं रथेन "अनुस्वारस्य ययि–" इति परसवर्णः प्राप्नोति ॥

(प्रदीपः) स्वर्नयतीति । णकारोऽत्र प्राप्नोति । न ह्यत्र सवर्णग्रहणमस्ति ॥ मद्रह्रद इति । द्विर्वचने कृते तस्यासिद्धत्वाद् रोति रेफलोपो नास्ति, हलो यमामिति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः[6] ॥ कुण्डं रथेनेति । अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाभावाद्रेफः प्राप्नोति तस्य चासिद्धत्वाद् रोति लोपो नास्ति ॥

(उद्द्योतः) णकारोऽत्रेति । स्थानेऽन्तरतमत्वादिति भावः ॥ ननु रेफस्य सवर्णाभावात्कथमत्रानुनासिकोऽत आह—नह्यत्रेति ॥ ननु द्वित्वेऽपि रोरीति हलोयमामिति वा लोपान्न दोषोऽत आह–द्विर्वचन इति ॥

( इति यथान्यासे दूषणानि ॥ )

( यकारात्पूर्वत्रपाठाभ्युपगमभाष्यम् )

अस्तु तर्हि पूर्वोपदेशः ।

( ६५–६६ पूर्वोपदेशदूषणवार्तिके–६–७ )

॥ * ॥ पूर्वोपदेशे कित्त्वप्रतिषेधो व्यलोपवचनं च ॥ * ॥

( भाष्यम् )

यदि पूर्वोपदेशः कित्त्वं प्रतिषेध्यम् । देवित्वा दिदेविषति "रलोऽव्युपधादिति कित्त्वं प्राप्नोति ॥

१ प्राप्नोतीति ॥ अतोत्र 'ह्राच' इति वाच्यमिति भावः । एवमग्रेऽपि ॥ छाया ॥

२ उपसंहरति—तस्मादिति । तदेवमुभयत्र पूर्वोपदेशस्य, चतुर्षु परोपदेशस्य फलं दर्शितम् ॥ छाया ॥

३ इदं दिक्प्रदर्शनम्, मधुलिंहीत्यादौ नुम्सिद्धये 'नपुंसकस्य' इत्यत्रापि तद्ग्रहणं बोध्यम् ॥ छाया ॥

४ स्यादितीति । संभावने लिङ् । तथा चान्यत्राप्येतदुपदेशफलं पाणिन्युद्देश्यकमभविष्यत् तर्हि तदनुरोधेनान्त्यानुबन्धवत्तत्राप्युपादेक्ष्यत् । यतस्तु तथा न, अतः श्रुत्यनुरोधेनैवमेव कृतं तथा न कृतम् । तत्फलमपि पाणिन्युद्देश्यकं दर्शितम् । अत एवाशिणोः फलमाद्यहकारस्य न दर्शितमित्यर्थः ॥ छाया ॥

५ अत्रास्येति । ग्रन्थस्येति शेषः । एवं चान्यवत् सकृदेवोपदेष्टव्य इति शङ्काया अनवसर एवेति भावः ॥ छाया ॥

६ प्रसङ्ग इति । न च—'एकस्यानेकस्य वा–' इति भाष्योक्तेर्नायं दोषः, वस्तुतो 'न विशेषः' इति न किंत्वतिसूक्ष्मत्वात्स दुर्लक्ष्य इति तात्पर्यात् । अन्यथा लोपविध्यादेर्वैयर्थ्यमेव स्यात् ॥ छाया ॥

(दूषणनिराकरणभाष्यम्)

**नैष[1] दोषः, नैवं विज्ञायते—'रलः व्युपधाद्' इति ॥ किं तर्हि? ॥**

**"रलः अव्[2] व्युपधाद्" इति ॥**

**किमिदम् अव् व्युपधाद्' इति ? ॥**

**अवकारान्ताद्व्युपधादव्व्युपधादिति ॥**

(उद्द्योतः) भाष्ये अव्व्युपधादिति । अव् इति लुप्तपञ्चमीकम् ॥ ननु पूर्वोपदेशे[3] इग्यण इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न । संज्ञाविधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः ॥

(भाष्यम्)

**व्यलोपवचनं च ॥ व्योश्च लोपो वक्तव्यः । गौधेरः, पचेरन्, यजेरन्, 'जीवे रदानुः'—जीरदानुः । वलीति लोपो न प्राप्नोति ॥**

(दूषणनिराकरणभाष्यम्)

**नैष दोषः[5], रेफोऽप्यत्र निर्दिश्यते—"लोपो व्योर्वलि" इति रेफे च वलि चेति ॥**

(यथान्यासोऽभ्युपगमभाष्यम्)

**अथ[6] वा पुनरस्तु परोपदेशः ॥**

(आक्षेपसारणभाष्यम्)

**ननु चोक्तम् *रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः* इति ॥**

(समाधानभाष्यम्)

**अनुनासिक[7]परसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः, रेफोष्मणां सवर्णा न सन्ति ॥**

(प्रदीपः) **रेफोष्मणामिति** । अनुनासिकपरसवर्णविधाने हि **स्थानेन्तरतम**परिभाषोपस्थानाद्दोषाभावः । नहि रेफस्य णकारोऽन्तरतमो, नाप्यनुस्वारस्य रेफः ॥

(उद्द्योतः) भाष्ये **रेफोष्मणामिति** । विजातीया इति शेषः । तेन सजातीयेषु सत्स्वपि न दोषः ॥ ननु माभूद्रेफस्य विजातीयः सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाभावादनुनासिकः स्यादेवेत्यत[8] आह—**अनुनासिकपरेति** ॥ **नहि रेफस्येति** ॥ न च रेफस्य णकारः स्थानेनान्तरतमो भवत्येवेति वाच्यम् । **स्थानेऽन्तरतमे** इति सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमस्पर्शे ञ्चिन्मात्रमित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नासदृशे रेफे न प्रवर्त्तते इति भावात् ॥ **नापीति** । यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतम एवेति **स्थानेन्तरतम** इत्यनेन नियमः कुण्डं रथेनेत्यादौ चानन्तरतमस्यैव प्राप्तिरितीदमयुक्तम् । तथापि संभवदनुस्वारान्तरतमकेऽङ्कित इत्यादौ चरितार्थः परसवर्णविधी रेफे न प्रवर्त्तते इति भावः । इदं[9] जातिपक्षे इति केचित् ॥ वस्तुतो[10] व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्तते इति वक्तु शक्यम् । तद्वक्ष्यतीकोयणचीत्यत्र कैयटः—"द्रव्येऽपि पदार्थे उत्सर्गापवादभावःसंदिग्धत्वाश्रयोस्त्येव" इति ॥ केचित्तु[11] **स्थानेन्तरतम** इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्या युक्तेरसंभवदुक्तिकत्वम् । किं चैवं सति ऊष्म-

---

१ कित्त्वापत्तिं परिहरति—नैष इति ॥

२ "रलोव्व्युपधाद्" इति द्विवकारकपाठं 'अनचि च' इति द्वित्वकृतं मन्यते दूषणदाता सिद्धान्ती । दूषणनिराकर्ता तु तत्र 'अव्' इति प्रश्लेषः पाणिन्यभिप्रेत इति मन्यते । परमेकदेशित्वाल्लोपापत्तिः प्रश्लेषपक्षे इति न जानाति । न च लोपो व्योरिति लोप एवाङ्गीकरणीये सर्वं समञ्जसम् 'किं यकारो न श्रूयते । लुप्तनिर्दिष्टो यकारः' इतिवदत्रापि 'किं वकारो न श्रूयते । लुप्तनिर्दिष्टो वकारः' इत्यनुक्त्या वकारद्वयश्रवण एव भाष्यतात्पर्यात् । द्वित्वपक्षे तु तस्यासिद्धत्वान्न लोपापत्तिः ॥ इति दाधिमथाः ॥

३ नन्वत्र पक्षे 'इको रणचि' 'इग्यणः—' इत्यादावनिष्टापत्तिर्यथासंख्यप्रवृत्तेः । न चैतदनुरोधेन अइउणित्यादावपि 'अऋइण् । उऌक् ।' इति व्युत्क्रमस्वीकारः । तथा सति ग्राहकसूत्रभिन्नस्थलेऽण्ग्रहणे सर्वत्र उग्रहणमिति वैपरीत्यापत्तेः । तथा सति तृढो वृढ इत्यत्र 'ढ्रलोपे—' इति दीर्घः स्यात्, धंऋ् राजत इत्यत्र न स्यात् । तथा ऋकारादेशानामुदात्तादीनां रपरत्वं स्यात् उदोष्ठ्यपूर्वस्येति विहितोकारस्य न स्यात्' । न चास्वरितत्वाद्यथासंख्यं नेति वाच्यम्, तावतान्तरतमपरिभाषायाः संप्रसारणसंज्ञाविधावप्रवृत्तेः स्फुटत्वात् । तस्मादत्र यथासंख्येनैव निर्वाहो वाच्यः सिद्धान्ते । स चानिष्टावहोऽत्रपक्षे इत्याशयेन शङ्कते—ननु पूर्वोपेति ॥ छाया ॥

४ तद्भावीति । वाक्यस्य संज्ञेति पक्षे—भाष्ये संप्रसारणस्येत्यादौ संप्रसारणशब्देन जातस्य ग्रहणमित्युक्ततया तदेकवाक्यतयाऽत्र पक्षे तेन तद्भावितस्य संज्ञेति सूचनात् । तेन द्युभ्यामित्यादावपि न दीर्घप्राप्तिरिति भावः ॥ छाया ॥

५ व्यलोपानुपपत्तिं परिहरति—नैष इति ॥

६ एवं पूर्वोपदेशसमर्थनेऽपि (पाणिनीयन्यासपरिवर्तनेन) मूल एव कुठारादाह—अथवेति ॥ छाया ॥

७ यद्यप्युद्देश्यक्रमेणैव परिहार उचितस्तथापि द्वयोरेकपरिहारनिवार्यत्वादाह—अनुनासिकपरसवर्णेति । रेफोष्मेति । यत इत्यादि ॥ छाया ॥

८ स्यादेवेत्येति । अनुनासिकेनैव परसवर्णेन भाव्यमित्यत्र नियामकाभावेन परसवर्णः सजातीयो रेफः स्यादेवेत्यपि बोध्यम् ॥ छाया ॥

९ ननु व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदेन तद्विषयकशास्त्रस्य चारितार्थ्यात्कथमिदमत आह—इदमिति । अयं भावः—पाणिन्यादिमते उभयोः पदार्थत्वेऽपि लक्ष्यानुरोधादन्यतरपक्षाश्रयणमिति जातिपक्षस्यात्राश्रयणे तस्य एकत्वाच्छास्त्रमपि सकृदेव समुदाये प्रवर्तते न प्रतिव्यक्त्यावृत्त्या ॥ न चैवं कथं समुदाये प्रवृत्तिः, जातेः स्थानित्वादिधर्माणां व्यक्तिद्वारकत्वेन तत्र ते वर्तमानास्तद्वतीषु व्यक्तिषु प्रवर्तन्त इति स्वीकारात् । न चैवमुक्तदोषतादवस्थ्यम्, सकृत्प्रवृत्तिरप्यन्तरतमपरिभाषासंस्कृतैवेति दोषलेशाभावादिति ॥

१० वस्तुत इति । अयं भावः—तत्पक्षे प्रतिलक्ष्यं लक्षणभेदाङ्गीकारेऽपि तत्परिभाषैकवाक्यतया तादृशतद्विषयक एव लक्षणभेदो नतु सर्वव्यक्तिविषयक इति ॥ छाया ॥

११ प्रागुक्तं सर्वं दूषयति—केचित्त्विति ॥ भाष्यतत्त्वविद इत्यर्थः ॥ प्रत्येति । सुध्युपास्य इत्यादौ यणाद्यनापत्तेरिति भावः ॥ छाया ॥

---

१ इदमुपलक्षणम्—'अणो प्रगृह्यस्य—'इति कर्तृ हर्तृ इत्यत्रानुनासिकः स्यात् । मधु इत्यादौ न स्यादित्यपि बोध्यम् । परंतु सर्वापीयमनुपपत्तिर्ॡकारात्प्रागुकारपाठेन परिहरणीया ॥ आपत्तिस्तु दृढैव ॥ इति दाधिमथाः ॥

ग्रहणं भाष्ये व्यर्थं स्यात् । तस्मादनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यं रेफोष्मणामिति । अस्य चानुनासिकोऽनुस्वारान्तरतमश्च सवर्णो नास्तीत्यर्थः । अत एव महिम्मानित्यादौ स्त्ररीत्या स्थानप्रयत्नोभयान्तरतमककारसम्भवेऽपि नानुनासिकः, नाज्झलाविति निषेधेन सवर्णत्वाभावादिति भाष्याशय इत्याहुः ॥

( भाष्यम् )

**द्विर्वचनेऽपि । नेमौ रहौ कार्यिणौ द्विर्वचनस्य ॥ किं तर्हि ? ॥ निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्' इति । नेदानीं तौ भुञ्जाते ॥**

(प्रदीपः) **नेमौ रहाविति** । हकारवद्रेफोऽपि न कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसंबन्धपरिज्ञानात्सामान्यविधेर्विशेषविधिर्बाधकः । प्रत्यक्षश्च विशेषविधिः, सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते । दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यते । लक्ष्यस्थित्यपेक्षणाद्वा बाध्यबाधकभावो न ॥ क्वचिदपेक्षा नास्ति । यथा—चिचीषतीति दीर्घत्वद्विर्वचनयोः ॥

(उद्योतः) नन्वयत्नादप्रसक्तद्वित्वस्य हस्य ग्रहणमयुक्तमत आह—**हकारवदिति** । ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः; प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किं न स्यात् । यथाऽवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह—**तत्रेति** । लक्ष्यभेदेन कार्यित्वनिमित्तत्वसंभवेऽपीत्यर्थः ॥ सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः । शब्दो वाक्यात्मा । अर्थस्तदर्थः । संबन्धः प्रतिपाद्यप्रतिपादकभावः । तेषां परिज्ञानं तद्यथा लोकव्यवहारादेव, तथा तयोर्बाध्यबाधकभावः संभवेऽपि भवतीत्येतदपि लोकव्यवहारादेव ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यादिरूपादवगतमित्यर्थः । विशेषसंनिधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वं च तद्बीजम् ॥ परिज्ञानवदिति पाठः । एवं चाचोरहाभ्यामित्यत्र सामान्यविशेषविधित्वाभावेऽपि तत्र बाधे यद्बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह—**प्रत्यक्षश्चेति** । अविलम्बितप्रतीतिकत्वं प्रत्यक्षत्वम् । विलम्बिततत्कत्वं चानुमेयत्वम् ॥ **लक्ष्येति** । ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः ॥ **क्वचिदपेक्षा नास्तीति** । बाध्यबाधकभावस्येति शेषः ॥ **यथेति** । बाध्यबाधकभावाभावे दृष्टान्तोऽयम् । ननु कार्यित्वनिमित्तत्वयोः समावेशे इति बोध्यम् ॥ केचित्तु तक्रकौण्डिन्यन्यायोऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव । अस्ति च प्रकृते तत् । न ह्येतद्बोध्यनिमित्तत्वं सामान्ययत्नप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति सर्वत्राचः परत्वादनचीत्यस्य प्राप्तेरतोऽयुक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वर्वाधः । न चैवमिको यणित्यादौ, मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः ॥

(इति रेफोपदेशस्थानधिकरणम् ।)

---

( अथायोगवाहोपदेशाधिकरणम् । )

( भाष्यम् )

**[13]इदं विचार्यते—इमेऽयोगवाहा न क्वचिदुपदि-**

१ 'सवर्णपदेति । अयं भावः—'अनुस्वारस्य—' इति सूत्रे 'पर' इति लुप्तषष्ठ्यन्तं पृथक् पदम् । सवर्ण इति च पृथक् पदम् । अत एव 'उदः स्थास्तम्भोः' इत्यत्र तदनुवृत्तिरिति ॥ छाया ॥

२ आन्तरतम्यपरीक्षायां बाह्यप्रयत्नोपयोगस्यापि वाग्घरिरित्यादावङ्गीकृतत्वेन घकारस्याघोषत्वेन ककारस्य घोषत्वेनानान्तरतम्याचिन्त्यमेतत् ॥ दाधि०

३ मध्यमेऽपि समाधत्ते—द्विर्वचनेऽपीति । प्रतिषेधो न वक्तव्य इत्यस्यानुषङ्गः ॥ नेमाविति । यत इत्यादिः ॥ इदमा प्रत्यक्षं निमित्तत्वं प्रदर्श्यते । कार्यिणाविति । साक्षादिति शेषः । तद्विषयत्वेन साक्षादनुपात्ताविल्यर्थः ॥ निमित्तत्वस्य तुल्यत्वादेकवचनम् ॥ छाया ॥

४ बाध इति । तत्काले इति शेषः । अत एव भाष्ये—नेदानीमित्युक्तम् ॥ तुना वैलक्षण्यं सूचितम् । तत्र कर्त्रैक्यं कालैक्यम्, कर्ममात्रभेदः । अत्र तु देशभेदः शास्त्रभेदश्चेति ॥ लक्ष्यैक्येऽपि तवल्कार इत्यादौ लृकारादेरुभयदर्शनेनाविरोधादाह—भिन्नेति ॥ छाया ॥

५ संभवेऽपीति । कालभेदेन देशभेदेन चेति भावः ॥ छाया ॥

६ भाष्योक्तन्यायेन 'तत्काले तन्न, कालान्तरे तु तद्भवति' इति प्रतिपाद्यते इति भ्रमनिरासाय न्यायान्तरं स्फुटप्रतीयमानकालभेदविषयकमप्याह—ब्राह्मणेभ्य इति ॥ छाया ॥

७ यद्यपीह लक्ष्यव्यक्तिभेदेनोभयं संभवति, तथापि सत्यपि संभवे सामान्यतः प्राप्तं विशेषप्राप्तेन बाध्यते इत्यभ्युपगमान्न दोषः । एवं चाचो रहाभ्यामिति सूत्रे यर इति रेफभिन्नपर एवेति स्थिते अनचिचेत्यत्रापि तथैव, अर्थाधिकारात् । तेन हर्यनुभव इत्यादावपि रेफस्य न द्वित्वम् ॥ शब्दकौ० ॥

८ नन्वेवं 'प्रत्यक्षानुमितयोः' इति श्रुतानुमितयोः' इति वा न्यायविषयता समागतेति न प्रायुक्तबीजकत्वम् । किं च रेफयरोरिगचोश्च प्रत्यक्षत्वं श्रुतत्वं वा तुल्यमेवेति कथं तेनापि निर्वाहोत आह—अविलम्बितेति ॥ एवं च तयोः प्रत्यक्षत्वादिकमपि न विवक्षितम्, किंतु 'सामान्यश्रुतस्य विशेषश्रुतं बाधकम्' इति । विशेषश्रुतस्य विशेषशब्दबोधितत्वेन शीघ्रोपस्थितिरन्यस्य वैपरीत्येन तथोपस्थितिरिति वैलक्षण्यदृष्टान्तवदत्र सत्त्वात्तदुपपत्तिस्तद्बीजकत्वं च सिद्धमिति न कोऽपि दोषः ॥ छाया ॥

९ पूर्वं 'बाध्यबाधकभावो न' इति पाठस्य सत्त्वादाह—शेष इति । पूर्वं षष्ठ्यन्तपाठेऽपि 'केचिदविशेषेण विभाषा' इति पक्षस्यापि वक्ष्यमाणतया नियमाप्रवृत्तिपक्षे कर्तरि सा षष्ठीत्येतदावश्यकत्वम् । तत्र तृतीयान्तपाठस्तु न योगः लक्ष्येत्यत्र समाधानापत्तेः ॥ छाया ॥

१० केचित्त्विति । भाष्यतत्त्वविद इत्यर्थः ॥ छाया ॥

११ बाध इति । निमित्तत्वेनेति शेषः ॥ छाया ॥

१२ नचैवं । नह्येवम् ॥ छाया ॥

१३ 'अयोगवाहानाम्—' इति वार्तिकावताराय विचारान्तरमारभते—इदमिति । रत्नकृत् । वस्तुतस्तु 'इदं विचार्यते' इत्यस्यात्रापाठः संशयाभावात् । यत्र कोटिद्वयोपस्थितिस्तत्रैव तदुक्तेर्भाष्यशैलीसिद्धत्वाच्चेति बोध्यम् ॥ छाया ॥

श्यन्ते, श्रूयन्ते च । तेषां कार्यार्थ उपदेश कर्तव्यः ॥ के पुनरयोगवाहाः ? ॥ विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमाः ॥ कथं पुनरयोगवाहाः ? ॥ यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते ॥

(प्रदीपः) इमइति । विधानादेषां साधुत्वं स्यात् । प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति ॥ के पुनरिति । तत्स्वरूपप्रश्नः ॥ कथमिति । प्रवृत्तिनिमित्तप्रश्नः । अयुक्ता इत्यस्यैव हेतुकथनम् अनुपदिष्टाश्चेति । अयुक्ताः प्रत्याहारलक्षणेन पाठाभावादसंबद्धा इत्यर्थः । उपदेशो द्विविधः पाठो ग्रहणकशास्त्रेण प्रत्यायनं च । स द्विविधोऽप्येषां नास्तीत्यर्थः ॥ चशब्दो हेतौ । यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः । क्वचित्तु चशब्दो न पठ्यते ॥

(उद्योतः) ननु कार्यार्थ इत्यत्र कार्यं साधुत्वं चेत् खरवसानयोरित्यादिना सिद्धमत आह—विधानादिति । उपदिश्यन्त इति पाठे भाष्ये वर्त्तमानसामीप्ये लट् । उपदिष्टा इत्यर्थः ॥ प्रवृत्तिनिमित्तेति । प्रकृते भासमानवैशिष्ट्यप्रतियोगि
इति भावः । केन प्रवृत्तिनिमित्तेनायोगवाहशब्द
त्पर्यम् ॥ नन्वनुपदिष्टाश्चेति चकारश्रवणादनु
ब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति, तदयु
स्यानुच्चारणस्य तत्राभावात् । प्रयोगेषूच्चारित
सूत्रानुच्चारितत्वं तथा; यदयुक्ता इत्यनेनैव
पत्तेरत आह—अयुक्ता इत्यस्यैव हेतु
बोधकलक्षणेनायुक्ता इत्यन्वयः । तद्व्याच
ग्रहणकशास्त्रेण प्रदेशे प्रवर्त्तमानेन यो
पाठाभावादित्यप्यर्थः ॥ एषां नास्तीति
एवंचाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्यर्था-
गवाहपदव्युत्पत्तिर्दर्शिता ॥ न पठ्यत इति । तत्र यत इत्यध्याहार्यमिति भावः ॥

( भाष्यम् )

क्व पुनरेषामुपदेशः कर्तव्यः ? ॥

( ६७ सिद्धान्तवार्तिकम् ॥ ८ ॥ )

॥ * ॥ अयोगवाहानामट्सु णत्वम् ॥ * ॥

( भाष्यम् )

अयोगवाहानामट्सूपदेशः कर्तव्यः ॥

किं प्रयोजनम् ? ॥ णत्वम् । उरःकेण, उरःकेण, उरःपेण, उरःपेण । "अड्व्यवाये" इति णत्वं सिद्धं भवति ॥

(उद्योतः) भाष्ये उरःकेणेति । उरः कायतीति व्युत्पत्तेः पूर्वं समासेऽपि सोपदादाविति न सत्वम् । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ।

( ६८ सिद्धान्तवार्तिकम् ॥ ९ ॥ )

॥ * ॥ शर्षु जश्भावषत्वे ॥ * ॥

( भाष्यम् )

शर्षूपदेशः कर्तव्यः ॥ किं प्रयोजनम् ? ॥ जश्भावषत्वे । अयमुब्जिरुपध्मानीयोपधः पठ्यते । तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद् रूपं यथा स्यात् ॥

(प्रदीपः) शर्ष्विति । शर्षु पाठे झल्त्वमिति झलां जश् झशीति जश्त्वं सिध्यति ॥

(उद्योतः) ननु शराम् जशो भवन्तीति लक्षणाभावाच् शर्षुपाठस्य न जश्भावः प्रयोजनमत आह—शर्षुपाठे इति ॥

---

१ नन्वेवं न सन्त्येव तेऽत आह—श्रूयन्ते चेति । प्रयोगे विसर्जनीयस्य सः, इत्यादिसूत्रेषु चेति भावः ॥ छाया ॥

२ तथा च कात्यायनप्रातिशाख्यम् उव्वटभाष्यसंकलितम् ।

५ अथायोगवाहाः ॥ का० प्रा० ८ अध्याये ८ सूत्रम् ॥

( उ० भा० ) व्याख्यायन्त इति शेषः तथाहि—

ᳵक इति जिह्वामूलीयः ॥ ८।९ ॥

ᳵप इत्युपध्मानीयः ॥ ८।१० ॥

अं इत्यनुस्वारः ॥ ८।११ ॥

अः इति विसर्जनीयः ॥ ८।१२ ॥

हुँ इति नासिक्यः ॥ ८।१३ ॥

( उ० भा० ) अयमृक्शाखायां प्रसिद्धः ॥

कुँ खुँ गुँ घुँ इति यमाः ॥ ८।१४ ॥

३ व्युत्पत्तिरिति । अनेन 'श्रूयन्ते' इत्यग्रे भाष्ये 'अतोऽयोगवाहाः' इति शेष इति सूचितम् । तदवयवार्थस्तु—'न विद्यते योगः संबन्धो येषां समाम्नाये तेऽयोगाः वहन्ति ते वाहाः । अयोगाश्च ते वाहाश्चेति बोध्यः ॥ ते यद्युपदिष्टाः तर्ह्यकारादिवच्छ्रूयेरन्निति योग्यानुपलब्धिसहकृतश्रोत्रेणायोगग्रहः । संस्कर्तेत्यादिप्रयोगवहनं तु सर्वैरेव गृह्यते इति समुदितग्रहे प्रत्यक्षं मानं सूचितमनेनेति बोध्यम् ॥ छाया ॥

४ अध्याहारानुषङ्गाभ्यां वार्तिकं व्याचष्टे—अयोगेति ॥ छाया ॥

५ अत्रेदमवधेयम्—अट्सु क्रियमाण उपदेशोऽप्यकारानन्तरमिकारात्प्राक्कर्तव्यः । तेन इण्स्वनन्तर्भावात् पयःसु यशःस्वित्यादाविण्कोरित्यधिकृत्य विधीयमानमादेशप्रत्यययोरिति षत्वं न भवति । अक्षु चान्तर्भावात्संस्कर्तेत्यादावनुस्वारस्याच्त्वमाश्रित्य तस्मात्परस्य सकारस्य द्वित्वं सिध्यति । न चैवं हरिः करोतीत्यादाविकोयणचीति यण्प्रसङ्गः । विसर्गस्यासिद्धत्वात् । एवं हरिं पश्यतीत्यादावनुस्वारस्यासिद्धत्वं बोध्यम् ॥ शब्दकौ० ॥

६ अपिना तदुत्तरसमासे तदप्रवृत्तिरेवेति सूचितम् ॥ छाया ॥

७ एषां हकारवदन्यत्राप्यावृत्तिः कार्येत्याह—शर्ष्विति ॥ छाया ॥

८ तस्येति । तदीयोपध्मानीयस्येत्यर्थः । यद्वा तस्य उब्जेरुब्जितेत्यादिरूपं यथा स्यादित्यन्वयः ॥ छाया ॥

९ झल्त्वमिव हल्त्वयत्वे अपि नान्तरीयकत्वादेव सिद्धे । तत्फलं स्वविशेषेणेत्युत्तरवार्तिकव्याख्यायां व्यक्तीभविष्यति । तथा खर्त्वमपि । तेन कुप्वोः ᳵकᳵपौ चेत्यत्र विसर्गसिद्धिः ॥ श० कौ० ॥

१० 'झलां जशोऽन्ते' इत्यस्यापत्तिस्तु न, एतद्दृष्ट्या विसर्गादीनामसिद्धत्वात् ॥ छाया ॥

( उपध्मानीयोपधदूषणभाष्यम् )

**यद्युब्जिरुपध्मानीयोपधः पठ्यते उब्जिजिषती-त्युपध्मानीयादेरेव[2] द्विर्वचनं प्राप्नोति । दकारोपधे पुनर् "न न्द्राः संयोगादयः" इति प्रतिषेधः सिद्धो भवति[3] ॥**

(प्रदीपः) **उपध्मानीयादेरिति** । यदि द्विर्वचने पूर्वत्र कर्तव्ये जश्त्वमसिद्धमथापि **पूर्वत्रासिद्धीयमद्विर्वचन** इति सिद्धं सर्वथो[4]विविर्ब्जिषतीति प्राप्नोति ॥

(उद्योतः) **यदीति** । पूर्वत्र द्विर्वचने इत्यन्वयः ॥ ननु पूर्वं द्वित्वे जश्त्वात्[5]पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याभ्यासे जश्त्वं झश्परत्वाभावात् । अभ्यासे चर्चेत्यनेन त्वान्तरतम्यात्प्रकृति-चरां चर एवेति उपध्मानीय एव स्यादिति चेच्चिन्त्यमेवैतत् । उपध्मानीयश्रवणापादनेनापि भाष्यसामञ्जस्यात् । [6]अन्त्ये तु द्वित्वे कृतेपि द्वित्वाश्रयस्य कार्ये कर्तव्येऽसिद्धत्वं नेत्यपि **पूर्वत्रासिद्धीय**-मित्यस्यार्थ इति परत्वाज्जश्त्वेऽकृत एव **हलादिः शेष** इत्याशयान्न[7] दोषः ॥

( दकारोपधदूषणभाष्यम् )

**[8]यदि दकारोपधः पठ्यते, का रूपसिद्धिः—उ-ब्जिता उब्जितुमिति? ॥**

( दकारोपधदूषणनिराकरणभाष्यम् )

**[9]असिद्धे भ उदूजेः । इदमस्ति—"स्तोः श्चुना श्चुः" इति, ततो वक्ष्यामि "भ उदूजेः" उदूजेः श्चुना सन्निपाते भो भवतीति ॥**

( आक्षेपभाष्यम् )

**तर्त्तर्हि वक्तव्यम् ॥**

( समाधानभाष्यम् )

**न वक्तव्यम्, निपातनादेव सिद्धम् ॥ किं निपा-तनम्? ॥ "भुजन्युब्जौ पाण्युपतापयोः" इति ॥**

(प्रदीपः) **निपातनादिति** । द्विर्वचनं[10] कथम् । निपा तनाद्वाक्यशेषोऽनुमीयते—असिद्धप्रकरणे स्तोश्चुरित्यत्रोदूजेभ इति । तत्र **न न्द्रा** इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति **पूर्वत्रासिद्धीयमद्विर्वचन** इत्यस्याप्रवृत्त्या भत्वस्यासिद्धत्वादिष्टद्विर्वचनसिद्धिः । अथापि न वाक्यशेषानु-मानं निपातनमेव प्रतिपादकं तथापि द[11]कारोपदेशसामर्थ्याद्द्वि-र्वचने कृते दकारस्य बत्वं प्रवर्तते ॥

(उद्योतः) **द्विर्वचनं कथमिति** । बकाररहितस्येति शेषः ॥ ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषावच्छिन्नमत आह—**अथापीति** । न चाभ्युद्ग इत्यादौ दकारोच्चारणं सार्थकं; **नैतदुब्जे** रूपमिति भाष्योक्त्या दोषाभावात् । उपतापातिरिक्तविषयेऽस्माद् घञ् नानभिधानादिति तदाशयः॥ **अकुत्वविषये निपातन**मिति पक्षान्तरे त्वाद्यमेव [12]समाधानम् ॥

( समाधानबाधकभाष्यम् )

**इहापि तर्हि प्राप्नोति—अभ्युद्गः समुद्ग इति ॥**

( समाधानसाधकभाष्यम् )

**अकुत्वविषये तन्निपातनम् ॥ [13]अथवा नैतदुब्जे रूपं गमेरेतद् ड्युपसर्गाड्डो विधीयते । अभ्युद्ग-तोऽभ्युद्गः समुद्गतः समुद्ग इति ॥**

(प्रदीपः) **अकुत्वविषय इति** । विशिष्ट[14]विषयमनुमान-मित्यर्थः ॥

---

१ इदं खण्डयति—यदीति ॥ छाया ॥

२ त्युपध्मानीति । जश्त्वस्यासिद्धत्वाद् 'अजादेर्द्वितीयस्य' इत्युपध्मा-नीयजकारविशिष्टेत्यर्थः ॥ छाया ॥

३ भवतीति । तथा च जिस् शब्दस्य द्वित्वे वक्ष्यमाणरीत्या दकारस्य वकारे इष्टरूपसिद्धिरिति भावः ॥ छाया ॥

४ सर्वथोवीति । नतूब्जीजिषतीत्यर्थः ॥ छाया ॥

५ जश्त्वादित्यस्य मध्यमणिन्यायेनान्वयः ॥ परिभाषाया उभौ साभ्या-सस्येति ज्ञापकेनानित्यत्वादप्रवृत्तिपक्षे शङ्केयम् ॥ छाया ॥

६ अन्त्ये तु परिभाषाप्रवृत्तौ तु ॥ छाया ॥

७ न दोष इति । तथा च भाष्य उपध्मानीयशब्दः स्थान्यादेशसाधा-रण इति तदादेर्द्वित्वे इष्टरूपासिद्धौ तात्पर्यं भाष्यकैयटयोः ॥ छाया ॥

८ उक्ताशयानभिज्ञस्तर्हि सर्वप्रयोगव्यत्यय इति पृच्छति—यदीति । केति । तर्हीत्यादिः । उब्जितेत्यादिरूपसिद्धिः किमाकारेत्यर्थः । कथमिति ॥ यावत् ॥ छाया ॥

९ स्वाशयं प्रकाशयन्समाधत्ते—असिद्ध इति ॥ 'पूर्वत्रासिद्धम्' इत्य-सिद्धप्रकरणे 'भउब्जेः' इति वाच्यमित्यर्थः ॥ प्रासङ्गिकमिदं वार्तिकमि-त्येके ॥ भगवत एव प्रौढिवाक्यमित्यन्ये ॥ छाया ॥

१० निपातनेनैव बत्वस्य सामान्यतो निपातनेऽपि न दोष इत्याह अथ-वेति ॥ उपतापादन्यत्रास्माद्घञ इव सामान्यतः क्रियादेरप्यनभिधानमिति बत्वस्य सामान्यत एव निपातनमाश्रीयत इति भावः ॥ छाया ॥

११ घञन्तस्याकुत्वार्थकवचने बकारपाठेन तत एव निपातनाद्बत्वं भगव-तोक्तमित्याशयेन शङ्कते—द्विर्वचनमिति । समाधत्ते—निपातनादित्यादि ॥ ॥ छाया ॥

१२ बकारोपधोऽयमिति वृत्तिकारमते तु बकारस्य द्वित्वनिषेधः समुद्ग इ-त्यादौ दकारादेशश्चेत्युभयमऽपि वचनेनैव साधनीयं स्यात् । तस्माद्दकारोपध एवायम् ॥ श० कौ० ॥

१३ यत्तु—कुत्वाभावेन सहैव बत्वं निपात्यते इति रत्नकृत् । तन्न, उब्जि जिषतीत्यादौ तद्भावापत्तेरत आह—विशिष्टेति । विशेषविषयकवाक्य-शेषानुमानमित्यर्थः । तथा चानेन भाष्येण वचनारम्भपक्षोक्तं कैयटेनाद्यपक्ष-त्वेनोक्तं श्चुना योगे बत्वमित्येवोच्यत इति नानिष्टमिष्टसिद्धिश्च ॥ अयं भावः—कुत्वाभावनिपातनमुपतापविषयं न घञ्मात्रविषयम् । एवं चाभ्युद्ग इ-त्यादौ तत्सत्त्वेपि तदभावात् 'चजोः—' इति कुत्वविषयतया श्चुनाऽयोगा-त्तत्र । तत्सत्त्वेनोब्जिजिषतीत्यादिसिद्धिश्च । यत्राकुत्वं तत्रैव बत्वमिति रत्नो-क्तार्थाङ्गीकारे तु तत्र कुत्वस्यैवाप्राप्त्या निपातनाप्राप्त्या तदसंगतिः स्पष्टैव । असिद्धत्वादेव परत्वान्तरङ्गत्वयोर्नायं विषयः । अन्यथा ताभ्यामादौ भत्वे न न्द्रा इति निषेधो न स्यादिति ॥ छाया ॥

१४ तदेवमयोगवाहानां शर्षूपदेशस्य जश्भावरूपं प्रयोजनं वार्तिकम-तेऽस्ति, भाष्यमते तु नास्तीति स्थितम् ॥ श० कौ० ॥

( प्रयोजनभाष्यम् )

षत्वं च प्रयोजनम् । सर्पिःषु धनुःषु । 'शर्व्यवाये' इति षत्वं सिद्धं भवतीति "नुम्विसर्जनीयशर्व्यवायेऽपि" इति विसर्जनीयग्रहणं न कर्तव्यं भवति ॥

( आक्षेपभाष्यम् )

नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम् ।
कथं, सर्पींषि धनूंषि ? ।
अनुस्वारे कृते 'शर्व्यवाये' इत्येव सिद्धम् ॥

( समाधानभाष्यम् )

अवश्यं नुमो ग्रहणं कर्तव्यम् । अनुस्वारविशेषणं नुम्ग्रहणम्, नुमो योऽनुस्वारस्तत्र यथा स्याद्, इह मा भूत्-पुंस्विति ॥

(प्रदीपः) अवश्यमिति । अनुस्वारस्य शर्त्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थम्—नुमो योऽनुस्वारस्तत्रैव यथा स्यादन्यत्र मा भूत्—पुंस्विति ॥

(उद्योतः) अनुस्वारस्य शर्त्वादिति । यद्यपि इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः सुहिन्सु इत्यादौ संभवति, तथापि तदनभिधानमिति भावः । पुंस्वित्यत्र संपुङ्कानामित्येतत्प्रवृत्तिपरविवरणग्रन्थस्तु चिन्त्य एव । तस्य समस्सुटि, पुम[...]कानाम्रेडिते इति सूत्रत्रयमात्रविषयत्वात् ॥

( भाष्यम् )

अथवाऽविशेषेणोपदेशः कर्तव्यः ॥

(प्रदीपः) अविशेषेणेति । प्रयोजन[...] सकलप्रयोजनोद्देशेन यत्र यत्र प्रदेशे प्रयोजनसि[...] पदेशः कार्य इत्यर्थः ॥

(उद्योतः) ननु सूत्रविशेषानाश्रयणे तत्प्रत्याहारासंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह—प्रयोजनविशेषमिति ॥ अविशेषेणेति भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थं इति भावः ॥ यत्र यत्रेत्यादि यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयसकलप्रयोजनोद्देशेनेत्यर्थः ॥

( भाष्यम् )

किं प्रयोयनम् ? ॥

( ६९ सिद्धान्तवार्तिकम् ॥ १० )

॥ * ॥ अविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः ॥ * ॥

(भाष्यम्)

अविशेषेण संयोगसंज्ञा प्रयोजनम् उ३ञ्जक "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुर्विति" गुरुसंज्ञा, "गुरो" रिति प्लुतो भवति ॥

(प्रदीपः) उ३ञ्जक इति । उपध्मानीयस्य जश्त्वे कृते संयोगसंज्ञायां तस्यासिद्धत्वात्संयोगसंज्ञाभावाद्गुरुत्वाभावात् प्लुतो न स्यात् ॥

(उद्योतः) जश्त्वे कृते संयोगसंज्ञायामिति । कार्यकालपक्षे इदम् ॥

( प्रयोजनभाष्यम् )

उपधासंज्ञा च प्रयोजनम्—दुष्कृतं, निष्कृतं, दुष्पीतं निष्पीतम् "इदुदुपधस्य चाप्रत्ययस्ये"ति षत्वं सिद्धं भवति ॥

[...] भाष्ये इदुदुपधस्येति । विसर्गस्याल्त्वे ह्युपधात्व-

( प्रयोजननिरासभाष्यम् )

नैतदस्ति प्रयोजनम् । न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते ॥

किं तर्हि ? ॥

सकारो विशेष्यते-इदुदुपधस्य सकारस्य यो विसर्जनीय इति ॥

अथ वोपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः-इदुद्भ्यामुत्तरस्य विसर्जनीयस्येति ॥

(उद्योतः) इदुदुपधस्य सकारस्येति । विसर्गस्थान्युपलक्षणमेतत् । अत एव निरोपि निष्कृतमिति सिध्यति । अत एव वक्ष्य-

---

१ प्रयोजनवार्तिकांशे जश्भावपदं व्याख्याय षत्वपदमुदाहरणदानादिना व्याचष्टे—षत्वं चेति ॥ छाया ॥

२ तत्र यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदिति कालोपलक्षणे दिवा नक्षत्रदर्शनेऽपि न भवति, रात्रावदर्शनेऽपि भवति । एवमिहापि सत्यपि नुम्यनुस्वाराऽभावे न भवति, असत्यपि नुम्यनुस्वारे सति भविष्यतीति ॥ प० म० ॥

३ तत्तद्विषयेति ॥ तत्तत्प्रदेशस्थेत्यर्थः । अनेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्र सकलप्रयोजनोद्देशेनोपदेशः कार्य इति कैयटेऽन्वयः सूचितः । सचार्थाद्द्वशरोरेव । तथाच ल्यबन्तान्तवाक्यार्थ एवानेन तत्र हेतुं सूचयन्फलतया प्रतिपाद्यते नतु बहुषु तथोपदेशः प्रतिपाद्यते । तयोरेवोपदेशेन सर्वफलानां सिद्धत्वात् ॥ छाया ॥

४ भवतीति । इदं फलमुब्जेरुपध्मानीयत्वमङ्गीकर्तृवार्तिककारमते । सिद्धान्तभूतदकारोपधत्वपक्षे तु नचाशङ्का न चोत्तरमिति नेदं फलमिति बोध्यम् ॥ छाया ॥

५ उपधासंज्ञा चेति चो वार्तिकरीत्या पूर्वपरसमुच्चायकः, भाष्यरीत्या वक्ष्यमाणमात्रसमुच्चायक इति बोध्यम् ॥ छाया ॥

६ कस्तर्हीति पाठः । किंतर्हीति पाठे सामान्ये नपुंसकं ज्ञेयम् ॥ छाया ॥

७ इदुदुपधस्य पदस्यावयवो यः सकारस्तस्येत्यर्थः । तथा च सकारमन्त्यमलमादाय तस्य तत्त्वं वाच्यमिति तदा तत्त्वापेक्षा नेदानीमिति षत्वं प्रतीदुदुपधत्वं विशेषणं न किंतूपलक्षणमिति भावः ॥ छाया ॥

८ बहुलाघवादाह—अथवेति ॥ इदुद्भ्यामिति । तृतीयान्तमिदम् । तुर्यन्त इत्यर्थः । परमिति । परत्वेनेत्यर्थः । अनेन 'इदुद्भ्यामप्रत्ययस्य' इति न्यासः सूचितः ॥ छाया ॥

माणपक्षान्तरेणाविरोधः । निष्कृतमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि इणः प इति न । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ॥

(प्रयोजनभाष्यम्)

**अलोन्त्यविधिश्च प्रयोजनम्—वृक्षस्तरति प्लक्षस्तरति "अलोन्त्यस्य" विधयो भवन्तीत्यलोन्त्यस्य सत्वं सिद्धं भवति ॥**

(प्रयोजननिराकरणभाष्यम्)

**एतदपि नास्ति प्रयोजनम्—"निर्दिश्यमानस्यादेशा भवन्ति" इति विसर्जनीयस्यैव भविष्यति ॥**

(प्रयोजनभाष्यम्)

**द्विर्वचनं प्रयोजनम्-उर××कः । उर××पः । "अनचि च" अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति ॥**

(उद्द्योतः) द्विर्वचनं प्रयोजनमिति । विसर्गजिह्वामूलीयादेर्दिरुच्चारणे विशेषस्याग्रहाद् उच्चारणस्य कर्तुमशक्यत्वाच्च शास्त्रप्राप्तिमात्रेणैतत्प्रयोजनकथनमिति सन्तोष्टव्यम् ॥

(प्रयोजनभाष्यम्)

**स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्—यथेह भवति-उरःकेण, उरःपेणेति "अड्व्यवाय" इति णत्वम्; एवमिहापि स्थानिवद्भावात्प्राप्नोति-व्यूढोरस्केन महोरस्केनेति । तत्र "अनल्विधौ" इति प्रतिषेधः सिद्धो भवति ॥**

(प्रदीपः) महारेस्केनेति । पूर्वत्रासिद्धीये न स्थानिवदिति निषेधोऽचः परस्मिन्पूर्वविधावित्यस्य, न तु स्थानिवदादेश इत्यस्य ॥

(उद्द्योतः) ननु सोपदादाविति सत्वस्य स्थानिवत्त्वं पूर्वत्रासिद्धीये इति निषेधान्नेत्यत आह—पूर्वत्रेति ॥

(इत्ययोगवाहोपदेशाधिकरणम् ॥)

(अथ वर्णार्थवत्ताधिकरणम्)

(भाष्यम्)

**किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः१**

(प्रदीपः) इदानीमन्यदपि वर्णगतं वस्तु विचार्यते—किं पुनरिति । पक्षद्वयेऽपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम् ॥

(उद्द्योतः) इमे इत्यनेन न हयवरट्सूत्रस्था एव गृह्यन्ते, किं तु वर्णमात्रमित्याह—इदानीमिति । अर्थवन्त इति साध्यम् । वर्णा इति पक्षः । पक्षतावच्छेदकमेव हेतुः । धातुप्रातिपदिकेत्यादिस्तु दृष्टान्तः ॥ अनुत्पत्तिज्ञानम् । अनुत्पत्त्युपायज्ञानम् ॥

(७० अर्थवत्तासाधकप्रथमवार्तिकम् ॥ ११ ॥)

**॥ * ॥ अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥ * ॥**

(भाष्यम्)

**अर्थवन्तो वर्णाः ॥**

**कुतः ? ॥**

**धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥**

**धातव एकवर्णा अर्थवन्तो दृश्यन्ते—एति, अध्येति, अधीत इति ॥**

**प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम्, एभिः, एषु ॥**

**प्रत्यया एकवर्णा अर्थवन्तः,-औपगवः, कापटवः ॥**

**निपाता एकवर्णा अर्थवन्तः,—अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, अ अपक्राम । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे—अर्थवन्तो वर्णाः-इति ।**

(उद्द्योतः) भाष्ये धातव इत्यादि । प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवंरूपवर्णस्फोटाश्रयेण । अयंच शास्त्रव्यवहारमात्रोपयोगी । एतद्वासनावशादेव लोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति धर्मे चैवंविधज्ञानस्योपयोग इति बोध्यम् ॥

(७१ अर्थवत्तासाधकद्वितीयवार्तिकम् ॥ १२ ॥)

**॥*॥ वर्णव्यत्यये चार्थान्तरगमनात् ॥ * ॥**

(भाष्यम्)

**वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहेऽर्थवन्तो**

---

१ सर्वं चेदं 'संभवति–' इति न्यायस्य ' 'पदाङ्गाधिकारे' इत्यस्य चानाश्रयणेनोक्तम् । तदाश्रयणे त्वाद्यपक्षे 'इदुदुपधस्य सकारान्तस्य पदस्य यो विसर्जनीयस्तदन्तस्य' इत्यर्थः, द्वितीयपक्षे–इदुद्भ्यामुत्तरो यो विसर्जनीयस्तदन्तस्य पदस्येत्यर्थो बोध्यः । सिद्धान्ते तु–इदुदुपधस्य विसर्जनीयान्तस्य पदस्येत्यर्थः । अलोन्त्यस्येत्यनेन विसर्जनीयस्य तदिति बोध्यम् ॥ छाया ॥

२ विधय इति । विध्येकवाक्यतया लब्धमिदम् आदेशा इत्यर्थः । अन्यथा विसर्जनीयान्तस्य पदस्य विधीयमानं सत्वं सर्वादेशः स्यात् तस्यानल्त्वेनान्त्यस्यालोऽभावेन तदप्रवृत्तेः । अलां मध्येन्त्यस्याल इत्यर्थे त्वकारस्य स्यादिति भावः ॥ छाया ॥

३ तदेवं वार्तिककृता प्रयोजनत्रय उक्तेपि भाष्यमते तत्र यद्यप्याद्यं भगवता न खण्डितम्, तथापि प्राक् मूलस्यैव खण्डितत्वेन खण्डितप्रायमिति विशिष्यात्र तथा नोक्तम् । तदेतद्वनयंश्चरहितमाह—द्विर्वचनं प्रयोजनमिति ॥ छाया ॥ 'अवसाने रविसर्जनीयजिह्वामूलीयोपध्मानीयाः' इति प्रातिशाख्यसूत्रे द्वित्वनिषेधस्तु वेदे द्वित्वादर्शनसूचकः ॥ इति दाधिमथाः ॥

४ सिद्धो भवतीति । तदेवं वार्तिकेन फलपञ्चके तस्योक्तेपि भाष्यमते फलद्वयं स्थितम् । तत्रापि चरमं युक्तमिति बोध्यम् ॥ छाया ॥

५ विचार्यत इति । अनेनात्र भाष्ये–'इदं विचार्यते' इत्यपेक्षितम् । परंतु त्रुटितमिति सूचितम् । तथाच वार्तिकावतरणमिति भावः १ छाया ॥

६ उपसंहरति–धात्विति ॥ छाया ॥

**वर्णा इति । कूपः सूपो यूप इति । कूप इति सककारेण कश्चिदर्थो गम्यते । सूप इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । यूप इति ककारसकारापाये यकारोपजने चार्थान्तरं गम्यते । ते मन्यामहे-यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति ॥**

(प्रदीपः) **वर्णव्यत्यय इति** । एकस्य वर्णस्याभ्युपगमेऽन्यापगमो व्यत्ययः ॥ **सककारस्येति** । तस्यैवान्वयव्यतिरेकावनुविधत्तेऽर्थावसाय इत्यर्थः ॥.

(उद्द्योतः) हेत्वन्तरमाह—**वर्णव्यत्यये चेति** ॥ ननु कूपादौ न सिंहादाविव वर्णव्यत्ययोऽत आह—**एकस्येति** ॥ **तस्यैवान्वयेति** । ऊपशब्दस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं प्रादिवत् । अत एव तेषामिवैषामपि प्रातिपदिकसंज्ञापादनं करिष्यते ॥

( ७२ अर्थवत्तासाधकतृतीयवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ वर्णानुपलब्धौ चानर्थगतेः ॥ * ॥**

( भाष्यम् )

**वर्णानुपलब्धौ चानर्थगतेर्मन्यामहेऽर्थवन्तो वर्णा इति । वृक्ष ऋक्षः, काण्डीर आण्डीरः । वृक्ष इति सवकारेण कश्चिदर्थो गम्यते, ऋक्ष इति वकारापाये सोऽर्थो न गम्यते । काण्डीर इति सककारेण कश्चिदर्थो गम्यते, आण्डीर इति ककारपाये सोऽर्थो न गम्यते ॥**

(प्रदीपः) **वर्णानुपलब्धौ चेति** । अर्थान्तरावगमात्प्रकृतोऽर्थो न गम्यत इति विवक्षितम् ॥

(उद्द्योतः) तृतीयहेतुमाह—**वर्णानुपलब्धौ चेति** ॥ अनर्थगतेरित्यस्य तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतेरित्यर्थं इत्याह—**अर्थान्तरेति** ॥

( आक्षेपभाष्यम् )

**किं तर्ह्युच्यते-'अनर्थगतेः' इति । न साधीयो ह्यत्रार्थस्य गतिर्भवति ॥**

(प्रदीपः) इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति—**किं तर्हीति** । **न साधीय इति** । परमतापेक्षया प्रकर्ष आरोप्यते । यथा न किंचिदयं तत्र करोतीत्युक्ते कश्चिदाह सुतरामयं करोतीति ॥

(उद्द्योतः) प्रश्नमुपपादयति—भाष्ये **न साधीय इति** । नञि काकुः ॥ **परमतापेक्षयेति** । परेणानर्थगतेरित्युक्त्वादिहार्थगतिरस्तीत्यभ्युपगमस्य परमते कटाक्षेण अन्यस्थलीयार्थगत्यपेक्षयात्रातिशयेनार्थगतिरस्तीति विवक्षिति भावः ॥

( समाधानभाष्यम् )

**एवं[3] तर्हीदं पठितव्यं स्यात्-"*वर्णानुपलब्धौ चातदर्थगतेः*" इति ॥**

**किमिदम्—अतदर्थगतेरिति ! ॥**

**तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ॥ अथवा सोऽर्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ॥**

(प्रदीपः) **एवं तर्हीति** । प्रकृतोऽर्थो न गम्यतेऽर्थान्तरं तु गम्यत इत्यर्थः ॥ **तस्यार्थ इति** । तस्य वर्णस्य ॥ परं प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं तस्येति वर्णः परामृश्यत इत्याह—**सोऽर्थ इति** । प्रकृतोऽर्थ इत्यर्थः ॥

(उद्द्योतः) तच्छब्दार्थमाह—**वर्णस्येति** ॥ परे तु तच्छब्देन प्रकृतार्थपरामर्शे न कश्चिद्दोषः ॥ अत एव पूर्वं भाष्ये सककारेण [अर्थो] गम्यत इत्युक्तमित्याहुः ॥ लाघवेन तु कर्मधारयमाह—[सो]ऽर्थ इति । प्रकृतोऽर्थः । तस्मिन्वर्णे सति योऽर्थः प्रतीयते [इत्यर्थः] ॥

( आक्षेपभाष्यम् )

**[त]र्हि तथा निर्देशः कर्तव्यः ? ॥**

( सिद्धान्तभाष्यम् )

**न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः । एवमतदर्थगतेरनर्थगतेरिति ॥**

(प्रदीपः) **उष्ट्रमुख इति** । गतार्थत्वादप्रयोग एव द्वितीयमुखशब्दस्य लोपो विधीयते । अत्र हि उष्ट्रो मुखमस्येत्येव विग्रहः ॥ न च प्राणी प्राण्यन्तरस्य मुखं भवतीति विशिष्टावयववृत्तिरुष्ट्रशब्दः सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्रार्थशब्देन प्रक्रान्तोऽर्थ उच्यते, नार्थमात्रमित्यर्थः ॥

(उद्द्योतः) ननु दृष्टान्ते **सप्तम्युपमानपूर्वेति** वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन । किं च तच्छब्द उत्तरपदमपि

---

१ हेत्वन्तरमिति ॥ साधारणं हेतुमुक्त्वा क्वाचित्कमन्वयव्यतिरेकरूपमित्यर्थः ॥ छाया ॥

२ अनेनेति 'अनर्थगतेः' इति हेतुबोधकेनेत्यर्थः ॥ छाया ॥

३ तुष्यतु दुर्जन इति न्यायेनोत्तरमाह—एवं तर्हीति ॥ इष्टार्थस्य स्फुटमुपपत्तय इति शेषः ॥ छाया ॥

४ इतरस्तु 'अतदर्थगतेः' इत्यनेन 'वृक्षभिन्ना घटादयः सर्वे गम्यन्ते' इत्युक्तम्, इत्याशयेन पृच्छति—किमिदमिति ॥ छाया ॥

५ व्याख्यान्तरप्रत्याख्यानं वाचयितुमन्यः पृच्छति—स तर्हीति ॥ छाया ॥

६ व्याख्याविशेषेणेष्टार्थलाभ इत्याशयेन सदृष्टान्तमुत्तरमाह—उत्तरेति ॥ यत इत्यादिः ॥ छाया ॥

न । तच्छब्दने नञः समासाभावादत आह—गतार्थत्वादिति । तथा च तद्वदत्रापि लक्षणेति भावः ॥

( ७३ अर्थवत्तासाधकचतुर्थवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ संघातार्थवत्त्वाच्च ॥ * ॥

( भाष्यम् )

**संघातार्थवत्त्वाच्च मन्यामहेऽर्थवन्तो वर्णा इति। येषां संघाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्तः ॥ [ येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः ।] तद्यथा एकश्चक्षुष्मान्दर्शने समर्थः तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैलदाने समर्थः तत्समुदायश्च खार्यपि तैलदाने समर्था ॥ येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः । तद्यथा-एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्, एका च सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम् ॥**

(उद्द्योतः) चतुर्थहेतुमाह—भाष्ये सङ्घातार्थवत्त्वाच्चेति । एका सिकतेति भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि ॥

( अर्थवत्तादूषणभाष्यम् )

**यदि तर्हीमे वर्णा अर्थवन्तः । अर्थवत्कृतानि प्राप्नुवन्ति ॥**

**कानि ? ॥**

**"अर्थवत्प्रातिपदिकम्" इति प्रातिपदिकसंज्ञा, "प्रातिपदिकाद्" इति स्वाद्युत्पत्तिः, "सुबन्तं पदम्" इति पदसंज्ञा ॥**

**तत्र को दोषः ? ॥**

**"पदस्य" इति नलोपादीनि प्राप्नुवन्ति-धनं वनमिति ॥**

(प्रदीपः) **नलोपादीनीति** । श्रवणं तु विभक्तेर्न भवति यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि । तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य । येनैव चार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते ॥

(उद्द्योतः) तदन्तर्गतत्वादिति । इदं चिन्त्यम् । इत्थंभूतलक्षण इति सूत्रस्थस्वग्रन्थविरोधात् । तत्र हि—संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तम् । तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुबूलोप इति वक्तुं युक्तम् । ध्वनतीलादौ तु न तदापत्तिः । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुत इत्थंभूतेति सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः ॥ धकारे जडत्वमादिपदार्थः ॥ सुबन्तावयवसमुदायस्येति । सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम्—भेदे सति यदर्थयोः संसर्गस्तद्वारकार्थवत्समुदायस्य, तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते नैं भेद इत्याह—येनैव चेति ॥

( ७४ अर्थवत्तायां दोषनिराकरणवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ संघातस्यैकार्थ्यात्सुबभावो वर्णात् ॥ * ॥

( भाष्यम् )

**संघातस्यैकत्वमर्थः । तेन वर्णात्सुबुत्पत्तिर्न भविष्यति ॥**

(प्रदीपः) तत्र परिहारमाह—**संघातस्येति** । वृक्ष इत्यत्रैकत्वं विभक्त्या द्योत्यते । तच्चैकमित्येकैव विभक्तिरुत्पद्यते । यथा बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तत्रेण सर्वानुग्राहिण्युत्पद्यते समुदायद्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम् । **यस्मात् प्रत्ययविधिरित्यनुवर्तनादसुबन्तत्वात्** ॥

(उद्द्योतः) तच्चैकमिति । सङ्घातस्यैकत्वमिति भाष्यस्य सङ्घातस्याप्येकत्वमर्थः । एवंच विभक्तिः समुदायादेवेति भावः ॥ ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत् प्रतिवर्णं

---

१ एवं च प्रत्याख्यानाशयक एवायं ग्रन्थ इत्याह तथाचेति । एवं च वार्तिकं नापूर्वमिति भावः ॥ नचैवं प्रत्याख्यानप्रकारस्यावश्यकत्वे लाघवेन कैयटस्य युक्तत्वेन कथमन्यत्र तत्खण्डनपूर्वकं वचनावश्यकत्वप्रतिपादनमिति वाच्यम् । अस्य भाष्यस्यैकदेश्युक्तित्वादिति केचित् । अतएव द्रष्टव्य इ[illegible]क्तम् । अन्ये तु 'अतदर्थगतेः' इति भाष्येऽर्थकथनम्, नतु विग्रहः [illegible] एव विशिष्टमुपात्तम् । एवं चात्र वाचनिको गतिशब्दस्य लोपः अ[illegible]स्य गतिरर्थगतिः । तद्वद्गतिरर्थगतिः । न अर्थगतिरनर्थगतिरिति विग्रहो बोध्य इत्याहुः । परे तु—न सः असः असश्चासावर्थश्चेत्यनर्थः । तस्य गतिरिष्टार्थभिन्नार्थावगतिरिति तदर्थ इत्याहुः ॥ छाया ॥

२ तथाचेत्थं प्रयोगः—वृक्ष इति संघातः अर्थवदवयवकः संघातार्थत्वाच्चक्षुष्मदादिसंघातवत् यन्नैवं तन्नैवम् । यथान्धादिसमुदायः इति ॥ छाया ॥

३ अयं कोष्टकान्तर्गतः पाठः सर्वेष्वपि पुस्तकेषूपलभ्यमानोऽपि प्रक्षिप्तोऽत्र [illegible]नीयते । अग्रेऽप्येवं पाठस्य समुपलभ्यमानत्वात् ॥

[illegible] यदैवेति । नचैकाज्द्विर्वचनन्यायेन तस्यैव स्यान्न तेषामिति वाच्यम्, [illegible] समुदायकार्येणावयवानामप्युपकारस्तत्रैव तत्प्रवृत्तेः प्रकृते विभक्त्यादिरूपस्य तस्य तत्राभावात् । नचैवमपि संख्याकर्मादेरभावान्न सेति वाच्यम्, अर्थवत्त्वे तस्यापि संभवात् ॥ तत्र तस्यां सत्यम् । विभक्तेरन्तर्गतायाः ॥ छाया ॥

५ प्रकृते न भेद इति ॥ अत्र तु न ततोभिन्नार्थत्वं तेषामित्यर्थः । एवं च साऽपरिहार्यैव ॥ छाया ॥

६ समुदायेति । नच समुदायविभक्त्याऽवयवानां विभक्तिमत्त्वाभावेन तुल्यरूपोपकाराभावात्कथमिदमिति वाच्यम्, समुदायावयवयोरेकैकत्वार्थकत्वेन तया तद्गतस्यापि तस्योक्तत्वमिति तत्संभवात् ॥ छाया ॥

पदत्वं प्राप्नोतीत्यत आह—पदसंज्ञा त्विति । यतश्चार्थबोधनाय विभक्त्युत्पत्तिस्तस्य संज्ञा प्रवर्त्तते न त्वेषामिति भावः ॥ केचित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदायस्यैवार्थो, न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः । एकत्वं सङ्घातस्यार्थं इति भाष्यस्वरसात् ॥ प्रकृत्यंशे वर्णव्यत्ययापाययोः सङ्ख्यान्तरानुपजननात्सा समुदायस्यैवार्थ इति तद्भावः । न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपादकेषु तथास्वीकारेऽपि वस्तुतः सङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ मानाभावात् । एवंचैषां प्रकृतित्वमेव नेति न केवला प्रकृतिरित्यस्यापि न विषयः । एतेन प्रत्येकं पदसंज्ञानुग्रहाय द्विर्वचनवैषम्यात् स्यादेव प्रत्येकं सुबुत्पत्तिरित्यपास्तमित्याहुः ॥

( ७५ अनर्थकतासाधकप्रथमवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ॥ * ॥

( भाष्यम् )

**अनर्थकास्तु वर्णाः ॥**

**कुतः ? ॥**

**प्रतिवर्णमर्थानुपलब्धेः । न हि प्रतिवर्णमर्था उपलभ्यन्ते ॥**

**किमिदं प्रतिवर्णमिति ? ॥**

**वर्णं वर्णं प्रति प्रतिवर्णम् ॥**

(प्रदीपः) अनर्थकास्त्विति । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्तेऽन्यथा शास्त्रविरोधः प्राप्नोति ॥ किमिति । असमासशङ्कया प्रश्नः, समासेन तूत्तरम् । तेनैव वीप्सा द्योतितेति द्विर्वचनं न भवति ॥

(उद्द्योतः) अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति—अनर्थकास्त्विति ॥ सर्ववर्णानां पक्षत्वे हेतोर्भागासिद्धत्वं स्यादत आह—धात्वादीति ॥ विपक्षे बाधकमाह—अन्यथेति ॥ वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव सङ्गतेरित्यपि बोध्यम् ॥ असमासाशङ्कयेति । तथा च वीप्सा न प्रतीयेतेति भावः ॥ तेनैवेति । वीप्सायां तस्य विधानादिति भावः ॥

( ७६ अनर्थकत्वसाधकद्वितीयवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् ॥ * ॥

( भाष्यम् )

**वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे—अनर्थका वर्णा इति ॥ वर्णव्यत्यये—कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः । वर्णव्यत्ययो नार्थव्यत्ययः ॥ अपायो लोपः—हतः, घ्नन्ति, घ्नन्तु, अघ्नन् । वर्णापायो नार्थापायः ॥ उपजन आगमः—लविता, लवितुम् । वर्णोपजनो नार्थोपजनः ॥ विकार आदेशः । घातयति घातकः । वर्णविकारो नार्थविकारः॥ यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम् । न चेह तद्वद् । अतो मन्यामहे—अनर्थका वर्णा इति ॥**

(प्रदीपः) वर्णव्यत्ययेति । यदुक्तम् * वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः * इति, तस्यानैकान्तिकत्वमुद्भाव्यते ॥

(उद्द्योतः) ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधकमत आह—यदुक्तमिति । एवंचार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वारानर्थकतासाधकत्वमस्य ॥ भाष्ये अर्थदर्शनादित्यस्य वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः ॥ नार्थव्यत्यय इत्यस्य नार्थान्तरावगतिः, किं तु तस्यैवावगतिरित्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

**उभयमिदं वर्णेषूक्तम्—अर्थवन्तोऽनर्थका इति च ॥ किमत्र न्याय्यम् ॥**

( समाधानभाष्यम् )

**उभयमित्याह ॥ कुतः ?**

**स्वभावतः । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवि-**

---

१ कैयटोक्तौ वक्ष्यमाणारुच्या सिद्धान्तमतेन संख्याकर्मादेरभावादेव सा नेति भाष्यार्थमाह—केचित्त्विति ॥ प्रकृतिबोध्येति । पञ्चकाभिप्रायेणेदम् । छाया ॥

२ समासेन त्विति । वीप्सार्थकेन तेनेत्यर्थः ॥ तथाचानेकार्थत्वात्संदेहेन प्रश्नः, वीप्सयोत्तरमिति तत्त्वं बोध्यम् । वाक्ये 'लक्षणेत्थंभूत–' इति कर्मप्रवचनीययोगे द्वितीया षष्ठ्यपवादः । द्वावपूपाविितिवत्तत्र द्विर्वचनप्रतिशब्दयोः प्रयोगः ॥ छाया ॥

३ क्रमेणोदाहरति—वर्णव्यत्यय इत्यादिना ॥ छाया ॥

४ यद्यपि 'पिकः कपिः' 'साक्षरा राक्षसाः' इत्यादावर्थव्यत्ययोऽपि दृश्यते तथापि नासौ सार्वत्रिकः । किं चैवमपि उक्तहेतोस्तर्कादौ व्यभिचारस्तदवस्थ एव । किंच तत्र वर्णव्यत्यय एव न, समुदितभेदात् । अतएव तत्र धातुभेदेनैव तयोः साध्यत्वम् । प्रकृते तु वर्णस्य वर्णयोर्वा व्यत्यय इति बोध्यम् ॥

अपायशब्दस्य शास्त्रप्रसिद्धपर्यायमाह—लोप इति ॥ उप समीपे जायते प्रादुर्भवतीत्युपजनस्तस्य तथा पर्यायमाह—आगम इति ॥ विकारोऽन्यथाभावः स च भावरूप इत्याशयेन तथा तमाह—आदेश इति ॥ छाया ॥

५ उपसंहरति—यथैवेति ॥ वर्णानामर्थवत्त्वे तद्व्यत्ययात्तदपि स्यात् यतस्तन्नातस्तत्र व्यभिचारादर्थवत्त्वमेव नेति भावः ॥ छाया ॥

६ साधकमिति । तस्य सत्त्वेन तेन विरोधात्तत्साधनं दुष्करम् । तथाच द्वितीयादिहेतूद्भावनमयुक्तम् । तत्र द्वन्द्वोत्तरपदकषष्ठीतत्पुरुषेण चत्वारो हेतव इति भावः ॥

७ स्वभावत इति । स्वाभाविकशक्त्यशक्तिमत्त्वादित्यर्थः ॥ छाया ॥

८ केषांचिद्वर्णानां तत्त्वेन तत्त्वेपि सर्वेषां न तथा केषांचिदतत्त्वेनातथात्वेपि सर्वेषां न तथेत्यत्र दृष्टान्तमाह—तद्यथेति ॥ छाया ॥

तुम्, कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः। तत्र किमस्माभिः शक्यं कर्तुम्—यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽतोऽन्येऽनर्थका इति । स्वाभाविकमेतत् ॥

(प्रदीपः) उभयमित्याहेति । यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युपगन्तव्या, न सर्वत्रेत्यर्थः ॥

(उद्द्योतः) उभयस्य न्याय्यत्वं विषयभेदेनेत्याह—यत्रान्वयेति । यथा एति इत इत्यादौ ॥ न सर्वत्र कूपादावित्यर्थः ॥

( आक्षेपभाष्यम् )

कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपदिष्टः–'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच्च' इति ? ॥

( समाधानभाष्यम् )

संघातान्तराण्येवैतान्येवंजातीयकानि अर्थान्तरेषु वर्तन्ते—कूपः सूपो यूप इति । यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च कूपे, सूपार्थश्च यूपे, यूपार्थश्च सूपे। यतस्तु खलु न किंचित्सूपस्य वा यूपे, यूपस्य वा कूपे, कूपस्य वा यूपे, सूपस्य वा कूपे, कूपस्य वा सूपे, यूपस्य वा सूपे । अतो मन्यामहे—संघातान्तराण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्त इति। इदं खल्वपि—भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम् । यो हि मन्यते–यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति । ऊपशब्दस्त्वस्यानर्थकः स्यात् ॥

(प्रदीपः) संघातान्तराणीति । तदुक्तं—

'न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते ।
अतोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥'

इति ।

(उद्द्योतः) न कूपसूपेति । वर्णानामर्थवत्त्वे ऊपशब्दस्य त्रिष्वन्वयादर्थान्वयः स्यान्न च दृश्यतेऽतः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वं तदर्थानवगतिश्च न तु व्यत्ययादिकृतमित्यर्थः ॥ ननु ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्त्युद्बोधक एवेति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत्तर्हि भग्नमेव वर्णानामर्थवत्त्वम् । तत्रैव पदे ऊपयोरर्थाभावात् । किं च सङ्ख्या समुदायस्यैवार्थ इत्यपि नियन्तुमशक्यं कूपगतैकत्वस्य यूपादिभिरप्रतीत्या संख्ययापि कादिभिरन्वयव्यतिरेकसत्त्वाद् । द्विर्वचनेन वैषम्यं तु प्रागुक्तमेव । तस्मात्समुदायस्यैवार्थवत्त्वं । तदेव ध्वनयन्नाह—भाष्ये इदं खल्वपीति ॥

( आक्षेपभाष्यम् )

तत्रेदमपरिहृतम्—*संघातार्थवत्त्वाच्च*इति ॥

( समाधानभाष्यम् )

एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति ॥

(प्रदीपः) एतस्यापीति । 'दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः' सुराङ्गवद्रथाङ्गवच्चेति ॥

(उद्द्योतः) दृष्टो हीति । अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथार्थवत्ता तथा प्रकृतेपीति भावः ।

इति वर्णानामर्थवत्ताधिकरणम् ॥

---

( अथ प्रत्याहारेष्वित्संज्ञकग्रहणाभावाधिकरणम् )

( भाष्यम् )

अइउण् ऋलृक् एओङ् ऐऔच् ।

( ७७ आक्षेपवार्तिकम् ॥ १८ ॥ )

॥ * ॥ 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' ॥ * ॥

( भाष्यम् )

य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन ग्रहणं कस्मान्न भवति ? ॥

किं च स्यात् ? ॥

दधि णकारीयति, मधु णकारीयति, "इको यणचि" इति यणादेशः प्रसज्येत ॥

---

१ विषयभेदेनेति । अन्यथा वर्णत्वसामान्येन तयोर्दुर्वचत्वेनैतदसंगतिः स्पष्टैवेति भावः ॥ छाया ॥

२ कूपादाविति । समुदायस्थानां तत्संपादनेन कृतार्थानां फलवत्संनिधाविति न्यायेन न पृथगर्थत्वकल्पनमिति भावः ॥ छाया ॥

३ एवं सिद्धान्ते हेतुं श्रुत्वा पूर्वपक्षिणं तटस्थः पृच्छति–कथमिति । य एष हेतुः स कथं त्वया तत्रोपदिष्ट इत्यर्थः । सिद्धान्तिनं प्रति किमुत्तरमभिसंधायोक्तमिति यावत् । हेतुरिति । जातावेकवचनम् ॥ छाया ॥

४ तस्मिन्मूकीभूते सिद्धान्त्येवाह–संघातान्तरेति ॥ छाया ॥

५ इदमिति । युक्त्यन्तरमपि निश्चितमुच्यत इत्यर्थः । तदेवाह–भवतेति ॥ छाया ॥

६ नच दृश्यत इति । न हि तेषामर्थानामितरेतरत्रान्वयो दृश्यत इत्यर्थः । अतः 'समुदायस्यैवार्थान्तरवाचित्वमिति शेषः ॥ छाया ॥

७ अर्थवत्तेति । व्रजिक्रियायां सामर्थ्यमित्यर्थः । नेदं रथाङ्गानां प्रत्येकमिति भावः ॥ एवं सुराङ्गेषु प्रत्येकमतत्त्वेपि समुदायस्यैवोन्मादजननसामर्थ्यम् । तथाच संघातार्थवत्त्वस्यानैकान्तिकत्वादिष्टासाधकत्वमिति भावः ॥ नचैवं पदावयवानां प्रकृत्यादीनां वाक्यावयवानां पदनामपि तत्त्वापत्तिरिति वाच्यम्, यत्रेत्यादिना कैयटेनैव परिहृतत्वात् । अस्ति च तत्र ताभ्यां प्रकृत्यादेरर्थवत्त्वमिति बोध्यम् ॥ छाया ॥

८ 'प्रत्याहारेऽनुबन्धानाम्–इति श्लोकवार्तिकं खण्डशो व्याख्यातुमाश्रङ्कादेरसार्वत्रिकत्वं ध्वनयितुं तत्र तथोक्त्या शङ्कायाः प्रासङ्गिकत्वं सूचयितुं च तद्विषयसूत्राण्यासक्तानुबन्धान्याह–अइउणित्यादिना ॥ छाया ॥

९ 'अत्रापि कुत्वं न भाष्यसंमतमित्यग्रे निरूपयिष्यामः ॥ दाधिमथाः ॥

(उद्योतः) भाष्ये अज्ग्रहणेष्विति । प्रत्याहारेऽक्षरसमाम्नायेऽज्ग्रहणेषु[1] अच्प्रत्याहारग्राहकेषु पठितानामनुबन्धानां प्रत्यासत्त्याक्षु ग्रहणं कुतो नेत्यर्थः ॥ तत्फलितार्थमाह—य एते अक्षु इति । तद्बोधकसूत्रेषु प्रागुक्तेषु ॥ प्रत्याहारार्थास्तदुपकारकाः ॥ अज्ग्रहणेन अच्शब्देन ॥ अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाभावं मनसि निधायाज्ग्रहणेनेत्युक्तम् । न च हशादौ टग्रहणस्यापत्तिः । हल्षु उच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्[2] ॥

( ७८ सिद्धान्तसमाधानवार्तिकखण्डम् ॥ १९ ॥ )

## ॥ * ॥ आचारात्[3] ॥ * ॥

( भाष्यम् )

**किमिदमाचारादिति ? ॥**

**आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः ॥**

(प्रदीपः) **आचारादिति** । आचारो व्यवहारः । **तृषिमृषिकृषेरिति** यण् न कृतः ॥

( ७९ सिद्धान्तसमाधानवार्तिकखण्डम् ॥ २० ॥ )

## ॥ * ॥ 'अप्रधानत्वात्[4]' ॥ * ॥

( भाष्यम् )

**अप्रधानत्वाच्च । न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते ॥**

**क्व तर्हि ? ॥**

**हल्षु ॥**

**कुत एतत् ? ॥**

**एषा ह्याचार्यस्य शैली लक्ष्यते—यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽक्षु हलो हल्षु ॥**

(प्रदीपः) **अप्रधानत्वादिति** । प्रधानाप्रधानसंनिधौ प्रधानमेव कार्याणां प्रयोजकमिति परार्थानामनुबन्धानामच्संज्ञा न प्रवर्तत इत्यर्थः ॥ **शैलीति** । शीले भवा शैली समवधानपूर्विका प्रवृत्तिः । यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह क्षत्रिया इति एवमिहाप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः ॥

---

१ अज्ग्रणेष्वित्युपलक्षणम् । एवं चाङ्ग्रहणे चकारस्यापि ग्रहणाद्रुचीनामित्यादावङ्व्यवाय इति णत्वं स्यात् । एवमिण्ग्रहणेन चकारग्रहणाद्रुरुचिध्वे इत्यादौ विभाषेट इति वा ढः स्यात् ॥ श. कौ० ॥

णकारस्याङ्ग्रहणेन ग्रहणे कर्णेनेत्यादौ णत्वापत्तिः ॥ चुटूतुलशर्व्यंवायेनेति तु वर्णान्तरे चरितार्थमिति प्रत्याहारघटकवर्णेषु न प्रवर्तते इति केचित् ॥

अत्र वदन्ति—अजतिरिक्तप्रत्याहारेषु तेषां ग्रहणे फलाभावः । तथाहि—न तावद् 'उरण्' इत्यत्र फलम्, णस्य ऋस्थानिकत्वाभावात् । नापि 'ढ्रलोपे' इत्यत्र, असंभवात् । 'केऽणः' इत्यत्रापि न, तत्राच्परिभाषोपस्थितेरेवं सत्यङ्गीकारेण तत्सामर्थ्याद्व्यञ्जनभिन्नस्यैवाणो ग्रहणात् । 'अणोऽप्रगृह्यस्या–' इत्यत्रापि न तत्रानुनासिकस्यैव सत्त्वात् 'अप्रगृह्यस्य' इति पर्युदासेन तदन्यास्वेव प्रवृत्तेश्च । अणुदिदित्यत्रापि न, एवमपि विधिषु फलाभावात् । वक्ष्यमाणरीत्या 'अट्कुप्वा–' इत्यत्र कुग्रहणानर्थक्यापत्तेश्च ॥ 'अकः सवर्णे–' इत्यत्रापि न, सवर्णविशेष्यस्याचस्तत्र सत्त्वात् । तत्राज्ग्रहणस्य प्रतिपादयिष्यमाणत्वात् । केण इत्यत्रोक्तरीत्या निर्वाहाच्च । इको यणित्यत्रेक्यपि न, स्थानेन्तरेत्यनया णस्थाने णस्यैव विधानसंभवात् । तथा वारणसंभवाच्च । इकोगुणेत्यत्रापि न, तस्य तत्र शब्दपरत्वात् । व्यञ्जनानां गुणादिवारणस्येकोगुणेत्यत्र भाष्य एव स्पष्टत्वाच्च । इकोसवर्णे इत्यत्रापि न, तेन संधिकार्यांप्रवर्तनेनादोषात् । केण इत्यत्रोक्तरीतिसंभवात् । असवर्णग्रहणाद्विद्यमानसवर्णाज्भिन्नस्य सवर्णसदृशस्य ग्रहणाच्च । 'इसुसुक्तान्तात्' इत्यत्रापि न, टस्यैवासंभवात् । श्युक इत्यत्रापि न, एकाच्पदानुवृत्तेः । श्रिसाहचर्यात्तत्र व्यञ्जनान्योगन्तस्यैव ग्रहणाच्च । एङि पररूपमित्यत्रापि न, अकः सवर्णे इत्यत्र दीर्घ इति योगं विभज्य पूर्वपरयोरित्यधिकारस्थैकादेशस्य दीर्घत्वप्रतिपादनेन तदेकवाक्यतया पक्षान्तरेपि तत्राप्रवृत्तिकल्पनेनासंभवात् । एङः पदान्तादित्यत्रापि न, असिद्धत्वेनासंभवात् । एचोयवेत्यत्रापि न, स्थानेन्तरेत्यनया वारणसंभवात् । वृद्धिरेचीत्यत्रापि न, इकोगुणेत्यत्रोक्तरीतिसंभवात् । एच इगित्यत्रापि न, स्थानेन्तरेतिनिर्वाहात् । असिद्धत्वाच्च । अच्यग्रहणस्य प्रतिपादयिष्यमाणत्वेन ह्रस्वस्यैवाप्राप्तेश्च ॥ अट्कुप्वित्यत्रापि न, तथासति कङ्योरट्त्वादन्येषां तत्सवर्णत्वादेव सिद्धे कुग्रहणानर्थक्यापत्तेः । एवं च रुचीनामित्यादौ न दोषः । तत्र तत्सामर्थ्यात्तद्भिन्नस्यैवाट्त्वेन ग्रहणात् । एवं चुटूतुलशरित्यस्य सामान्यापेक्षत्वेन तत्र प्रवृत्तिसंभवाच्च । इण इत्यनुवृत्तौ विभाषेट इत्यत्रापि न, इट्साहचर्यात्तदन्यस्यैवेणस्तत्र ग्रहणात् । एवंच रुरुचिध्व इत्यादौ न दोषः । अतएव पूर्वसूत्रेप्येवम् । एवमन्यत्रापि बोध्यम् ॥ नैवं परिहार इको यणचीत्यत्राजंशे संभवति, साहचर्यं त्वनित्यम्, यणापि तत्प्रवृत्तेश्च ॥ अतएव दधि णकारीयतीत्यत्र यणापत्तिरेव भाष्ये दत्ता । अतएव स्थान्यंशेऽतिप्रसङ्गोपि नोद्भावितः । अतएव सूत्रचतुष्टयोपन्यासः सफलः । अन्यथा तदसंगतिः स्पष्टैवेत्यन्ये ॥ परेतु न ह्वाभ्यामित्यादौ यथासंभवमस्तु क्वचित्तत्फलम् । तथापि न दोषः । तावदंशस्याप्युपलक्षणत्वेन ग्रहणात् । अज्ग्रहणेष्वित्युक्तिस्तु व्यापकत्वात् प्रथमोपस्थिताकारत्यागाभावसूचनार्थत्वाल्लोकशास्त्रप्रसिद्धत्वाच्च बोध्या । बहुवचनं तु प्राग्वत् । एवमग्रेपि । सूत्रचतुष्टयोपन्यासोपि अत्र पक्षे सफलः, तेनोक्ताभिमतस्थलेष्वेव शङ्कादिबोधनात् । इदंचात्र सूत्रे तदुपन्यासपूर्वकमुपन्यास एवापत्तिर्नान्यथा कथमपि अनिष्टापत्तेः । एतदरुचिसूचनार्थैव मनसि निधायेत्यत्र मनसीत्युक्तमित्याहुः । वस्तुतस्तु—प्रथमोपस्थितत्यागे बीजं प्रकटयितुमणगादीत्युक्तिः । तत्र च प्रागुक्तरीत्या फलाभावः स्पष्ट एव । त एव चादिपदग्राह्याः । चरमे ऐचि फलसत्त्वेप्यादिभूताकारात्यागाय तस्यैवोक्तिरिति सोप्युपलक्षणत्वेन ग्राह्यः । अज्ग्रहणेष्वित्युक्त्या चानुबन्धघटितप्रत्याहार एव शङ्कादिसूचनात् । एवंच न कोपि दोष इति बोध्यम् ॥ छाया ॥

२ किं च टादेरुपदिष्टत्वात्तत्र ग्रहणं न । यदि तत्रापि ग्रहणमिष्टं स्यात्तर्हि द्विस्तमुपदिशेद्धवत् इत्यपि बोध्यम् ॥ छाया ॥

३ एवं पूर्वपक्षे समाधित्रयम्—आचारादित्यादि । तत्र तावदाचारो ज्ञापकः स च व्यापकः अक्षु हलामनुबन्धानां सर्वेषामग्रहणे उणादेत्यादीनां तत्त्वसंभवात् ॥ छाया ॥

४ एवं ज्ञापकेन सर्वसिद्धावपि तत एव प्रधानाप्रधानयोरिति लोकन्यायमूलकोऽपरो हल्षु अजग्रहस्यापि प्रसङ्गतः साधकं समाधिरित्याह—अप्रधानत्वादिति । अक्षु हल्षु च णादीनामुपदेशेपि यत्रानन्यार्थ उपदेशस्तत्र स्वरूपप्रतिपत्त्यर्थ एव सः । हल्षु चोच्चारणार्थाकारयुतानां तेषामेव तथा नत्वन्येषाम् । केषांचिदुच्चारणार्थत्वात् केषांचित्संज्ञासिद्ध्यर्थत्वात् । एवं तेषामक्ष्वपि अणादिसंज्ञासिद्ध्यर्थत्वेनान्यार्थत्वान्न स्वरूपप्रतिपत्तये सः । अतएव लोकन्यायमूलकत्वेनाद्यतोऽस्य लघुत्वात्सौत्रत्वात्तेषामुपपत्तौ तदसंभवाच्चोक्तिः । तस्मादयमपि व्यापकः । यद्यपि वार्तिकादयमुक्तरीत्या एक एव हेतुरिति प्रतीयते तथापि भगवतोक्तयुक्त्या खण्डशः सचकारं व्याख्यातत्वाद्धेतुद्वयमेवेति बोध्यम् ॥ छाया ॥

(उद्द्योतः) प्राधान्येन प्रत्याहारेषु ग्रहणार्थत्वेन ॥ परार्थेति । अजादिस्वरूपबोधनार्थत्वेन परार्थत्वम् । यथाकारादयः संज्ञिविशेषसमर्पणायोपात्ता न तथा णादय इत्यर्थः ॥ अप्रधानत्वमप्याचार्यांचारेण साधयति—[ भाष्ये ] आचार्यस्येति । आचार्यशब्देनानादिः शब्दपुरुषः । एवंचान्यत्र संज्ञिविशेषसमर्पणायोपात्तत्वादितामसञ्ज्ञित्वमेवेति भावः ॥

(८० सिद्धान्तसमाधानवार्तिकखण्डम् ॥ २१ ॥)

॥ * ॥ 'लोपश्च बलवत्तरः' ॥ * ॥

(भाष्यम्)

लोपः खल्वपि तावद्भवति ॥

(प्रदीपः) लोपश्चेति । परत्वान्नित्यत्वाद्वा । आदिरन्त्येनेत्यनेनाच्संज्ञाविधानकालेऽनुबन्धानां लोपादसन्निधानादच्संज्ञा न प्रवर्तते । अनुबन्धा ह्युच्चारण एव सन्ति इत्संज्ञाप्रतिबद्धं च कार्यमसन्त एव प्रतिपादयन्ति, स्वतस्तु न किंचित्कार्यं प्रतिपद्यन्ते ॥

(उद्द्योतः) परत्वादित्याद्यतरङ्गत्वोपलक्षणम् । एवंच पूर्वमनुबन्धलोपादादिरन्त्येनेति संज्ञाविधानकालेऽसंनिधानादित्यन्वयः । एवं चानुबन्धसदृशभिन्नानामेव मध्यगसदृशानां ग्राह्यतां बोधयतीति भावः ॥ भाष्ये लोपः खल्वपि तावदिति । सर्वतः प्रथममित्यर्थः ॥ यत्तु एवमपि लणित्यकारस्य हल्षु ग्रहणापत्तेराचारादिलेव समाधिरत्र युक्त इति ॥ तन्न । अतो लान्तस्येति सूत्रे लकारोच्चारणेन लण्सूत्रस्थस्यानुनासिकत्वाभावज्ञापनात् । एवंच तस्यानुबन्धत्वमेव न, किंतूच्चारणार्थत्वमेव । अत एव भाष्येऽइउणित्यादिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता । श्लोके चाज्ग्रहणेष्वित्येवोक्तम् । उरण्रपरसूत्रे च लपरत्वस्योपसंख्यानमेव कार्यमिति तुल्यास्यसूत्रे वक्ष्यते ॥

(८१–सिद्धान्तसमाधानरीत्यन्तरवार्तिकम् ॥ २१ ॥)

॥ * ॥ 'ऊकालोजिति वा योगस्तत्कालानां यथा भवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥ * ॥

( भाष्यम् )

अथवा योगविभागः करिष्यते—"ऊकालोऽच्" उ ऊ उ ३ इत्येवं कालोऽज्भवति । ततो "ह्रस्वदीर्घप्लुतः" ह्रस्वदीर्घप्लुतसंज्ञश्च भवति—ऊकालोच् ॥

(प्रदीपः) ऊकालोजिति । सिद्धेऽच्त्वे योगविभागेन कालविशेषावच्छिन्नस्याच्त्वं नियम्यते ततोऽनुबन्धानामूकाललाभावादच्त्वाभावः ॥

(उद्द्योतः) भाष्ये तत्कालानामचां ग्रहणमच्पदेन यथा स्यादिति योगविभागः कार्य इत्यन्वयः ॥ सिद्धेच्त्व इति । अकारादीनामुपदशात्सवर्णग्रहणाच्चेति भावः ॥

---

१ तदेवं संज्ञाप्रवृत्तिकालेऽनुबन्धानां संनिधानमभ्युपेत्य द्वेधा समाहितम् । वस्तुतस्तु तदेव नेति हल्स्वपि इलामितामग्रहणमित्याह—लोपश्चेति ॥ श्र. कौ. ॥ छा. ॥

२ नन्विदमयुक्तम्, । कार्यकालपक्षस्य मुख्यतया तत्र संज्ञाशास्त्रस्य पृथग्वाक्यार्थबोधेनान्तरङ्गत्वेन तदानीमेव प्राप्त्या कृताकृतप्रसङ्गित्वाभावादत आह—परत्वादित्याद्यन्तरङ्गेति ॥ छाया ॥

३ एवंचेति । अन्तरङ्गत्वेन बाधकत्वे चेत्यर्थः ॥ छाया ॥

४ सर्वत इति । सकलसंज्ञात इत्यर्थः । यत्र तु प्रत्याहारे योऽनुबन्धोऽपेक्षितस्तस्य 'आदिः–' इति वचनसामर्थ्यात् प्रत्याहारान्यथानुपपत्त्या च तत्प्रवृत्तेः प्राग्लोपेन लुप्ते वा तस्मिन्भूतपूर्वेण तेन सहित आदिः संज्ञा भविष्यति । काकादिवत् स्मर्यमाणानामेव तेषां तत्रोपयोगात् ! मध्यानां तु न तेषां सा श्रूयमाणेष्विकारादिषु सावकाशत्वादिति कृष्णरत्नकौस्तुभादयः ॥ वस्तुतस्तु—इदन्त्यसदृशेनेत्यर्थस्यावश्यकत्वेन तासां सिद्धिः सूत्रसार्थक्यं च । अन्यथा व्यक्तिपक्षेऽनिर्वाहात् । तत्त्वप्रत्यभिज्ञाया अपि सादृश्यमूलकत्वात् । किंच—'आदिरकारादिः अन्त्येनेता णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां संज्ञा'—इत्येवम् 'आदिरन्त्येन' इत्येकवाक्यतया 'अइउण्' इत्यादीनां संज्ञासूत्रत्वेन तेषां मुख्यकार्यकालपक्षे विध्येकवाक्यतावश्यकता कार्यार्थत्वात् संज्ञायाः । तथाच विधिस्थाणादेः संज्ञात्वं लब्धम् । तथासति 'उरण् रपरः' 'यणचि' इत्यादौ तयोराद्यन्तत्वस्य कथमप्यभावाद्वक्ष्यमाणरीत्या तस्येत्त्वाभावाच्च 'आदिसदृश इत्सदृशेन सह' इत्यर्थे विनिष्टासिद्धेः स्फुटत्वात् । 'अइउणित्यादि' सूत्रेष्वेव प्रत्याहारसिद्धिरिति तु न सहोच्चारणाभावात् । किंच 'आदिः'—इति सूत्रदृष्ट्या निपाद्या यथोद्देशपक्षेऽसिद्धत्वेपि स्वगृहे जातशक्तिग्रहेण 'इको झल्' 'सन्झलोः' इत्यादाविव 'झलां जशोन्ते' इत्यादौ निपाद्यामपि व्यवहारः पदादिव्यवहारवत् । कार्यकाले तु संज्ञाशास्त्रस्य पृथग्वाक्यार्थबोधस्यैवाभावेन विधिप्रदेशे कल्पनावश्यकत्वेनासिद्धत्वशङ्कापि नेति न झलाम्' इत्यादौ दोषः । एवंच 'एच इग्–' इत्यादौ संहितायां जस्त्वेन तत्र तदप्रवृत्तेरिष्टत्वेप्यर्थबोधानुकूलवाक्ये कल्पिते ककारसत्त्वेन पक्षद्वयेपि तत्प्रवृत्त्येष्टसिद्धिः । किंच स्वसाध्यप्रत्याहारघटितत्रिपादीस्थसूत्राणां स्वप्रवृत्तावगत्या सिद्धत्ववत्त्रिपादीस्थकार्यघटितप्रत्याहारघटितसूत्रेषु सपादसप्ताध्यायीस्थेषु स्वप्रवृत्तावगत्या प्रवृत्त्यर्थमुक्तरीत्या वस्तुत एव वा तेषामसिद्धत्वस्यैवेष्टत्वेन सत्त्वेन वा शङ्काया एवाभावः, ज्ञापकस्य विशेषापेक्षत्वात् । किंचेगादिशब्देष्वित्संज्ञायाः प्रसङ्ग एव न' भावघञ्पक्षेऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयत्वाभावादप्रवृत्तिवत्करणघञ्पक्षे रूढ्यर्थतावच्छेदकप्रतिपादकत्वसत्त्वेपि योगार्थतावच्छेदकतादृशोपदेशसाधनत्वाभावात्तदप्रवृत्तेः । फलाभावादपि तदप्रवृत्तेश्च । प्रत्याहारसिद्धेरन्यथाप्युक्तरीत्या सिद्धत्वात् । अतएव वैयाकरणशब्दे चित्स्वरो न तस्येत्सदृशत्वेपि तत्त्वाभावात् । ऐऔजिति चेत्संज्ञामादाय तु न सा प्रयोगे विधीयमानस्य तत्त्वाभावात् । यतस्तदुपस्थापके ऐच्पदे तत्त्वाभावः । धुडादौ तु नं तथेति तत्र तदुपस्थाप्ये आनर्थक्यात्तत्प्रवृत्तावप्यत्र न तथेति वैषम्यं स्पष्टमेव । एवं चेत्पदस्योक्त एवार्थ इत्यस्यापि समाधेर्व्यापकत्वमेवेति बोध्यम् ॥ छाया ॥

५ एवमपीति ॥ लोपस्य बलवत्त्वेपीत्यर्थः । तथाच हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेन, 'उपदेशेज्–' इत्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्संज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हल्प्रत्याहारे लणित्यकारप्रवेशे मामाँञायस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा सोस्तीत्यादौ सुलोपापत्तिश्चेति भावः ॥ छाया ॥

६ ननु हल्प्रत्याहारेऽकारस्य प्रवेशो दुर्वारः, नहि तत्र लोपो लभ्यते । ततः प्रागच्संज्ञाविरहेणोपदेशेजितीत्संज्ञाया अप्रवृत्तेः । एवं चाद्यसमाधानमपि दुरुपपादम् । उदाहृतस्याचारस्य लोपश्च बलवत्तरः इत्यनेनैव गतार्थत्वादितिचेत् । सोस्यादिरिति निर्देशेन प्रथमस्य गुणानां भेदकत्वेन चरमस्य च समाधानस्य सूपपादत्वादिति कौस्तुभोक्तं तु प्राचामनुरोधेनेति सूचयन्नाह—एवं चेति ॥

७ न्यायाद्यनभिज्ञं प्रति गत्यन्तरमाह—ऊकालोजितीति ॥ छाया ॥

( आक्षेपभाष्यम् )

**एवमपि[1] कुक्कुट इत्यत्रापि प्राप्नोति ॥**

**(प्रदीपः) एवमपीति ।** ककाराकृतेरुपदेशान्मात्रिकस्याच्त्वं मन्यते[2] ॥

**(उद्द्योतः)** नतु ककारद्वयस्य मात्रिकवर्णत्वं कथम्, एकस्यैव ऋऌगिलत्रोपदेशादत आह—**ककाराकृतेरिति ॥**

( समाधानभाष्यम् )

**तस्मात्[3]पूर्वोक्त एव परिहारः ॥**

**(प्रदीपः)** अत्र च यद्यप्ययं परिहारोऽस्ति **द्वावेतौ ककारौ, न च वर्णद्वयेनैका जातिर्व्यज्यते** इति । तथापि पूर्वमेव **मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्तीत्युक्तत्वात्पुनरिह** नोक्तः ॥

**(उद्द्योतः) न च वर्णद्वयेनेति ।** जातिरपि स्वपर्याप्त्यधिकरणव्यङ्ग्यैव तद्द्वारैव च कार्यभागिति भावः ॥

( भाष्यम् )

**एष[4] एवार्थः ॥ अपर आह—**

## ॥ * ॥ ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोऽस्तु । अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि ॥ * ॥

**(उद्द्योतः)** भाष्ये **एष एवार्थ इति । अपर आहे**त्यादिना वार्तिककृतोक्त इत्यर्थः ॥ **ह्रस्वादीनामिति ।** ह्रस्वदीर्घप्लुत इत्यतः प्राग्यावद् ऊकालोऽजिति तावदेवास्तु पृथक्सूत्रम् । फलं दर्शयति—**अच्कार्याणीति ।** अज्निमित्तकार्याणि । तत्कालेष्वक्षु कर्तुमर्हाणि यथास्युरित्यन्वयः ॥

( इति प्रत्याहारैश्चितां ग्रहणाभावाधिकरणम् ॥ )



( 'अणुदित्' सूत्रेऽण्पदप्रयोजनाधिकरणम् ॥ )

( आक्षेपभाष्यम् )

**अथ[5] किमर्थमन्तःस्थानामण्सूपदेशः क्रियते ? ।**

**(प्रदीपः) अथ किमर्थमिति ।** अणुदित्सवर्णस्येति कस्मान्न कृतमिति प्रश्नः ॥ इणग्रहणेन ग्रहणार्थस्त्वन्तःस्थानामत्रावश्यकर्तव्य उपदेशो—गीर्ष्वित्यादौ मूर्धन्यो यथा स्यादिति ॥

**(उद्द्योतः)** अणः+सुष्टूपदेशः=अण्सूपदेशः=अणशब्दोच्चारणम् । तदन्तःस्थानां बोधकम् अणुदिदित्यत्र किमर्थं क्रियत इत्यर्थो भाष्यस्येत्याह—**अणुदिदिति ॥ अण्सु** अण्मध्ये । तेनात्र स्थाने किमर्थं उपदेश इति तु नार्थ इत्याह—**इण्ग्रहणेनेति ॥**

( समाधानभाष्यम् )

**इह[6] सय्ँय्ँयन्ता सव्ँव्ँवत्सरः यल्ँल्ँलोकं तल्ँल्ँलोकमिति परसवर्णस्यासिद्धत्वादनुस्वारस्यैव[7] द्विर्वचनम् । तत्र परस्य परसवर्णे कृते तस्य यय्ग्र[8]हणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात् ॥**

**(उद्द्योतः) इह सय्ँय्ँयन्ते**त्यादिभाष्यं **गुणा भेदका** इति पक्षे । भेदकत्वपक्षे चेदमेवाण्ग्रहणं मानमिति भावः । यथास्थितसूत्रन्यासे इदम् । जातिपक्षेणाण्ग्रहणप्रत्याख्याने तु न कश्चिद्विचारः । एवं **गुणा अभेदका** इति न्याय्यपक्षेपि न विचार इति बोध्यम् ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्,—॰ द्विर्वचने परसवर्णत्वं[9] सिद्धं वक्तव्यम् ॰ इति । यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति ॥**

**(उद्द्योतः)** भाष्ये **वक्ष्यत्येतदिति ।** सिद्धत्ववचनं चावश्यकम् । अन्यथा परस्यानुस्वारस्य वा पदान्तस्येति परसवर्णे तस्यासिद्धत्वात्पूर्वस्यानुस्वारस्य ययीत्यस्यानापत्तौ रूपासिद्ध्यापत्तेः ॥

---

१ अत्रैकदेशी दोषमाह—एवमपीति ॥ छाया ॥

२ मन्यते इति । नहि वचनसहस्रेणापि अपूर्वो धर्मस्तत्र प्रतिपादयितुं शक्यः, अच्समुदाये तत्त्ववद्धल्समूहे तत्त्वस्याभावादिति भावः ॥ छाया ॥

३ सिद्धान्तीमं दोषं परिहरति—तस्मादिति ॥ यतस्तत्र 'नच मात्रिकं व्यञ्जनमस्ति' इति एओङ् सूत्रे उक्तरीत्या न दोषमाप्तिरतो न दुष्टत्वमस्य किंतु पूर्वोक्तः परिहार एवेत्यर्थः ॥ यद्वा पूर्वोक्तः एओङ् सूत्रोक्त एवात्र परिहार इत्यर्थः ॥ यत्तु—पूर्वोक्त एव परिहार इति ग्रन्थ आचारादित्यादिप्रागुक्तपरिहारपरः—इति । तन्न, बहुवचनाभावात् । एकस्यैवेष्टत्वे विनिगमनाविरहाच्च । अस्य प्रागुक्तत्वेनात्र तद्वृथानुक्त्या तदसंगतेश्च । तदाकाङ्क्षाशान्त्यभावाच्च । उत्तरग्रन्थस्यैवमपीत्यतः प्रागौचित्येनाग्रे तदुक्त्यसंगत्यापत्तेश्च । तस्मादुक्त एवार्थो न भवदभिमतः ॥ छाया ॥ वस्तुतस्तु जातावेकवचनसत्त्वेन प्रत्येकं व्यापकहेतुत्वेन वा 'आचारात्' इत्यादेरेव परिहारत्वेन भगवतो विवक्षा । अतएव च 'अयमेव' इत्यनुक्त्वा 'पूर्वोक्त एव' इत्युक्तिः संगच्छते ॥ इति बोध्यम् ॥ यद्वा—'लोपश्च बलवत्तर' इत्यस्यैव परामर्शः ॥ दाधिमथाः ॥

४ अस्यादुष्टत्वादेवासुमर्थमृष्यन्तरसंवादेन द्रढयति—एष एवार्थ इति ॥ अन्यवार्तिककृताप्युक्त इति शेषः ॥ छाया ॥

५ प्रसङ्गादन्तःस्थानामप्यत्रोपदेशस्य फलं श्रोतुं पृच्छति—अथेति ॥ यरलवानामण्मध्ये उपदेशस्य किं फलमित्यर्थः ॥ अयं भावः—अत्र 'हण्' इत्येकं सूत्रं कार्यम् । 'यवरलट्' इति तदग्रे कार्यम् । तेन तेषामद्त्वस्य ह्रस्वस्याद्त्वस्य हल्त्वस्याल्त्वस्यात्र सिद्धिः ॥ नचैवमपीण्त्वस्याभावाद्गीर्ष्वित्यादौ षत्वं न स्यादिति वाच्यम् । शर्व्यवायेपीत्यत्र रप्रश्लेषेण द्विरेफनिर्देशेन रोरीति लोपे सौत्रत्वाद्दीर्घेण चात्र निर्वाहात् । वस्तुतस्तु—इण्कोर्नुम्विसर्जनीयेति संहितापाठे रेफप्रश्लेषेण रोरीतिलोपेन निर्वाह इति बोध्यम् । यान्तलान्तशब्दास्तु तादृशा नैव सन्ति । एवं चात्र पाठेन लब्धस्याण्त्वस्य किं फलमिति ॥ छाया ॥

६ उत्तरमाह—इहेति । वक्ष्यमाणेष्वित्यर्थः ॥ छाया ॥

७ अनुस्वारस्यैवेति अपवादे परसवर्णे तिरोहिते पूर्वमेव द्वित्वप्रवृत्तिरितिभावः । एवेन मस्य परसवर्णस्य च व्यावृत्तिः ॥ छाया ॥

८ ययग्रेति । अन्यथात्र निरनुनासिकस्यैव पाठेन तस्यातत्त्वेन तत्परत्वात् स न स्यादिति भावः ॥ छाया ॥

९ परसवर्णेति । इदमुपलक्षणम् । 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषाश्च अपि ॥ छाया ॥

( समाधानसाधकभाष्यम् )

**पर[1]सवर्णे तर्हि कृते तस्य यग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् ॥**

( उद्द्योतः ) तर्हि द्विर्वचनसिद्धिरेव फलमित्याह—परसवर्णे तर्हीति ॥

( समाधानबाधकभाष्यम् )

**मा[2]भूद् द्विर्वचनम् ॥**

( समाधानसाधकभाष्यम् )

**न[3]नु च भेदो भवति—सति द्विर्वचने त्रियकारकम्, असति द्विर्वचने द्वियकारकम् ॥**

( प्रदीपः ) ननु च भेद इति । श्रुतिकृतोऽस्त्येव भेदः सूक्ष्मत्वात्तु दुर्लक्ष्यः ॥

( उद्द्योतः ) ननु न भेदोऽनुपलब्धेरत[4] आह—श्रुतिकृत इति ॥

( समाधानबाधकभाष्यम् )

**ना[5]स्ति भेदः, सत्यपि द्विर्वचने द्वियकारकमेव ॥ कथम् ? ॥**

**"हलो यमां यमि लोपः" इत्येवमेकस्य लोपेन भवितव्यम् ॥**

( समाधानसाधकभाष्यम् )

**एवम[6]पि भेदः । सति द्विर्वचने कदाचिद्द्वियकारकम्, कदाचित् त्रियकारकम् । असति द्वियकारकमेव ॥ स[7] एष कथं भेदो न स्याद् ? ॥ यदि नित्यो लोपः स्याद् । विभाषा च स लोपः ॥**

( उद्द्योतः ) भाष्ये यदि नित्यो लोपः स्यादिति । तदा भेदो न स्यादित्यर्थः ॥ विभाषा चेति । चस्त्वर्थे ॥

( समाधानबाधकैकदेशिभाष्यम् )

**यथाऽभेदस्तथास्तु ॥**

( उद्द्योतः ) एकदेश्याह—यथाऽभेद इति । यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति तथैवास्तु । मानुवृतद् विभाषाग्रहणमिति भावः ॥

( समाधानसाधकसिद्धान्तिवार्तिकम्[8] )

## ॥ * ॥ अनुवर्तते विभाषा शरोऽचिं यद्वारयत्ययं द्वित्वम्, ॥ * ॥

( भाष्यम् )

**यदयं "शरोचि" इति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो—ऽनुवर्तते विभाषेति ॥**

( जिज्ञासाभाष्यम् )

**कथं कृत्वा ज्ञापकम् ? ।**

( तस्यैव हेतुसूचकमुत्तरार्धम् )

## ॥ * ॥ नित्येहि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् ॥ १ ॥ * ॥

( भाष्यम् )

**यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात् । अस्त्वत्र द्विर्वचनम्, "झरो झरि सवर्णे" इति लोपो भविष्यति । पश्यति त्वाचार्यः—विभाषा सलोप इति ततो द्विर्वचनप्रतिषेधं शास्ति ॥**

( उद्द्योतः ) तृतीयो ज्ञापकमुपन्यस्यति—अनुवर्त्तत इत्यादिना । झरोझरीति लोपे इत्यर्थः । मध्यस्थतया हलोयमामित्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः ॥

( समाधानबाधकभाष्यम् )

**नैतद[9]स्ति ज्ञापकम् । नित्येपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यःयदेतद् "अचो रहाभ्याम्" इति द्विर्वचनम् लोपाप[10]वादः स विज्ञायते ॥**

**कथम् ? ॥**

**यर इत्युच्यते । एतावन्तश्च यरः । यदुत झरो वा यमो वा । यदि चात्र लोपः स्याद्द्विर्वचनमनर्थकं स्यात् ॥**

**किं तर्हि तयोर्यांगयोरुदाहरणम् ? ॥**

**यदकृते द्विर्वचने त्रिव्यञ्[11]जनः संयोगः—प्रत्तम् अवत्तम् आदित्यः ॥ इहेदानीं कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवति । एवमिहापि लोपो**

---

१ एवं प्रयोजने खण्डिते द्वितीयं तत्तत्रैवाह—परेति ॥ छाया ॥

२ इदमपि खण्डयत्येकदेशी—माभूदिति ॥ छाया ॥

३ उत्तरमाह सिद्धान्ती—ननुच भेद इति ॥ उच्चारण इति रूप इति वा शेषः ॥ छाया ॥

४ अनुपलब्धेरिति । अतएव 'व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषो नास्ति' इति भाष्यं संगच्छते ॥ छाया ॥

५ एकदेशी प्रत्याख्याता आह—नास्तीति ॥ छाया ॥

६ उत्तरमाह सिद्धान्ती—एवमपीति ॥ छाया ॥

७ प्रश्नपूर्वकं भेदमुपसंहरति—स एषेति । प्रश्नस्योत्तरमसंभावनारूपमाह—यदीति । असंभावनामेव दर्शयति—विभाषेति ॥ छाया ॥

८ सिद्धान्तीति । सिद्धान्तिभाष्यसहायवार्तिकमित्यर्थः ॥ वार्तिककारीयमिदमार्याधमिति केचित् । भाष्यकारशिष्यस्येति तत्त्वम् । पूर्ववार्तिकसंबन्धाभावात् ॥ छाया ॥

९ एकदेशी प्रत्याख्याता खण्डयति—नैतदिति ॥ छाया ॥

१० पवाद इति ॥ अन्यथा लोपस्य सर्वत्राप्रतिहतत्वात्क्वचिदपि द्वित्वस्य न श्रवणमिति तद्वैयर्थ्यमेव स्यादिति तस्य तत्त्वम् ॥ ततश्च कर्पतीत्यादौ तन्निवृत्तये तदिति भावः ॥ छाया ॥

११ त्रिव्यञ्जनसंयोग इति । त्रीणि व्यञ्जनानि यस्यावयवाः स त्रिव्यञ्जनः संयोगः समुदाय इत्यर्थः । यथाश्रुतं तु न युक्तम् । बहूनां समवाये द्वयोर्द्वयोरेव संयोगसंज्ञेति सिद्धान्तितत्वात् ॥ तस्य प्रकृतेऽनुपयोगाच्च ॥ छाया ॥

**न स्यात्कर्षति वर्षतीति । तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः ॥**

(उद्द्योतः) लोपापवाद इति । यद्यपि हर्यनुभव इत्यादौ तदुदाहरणे लोपेऽप्राप्तेपि द्विर्वचनमारभ्यते तथापि कृते द्वित्वे पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनापवादत्वोक्तिरिति भावः ॥ तयोर्योगयोः । लोपविधायकयोः ॥ प्रत्तमित्यादौ दाधातोः क्ते आतस्तकारोऽच उपसर्गादित्यनेन । आदित्ये आदित्याद्भवाद्यर्थव्यान्ताण्ण्यः ॥

( उपसंहारभाष्यम् )

**तदेतदत्यन्तं संदिग्धं वर्त्तते—आचार्याणां विभाषानुवर्त्तते नवेति ॥ ५ ॥**

( प्रदीपः ) तदेतदिति । ज्ञापकत्वमस्य विघटयति ॥ आचार्योपदेशपारम्पर्यात्तु ज्ञायते—अनुवर्त्तते विभाषेति । तस्मान्निर्व्यञ्जनसंयोगश्रवणायाणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ॥ ५ ॥

( उद्द्योतः ) तद्व्याचष्टे—ज्ञापकत्वमस्य विघटयतीति । सर्वथासंभवीत्युपसंहरतीत्यर्थः ॥ ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डनेऽनुवृत्तिः संदिग्धैवेति भावः ॥ लण्सूत्रे विभाषा सलोप इत्युक्तेराह—आचार्येति । अणुग्रहणाज् ज्ञापकादित्यपि कश्चित् । तत्तु वार्त्तिककृताणुग्रहणप्रत्याख्यानान्नोक्तम् ॥ ५ ॥

---

## ( शिवसूत्रम् )

## लण् ॥ ६ ॥

( व्याख्यानतइतिपरिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**अयं णकारो द्विरनुबध्यते-पूर्वश्चैव परश्च । तत्राण्ग्रहणेष्विण्ग्रहणेषु च संदेहो भवति-पूर्वेण वा स्युः, परेण वेति ॥**

(प्रदीपः) लण् ॥ ६ ॥ संदेहो भवतीति । किं प्रत्यासत्तिराश्रीयतेऽथ व्याप्तिरिति संदेहः ॥

(उद्द्योतः) लण् ॥ ६ ॥ किमिति । क्व प्रत्यासत्तिः, क्व व्याप्तिरिति सन्देह इत्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**कतमस्मिंस्तावदण्ग्रहणे संदेहः ? ॥**

(उद्द्योतः) भाष्ये कतमस्मिन्निति । वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्प्रश्नः ॥ कतरस्मिन्निति पाठेपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**"ढ्लोपे पूर्वस्य दीर्घोऽणः" इति ॥**

( ८२ सिद्धान्तिसमाधानवार्त्तिकम् ॥ १ ॥ )

**[॥ * ॥ असंदिग्धम् ॥ * ॥]**

( भाष्यम् )

**असंदिग्धम्—पूर्वेण, न परेण ॥**

( हेत्वाक्षेपभाष्यम् )

**कुत एतत् ? ॥**

( ८३ सिद्धान्त्येकदेशिहेतुवार्त्तिकम् ॥ २ ॥)

**॥ * ॥ पराभावात् ॥ * ॥**

( भाष्यम् )

**नहि ढ्लोपे परेऽणः सन्ति ॥**

(उद्द्योतः) नहि ढ्लोप इति । वर्ढेत्यादौ गुणोऽसिद्ध इति भावः ॥

( हेतुनिरासभाष्यम् )

**ननु चायमस्ति-आतृढ आवृढ इति ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्याद् "ढ्लोपे पूर्वस्य दीर्घोऽचः-"इत्येव ब्रूयात् ॥ अथ चैतदपि न ब्रूयाद् । अचो ह्येतद्भवति-ह्रस्वो दीर्घः प्लुत इति ॥**

(उद्द्योतः) दीर्घोऽच इत्येवेति । मात्रालाघवाभावेपि संग्राह्यलाघवायासंदेहाय चेति भावः ॥ [ भाष्ये अचो हीति । अचश्चेति परिभाषणादिति भावः ॥ ]

( आक्षेपभाष्यम् )

**अस्मिंस्तर्ह्यण्ग्रहणे संदेहः-"केऽणः" इति ॥**

---

१ प्रकृतं योजयन्कृतज्ञापकनिराकरणमुपसंहरति—तदेतदिति । यस्माल्लोपस्य नित्यत्वेपि निषेधः तत् तस्मात्कारणात् एतद् अन्यतरस्यांग्रहणानुवर्तनं संदिग्धं तेनानिर्णयमित्यर्थः ॥ छाया ॥

२ पूर्वेण वेति । 'सहयुक्ते' इति तृतीया । अकारादेः प्राधान्यात् । अनुबन्धस्य च गुणत्वात् ॥ पूर्वणकारेण वा परणकारेण वेत्यर्थः ॥ छाया ॥

३ असंदिग्धं पराभावात्सवर्णेण्तु परं ह्यर्न्नत् ।

ध्योरन्यत्र परेणेण् स्याद्व्याख्यानाच्च द्विरुक्तितः ॥'

इति श्लोकवार्तिकं खण्डशो व्याचष्टे—असंदिग्धमिति । इदं चाक्षिप्तभवतिक्रियाविशेषणम् ॥ छाया ॥

४ पराभावादिति । परणकारकृतप्रत्याहारसंग्राह्यस्य (ततः परतः पूर्वस्य) प्रथमसूत्रोपात्तान्यस्याभावादित्यर्थः । तदेवाह—नहीति । ढरेफलोपनिमित्ते परतः पूर्वाण्न्ये न सन्तीत्यर्थः ॥ छाया ॥

५ ननु 'वृहू उद्यमने' इत्यतस्तृचि ऊदित्त्वादिड्भावे गुणे रपरे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घे स्थानसाम्यादृकारे जाते ढलोपस्यासिद्धत्वाद् 'उपधायाश्च' इतीत्त्वे रपरे पूर्वेण 'आद्गुणः' इति गुणे जाते वेढेति यथा स्यादित्येवमर्थमण्ग्रहणं स्यादत आह—वर्ढेत्यादाविति । 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वम् । तथाच वर्ढेत्याद्येव रूपं नतु वेढेत्यादि । नाजानन्तर्ये, इति त्वनित्या नास्त्येव वेति भावः ॥ छाया ॥

६ अयं कोष्ठकान्तर्गतपाठः सर्वेष्वपि पुस्तकेषु केऽणः' इत्यत्र संदेहवारकभाष्यप्रदीपोद्द्योते समुपलभ्यते नत्वत्र तथाप्यस्माभिश्छायानुसारेणात्रैव स्थापित इति बोध्यम् ॥ दाधिमथाः ॥

( समाधानभाष्यम् )

**असंदिग्धं पूर्वेण, न परेण ॥**

**कुत एतत् ? ॥**

**पराभावात् ॥**

**नहि के परेऽणः सन्ति ॥**

**(प्रदीपः) नहि के पर इति ।** नन्वल्पोपानदुपानत्केति ह्रस्वे कर्तव्ये 'नहो धः' इत्यस्यासिद्धत्वादस्ति के परतो हकारः तथा गीष्केत्यादौ रेफः॥ अत्राहुः न मु न इत्यत्र नेति योगविभागेन धत्वादीनामसिद्धत्वाभावात्तेषु च कृतेषु हकारादीनामभावः॥

**(उद्द्योतः) तथा गीष्केति ।** विसर्गस्यासिद्धत्वादिति भावः ॥ तेषु च कृतेष्विति । परत्वादिति भावः । योगविभागस्य भाष्यानारूढत्वाद्गोकेत्यादिभाष्यात्के परे इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् ॥

( हेतुनिरासभाष्यम् )

**ननु चायमस्ति-गोका नौकेति ॥**

( सिद्धान्तिभाष्यम् )

**एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । "केऽचः" इत्येव ब्रूयाद् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति- ह्रस्वो दीर्घः प्लुत इति ॥**

( आक्षेपभाष्यम् )

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः-"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

( समाधानभाष्यम् )

**असंदिग्धं पूर्वेण, न परेण ॥**

**कुत एतत् ? ॥**

**पराभावात् । न हि पदान्ताः परेऽणः सन्ति ॥**

**(प्रदीपः) नहि पदान्ता इति ॥** ननु च भोभगो- इत्यत्राश्ग्रहणस्य प्रयोजनं वक्ष्यते वृक्षव् करोतीत्यत्र **हलि सर्वेषामिति** लोपो माभूद् इति । [ तत्र[1] वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्चमाचष्टे इति णिचि टिलोपे च कृते वृक्षवयतेर्विचि कृते वृक्षव् इति भवति[2] । क्विपि तु **क्वौ लुप्तं क्वौ विधिं प्रति च न स्थानिवदिति** निषेधात्[3]संप्रसारणप्रसङ्गो **लोपो व्योर्वलिति** वलोपप्रसङ्गश्च । विचि तु स्थानिवद्भावाद्वल्निमित्तो लोपो न भवति । **हलि सर्वेषामि**त्यनेन तु लोपे क्रियमाणे **पूर्वत्रासिद्धे न स्थानिवदिति** स्थानिवत्त्वनिषेधाद्वलोपः प्राप्तोऽश्ग्रहणानुवृत्त्या निर्वर्त्यते[4] ॥ ] तत्कथमुच्यते-**न हि पदान्ता इति** ॥ उच्यते—**अप्रगृह्यस्येति** पर्युदासेनाच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं—**न हि पदान्ता इति** । कार्यभाज इत्यर्थः ॥

**(उद्द्योतः) नहि पदान्ता इति ।** पदानामेवानुनासिकोऽवसाने जायत इत्याश्रित्येदमुक्तम् । न तु तत्र पदान्ताधिकारोऽस्ति ॥ **लोप इति ।** अशा हलो विशेषणादिति भावः ॥

[ **निषेधात्संप्रसारणप्रसङ्ग इति ।** चिन्त्यमिदम् । णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन[5] वृश्चतेः स्थानित्वे मानाभावेन वकारे **एकदेशविकृत**न्यायेन वृश्चतित्वस्य दुर्लभत्वात् । अर्धाधिकविकारेण प्रत्यभिज्ञाभावाच्च । अत एव राजकीयमित्यादौ अल्लोपो न । व्रश्च एव टिलोपस्थानित्वे तु प्रकृतिभावापत्तिः । एतेन विचि **एकदेशविकृत**न्यायेन वृश्चतित्वात्षत्वापत्तिः । न च णिलोपस्य स्थानिवत्त्वान्न षत्वम् । पूर्वत्रासिद्धीये तन्निषेधादिति परास्तम् ॥ न च व्रश्चेति सूत्रे पदाधिकारेण व्रश्चान्तत्वमेकदेशविकृतन्यायेन सुलभमिति वाच्यम् । **स्कोरि**ति सूत्रादन्ते ग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाश्रयणेनादोषात् । अत एवान्तेग्रहणं चरितार्थम् । अर्धाधिकविकाराच्च । एवं च वृक्षभृज्जो णिजन्तात्क्विपि वृक्षभ् इत्यादौ षत्वं नेत्याहुः ॥ **वलोपप्रसङ्गश्चेति ।** इदमुपलक्षणं क्वौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् ॥ ] **पर्युदासेनेति ।** क्रियमाणेऽप्यण्ग्रहणे इत्यर्थः ॥ भाष्येपि न सत्त्वं निषिध्यते किं तु कार्यित्वमेवेत्याह—**कार्यभाज इति ।** एवंचानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः ॥ वस्तुतो[6]ऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदज्ञानेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्याख्यानमनुचितं पूर्वपक्षस्य संदेहस्य चानुत्थानात् ॥ तस्मादष्टमाध्यायस्थं भाष्यमेकदेश्युक्तिरित्येवोचितम्[7] । व्याख्यातं च तत्रोपाध्यायैरित्थमेव ॥

---

१ * अयं कोष्टकान्तर्गतः प्रदीपस्तद्व्याख्यानभूत उद्द्योतश्च 'नहि पदान्ताः' इति भाष्यव्याख्यायामुचितः, तत्रैव वृक्षव्शब्दप्रसङ्गात् ॥दाधिमथाः॥

२ यत्तु—हलि सर्वेषामिति सूत्रे हरदत्तेनोक्तम् 'वृक्षव्' इत्येवंरूपप्रयोगो नास्त्येव, अनभिधानात् । लण्सूत्रे—नहि पदान्ता हलोऽणः सन्ति' इति भाष्यकारोक्तेश्चानभिधानं निश्चीयते—इति ॥ तच्चिन्त्यम्, लण्सूत्रभाष्ये 'न पदान्ताः परेऽणः सन्ति' इत्येव पाठात् । 'ननु चायमस्ति—कर्तृ कर्तृ' इत्युत्तरभाष्येणास्य दूषितत्वाच्च । त्वदुदाहृतपाठे उत्तरभाष्यस्योक्तिसंभवालाभाच्च ॥ श. कौ. ॥ वस्तुतस्तु पदान्ते हलणामनभिधानकल्पने तु 'वृद्धिरादैच् वृद्धिरेचि' इति निर्देशासंगतिः । 'न य्वाभ्यां पदान्ताभ्यां' इत्यादीनां वैयर्थ्यापत्तिश्चेति दिक् ॥ दाधिमथाः ॥

३ निषेधादिति । णिलोपस्य स्थानिवद्भावेत्यादिः ॥ संप्रसारणेति । एकदेशेति न्यायेन 'ग्रहिज्या-' इत्यनेनेति शेषः ॥ छाया ॥

४ निवर्त्यत इति । इदमपि चिन्त्यम् 'अत उपधायाः' इति वृद्धेर्वीरत्वादिति छायोक्तिरेव चिन्त्या णिच्सत्वे यथा वृद्धिवारणं तथैव णिल्लोपेपि संभवात् ॥ दाधिमथाः ॥

५ विधानेनेति । तथाच टेः 'सर्वे-' इति न्यायेन विशिष्टस्य वा स्थानित्वं लब्धम् । न वृश्चतेस्तदाह—वृश्चतेरिति । तथाच न शास्त्रीयन्यायप्रवृत्तिः तदाह—एकेति । नन्वेवमपि लौकिकन्यायेन तत्त्वमित्यत आह—अर्धाधिकेति । अर्धविकारेपि तदप्रवृत्तिः किंतु वक्तव्यं तदधिकविकार इति सूचयितुमाह—अतएवेति ॥ अर्धन्यूनविकारे प्रत्यभिज्ञासत्त्वेन तत्प्रवृत्त्यङ्गीकारेप्यर्धप्रभृतिविकारे तदभावेनातत्प्रवृत्त्यङ्गीकारादेवेत्यर्थः ॥ छाया ॥

६ कैयटोक्तिं दूषयति—वस्तुत इत्यादिना । अस्याः 'अप्रगृह्यस्ये'त्याद्युक्तयुक्तेरित्यर्थः ॥ छाया ॥

७ दाधिमथास्तु—'पराभावात्' इति वार्तिकं तद्भाष्यं च सर्वमेवैकदेश्युक्तम् । अतएव सर्वत्रापि'ननु चायमस्ति-'इत्यादिना दूषितं दृष्ट्वा सामर्थ्यवर्णनं भगवता सिद्धान्तिना कृतम्' इति वृक्षवादीनां सप्रमाणत्वमेवेति वदन्ति ॥

( हेतुनिरासभाष्यम् )

ननु चायमस्ति—कर्तृ हर्तृ इति ॥

( उद्द्योतः ) भाष्ये कर्तृहर्त्रिति [1]एचामप्युपलक्षणम् । अत एवाचोऽप्रगृह्यस्येत्युक्तम् । अन्यथाऽकोऽप्रगृह्यस्येति वदेत् ॥

( सिद्धान्तिभाष्यम् )

एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्याद्, अणूग्रहणमनर्थकं स्याद् "अचोऽप्रगृह्यस्यानुनासिकः" इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात्, अच एव हि प्रगृह्या भवन्ति ॥

( प्रदीपः ) अचोऽप्रगृह्यस्येति । हलो हिं न भाव्यमित्यत्राण्ग्रहणसामर्थ्यात्पूर्वेणेति स्थितम् ॥

( आक्षेपभाष्यम् )

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः—"उरण्परः" इति ॥

( समाधानभाष्यम् )

असंदिग्धं पूर्वेण, न परेण ॥

कुत एतत् ?

पराभावात् ।

न ह्युः स्थाने परेऽणः सन्ति ॥

( हेतुनिरासभाष्यम् )

ननु चायमस्ति-कर्त्रर्थं हर्त्रर्थमिति ।

( आपत्तिप्रश्नभाष्यम् )

किं च स्याद् यद्यत्र रपरत्वं स्याद् ? ॥

( आपत्तिदर्शनभाष्यम् )

द्वयो रेफयोः श्रवणं प्रसज्येत ॥

( आपत्तिबाधकभाष्यम् )

"हलो यमां यमि लोपः" इत्येवमेकस्यात्र लोपो भविष्यतीति ॥

( आपत्तिसाधकभाष्यम् )

विभाषा स लोपः, विभाषाश्रवणं प्रसज्येत ॥

( आपत्तिबाधकभाष्यम् )

अयं तर्हि नित्यो लोपः "रो रि" इति ॥

(उद्द्योतः) भाष्ये रोरीति । त्रिपाद्यां वहिरङ्गासिद्धत्वाभावादिति भावः ॥

( आपत्तिसाधकभाष्यम् )

पदान्तस्येत्येवं सः ॥

( आपत्तिबाधकभाष्यम् )

न शक्यः स पदान्तस्येत्येवं विज्ञातुम् । इह हि लोपो न स्यात्,-जर्गृधेर्लङ् अजर्घाः, पास्पर्द्धेः अपास्पाः इति ॥

(प्रदीपः) अजर्घा इति । गृधेर्यङ्लुकि रुगागमेऽभ्यासस्य कृते लङि सिपि शब्लुकि गुणरपरत्वसिब्लोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम् ॥

(उद्द्योतः) भष्भावः । एकाचो बशो भषित्यनेन । तत्र ह्येकाच इति झषन्तस्येति च धातोरित्यपेक्षया व्यधिकरणषष्ठीति भावः ॥ रुत्वम् । दश्चेत्यनेन ॥

( आपत्तिसाधकभाष्यम् )

इह तर्हि-मातॄणां पितॄणामिति रपरत्वं प्रसज्येत ॥

( आपत्तिबाधकभाष्यम् )

आचार्यप्रवृत्तिर्ज्ञापयति-नात्र रपरत्वं भवतीति। यदयम् "ॠत इद्धातोः" इति धातुग्रहणं करोति ॥

कथं कृत्वा ज्ञापकम् ? ।

धातुग्रहणस्यैतत्प्रयोजनम्-इह मा भूत्-मातॄणां पितॄणामिति । यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्याद् । रपरत्वे कृतेऽनन्त्यत्वादित्त्वं न भविष्यति । पश्यति त्वाचार्यो-नात्र रपरत्वं भवतीति । ततो धातुग्रहणं करोति ॥

( आपत्तिसाधकभाष्यम् )

इहापि तर्हि न प्राप्नोति-चिकीर्षति जिहीर्षतीति ॥

(प्रदीपः) इहापि तर्हीति । धातुग्रहणेन हि लिङ्गेनाधातोरेव रपरत्वं निवर्तितम् । धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः ॥

(उद्द्योतः) भाष्ये इहापि तर्हि इत्यस्य—ॠत इत्त्वमिति शेषः ॥ ननु धातुग्रहणेन ॠकारस्य दीर्घो न रपर इति ज्ञापनादज्झनेति दीर्घस्याप्यरपरत्वात् कथमत्रेत्त्वाप्राप्तिरत आह—धातुग्रहणेनेति ॥

( आपत्तिबाधकभाष्यम् )

माभूदेवम्।"उपधायाश्च"इत्येवं भविष्यति ॥

( आपत्तिसाधकभाष्यम् )

इहापि तर्हि प्राप्नोति-मातॄणां पितॄणामिति ॥ तस्मात्तत्र धातुग्रहणं कर्त्तव्यम् ॥

( प्रदीपः ) इहापीति । तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न ज्ञापकत्वमित्यर्थः ॥

(उद्द्योतः) भाष्ये—तस्मात्तत्रेति । न च इह किंचिन्नपो इतीति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम् । गॄइत्यादेरनुकरणे प्रकृतिवदनुकरणमित्यस्याभावे ग्रोयङीत्यादावित्त्वाभावार्थमिहापि तदावश्यकत्वात् । गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च । तदाह—तस्मादिति । एवंच रपरत्वेऽपि मातॄणामित्यादौ उपधायाश्चेतीत्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः ॥

१ एचामप्युपेति । अग्ने वायो पचै वायादित्यादौ तेषां संभवादिति भावः ॥ छाया ॥ २ 'यथाद्देशे इत्यादिशेष इति दाधिमथाः ॥

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि-सामर्थ्यात्पूर्वेण, न परेण । यदि परेण स्याद्, अणग्रहणमनर्थकं स्याद् "उरन्नपरः" इत्येव ब्रूयात् ॥**

(उद्द्योतः) भाष्ये सामर्थ्यात्पूर्वेणेति । न च गम्लेत्यादौ यणादेशे लपरत्वार्थमेव परेणाणग्रहणं स्यादिति सामर्थ्यं कथम् । ऋकारांशे हल्रूपाणि रोरीति प्रवृत्त्या फलाभावेन तत्साहचर्याद् ऌकारांशेपि हल्रूपाणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्रुतित्वेन तत्रापि रोरीत्यस्य प्रवृत्तेरित्यन्ये ॥ ऌकारे यण्घटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादित्यन्ये ॥

( आक्षेपभाष्यम् )

**अस्मिंस्तर्ह्यणग्रहणे संदेहः—"अणुदित्सवर्णस्य चाप्रत्ययः" इति ।**

( समाधानभाष्यम् )

**असंदिग्धं परेण, न पूर्वेण ॥**

( हेत्वाक्षेपभाष्यम् )

**कुत एतत् ? ।**

( ८४ सिद्धान्तवार्तिकम् ॥ ३ )

**॥ * ॥ सवर्णेऽण् तु परं ह्युर्ऋत् ॥ * ॥**

( भाष्यम् )

**यदयम् "उर्ऋद्" इत्यृकारे तपकरणं करोति, तज्ज्ञापयत्याचार्यः—परेण, न पूर्वेणेति ॥**

(प्रदीपः) सवर्णे इति । अचीकृतदिति ऋकारस्य ऋकार एव यथा स्यात् ऋकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाणग्रहणं स्यादकारोऽनण्त्वाद्भिन्नकालस्य ग्राहक एव न भवतीति ऋकारो नैव स्थानी, नाप्यादेशः प्रसजतीति किं तपरत्वेन । कृतं तज्ज्ञापकं परेणाण्ग्रहणस्य ॥

(उद्द्योतः) भाष्ये—सवर्णेणतपरमिति । यदुर्ऋत्सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेण्ग्रहणं परणकारकमिति वार्तिकाक्षरार्थः ॥ ह्वित्येवमर्थमिति । ह्रस्वो यथा स्याद् दीर्घो माभूदित्येवमर्थमित्यर्थः ॥ ऋकार इति । उद्देश्यसमर्पक इत्यर्थः । न च भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम्,तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबोध्यत्वाभावेन चाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानतापीत्यन्यत् ॥

( आक्षेपभाष्यम् )

**इण्ग्रहणेषु तर्हि संदेहः ॥**

( समाधानभाष्यम् )

**असंदिग्धम् परेण, न पूर्वेण ॥**

( हेतुजिज्ञासाभाष्यम् )

**कुत एतत् ? ॥**

( ८५ सिद्धान्तहेतुवार्तिकम् ॥ ४ ॥

**॥ * ॥ य्वोरन्यत्र परेणेण् स्यात् ॥ * ॥**

( भाष्यम् )

**यत्रेच्छति पूर्वेण, संमृद्य ग्रहणं तत्र करोति—य्वोरिति । तच्च गुरु भवति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**तत्र विभक्तिनिर्देशे संमृद्यग्रहणे चार्द्धचतस्रो मात्राः, प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः । सोयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः—परेण; न पूर्वेणेति ॥**

(प्रदीपः) अर्धचतस्र इति । अर्धेन चतस्रः । चतुर्थी हि मात्रा तत्रार्धेति ॥

(उद्द्योतः) भाष्ये संमृद्येति । आदेशेन तौ निवर्त्येत्यर्थः । अर्धं चतुर्थाइति वक्तुमुचितमत आह—अर्धेनेति ॥ भाष्ये—तिस्रो मात्रा इति । 'इणः' इति पदच्छेदाभिप्रायेणेदम् । तदुक्तम्—विभक्तिनिर्देशे इति । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् ॥

( आक्षेपभाष्यम् )

**किं पुनर्वर्णोत्सत्तांविवार्यं णकारो द्विरनुबध्यते? ॥**

(प्रदीपः) किं पुनरिति । वर्णोत्सत्तिर्वर्णोच्छेदः । वर्णान्तरमनुबन्धः किं न क्रियते इत्यर्थः ॥

(उद्द्योतः) अणादिग्रहणेषूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्याशयेनाह—भाष्ये किंपुनरिति ॥

---

१ इत्येवेति । ह्रादेरविधानाद्रेफस्य तत्त्वेपि दोषाभावस्योक्तत्वेनेदानीं तदभावेप्यक्षतेश्चेति भावः ॥ छाया ॥

२ 'सवर्णेऽण् तु परं ह्युर्ऋत्' इत्येव वार्तिकपाठः । अतएव तुशब्दोऽत्याणि पूर्वोक्ताण्भ्यो वैलक्षण्यं सूचयति । एवं च नैव शेषपूरणं नाप्यपकर्षः । आधुनिकपुस्तकेषु यद्यपि 'तपरं' इत्येवं पाठ उपलभ्यते तथापि तस्य लघीयसा लेखकप्रमादेन संभवस्य शक्यत्वात् । किं च तथापाठे 'परणकारकम्' इत्येतावति शेपत्वस्य 'य्वोरन्यत्र परेणेण् स्यात्' इत्युत्तरवार्तिकात् परेणेत्येतदपकर्षस्य वा कल्पनाया अवश्यकरणीयत्वे गौरवाच्च । भाष्ये परेणेति तृतीयान्ततया व्याख्यानं तु पूर्वोक्तयनुसृत्या । वार्तिके तु परमिति प्रथमान्तमेव । अतएवोद्द्योते 'अण्ग्रहणं परणकारकम्' इत्येव व्याख्यातम् । तेनापि 'परम्' इत्येव पाठस्तस्य संमतः प्रतीयते ॥ इति दाधिमथाः ॥

३ तद्वैयर्थ्यमिति । तथा चाज्ञापकमिति दिव औदित्यादिवदुच्चारणार्थत्वमेवेति भावः ॥ छाया ॥

४ अभ्यनुज्ञानं प्रतिप्रसवः ॥

५ एवमण्ग्रहणेषु निर्णीयेण्ग्रहणेष्वपि तमाह—इण्ग्रहणेष्वित्यादिना ॥ छाया ॥

६ नाहेति । ८६ 'व्याख्यानाच्च द्विरुक्तितः' इति चतुर्थपादं व्याख्यातुं शङ्कते इत्यर्थः ॥ छाया ॥

( ८६ समाधानवार्तिकम् ॥ ५ ॥ )

**[॥ * ॥ व्याख्यानाच्च द्विरुक्तितः ॥ * ॥]**

( भाष्यम् )

**एतज्ज्ञापयत्याचार्यो—भवत्येषा परिभाषा—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति ।—"अणुदित्सवर्णस्य—" इत्येतत्परिहाय पूर्वेणाणग्रहणम्, परेणेणग्रहणम्" इति व्याख्यास्यामः ॥ ६ ॥**

(प्रदीपः) व्याख्यानत इति । न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ॥ ६ ॥

( उद्द्योतः ) एतत् वक्ष्यमाणम् । आचार्यः शिवः । ननु ज्ञापितेपि प्रवर्तकतया निवर्तकतया वा नास्य चारितार्थ्यमत आह—न्यायादिति । उक्तो न्यायः[१] ॥ आगम उपदेशपरम्परा[२] । तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्वव्यवहारेण बोध्यत इत्यर्थः । एवंच व्याख्यानेनैव—पूर्वणकारेण केचित् केचित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम् ॥ ६ ॥

---

( शिवसूत्रे )

# ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥

( आक्षेपभाष्यम् )

**किमर्थमिमौ मुखनासिकावचनावुभावनुबध्येते, न ञकार एवानुबध्येत ? ॥**

( प्रत्याक्षेपभाष्यम् )

**कथं—यानि मकारेण ग्रहणानि ? ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**[सन्तुं[३] ञकारेण ॥]**

( आक्षेपभाष्यम् )

**[कथं] "हलो यमां यमि लोपः" इति ॥**

( इष्टापत्तिभाष्यम् )

**[अस्तु ञकारेण] "हलो यञां यञि लोपः" इति ॥**

( इष्टापत्तिबाधकभाष्यम् )

**नैवं शक्यम् । झकारभकारपरयोरपि झकारभकारयोर्लोपः प्रसज्येत ॥**

( इष्टापत्तिसाधकभाष्यम् )

**न झकारभकारौ झकारभकारयोः स्तः ॥**

(उद्द्योतः) ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ भाष्ये—नझकारेत्यादि । अजहितहल्मात्रानुकरणं तु सूत्रादन्यत्र नास्तीति हयवरट्सूत्रे प्रपञ्चितम् ॥

( आक्षेपभाष्यम् )

**कथं—"पुमः खय्यम्परे" इति ? ॥**

( इष्टापत्तिभाष्यम् )

**एतदप्यस्तु ञकारेण "पुमः खय्यञ्परे" इति ॥**

( इष्टापत्तिबाधकभाष्यम् )

**नैवं शक्यम् । झकारभकारपरेपि हि खयि रुः प्रसज्येत ॥**

( इष्टापत्तिसाधकभाष्यम् )

**न झकारभकारपरः खयस्ति ॥**

( आक्षेपभाष्यम् )

**कथं—"ङमो ह्रस्वादचि ङमुण्नित्यम्" इति ? ॥**

( इष्टापत्तिभाष्यम् )

**एतदप्यस्तु ञकारेण "ङञो ह्रस्वादचि ङञुण्नित्यम्" इति ॥**

( इष्टापत्तिबाधकभाष्यम् )

**नैवं शक्यम् । झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम् ॥**

( उद्द्योतः ) झकारभकारयोरपि हि पदान्तयोरिति । पदान्तयोस्तयोः सतोस्ततः परस्याजादेः पदस्य झभौ स्यातामित्यर्थः ॥

( इष्टापत्तिसाधकभाष्यम् )

**न झकारभकारौ पदान्तौ स्तः ॥**

(प्रदीपः) झभञ् ॥ न झकारेति । [झकारस्य[४]] भकारस्य [च[५]] पदान्तस्य जश्त्वेन भाव्यमिति तस्य[८] भावः । उज्झेर्झकारः संयोगान्तस्येति लुप्यते इति तस्याप्यभावः ॥

( इष्टापत्तिबाधकैकदेशिभाष्यम् )

**एवमपि पञ्चागमास्त्रय[९] आगमिनो वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥**

( उद्द्योतः ) एवमपि पञ्चागमा इति । लक्ष्यसंस्कारकालिकं संख्यासाम्यं यथासंख्यसूत्रप्रवृत्तौ निमित्तमिति मन्यते ॥

( इष्टापत्तिसाधकैकदेशिभाष्यम् )

**सन्तु तावद्येषामागमानामागमिनः सन्ति ।**

---

१ न्याय इति । ज्ञापकसामर्थ्यान्यतररूप इत्यर्थः ॥ छाया ॥

२ उपदेशपरम्परेति ॥

'परेणैवेणग्रहाः सर्वे पूर्वेणैवाणग्रहा मताः ।
ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥'

इत्येवंरूपोपदेशेत्यर्थः ॥ छाया ॥

३ अयं कोष्ठकान्तर्गतः पाठः सर्वेषु पुस्तकेषु "हलो यमां यमि लोपः" इत्युत्तरमुपलभ्यते ॥

४—५ अयं कोष्टकान्तर्गतपाठः सर्वत्र नोपलभ्यते ॥

६—७. अयं कोष्टकान्तर्गतः पाठो न सार्वत्रिकः ॥

८ तस्येति ॥ प्रत्याख्यातुरित्यर्थः ॥ छाया ॥ 'तस्याभावः' इति पाठे भकारस्येत्यर्थः ॥

९ त्रय इति । इदं विचो दृष्टानुविधिकच्छन्दोविषयकत्वम् 'अभिव्यक्तेतिन्यायं चानाश्रित्य ह्रस्वात्परस्य पदान्तणकारस्य संभवमाश्रितवत एकदेशिनो वाक्यमिति नात्र त्रित्वसंख्याया निर्भरः ॥ ङ्णावेवागमिनौ ॥ इति दाधि० ॥

**झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः ॥**

(प्रदीपः) **सन्तु तावदिति** । उद्देशानुदेशाभ्यां संख्यासाम्याद्यथासंख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्तते नान्य इत्यर्थः ॥

(उद्द्योतः) सिद्धान्ती तु प्रतिपत्तिकालिकमेव संख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह—**सन्त्विति** ॥ येषामागमानामागमिनः सन्ति ते[2] भवन्तु इत्यर्थः ॥ **अनुदेशः** प्रतिनिर्देशः । भगवता तु स्पष्टप्रतिपत्तयेऽनुबन्धद्वयमदर्शि ॥ ७ ॥ ८ ॥

---

(अथाक्षरशब्दनिर्वचनम्)

(आक्षेपभाष्यम्)

**अथ[3] किमिदमक्षरमिति ।**

(प्रदीपः) **किमिदमिति** । **अक्षरसमाम्नाय** इति व्यवहाराद्यो वा **इमां स्वरशोऽक्षरशः** इति चोक्तत्वात्प्रश्नः ॥

(उद्द्योतः) **इति व्यवहारादिति** । अइउण्सूत्रेऽयं व्यवहारो भाष्ये ॥ **प्रश्न इति** । तद्घटकीभूताक्षरपदार्थावगमायेति भावः ॥

(८७ सिद्धान्तसमाधानवार्तिकम् ॥ १ ॥)

## ॥ * ॥ 'अक्षरं न क्षरं विद्यात्' ॥ * ॥

(भाष्यम्)

**न क्षीयते न क्षरतीति वाऽक्षरम् ॥**

(प्रदीपः) **अक्षरं न क्षरमिति** । क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति । अत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम्[4] । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यतया तु वर्णपदवाक्यस्फोटानां जातिस्फोटस्य वा ॥

(उद्द्योतः) भाष्ये—**अक्षरमित्यस्य नक्षरमिति** विग्रहप्रदर्शनम् ॥ **तच्चेति** । अक्षरं चेत्यर्थः ॥ ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भविशेषणमाह—**परमार्थतो नित्यमिति** । यतस्तत् प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः ॥ नन्वेवं प्रकृते किमायातमत आह—**व्यवहारनित्यतया चेति** । सर्वेषां शब्दानामाकाशादिवत् सृष्ट्यादावुत्पत्तिः प्रलये च नाश इत्यर्थः । एवंच व्यवहारनित्यतयाऽक्षरब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः । एवंच शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः ॥ न्यायादिनयेऽप्याह—**जातिस्फोटस्य वेति** ॥

(८८ सिद्धान्तसमाधानान्तरवार्तिकम् ॥ २ ॥)

## ॥ * ॥ 'अश्नोतेर्वा सरोऽक्षरम्' ॥ * ॥

(भाष्यम्)

**अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः । अश्नुते इत्यक्षरम् ॥**

(प्रदीपः) **अश्नोतेर्वेति** । सरन्प्रत्ययस्यानुबन्धलोपे[6] कृतेऽनुकरणं सर इति । तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा ॥

(उद्द्योतः) भाष्ये **अश्नोतेर्वेति** ॥ तद्व्याचष्टे—**अर्थमश्नुते इति** । वर्णानामनर्थकत्वेन चिन्त्यमिदम् । नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ इत्यन्ये ॥

(८९ सिद्धान्तसमाधानान्तरवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ 'वर्णं वाहुः पूर्वसूत्रे' ॥ * ॥

(भाष्यम्)

**अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते॥**

(प्रदीपः) **वर्णं वाहुरिति** । रूढिरियं वर्णस्येत्यर्थः ॥ **पूर्वसूत्रे इति** । व्याकरणान्तरे **वर्णा अक्षराणीति** वचनात् ॥

(उद्द्योत) ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह—**वर्णं वाहुरिति** ॥ चघटितः पाठोऽत्र प्रामादिकः । व्याख्यानभाष्ये **अथवे**त्युक्तेः ॥ नन्वनन्तरोक्तयोगाभावात्कथं तेषु प्रयोगोऽत आह—**रूढिरिति** । तदुक्तं भाष्ये—**अक्षरमिति संज्ञेति**[7] ॥ **व्याकरणान्तरे इति** । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः ॥ एवं चाक्षरसमाम्नाय इत्यस्य श्रुतिरूपो वर्णसंघात इत्यत्र तात्पर्यम्[8] ॥

(इत्यक्षरशब्दनिर्वचनम् ॥)

---

१ ह्रस्वात्परस्य पदान्तणकारस्याभावेन यथा णकारागमोऽपि न भवतीत्यग्रे प्रातिशाख्यानुसारि निरूपयिष्यते दाधिमथैः ॥

२ Bangal Asiatic Socitey मुद्रितपुस्तकेपि 'तेषाम्' इति पद्यन्तपाठ उपलभ्यते । तत्राशुद्धिः स्फुटैव, अध्याहारक्लेशो वेति बोध्यम् ॥ दा०

३ अथाक्षरशब्दनिर्वचनपरं वार्तिकमवतारयति—अथेति ॥ अत्र प्रवृत्तिनिमित्तभूतं वस्तु किमित्यर्थः ॥ छाया ॥

४ रूपमिति । तथाचानश्वरत्वं प्रवृत्तिनिमित्तं दर्शितमित्यविनाशी तदर्थ इति नित्योऽर्थः फलतीति भावः ॥ छाया ॥

५ तदेवमक्षरशब्दोऽविनाश्यर्थपरतया व्युत्पादितः इदानीं व्यापकपरतया व्युत्पादयति—अश्नोतेर्वेति ॥ छाया ॥

६ लोप इति । पद्यानुरोधेनेति भावः ॥ छाया ॥

७ संज्ञेतीति । तथाच वर्णत्वं प्रवृत्तिनिमित्तमिति भावः ॥ छाया ॥

८ तात्पर्यमिति । एवं च नित्यव्यापकवर्णलक्षणमर्थत्रयमक्षरशब्दस्योक्तम् । तत्र प्राधान्येन नित्यव्यापकयोरिह शास्त्रेऽनुपयोगात्सामर्थ्येन वर्णविशेषणतया तयोरिति नित्यव्यापकवर्णसमाम्नायोऽक्षरसमाम्नाय इति सिद्धम् ॥ छाया ॥

( अथाक्षरसमाम्नायोपदेशप्रयोजनम् )

( ९० प्रश्नवार्तिकम् ॥ १ ॥ )

**॥ * ॥ 'किमर्थमुपदिश्यते' ॥ १ ॥ * ॥**

**अथ किमर्थमुपदेशः क्रियते ।**

( प्रदीपः ) **किमर्थमिति** । वर्णानां साधुत्वस्याप्रतिपाद्यत्वात्पदस्यैव साधुत्वान्वाख्यानात्प्रश्नः ॥

(उद्द्योतः) भाष्ये उपदिश्यत इति । अक्षरसमाम्नायोपदेशः किमर्थं इत्यर्थः ॥ पूर्वं कृतोऽप्ययं विचारः कंचिद्विशेषं वक्तुं पुनः क्रियते ॥

( ९१ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ 'वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ॥ तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते' ॥ २ ॥ * ॥**

( भाष्यम् )

**सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते ॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ २ ॥

**( इति माहेश्वरीयं विधिशेषप्रकरणम् ॥ )**

( प्रदीपः ) **वर्णज्ञानमिति** । वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विशयः शास्त्रेण वाग्विसीयते आवध्यते शास्त्रेण तस्याः परिज्ञानादित्यर्थः ॥ **यत्र चेति** । ब्रह्म वेदः पदे वर्तते । तस्य च शास्त्रं विषयः लौकिकानां वैदिकानां च शास्त्रं विषय इत्यर्थः ॥ **तदर्थमिति** । शास्त्रप्रवृत्त्यर्थमित्यर्थः॥ **इष्टबुद्ध्यर्थमिति** । कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः ॥ **लघ्वर्थमिति** । अनुबन्धकरणार्थमित्यर्थः ॥ **वाक्समाम्नाय इति** । एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः ॥ **पुष्पितः फलित इति** । दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां च ॥ **चन्द्रतारकवदिति** । अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति ॥ **ब्रह्मराशिरिति** । ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थः ॥ **सर्ववेदेति** । सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीत्यर्थः ॥ **मातापितराविति** । माहात्म्यातिशयः शास्त्रस्य प्रत्याहारमात्रफलाख्यानद्वारेणान्वाख्यायते ॥ **महीयेते इति** । पूजां प्राप्नुत इत्यर्थः । महीयशब्दः कण्ड्वादियगन्तः ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ २ ॥

(उद्द्योतः) येन शास्त्रेणेति । चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनिव्याकरणेन चेत्यर्थः ॥ **तत्** शास्त्रम् ॥ **वाचोविषयः** । बन्धनं प्रतिपादकमित्यर्थः ॥ भाष्ये **यत्रचेत्य**नेन वाक् परामृश्यते इत्याह—**पदे वर्तत इत्यादिना** ॥ **शास्त्रं विषय इति** । प्रतिपादकमित्यर्थः ॥ वर्णज्ञानं शास्त्रं वाचो विषयः ॥ का सा वाग् ?- **यत्र ब्रह्म च वर्तते** चात्पुराणादि इति भाष्याक्षरार्थः ॥ **तदर्थमित्ये**-तद्व्याचष्टे—**शास्त्रप्रवृत्त्यर्थमिति** ॥ **कलादीति** । इदं प्रयोजनं परस्पशान्ते दूषितम्॥ **अनुबन्धकरणार्थमिति** । लघ्वर्थमित्यक्षराणामत्रार्थे स्वारस्यं चिन्त्यम् । अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवशास्त्रप्रवृत्त्यर्थमित्यर्थो वा ॥ **वाक्समाम्नायः** । वाक्सङ्ग्रहोपाय इत्यर्थः ॥ तदाह—**एतावद्भिरेवेति** । दृष्टफलेनाभ्युदयेन वा पुष्पितः । अदृष्टफलेन निःश्रेयसेन वा फलितः ॥ **वाग्व्यवहारस्येति** । तत्संग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः ॥ यथाश्रुते हि भाष्येऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः । अत एवैतत्प्रतीकमुपादाय हरिणा **"अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्त्तास्त्येवमेव वेदे पारंपर्येण स्मर्यमाणम्"** इति व्याख्यातम् ॥ **ब्रह्मतत्त्वमेवेति** । तदुक्तं नन्दिकेश्वरेण—

**'अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ॥'**

इत्यादिना सर्ववर्णानां माहेश्वररूपता वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता ॥ तदाह—**सर्ववेदे**-त्यादि ॥ अन्ये तु **वर्णज्ञानं** चतुर्दशसूत्र्यात्मकं शास्त्रं **वाचो** वेदशास्त्रपुराणरूपायाः सकलवाचो **विषयो** वन्धनम् । **यत्र च** वर्णसमाम्नाये **ब्रह्म** बोध्यतया **वर्तते** । व्याख्याता चैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण । **तदर्थं** सकलवाग्ज्ञानार्थं

नमः शिवाय देवाय सर्वज्ञाय परात्मने ॥
यस्योन्मेषनिमेषाभ्यां व्यक्ताव्यक्तमिदं जगत् ॥ १ ॥
गुरुं शिवं[1] कुमारं च शिवतत्त्वविशारदम् ॥
प्रणम्य नन्दिकेशादीन् शिवभक्तान् मुहुर्मुहुः ॥ २ ॥
काशिकामादिसूत्राणां नन्दिकेशकृतां शुभाम् ॥
लोकोपकारिणीं दिव्यां व्याकरोमि यथामति ॥ ३ ॥

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ॥**
**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ १ ॥**

इह खलु सकललोकनायकः परमेश्वरः परमशिवः सनकसनन्दनसनत्कु-

१ तदेवं श्लोकवार्तिकस्य पादत्रयं व्याख्यातम् । अथ वार्तिककृदेवोत्तरवार्तिकावतारणाय चतुर्थपादेन प्रयोजनप्रश्नं करोति—किमर्थमुपदिश्यत इति ॥ छाया ॥

२ प्रयोजनपरं श्लोकवार्तिकं संपूर्णमाह—वर्णज्ञानमिति ॥ छाया ॥

३ अदृष्टमपि फलमाह—सोऽयमिति ॥ छाया ॥

४ कैयटेनार्थस्योक्तत्वे भ.ष्याक्षरायोजनाबार्थानुक्तेश्चाह—वर्णेति ॥ छाया ॥

५ लघ्वर्थं चेति भाष्ये चकारेणानुबन्धकरणार्थत्वं समुच्चीयते । तदेव कैयटेनोक्तमिति न दोष इत्यपरे ॥छाया ॥

६ नन्दिकेश्वरेणेति ॥ तथाहि सा नन्दिकेश्वरकाशिका श्रीमदुपमन्युकृतव्याख्यासहिता प्रकाश्यते—

[1] 'श्रीशंकरं कु' 'श्रीशं गुरुं कु.' पा० १.

मारादीन् श्रोतृन् नन्दिकेशपतञ्जलिव्याघ्रपादवसिष्ठादीनुद्धर्तुकामो डमरुनिनादव्याजेन चतुर्दशसूत्र्यात्मकं तत्त्वमुपदिदेश । तदनु ते सर्वे मुनीन्द्रवर्याश्चिरकालमाश्रितानामस्माकं तत्त्वं चतुर्दशसूत्र्यात्मकमुपदिदेशेतिमत्वा अस्य सूत्रजालस्य तत्त्वार्थं नन्दिकेश्वरो जानातीति नन्दिकेश्वरं प्रणिपत्य पृष्टवन्तस्तत्रेषु पृष्टवत्सु स षड्विंशतिकारिकारूपेण तत्त्वं सूत्राणामुपदेष्टुमिच्छन्निदमाचचक्षे—नृत्तावसाने इति । अहमिति शेषः । नटराजराज इत्यनेन मङ्गलानि दर्शितानि विश्वरूपविलासवैचित्र्यचमत्कारप्रवीणत्वान्नटराजराजः ताण्डवाख्यरासमात्रविलासवैचित्र्यचमत्कारप्रवीणत्वस्य त्वन्यत्र नटादावपि सत्त्वात् । स त्वात्मतत्त्वं वागाद्यगोचर इति ज्ञापनार्थं ढक्कानिनादव्याजेन सनकादीनुद्धर्तुकामो नवपञ्चवारं चतुर्दशवारं स्वान्तर्गतमात्मतत्त्वं प्रकटयितुं नृत्तावसाने ननाद नादितवान् ॥ अहं तदेतद् विततनिनादोद्भूतवर्णात्मकमाद्यमतिरहस्यमेतच्छिवसूत्रजालं शिवसंवन्धिसूत्रसमूहं कल्याणरूपसूत्रसमूहं वा विमर्शे विचार्य स्फुटीकरोमीत्यर्थः । 'विमर्शे' इति छान्दसं बोध्यम् ॥ १ ॥

**अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम् ॥**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ २ ॥**

अनुबन्धाः पाणिन्याद्युद्देश्यका एवेत्याह—अत्रेति । पृथिव्यादिरर्थः । अन्त्यं वर्णेति वा पाठः । उभयथापि बहुव्रीहिः । कदम्बमन्यपदार्थः समासान्तः (?) । चतुर्दशेति वा पाठः । तदा तत्पुरुषः । द्वयोरितिवच्चतुर्दशेति प्रयोगः (?) केषुचित्पुस्तकेषु अन्त्यवर्णं चतुर्दशकमितिपाठः (?) । धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थमित्यर्थः । अन्त्यवर्णजालं शब्द इति न्यायेन । तथा चोक्तमिन्द्रेण—'अन्त्यवर्णसमुद्भूता धातवः परिकीर्तिताः' इति ॥ २ ॥

## अइउण् ॥ १ ॥

**अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ॥**
**चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः ॥ ३ ॥**

तत्राद्येन सूत्रेण सर्ववर्णानां समस्तभुवनानां च समुज्जृम्भरूपं स्वात्मतरङ्गमुपदिष्टमित्याह—अकारो ब्रह्मेति । अः परमेश्वरो निर्गुणः इं मायामाश्रित्य उः व्यापकः सगुणः ईश्वरः ण् आसीत् इति सूत्रार्थः सूचितः । [ सर्ववस्तुषु परापश्यन्तीमध्यमावैखर्यादिषु इं चित्कलामित्यत्र गायत्रीमिं चेतिवदीकारो बोध्यः । अत्र ईकारस्तु सूत्रे नोदितः इकार एव प्रकटितः । सर्गसंभवकाले अ, इ, उ, ऋ, लृ, इति वर्णपञ्चकमेव सर्वेषामेकोनपञ्चाशदक्षराणां भूतपञ्चकानां पञ्चवर्गाणां क्रमेण योनिरिति ] । अत्र प्रमाणम्—'असद्वा इदमग्र आसीत्ततो वै सदजायत' इति श्रुतिः । असद्ब्रह्म वै निश्चयेन अग्रे सृष्टेः पूर्वमिदमक्षरात्मकमासीत् । ततोऽक्षरात् असतो वै सत् सगुणमजायत जातमित्यर्थः ॥ तदुक्तं गीतायाम् 'अक्षराणामकारोऽस्मी'ति ॥ ३ ॥

**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ॥**
**आद्यमन्त्येन संयोगादहमित्येव जायते ॥ ४ ॥**

अतएवाह—अकार इति । 'आदिरन्त्येन सहेता' इत्यादिरकारोऽन्त्यो हकारः अकारादिहकारान्ता वर्णास्ततः परमात्मनः समभवन्नित्यर्थः । परमः शिव इति पाठान्तरम् ॥ ४ ॥

**सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ॥**
**ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता ॥ ५ ॥**
**वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ॥**
**सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता ॥ ६ ॥**

१ अयं कोष्ठकान्तर्गतपाठश्छायायां ७ मकारिकाव्याख्यारम्भ उपलभ्यते ॥

२ 'अस्याविर्भावमात्रात्मा मध्यमा वाक्समीरिता' इति पाठान्तरम् ॥

३ यथा वैखरी प्रतिपुरुषं ध्वनिभेदाद्भिन्नेव भाति नैवं मध्यमा किंतु सर्वैकरूपैवेत्यर्थः । यत्र मध्यमायामेव भेदो नास्ति किंतु तत्र वक्तव्यं परापश्यन्त्योर्भेदो नास्तीति । तस्मात्तत्राभेद एवेति भावः ॥

ईश्वर एवानादिजीवोपाध्याश्रितकर्मप्रेरितप्राणव्यापारानन्तरं नाम्नी पराख्यं मायापरिणाममुपेत्य हृदि पश्यन्त्याख्यमुपेत्य विशुद्धचक्रे मध्यमाख्यमुपेत्य पश्चाद्वक्त्रे वैखर्याख्यमवाप्य वेदादिरूपो भवतीत्यर्थः । श्रुतिरपि—"वागेव विश्वा भुवनानि जज्ञे" इति । सूक्ष्मा वागेव विश्वाकारेण विपरिणमते विवर्तते वेति बोध्यम् ॥ श्रुत्यन्तरमपि—'वाचैव विश्वं बहुरूपं निबद्धं तदेवैकं प्रविभज्योपभुङ्क्ते' इति ॥ ६ ॥

**अकारं संनिधीकृत्य जगतां कारणत्वतः ॥**
**इकारः सर्ववर्णानां शक्तित्वात्कारणं गतम् ॥ ७ ॥**
**जगत्स्रष्टुमभूदिच्छा यदा ह्यासीत्तदाभवत् ॥**
**कामबीजमिति प्राहुर्मुनयो वेदपारगाः ॥ ८ ॥**
**अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता ॥**
**उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः ॥ ९ ॥**

तत्र सर्वत्रैकारस्यैव स्वतन्त्रतामाह—अकारमिति ॥ ७ ॥ जगत्स्रष्टुमिति । उक्तंच—

स्वप्रकाशपरमात्मवस्तुनो दृश्यमानजगतः सिसृक्षया ॥
कामतः परशिवप्रकाशितं कामबीजमिदमेव निश्चितम् ॥'

इति ॥

बीजं विन्दुद्वयारूढं सार्धयोनिस्वरूपकम् ॥
महाकामकलारूपमात्मानं चिन्तयेत्प्रिये ॥"

इति च ॥ ८ ॥ उक्तमेव द्रढयति—अकार इति । उकार इति । उं व्यापकत्वेन ण् ईश्वर आसीदित्यर्थके उणीश्वरः इत्यत्रेति भावः ॥ ९ ॥

## ऋऌक् ॥ २ ॥

**ऋऌक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत् ॥**
**तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत् ॥ १० ॥**

ननु सर्ववेदान्तेषु परमेश्वर एक इति निश्चितत्वान्मायानीं चित्कलां समाश्रित्य जगद्रूपोऽभूदित्युक्तेऽद्वैतहानिर्जायेतेत्याशङ्क्याह—ऋऌगिति ॥ ऋ परमेश्वरः ऌ मायाख्यां मनोवृत्तिं क् अदर्शयत् । तामेवाश्रित्य स्वेच्छया जगजनयामासेत्यर्थः । ऋ परमेश्वर इत्यत्र 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' इति श्रुतिः प्रमाणम् । तं तत्पदार्थं परं ब्रह्म ऋ सत्यमित्यर्थः ॥ श्रुत्यन्तरमपि—'सोऽकामयत बहु स्यां प्रजायेय' इति । श्रीतन्त्रेऽपि—'मत्तो ह्यभून्मनोरूपं ऌकारः परमेश्वरि' इति । ऋऌवर्णौ यथा तादात्म्यमाप्तौ तथेत्यर्थः ॥ १० ॥

**वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ॥**
**चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपि ॥ ११ ॥**
**स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ ॥**
**वर्णानां मध्यमं क्लीबमृऌवर्णद्वयं विदुः ॥ १२ ॥**

तदाह—भेदलेश इति । वास्तव इत्यर्थः ॥ ११ ॥ १२ ॥

## एओङ् ॥ ३ ॥

**एओङ्मायेश्वरात्मैक्यविज्ञानं सर्ववस्तुषु ॥**
**साक्षित्वात्सर्वभूतानां स एक इति निश्चितम् ॥ १३ ॥**

ननु 'जनयामास' इत्युक्ते जन्यजनकभावेऽद्वैतहानिः स्यादित्याशङ्क्य तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतिमाश्रित्याह—एओङ्मायेश्वरेति ॥ जन्यजनकत्वं

४ बहुरूपं, कृतमिति शेषः । तथैव निबद्धमित्यर्थः । एकं चिद्रूपमपि विश्वं तया विभज्याविद्यया नानेव बुद्ध्योपभुङ्क्ते इत्यर्थः ॥

५ शिवाऽप्रकाशितमित्यर्थः ।

६ 'मनोरूपम्' इति पाठान्तरम् ॥

च स्वस्यैव तद्रूपेण वर्तमानत्वादिति नाद्वैतहानिः । अकारोकाराभ्यां निष्पन्नप्रणवरूपेणौकारेण सगुणनिर्गुणयोरैक्यं बोधितं तेनैव दृष्टान्तेन सर्वत्रैक्यबुद्धौ द्वैतनिरासो ध्वनितः । समष्टिव्यष्टिभेदेन पूर्ववर्णयुतद्वितीयस्य तद्युततृतीयस्य च समन्वयबोधकमिदं सूत्रम् । अ अक्षरात्मकः इ मायायुक्तः सन्प्रज्ञानस्वरूपः प्रज्ञानात्मा [ सर्ववस्तूनामेकत्वात् अद्वैतोपपत्तिः, न नानात्वं जन्यजनकत्वं च । ] स्वयं प्रविश्य तद्रूपेण वर्तत इत्यर्थः ॥ वटबीजन्यायेन च पूर्वसूत्रद्वयजनितवर्णपञ्चकमेव सकलजगत्कारणमिति प्रागुक्तम् । उत्तरसूत्रवर्णानामपि तस्मादेव सम्भवः । समष्टिव्यष्टिभेदेषु पूर्ववर्णयुतद्वितीयस्य पूर्ववर्णयुततृतीयस्य च समन्वयबोधकमिदं सूत्रम् । ऐमन्वयबोधनमप्येकत्वेनोक्तम् । अत्राप्यपरत्वे सर्ववेदसम्मतत्वं च । तथा च सनकदक्षिणामूर्तिसंवादमहावाक्यविवरणे—

> शृणु त्वं सावधानेन चतुर्णामपि साम्यता ॥
> वेदानां च महाभाग चतुष्काणामिहोच्यते ॥ १ ॥
> ब्रह्मशब्देन यद्वस्तु तत्त्वज्ञानमितीरितम् ॥
> प्रज्ञानं ब्रह्म यस्माद्धि तस्माद्ब्रह्मास्म्यहं ततः ॥ २ ॥
> तद्ब्रह्म सर्वसाक्षीति तत्त्वमस्येव तत्त्वतः ॥
> अन्यत्ववारणत्वायाऽयमात्मेत्यपि वर्ण्यते ॥ ३ ॥

इति ॥ १३ ॥

## ऐऔच् ॥ ४ ॥

**ऐ औच् ब्रह्मस्वरूपः सन् जगत्स्वान्तर्गतं ततः ॥**
**इच्छया विस्तरं कर्तुमाविरासीन्महामुनिः ॥ १४ ॥**

स्वात्मभूतस्य परमेश्वरस्य जगत्कारणत्वं कथमित्याशङ्क्याह—ऐ औजिति । ततः स्वान्तर्गतं जगद्विस्तारयितुमिच्छुः ऐ ज्ञानशक्तियुक्त इति अतः पूर्वसूत्रगत एव सः । अकारेकारदीर्घयोगस्यैव ऐकारत्वमेकत्वं च । संप्रज्ञानस्वरूपपरमेश्वरो यः स पूर्वसूत्रगत एव अकारदीर्घस्य उकारदीर्घस्यैव योगे औकारत्वं यः स प्रज्ञानात्मा मायाशबलितः स ऐकारो यः स आईआऊ इत्याविर्भावे उक्तः । उक्तं चेश्वरविमर्शिन्याम्—अकारेकारोकाराणां ह्रस्वदीर्घाणां संयोगात्सर्वसंभूतिरिष्यत इति ॥ इच्छया जगद्विस्तारयितुमुद्युक्त इत्यर्थः । अत्राह—

> प्रणवेन जगद्व्याप्तं मायायामवतिष्ठते ॥

इति ज्ञानोत्तमे ॥ एवं तत्तत्समुदायानां त्रयोदशवर्णोच्छिवादिप्रकृत्यन्तानामुद्भवः । प्रकृतिपुरुषविवेकमुत्तरत्र कथयत्यस्मिन् सूत्रे उपहारत्वेन पठितम् । अत्र ह्रस्वदीर्घप्रभेदाच्चतुर्दशस्वराणामेव संकीर्तनं चतुर्दशभुवनचतुर्दशचक्रचतुर्दशप्रकाराणामिति निष्कर्षः । तदुक्तं शिवगौरीसंवादे महामन्त्रतत्त्वप्रकाशिन्याम्—

> तव मन्त्रं महेशानि मम रूपं त्वमेव हि ॥
> चतुर्दशात्मकं चक्रं स्वरचक्रमितीरितम् ॥
> त्रयोदशात्मकं तुर्यमावयोर्मन्त्रमम्बिके ॥
> उच्छूनकाले बिन्द्वात्मा तस्मादक्षरसंभवः ॥
> बिन्दुस्फोटनमात्रेण वर्णानां च समुद्भवः ॥
> तस्मादाकाशमुख्यानि भूतानि समजायत ॥
> बिन्दुः श्रीचक्रराजस्य परब्रह्मात्मकस्त्विति ॥
> चतुर्दशात्मकः पश्चाच्चक्राकारेण संभवः ॥
> उत्पन्नभुवनान्यत्र चतुर्दश चतुर्दशेति ॥ १४ ॥

## हयवरट् ॥ ५ ॥

**भूतपञ्चकमेतस्माद्धयवरण्महेश्वरात् ॥**
**व्योमवाय्वम्बुवह्न्याख्यभूतान्यासीत्स एव हि ॥ १५ ॥**

तत आत्मनः सकाशादाकाशादिभूतसंभवमाह—भूतपञ्चकमिति । स एवेति । परमेश्वर एवेत्यर्थः ॥ १५ ॥

**हकाराद्व्योमसंज्ञं च यकाराद्वायुरुच्यते ॥**
**रकाराद्वह्निस्तोयं तु वकारादिति सैव वाक् ॥ १६ ॥**

हकारादित्यादि । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इतिश्रुतिः ॥ १६ ॥

## लण् ॥ १६ ॥

**आधारभूतं भूतानामन्नादीनां च कारणम् ॥**
**अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥ १७ ॥**

एतस्मात्परमेश्वराद्भूतपञ्चकमाकाशादिकं प्रपञ्चकारणमासीदित्युक्तम्, तत्राकाशादिभूतचतुष्टयमेवोक्तं न पृथिवीत्याकाङ्क्षायामाह—आधारेति । भूतानां प्राणिजातानामुद्भिज्जस्वेदजजरायुजाण्डजादीनां प्रधानाधारत्वादाधारभूता पृथिवी पुनश्चान्नपानादीनां कारणत्वात्मत्येकत्वेन लणित्युदीरितमित्यर्थः ॥ अन्नाद्रेत इति न्यायात् ॥ १७ ॥

## ञमङणनम् ॥ ७ ॥

**शब्दस्पर्शौ रूपरसगन्धाश्च ञमङणनम् ॥**
**व्योमादीनां गुणा ह्येते जानीयात्सर्ववस्तुषु ॥ १८ ॥**

ततः पृथिव्यादीनां कारणत्वेन स्थितानां तन्मात्राणामुत्पत्तिक्रममाह—शब्देति ॥ व्योमादीनामिति । व्योमादीनां गुणानेककारणादुत्पत्तिक्रमेतान् जानीयात् । सर्ववस्तुष्विति । अत्र केषांचिद्ग्रन्थे अकारादिक्षकारान्ताः पञ्चत्रिंशत्तत्त्वमयाः कतिचित्तन्त्रराजादिग्रन्थे पञ्चभूतक्रमेण लिपिप्रकारेण । एवमन्यत्र बीजनिर्णयभेदा बहवः सन्ति अत्र तु तन्त्रोक्तप्रकारेणोद्घाटितम् ।

> 'पञ्चवर्गेष्वन्तिमार्णाः शब्दस्पर्शादयो गुणाः ॥'

इति वचनात् । सर्वजगत्कारणभूतस्य वर्णरूपपुरुषस्य सर्वेषां चेति व्योमादिगुणा इत्यर्थः ॥

## झभञ् ॥ ८ ॥

**वाक्पाणी च झभञासीद्विराड्रूपचिदात्मनः ॥**
**सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते ॥**
**वर्गाणां तुर्यवर्णा ये कर्मेन्द्रियमया हि ते ॥ १९ ॥**

## घढधष् ॥ ९ ॥

**घढधष् सर्वभूतानां पादपायू उपस्थकः ॥**
**कर्मेन्द्रियगणा ह्येते जाता हि परमार्थतः ॥ २० ॥**

ततः सूत्राभ्यां कर्मेन्द्रियवर्गमुद्घाटयति—वाक्पाणीचेति । विराड्रूपस्य शिवस्य प्राणिजातस्य च झकारभकारौ स्थावरादिषु विना विराड्रूपं विज्ञेयमित्यर्थः ॥ अथ क्रमप्राप्तं पादादिकमाह—घढधषिति । परमार्थत इति । परमशिवसकाशात् इमे कर्मेन्द्रियगणाः सर्वजन्तूनां पादपायूपस्था (?) घढधवर्णा जाता इत्यर्थः ॥

## जबगडदश् ॥ १० ॥

**श्रोत्रत्वङ्नयनघ्राणजिह्वा धीन्द्रियपञ्चकम् ॥**
**सर्वेषामपि जन्तूनामीरितं जबगडदश् ॥ २१ ॥**

अथ क्रमप्राप्तं ज्ञानेन्द्रियसम्भवमाह—श्रोत्रेति ।

> "वर्गाणां मध्यवर्णोत्थो ज्ञानेन्द्रियगणः स्मृतः" ॥

इति वचनशासनाज्जबगडदवर्णसमूहो ज्ञानेन्द्रियगण इति तस्य सर्वत्रस्थस्यैव ज्ञानेन्द्रियगणः समुत्पन्न इति सर्वत्र सर्वेषां प्राणिजातानामेते वर्णा ज्ञानेन्द्रियाणां जनका इति वा ज्ञातव्यमित्यर्थः ॥ २२ ॥

---

१ संयोगजनकः.

२ जगत्सृष्टिप्रमयं इत्यर्थः ।

ब्रह्मबोधनार्थं च । अनेन सकलवेदाध्ययनेन यत् फलं तदक्षरसमाम्नायज्ञानेन सूचितम् । तद्वक्ष्यति—सर्ववेदेत्यादि ॥ **सोयमित्यादि** भाष्यग्रन्थश्चैतच्छ्लोकपूर्वार्धस्यैव व्याख्यानपरः । तत्र **वर्णज्ञानमित्यस्य** व्याख्या **सोयमक्षरसमाम्नाय इति । वाग्विषय** इत्यस्य व्याख्या **वाक्समाम्नाय** इति सर्ववाग्रूपत्वात् । तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां पुष्पितः । **फलितः** तदर्थभावनया जनिततत्त्वज्ञानरूपफलः । **चन्द्रतारकवत् प्रतिमण्डित** इत्यनेनास्यानादित्वं सूचयति । तादृशोयं ब्रह्मराशिर्वेदितव्यः । बोध्यबोधकयोरभेदात् ॥ **सर्ववेदेति** । सर्ववेदाध्ययनजन्यपुण्यफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञानेऽध्ययनमात्रे भवति । इदमेव पूर्वं पुष्पितत्वम् । तादृशपुत्रवत्त्वेन च मातापित्रोः स्वर्गे पूजा भवति । यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति । **इष्टबुद्ध्यर्थमित्यादि** तु प्राग्व्याख्यातत्वान्न व्याख्यातमित्याहुः ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥



# प्रथमाध्याये प्रथमपादे तृतीयाह्निकम् ।

## अथ पाणिनीयं विधिशेषप्रकरणम् ।

(१—वृद्धिसंज्ञासूत्रम् १ । १ । ३ । १ ॥)

## वृद्धिरादैच् (१ । १ । १) ॥

**(उद्द्योतः) वृद्धिरादैच्** ॥ द्विपदं सूत्रं कृतमनयोः साधुत्वमिति भाष्यदर्शनात् । अन्यथोद्देश्यानेकत्वाद् वृद्धिशब्दस्यावृत्तिर्वाक्यार्थबोधाय कार्या स्यात् । द्वन्द्वे तु समाहारस्यैकस्योद्देश्यस्य शब्दतः संभवात् तां विनापि सिध्यति । न च समाहारे टच्प्रसङ्गः, समासान्तविधेरनित्यत्वात् । **प्रतेरंश्वादय** इति सूत्रेश्वादिगणे राजन्शब्दपाठाल्लिङ्गात् । अन्यथा राजाह इति टचा सिद्धे किं तेन ॥ यद्वा पदत्रयं पस्पशायां भाष्ये वृद्धिः, आद्, ऐजिति पदविभागदर्शनात् । वृद्धिशब्दस्त्वावृत्त्या योज्यः । अत्रे पक्षेऽनयोरिति भाष्यं खण्डयोरित्यर्थकम् ॥

**खफछठथचटतव्** ॥ ११ ॥

प्राणादिपञ्चकं चैव मनो बुद्धिरहंकृतिः ॥
बभूव कारणत्वेन खफछठथचटतव् ॥ २२ ॥
वर्गद्वितीयवर्णोत्थाः प्राणाद्याः पञ्च वायवः ॥
मध्यवर्गत्रयाज्जाता अन्तःकरणवृत्तयः ॥ २३ ॥

ततः प्राणादिपञ्चकमनोबुद्ध्यहंकाराः समुन्मील्यन्ते—प्राणादीति ॥ २२ ॥ वर्गेति । एतैरष्टवर्गैः प्राणादिपञ्चकं मनोबुद्ध्यहंकृतयश्च जगतां कारणत्वेन संभूता इत्यर्थः ॥ २३ ॥

**कपय्** ॥ १२ ॥

प्रकृतिं पुरुषं चैव सर्वेषामेव सम्मतम् ॥
सम्भूतमिति विज्ञेयं कपय् स्यादिति निश्चितम् ॥ २४ ॥

ततः सर्वप्राणिकारणत्वेनाद्यन्तवर्णद्वयाद्यक्षरग्रहणेन सम्पुटीभावं प्रकृतिपुरुषाभ्यां प्रकाशयति—प्रकृतिमिति । ककारपकारजातौ प्रकृतिपुरुषावित्यर्थः २४

**शषसर्** ॥ १३ ॥

सत्त्वं रजस्तम इति गुणानां त्रितयं पुरा ॥
समाश्रित्य महादेवः शषसर् क्रीडति प्रभुः ॥ २५ ॥
शकाराद्राजसोद्भूतिः षकारात्तामसोद्भवः ॥
सकारात्सत्त्वसंभूतिरिति त्रिगुणसंभवः ॥ २६ ॥

तत्रावस्थात्रयं निरूपयति—सत्त्वमित्यादि । पुरा सृष्टेः प्राक् शषसवर्णसंभूतान्सत्त्वरजस्तमोगुणानाश्रित्य परमशिवः सर्वभूतेषु क्रीडतीत्यर्थः २५ ॥ २६ ॥

**हल्** ॥ १४ ॥

तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः ॥
अहमात्मा परो हल् स्यामिति शंभुस्तिरोदधे ॥ २७ ॥

इति नन्दिकेश्वरकृता काशिका समाप्ता ॥

सर्वतत्त्वजनकः स्वयं तत्त्वातीत इति ज्ञापनार्थमेतत्सूत्रं चकारेत्याह—तत्त्वातीत इति । सर्वानुग्रहः साक्षी तत्त्वातीतो हल् स्यामिति ढक्कानिनादव्याजेन सर्वेषां मुनिजनानां तत्त्वमुपदिशन् तिरोदधे इत्यर्थः ॥ हकारः शिववर्णः स्यादिति शैवागमस्थितिरिति शिवम् ॥ २७ ॥

इति आदिसूत्रनन्दिकेश्वरकाशिकायास्तत्त्वविमर्शिन्युपमन्युकृता सम्पूर्णा ॥

---

१ अस्मिन्विधिशेषप्रकरणे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'लुक्तद्धितलुकि' इत्यादिविधिसूत्राणां पदलाघवाय करणेपि महाग्रामादिवन्न प्रकरणाख्याहानिः ॥ दाधिमथाः ॥

२ पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥
इत्यभियुक्तोक्तेरादौ पदच्छेदमाह—द्विपदमिति ॥ इदमिति शेषः ॥ छाया ॥

३ हरदत्तानुरोधेनाह—यद्वेति ॥ छाया ॥

४ नन्वत्र पक्षे वृद्धिशब्दस्याकारेणैव संबन्धे निराकाङ्क्षत्वेनैचासंबन्धो न स्यात् । नचावृत्तिर्मानाभावात् चाद्यभावाच्च तदनन्वयापत्त्यावृत्तिकल्पनायामपि वाक्यभेदापत्तेश्चेति चेत् । न, पौरुषेयवाक्ये तस्यादूषकत्वात् । वेदे त्वपूर्वभेदकल्पनापत्त्या स दूषकः । तद्विषयक एव 'संभवत्येक—' इति घण्टाघोष इत्याशयेनाह—वृद्धीति ॥ छाया ॥

५ संभवतीतिरीत्योक्तभाष्यविरोधं परिहरति—अत्रेति ॥ खण्डयोरिति । उद्देश्यविधेयरूपभागयोरित्यर्थः । 'द्वयोर्हि प्र—' इत्येतत्र

(असाधुत्वनिराकरणाधिकरणम्)

(आक्षेपभाष्यम्)

**कुत्वं[1] कस्मान्न भवति "चोः कुः, पदस्य" इति?॥**

(प्रदीपः) **वृद्धिरादैच्** ॥ १ ॥ **कुत्वं कस्मान्न भवतीति** । अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां लौकिकत्वादादैच्छब्दस्यानुकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति प्रश्नः । तत्र कुशब्दः पञ्चसु वर्णेष्वासक्तरूपो वाचकत्वेन नियुक्त इति कुशब्दे वा शब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः ॥

(उद्द्योतः) असाधुशब्दोच्चारणे पाणिनेरश्रद्धेयतापत्त्यौ[2] तदुक्तपदानां साधुत्वं[3] विचारयँति[4]—भाष्ये **कुत्वमित्यादि** । ननु ऐच्छब्दस्यादिरन्त्येनेत्यनेनँ[5] कृत्रिमतया लौकिकवैदिकवहिर्भूतत्वेन कथं सुबादिशास्त्रप्राप्तिः । लौकिकत्वं च लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वमत आह—**अनेकेति** ॥ **नित्यत्वाच्चेति** । चो हेतौ । यतः शब्दार्थसंवन्धस्य नित्यत्वात्सर्वसंज्ञानां नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः ॥ लोकेऽर्थान्तरेऽप्रसिद्धानामपि संज्ञानां नित्यत्वमिति वोधयितुं सर्वशब्दः ॥ नन्वेवं **वृद्धिरादैजि**त्यादीनां वैयर्थ्यमत आह—**शक्तीति** । **शक्त्यवच्छेद**स्तत्संकोचः । **विनियोगो** विशेषे नियमः । अभिमतातिरिक्तार्थान्तरव्युदासाय च सः ॥ परिसंख्यायां चात्र शास्त्रे प्रायेण नियमव्यवहार इति वोध्यम् । यद्वा—**शक्त्यवच्छेदः** शक्तिनिश्चयः 'शब्दार्थस्यानवच्छेदे' इत्यादाववच्छेदशब्दस्य तदर्थकत्वदर्शनात् । फलरूपे हेतौ तृतीया ॥ **विनियोगः** उपदेशः । शक्तिनिश्चयफलकोपदेशादित्यर्थः । एवंच तत्सङ्केतकरणरूपप्रकरणादर्थान्तराप्रतीतिरिति वोध्यम् ॥ इदमेव युक्तं, सर्वार्थवाचकत्वेपि सङ्केतरूपत्वेनाज्ञातशक्तिवोधकतया विधित्वसंभवेनैषां नियमार्थत्वासंभवात् ॥ नन्वेवं लौकिकार्थवोधो न स्यादत उक्तम्—**अनेकशक्तेरिति** । स्वशास्त्रे एव प्रकरणादन्यार्थावोध इति भावः । अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः । अन्त्ये **सर्वनाम्नो वृत्तिमात्र** इति पुंवत्त्वम् । **कोपधप्रतिषेधे तद्धितवुग्रहणाद्वा स्त्रिया** इति पुंवत्त्वम् । आश्रयभेदादेव शक्तिभेद इति मते आद्यः[6] । निरूपकभेदाद्भेदे द्वितीयः । नित्ये शब्दार्थसंवन्धे पुरुषव्यापारात्प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्या कर्तुमतः सर्वे सर्वार्थवाचका इत्यभ्युपगमादनेकशक्तित्वावसायः । तादात्म्यमेव च शब्दार्थयोः शक्तिः । अत्र पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलः । **'अन्यायोऽनेकार्थत्वमिति'** त्वश्रद्धेयमेवेति निरूपितं मञ्जूषायाम् । अत्र लौकिकशब्दत्वं साध्यम् । शास्त्रीयसंज्ञात्वसमानाधिकरणं नित्यत्वं हेतुः । अतो न वैदिकेषु व्यभिचारः । **सर्वसंज्ञाना**मिति वदता सूचितमिदम् ॥ **अपूर्वाः संज्ञाः क्रियन्त** इति पक्षेपि लौकिकत्वं साधयति—**अनुकरणेति** । अयमपि लौकिकत्वे हेतुः **आदिरन्त्येने**त्यनेन संज्ञात्वेन विनियुक्तस्यैच्शब्दस्यानुकरणं सूत्रे, लँक्षणया[7] तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्यवशाच्छाब्दवोधविषयतेति वोध्यम् । अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः ॥ यत्त्वैजित्याद्यन्तावयवद्वारा समुदायानुकँरणमिति[8] । तन्न । तथासत्यादिरन्त्येनेति सूत्रवैयर्थ्यापत्तेः । वृँद्धिशब्दादेः[9] शास्त्रविषयताया एवमप्यनुपपादनाच्च ॥ नन्वनुकरणत्वाननुभवः । किं च **त्रयी शब्दानां प्रवृत्ति**रिति पक्षे उक्तहेतुद्वयस्याप्यभावोऽत आह—**जातीति** । वैयाकरणव्यवहाराच्चँ[10] तत्सिद्धिरिति भावः ॥ अत्र पक्षे जातिवोधार्थमेव संज्ञासूत्राणीति वोध्यम् । अत्रापि पक्षे लौकिकत्वं संज्ञापक्षवदेव वोध्यम् ॥ **हरदत्तस्तु**—वृद्धिशब्दो वृद्धेर्भावे क्तिन्नन्तः । अभेदोपचाराच्च वृद्धियुक्तादैक्षु वृत्तिः । लक्षणयैव सिद्धे सूत्रं नियमार्थं वृद्धियुक्तप्लुतदीर्घैकारादीनां वोधो माभूदिति त्रयीपक्षे सूत्रार्थमाह ॥ तन्न । **अदेङ् गुण** इत्यादावसंभवात्[11] ॥ ननु

नीलोत्पलादिसाधारणम् । प्रकृनपरत्वेपि चोक्ताभिप्रायम् । अतएव 'नचादैच्छब्दः' इत्यत्राग्रे शब्दशब्दोपादानम् । अन्यथा 'आदैच्पदम्' इत्येवावक्ष्यत् । शब्दत्वं चैकानेकपदसाधारणम् । नच पदयोरेव विशेषणविशेष्यभावः । महावाक्येऽवान्तरवाक्यानामपि तस्य दर्शनात् । अहरह इतिवच्चास्यानुपयोगात् तपरत्वमुच्चारणसमवाय्येव निमित्तं नान्वयपर्यवसायीति तस्यैजर्थत्वमपि निर्विघ्नम् । अन्यथा 'सहि वहोः-' इत्यत्र वर्णग्रहणानर्थक्यापत्तिः अस्य ,ओद्भवतीत्यन्वयकाले तस्य तत्त्वाभावेन तत्कालग्रहणाप्रसङ्गात् । तस्माद्युक्तमेतदपि ॥ छाया ॥

१ कस्मादित्यत्र हेतोरिति शेषः । 'निमित्तकारण—'इति पञ्चमी ॥ छाया

२ पत्त्येति । तथाच शास्त्रस्याप्रामाण्यापत्तिरिति भावः ॥ छाया ॥

३ साधुत्वमिति । तावदिति शेषः । तस्यैव प्रथमोपस्थितत्वादिति भावः । एतेनैतद्विचारादेः सार्वत्रिकत्वं ध्वनितम् । अतएवान्यत्र पुनर्न विचारो युक्तितौल्यात् ॥ छाया ॥

४ विचारयतीति । भाष्यकृदिति शेषः । एतेन सवार्तिकसूत्रव्याख्यार्थं प्रवृत्तस्य भगवतो मुख्यतात्पर्यं सूत्रव्याख्यान एवेति ध्वनयितुमेवैतद्विचारारम्भः । तद्विचारे तज्ज्ञानस्य कारणत्वादिति सूचितम् ॥ छाया ॥

५ त्यनेनेति । संकेतितत्वेनेति शेषः ॥ छाया ॥

६ आद्य इति । विग्रह इति शेषः ॥ छाया ॥ Bangal Asiatic Society मुद्रितपुस्तकेऽपि नपुंसकपाठः । परंतु द्वितीय इत्यग्रिमपुंलिङ्गनिर्देशानुरोधेनात्रापि तस्यैवौचित्यात् ॥ दाधिमथाः ॥

७ नन्वेवमनुकार्योपस्थितावप्येकारादेर्वोधो न स्यात् 'उच्चारितः शब्द एव' इति भाष्योक्तेरतआह—लक्षणयेति । तात्पर्येति । तज्ज्ञानस्य वोधे कारणत्वादिति भावः ॥ छाया ॥

८ अनुकरणमितीति । अयं हि तेषां भावः—आद्यन्तावयवानुकरणद्वा र ऐजित्यैऔजिति सूत्रस्यानुकरणम् । संज्ञाविधिकाले 'लोपश्च वलवत्तरः' इति न्यायेन चस्यासंनिधेरैकारौकारयोरेव सा प्रवर्तत इति ॥ छाया ॥

९ ननु चात्र पक्षे आदिरन्त्येनेति व्यर्थं हस्तचेष्टादेरवाचकस्यापि तज्ज्ञकत्वेन यथा संकेतो भरतशास्त्रे तथेहाप्यवाचकत्वेप्यणादीनामर्थद्योतकत्वेनेह शास्त्रे व्यवहाराय तेन संकेतः क्रियते । अन्यथा त्रयीपक्षेऽक्षरसमाम्नायसंज्ञासूत्रतदुपजीविशास्त्राणामानर्थक्यं प्रसज्येतेत्यत आह—वृद्धीति ॥ छाया ॥

१० च तत्सिद्धिरिति । वृद्धित्वादिजातिसिद्धिश्चेत्यर्थः ॥ वैशेषिकपरिभाषया द्रव्यत्वादिजातिसिद्धिवदिति भावः ॥ चेनेदं सूचितम्—सिद्धान्ते विद्यमानब्रह्मसत्ताया एव जातित्वस्वीकारादत्रापि तत्संभव इति ॥ छाया ॥

११ असंभवादिति । दीर्घैकारादिपदेन प्लुतस्य ग्रहणे सिद्धे तद्ग्रहणस्य वैयर्थ्याच्च ॥ छाया ॥

कुत्वमित्यत्र संज्ञात्वपक्षे ककारादिपञ्चकगतप्रवृत्तिनिमित्ताभावा[1]द्भावप्रत्ययोऽनुपपन्नः । किं चात्र ककारस्य प्राप्तिर्न तु कुवृत्ति[2]धर्मस्येति कुत्वमित्यसङ्गतमत आह—तत्रेति । आसक्तरूपः संवद्धस्वरूपः । एवंच कुशब्दः (?) कुशब्दवत्ककारादिपु शक्त इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम् । संवन्धश्चानादिव्यवहारसिद्धतादात्म्यम् । तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य ग्रहे वाधकाभावात् ॥ केचित्तु शब्दस्य स्वरूपं कुशब्दत्वं सामान्यं तत्कादिष्वारोपितं प्रवृत्तिनिमित्तं तद्व्यक्तिश्च वाच्चिकेत्याहुः ॥ तेन च कुत्वशब्देन स्वार्थाश्रयः ककारो लक्ष्यते इति ककारः कस्मान्नेति चोद्यपर्यवसानम् ॥ व[3]स्तुतः कुत्वकुपदयोर्भत्वभसंज्ञापदयोश्च पर्यायतेति ऋलृक् सूत्रे निरूपितमिति न कश्चिद्दोपः ॥

( समाधानभाष्यम् )

**भत्वात्[4] ॥**

( आक्षेपभाष्यम् )

**कथं[5] भसंज्ञा ? ॥**

( समाधानभाष्यम् )

**"अयस्मयादीनि च्छन्दसि" इति ॥**

( समाधानबाधकभाष्यम् )

**छन्दसीत्युच्यते, न चेदं छन्द[6]ः ॥**

( समाधानसाधकभाष्यम् )

**छन्दोवत्सूत्राणि भवन्ति ॥**

(प्रदीपः) **छन्दोवदिति** । न वैशेषिकादिसूत्राणि, अपि त्वङ्गव्याकरणसूत्राण्येव । इष्टिश्चेयम्—**छन्दोवदिति** ॥

(उद्द्योतः) **अङ्गत्वात्** । पदपदार्थवोधनद्वारा वेदोपकारकत्वात् । मुखं व्याकरणमित्यादिनाङ्गत्वनिरूपणाच्च । प्रधानं च षट्स्वङ्गेषु व्याकरणमिति पस्पशायां भाष्योक्तेश्च ॥ अस्यामिष्टौ[7] नार्षत्वं[8] प्रयोजकं, नैषेष्टिरस्ति 'छन्दोवत्कवयः कुर्वन्ती ति यूस्त्र्याख्याविति सूत्रे भाष्योक्तेः । तस्मादङ्गत्वमेव प्रयोजकमिति भावः ॥ ननु छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरत आह—**इष्टिरिति[10]** । तथा च भाष्य[11]कारीयातिदेशात्सूत्रेषु च्छन्दःकार्यप्रवृत्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**यदि भसंज्ञा, "वृद्धिरादैजदेङ् गुणः" इति जश्त्वमपि न प्राप्नोति ॥**

(उद्द्योतः) भाष्ये जश्त्वमपीति । संहितया पाठे इत्यर्थः ॥

---

१ निमित्ताभावादिति । अनुमतस्य तस्य जात्यादिरूपस्याभावात् । न न कत्वाद्येव तत् । अननुगतत्वादक्षादिवन्नानार्थतापत्तेः चोः कुरित्यादावावृत्तिप्रसङ्गात् । तत्र युगपदन्वयवोधेऽप्यन्नानन्वयाच्च । नहि चस्य स्थाने कत्वाद्यापादनं युक्तम् । एतेन कुत्वं नाम कुशब्दनिष्ठा जातिरित्यपि परास्तमिति भावः ॥ छाया ॥

२ धर्मस्येति । स च यदि वाचककुशब्दनिष्ठस्तर्हि तस्य वाच्यावृत्तित्वेन तदर्थत्वासंभवः । अथ चोः कुरित्यादिस्थकुशब्दानुकरणेनानुकार्यनिष्ठसामान्यं तदर्थस्तर्हि तच्छब्दस्वरूपं तद्गता जातिर्वा निर्दिश्येत न कादिस्तद्बोध्य इति भावः ॥ छाया ॥

३ एकव्यक्तिसंनिवेशितयदृच्छाशब्दस्थले गतिद्वयम्—आनन्त्यव्यभिचारयोरभावेन तत्रातिरिक्तप्रवृत्तिनिमित्ताभावेपि शक्यस्यैवार्थस्य विषयताद्वयेन भानम्, तदुत्तरत्वादेः प्रकारत्वावच्छिन्नः स एवार्थः । यद्वा शब्दपराद्वाच्येर्थे एव त्वादिरिति ॥ एवं च कुत्वमित्यत्राद्यपक्षवद्द्वितीयपक्षेपि निर्वाहः । कादीनां कादीनामेकत्वमिति मते तेषु शक्तिस्ततो डित्थादिपदादिव शक्यार्थे एव त्वादिरिति कुत्वकुशब्दयोः पर्यायता । तेषामनेकत्वमिति मते तु तत्तज्जात्युपलक्षितेषु तेषु सा । टिंबुभादीनां तु शक्यानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तम् । तदेव च तदुत्तरत्वाद्यर्थः । भत्वादिपदैर्भसंज्ञैवोच्यते । तदाह—वस्तुत इति ॥ त्रयीपक्षे तु कुरित्यनुगतप्रीतेः कादिनिष्ठं कुत्वं जातिर्वाच्यगतं कत्वादि वा तत् । तदेव च तदर्थः । तदापि जात्या व्यक्त्याक्षेपाद्योग्यतया ककारप्रश्ने एव पर्यवसानम् ॥ छाया ॥

४ परिहरति—भत्वादिति । 'विभाषा गुणे' इति पञ्चमी । तया पदत्वस्य वाधात् ॥ छाया ॥

५ ननु यचीत्यस्य निमित्ताभावादप्रवृत्तिः 'अयस्मया—' इत्यस्य त्वच्छन्दस्त्वात् । तथाच सा दुर्लभेत्याशयेनाशङ्कते—कथमिति ॥ छाया ॥

६ छन्द इति । छन्दःसाधने छन्दस्त्वाप्रसिद्धेरिति भावः ॥ छाया ॥

७ इष्टाविति । एतत्प्रवृत्तिविषय इत्यर्थः ॥ छाया ॥

८ पृषोदरादिसूत्रे भाष्ये तु—आर्षत्वमेव विनिगमकमुक्तमिति दाधि० ॥

९ सूत्रे इति । जातावेकवचनम् ॥ कथमिति । मुख्यच्छन्दःसु साफल्यात्तदुपकारकत्वेनोपचरितच्छन्दस्त्वकेषु सूत्रेषु तेन न्यायेनाप्रवृत्तेः । तथा च तत्कार्यभाक्त्वयोगेन सूत्राणां छन्दस्तुल्यता दुर्वचेति भावः ॥ छाया ॥

१० इष्टिरितीति । यूस्त्र्याख्याविति सूत्रस्थकैयटस्याप्यत्रैव तात्पर्यमिति प्रतिपादितं तत्रैवोद्द्योते । एतेन तत्र तथा वदतः कैयटस्य नेयमिष्टिरभिमतेति वृद्धिसंज्ञासूत्रस्थस्वग्रन्थविरोधः । किंच यदि निर्देशान्यथानुपपत्तिः शरणं तर्हि तत एव कुत्वाभावोस्तु । किमनेन गणपाठकल्पनया छन्दस्त्वोपचारेण च । किंच गौणमुख्यन्यायवाधज्ञापने गौरवम् । इति कृष्णोक्तमपास्तम् ॥ यत्तु तत्सूत्रे प्रवर्तकेनोक्तम्—नेदमपूर्वं वचनं किंतु च्छन्दःशब्दशक्तिरेव प्रदर्श्यते—इति । तन्न, तादर्थ्यादिति कैयटविरोधात् । नहि शक्यार्थो गौणो भवति । तस्मादिष्टिरेवेत्येव न्यायः । एतेन 'इजादेश्च' इति सजश्त्वकेनाकुत्वकनिर्देशेनैव ज्ञापितम् तत्र सूत्रशब्दः सूत्राधानाजादिसंज्ञानां भाष्यवार्तिकयोश्चोपलक्षणम् । तेनादैचेत्याद्यस्मदादिप्रयोगेपि कुत्वाधकरणे दोषो न । ईदृशव्याख्याने मूलं तु 'पदत्वाज्जश्त्वं' 'आदैज्मात्रस्य' इत्यादिभाष्यप्रयोगः 'अजुपलक्षणार्थम्' इत्याद्याधुनिकशिष्टप्रयोगश्च ॥ एतेन कैयटोक्तं चिन्त्यम् उक्तभाष्यादिप्रयोगाणामसाधुतापत्तेः ज्ञापकसिद्धस्येष्टित्वकथनानौचित्याच्चेति रत्नोक्तमपास्तम् । यूस्त्र्याख्याति सूत्रे 'नह्येषेष्टिरस्ति' इति भाष्योक्त्या पूर्वस्यास्तत्त्वस्याभिमतत्वेन तद्विरोधापत्तेः । अत्र प्रथमसूत्रे विचारस्य सर्वत्र निर्वाहस्य सत्त्वेनेतः पूर्वमज्ञापितत्वेन तथाभिमतत्वे कुर्वन्तीत्यग्रे शङ्कापूर्वकं तत्कथनौचित्येन तदर्थमूरीकृत्य शङ्कान्तरकरणानौचित्येन च तथान्येनेष्टत्वात् सूत्रशब्देन भाष्यवार्तिकग्रहणेप्यन्येषां ग्रहणे मानाभावेन तेषामसाधुत्वे इष्टापत्तेः । तत्प्रयोगस्य ज्ञापकत्वेऽतिप्रसङ्गात् । तेषां साधुत्व आग्रहे प्रोक्तभाष्यादिप्रयोगाणामेव तत्त्वसंभवादुत्तरभाष्यस्य निर्दलपाताच्चेति दिक् ॥ तदेतत्सर्वं हृदि निधायाह—तथाचेति ॥ तस्येष्टित्वे चेत्यर्थः ॥ छाया ॥ कुत्रापि प्रत्याहारे कुत्वं नैव भवतीति तु न नियमः 'अचोऽक्षु' इत्यादिभाष्ये एव कुत्वदर्शनात् ॥ इति प्राश्चः ॥ इत्संज्ञकचकारेषु कुत्रापि कुत्वं नैव भवतीति 'स्यसिच्सीयुट्' 'भकच् स्तरौ' इत्यादिप्रयोगोपपत्तिरिति दाधिमथाः ॥

११ भाष्यकारीयेति "छन्दोवत्सूत्राणि" इति शुक्लयजुःप्रातिशाख्यमपि ॥

---

१ यद्यपि च्छायायां 'भत्वाज्जश्त्वं न' इत्येवं पाठ उपलभ्यते । तथापि तादृशपाठस्य 'ऋफता' इत्येतद्विषयकत्वेन प्रकृतानुपयुक्तत्वात्प्रकृतोपयोगी पाठोऽस्माभिः स्थापितः । इति क्षन्तव्यम् ॥

( समाधानभाष्यम् )

**उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा 'स सुष्टुभा स ऋकता गणेन' पदत्वात्कुत्वम्, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वम्, भत्वात्कुत्वं न भविष्यति ॥**

(उद्द्योतः) उभयसंज्ञान्यपीति । उभे संज्ञे येषामिति विग्रहः । संज्ञाद्वयहेतुककार्यदर्शनेन तद्वत्त्वकल्पनेति भावः ॥

( इत्यसाधुत्वनिराकरणम् ॥ )

( अथ तद्भावितपक्षनिराकरणाधिकरणम् । )

( उभयपक्षस्वरूप-तद्भावितपक्षदूषणभाष्यम् )

**किं पुनरिदं तद्भावितग्रहणम्—वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते, तेषां ग्रहणम्, आहोस्विदादैज्मात्रस्य ? ॥**

**किं चातः ? ॥**

**यदि तद्भावितग्रहणम्, शालीयो मालीय इति वृद्धलक्षणश्छो न प्राप्नोति । आम्रमयम्, शालमयम्, वृद्धिलक्षणो मयण्न प्राप्नोति । आम्रगुप्तायनिः, शालगुप्तायनिः, वृद्धलक्षणः फिञ् न प्राप्नोति ॥**

(प्रदीपः) किं पुनरिति । उभयथा शास्त्रे दर्शनात्पक्षद्वयेऽपि दोषसंभवात्प्रश्नः ॥

(उद्द्योतः) ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह—उभयथेति । घुगादिसंज्ञासु तद्भावितपक्षस्य, लोपसंज्ञायामदर्शनमात्रस्येति भावः ॥ ननु टिघुभादिसंज्ञास्वतद्भावितानामेव ग्रहणं दृश्यते, इति सोपि पक्षः शङ्कितुमुचित इति चेत् ॥ न । तत्र हि तद्भावितासंभवादतद्भावितानामेव ग्रहणम्, न च तथा प्रकृते इति उभयथेत्युक्तम् । वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणम् । वृद्धिशब्दैकत्वे द्वितीयः पक्ष इति भावः॥ भाष्ये वृद्धिलक्षणो मयडिति । नित्यं वृद्धशरादिभ्य इत्यस्य वृद्धसंज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम् ॥ 'वृद्धलक्षण' इति पाठे एषां वृद्धित्वाभावेन समुदायानां वृद्धत्वाभावादित्यर्थः ॥ फिञिति । उदीचां वृद्धादगोत्रादिति । न च प्राचामवृद्धादिति फिनाप्येतत्सिद्धं, पुंवद्भावनिषेधोऽप्याम्रगुप्तायनीभार्य इत्यादौ जातेश्चेति सिद्ध इति वाच्यम् । आम्रगुप्तायनेरपत्यं युवेत्यर्थेऽणो ण्यक्षत्रियार्षञित इति लुकि आम्रगुप्तायनिरित्येव रूपं पितरि पुत्रे चेष्यते, फिनि तु ञितः परत्वाभावान्न सिध्येत् । न चाब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति तत्सिद्धिः । ब्राह्मणगोत्रे तदप्रवृत्तेः ॥

( आदैज्मात्रग्रहणे दूषणभाष्यम् )

**अथादैज्मात्रस्य ग्रहणम्, सर्वो भासः सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोति ॥ इह च तावती भार्या यस्य तावद्भार्यः यावद्भार्यः "वृद्धिनिमित्तस्य-" इति पुंवद्भावप्रतिषेधः प्राप्नोति ॥**

(उद्द्योतः) भाष्ये एष विधिरिति । पूर्वपदान्तोदात्तत्वमित्यर्थः ॥ तावद्भार्ये आसर्वनाम्न इत्यात्वस्य वतुंनिमित्तमिति पुंवत्त्वनिषेधप्राप्तिः ॥

( सिद्धान्तभाष्यम् )

**अस्तु तर्हि—आदैज्मात्रस्य ग्रहणम् ॥**

(उद्द्योतः) यदि प्रथमपक्षे दोषो दुरुद्धरोऽस्तु तर्हीत्यन्वयः ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्-सर्वो भासः सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोतीति ॥**

( समाधानभाष्यम् )

**नैष दोषः । नैवं विज्ञायते—उत्तरपदस्य वृद्धिरुत्तरपदवृद्धिरुत्तरपदवृद्धाविति ॥**

**कथं तर्हि ? ॥**

**"उत्तरपदस्य" इत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपदे, इत्येवमेतद्विज्ञायते ॥ अवश्यं चैतदेवं विज्ञेयम् । तद्भावितग्रहणे सत्यपीह प्रसज्येत —सर्वः कारकः सर्वकारक इति ॥**

(प्रदीपः) उत्तरपदस्येत्येवमिति । तत्र हि वृद्धौ सर्वं चेत्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याभावात्सामर्थ्याद्वृद्धिमदुत्तरपदं ग्रहीष्यत इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदाधिकारमवगमयति ॥

(उद्द्योतः) तद्वत्युत्तरपदे इति । समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायोत्तरपदस्येत्येवं वृद्धिर्यस्मिन्निति बहुव्रीहिरिति भावः ॥ तत्राधिकारलक्षणायां बीजमाह—तत्र हीति ॥ न च आ अवतीति औः सर्वस्य औः सर्वौरित्यादौ वृद्धिरूपोत्तरपदसंभवः । न चैकादेशे व्यपवर्गाभावः । नेन्द्रस्येति निषेधेन

---

१ दृश्यन्ते इत्यनेन दृष्टानुविधिश्छन्दसि भवतीति सूचितम् । तेन विपर्ययशङ्का निरस्ता ॥ छाया ॥

२ तद्भावितेति । तेन वृद्धिशब्देन भावितानां विहितानां ग्रहणमित्यर्थः ॥ छाया ॥

३ मात्रेति । सामान्येन विधानादिति भावः ॥ छाया ॥

४ चस्त्वर्थे प्रकृत इत्यग्रे योज्यः ॥ छाया ॥

५ तत्रेति । सर्वभासादौ दोषाद्घुगादिशब्दवत् । तेनैकः संज्ञिविशेषणमपरः संज्ञापर इति भावः ॥ छाया ॥

६ सर्वो भास इति । इदं विग्रहप्रदर्शनं तु बहुव्रीहित्वशङ्कानिरासाय । तत्रहि पूर्वपदप्रकृतिस्वरेण भाव्यमेवान्तोदात्तेन ॥ आद्यपक्षे तु समासान्तोदात्तत्वं भवति ॥ छाया ॥

७ आवृत्तौ. मानाभावात्तत्फलस्यान्यथासिद्धत्वात्सूत्रार्थाज्ञानेन तत्र पक्षे दोषोक्तेश्च द्वितीयपक्षं स्वीकरोति सिद्धान्ती—अस्तुतर्हीति ॥ छाया ॥

८ नैवमिति । यत इत्यादिः । यत एतत्सूत्रस्थं निमित्तमेवमर्थकं न विज्ञायते इत्यर्थः ॥ छाया ॥

९ बहुव्रीहिरिति । व्यधिकरणबहुव्रीहेरन्यत्रावश्यकतयात्रापि लाघवात्तदङ्गीकारादिति भावः ॥ यद्वा अधिकारानुकरणप्रथमान्तोत्तरपदशब्देनाभेदोपचारेण वृद्धेर्विशेषणान्न व्यधिकरणबहुव्रीहित्वशङ्का ॥ छाया ॥

पूर्वोत्तरपदसंवन्धिकार्यस्यैकादेशात्प्राक् प्रवृत्तिस्वीकारात् । तथा च सर्वशब्दान्तोदात्तत्वे शेषनिघातेन औकारस्यानुदात्तत्वे एकादेशस्य स्वरितो वानुदात्ते इति पाक्षिकः स्वरितः स्यादिति वाच्यम् ॥ तादृशानामभिधाने दृढतरमानाभावात्[1] । स्वरितत्वाद्वाधिकारलाभ इति बोध्यम् ॥

( द्वितीयदूषणनिराकरणभाष्यम् )

**यदप्युच्यते[2]—इह तावती भार्या यस्य तावद्भार्यः यावद्भार्य इति च "वृद्धिनिमित्तस्य-" इति पुंवद्भावप्रतिषेधः प्राप्नोतीति ॥ नैष दोषः । नैवं विज्ञायते— वृद्धेर्निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तस्येति ॥**

**कथं तर्हि ? ॥**

**वृद्धेर्निमित्तं यस्मिन्सोऽयं वृद्धिनिमित्तः वृद्धिनिमित्तस्येति ॥**

**किं च वृद्धेर्निमित्तम् ? ॥**

**योऽसौ ककारो ञकारो णकारो वा ॥**

**अथवा यः कृत्स्नाया वृद्धेर्निमित्तम् ॥**

**कश्च कृत्स्नाया वृद्धेर्निमित्तम् ? ॥**

**यस्त्रयाणामाकारैकारौकाराणाम् ॥**

(प्रदीपः) **वृद्धेर्निमित्तं यस्मिन्निति** । निमित्तशब्दोपादानसामर्थ्याद्व्यधिकरणपदो वहुव्रीहिराश्रीयतेऽन्यथा वृद्धेस्तद्धितस्येत्येव ब्रूयात् । वृद्धिनिमित्तत्वाच्च तद्धितस्य तद्धित एव वृद्धिशब्देनाभिधायिष्यते । अथवा वृद्धेः संवन्धी यस्तद्धित इति वैयधिकरण्येन संवन्ध आश्रयिष्यते ॥ **योऽसौ ककार इति** । कञणेषु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् ॥ **अथवेति** । निमित्तशब्दोपादानादेवाश्रितवहुत्वसंख्यो वृद्धिशब्दः समस्यते वृद्धीनां निमित्तं वृद्धिनिमित्तमिति ।

(उद्द्योतः) **अन्यथा वृद्धेरिति** । वृद्ध्यात्मकतद्धिताभावाद्वृद्धिनिमित्तग्रहणम् [मितिभावः[4] ॥ नन्वर्शःशब्दादर्शआद्यचि टाप्यर्शसेत्यादौ वृद्धिरूपसंभव इत्यरुचेराह— अथवेति ॥ ] व्यधिकरणवहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवद्भावाप्रवृत्तिरिति भावः[5] ॥ **तेषामेवेति** । एवशब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः ॥ ननु वृत्तावमेदैकत्वसंख्यावगतेर्वहुवचनान्ते विग्रहोऽनुपपन्नोऽत आह—**निमित्तेति** । तत्र[6] कात्स्न्र्यं प्रतिपत्तिकालिकं न प्रयोगसमवायीति न पारिषद्याभार्ये दोषः । न च वैयाकरणभार्येपि[7] निषेधापत्तिः, इष्टापत्तेः । अत एवादैज्मात्रस्येति पक्षेऽत्र दोषानुद्भावनम् । तद्भावितानामेवेति[8] पक्षेपि न य्वाभ्यामिति सूत्रे ऐजंशेपि वृद्धिपदसंवन्धेन निषेधप्रवृत्तिरत्र सूपपादा । अत एव देविकाशिंशपेति सूत्रे भाष्यकृता तत्संवन्धो दर्शित इत्याहुः ॥ आदैज्मात्रग्रहणादेव[9] मालादीनांचेति सार्थकम् । अन्यथास्याऽवृद्धत्वात्प्रस्थेऽवृद्धमित्येव सिद्धे किं तेन ॥

( इति तद्भावितपक्षनिराकरणम् ॥ )

—•०:०:०•—

( अथ संज्ञासूत्रत्वसाधनाधिकरणम् । )

( ९२ आक्षेपवार्तिकप्रथमखण्डम् ॥ १ ॥ )

## ॥*॥ संज्ञाधिकारः[10] संज्ञासंप्रत्ययार्थः ॥*॥

( भाष्यम् )

**"अथ संज्ञा" इत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः ॥**

**किं प्रयोजनम् ? ॥**

**संज्ञासंप्रत्ययार्थः । वृद्ध्यादीनां शब्दानां 'संज्ञा' इत्येष संप्रत्ययो यथा स्यात् ॥**

(प्रदीपः) **संज्ञाधिकार** इति वार्तिकम् । तस्य[11] व्याख्यानम**थसंज्ञेत्येवमिति** । अथशब्दः संज्ञायाः प्रस्तावद्योतनार्थः ॥ **वृद्ध्यादीनामिति** । संप्रत्यय इत्येतदपेक्षया कर्मणि षष्ठी । वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः ॥

---

१ मानाभावादिति । अत्रचेदं भाष्यमेव मानम् ॥ प्रकारान्तरेणेदं दुर्योजमिति न तत्र भाष्यं मानमित्याशयेनाह—स्वरितत्वेति । उत्तरपदशब्दे स्वरितत्वप्रतिज्ञयाधिकारगतिरिति भावः ॥ छाया ॥

२ द्वितीयदोषमुद्धरति—यदप्युच्यतेति ॥ छाया ॥

३ नचार्शःशब्दात् स्त्रियां मत्वर्थेऽचि टापि एकादेशेऽन्तवद्भावेन तत्वेऽचार्शसा भार्या यस्येत्यत्र दण्डः प्रहरणमस्यां क्रीडायां सा दाण्डा क्रीडा यस्येत्यत्र च वृद्धिरूपः स संभवतीति वाच्यम् । विकारप्रतिषेधसामर्थ्यात्तत्र वृद्धिरूपतद्धितानाश्रयणात् ॥ छाया ॥

४ क्वचित्तु पुस्तके कोष्ठकान्तर्गतोपि पाठ उपलभ्यते । परंतु तस्यार्थस्य छायायामुक्तत्वात्केनचित्प्रक्षिप्तो भवेत् ॥ इति दाधिमथाः ॥

५ ननु तावद्भार्य इत्यत्र व्यपदेशिवद्भावेन वतुरेव तथेति दोष एवात आह—व्यधीति ॥ छाया ॥

६ न चात्र पक्षे निमित्तं यदि फलोपहितं तर्ह्यसंभवः माथुरीभार्य इत्यादावेकप्रयोगे सर्ववृद्ध्यप्रवर्तकत्वात् । स्वविषये यथायथं वृद्धिप्रवर्तकत्वविवक्षायां वैयाकरणभार्येप्यतिप्रसङ्गः अध्येत्रणोपि छान्दसो नैरुक्तो मौहूर्तिक इत्यादिप्रयोगभेदेन सर्ववृद्धिप्रवर्तकत्वात् । स्वविषये क्वापि तत्त्वायोगव्यवच्छेदविवक्षायां नैरुक्तो मौहूर्तिक इत्यादावपि न स्यात् वैयाकरणशब्द एवाणोऽतत्त्वात् । यत्किंचिद्वृद्धेस्तदविवक्षायां तु पारिषद्याभार्य इत्यादावप्रसङ्गः आकारमात्रप्रवर्तकत्वात् । कात्स्न्र्यविवक्षायां तु यावद्भार्यो दुश्चिकित्स्यः । सर्ववृद्धियोग्यताविवक्षायां तु वैयाकरणभार्येतिप्रसङ्गः योग्यतावच्छेदकाणित्वस्याप्यपि सत्त्वात् । निमित्तग्रहणानर्थक्यं चात्र पक्षे स्यादिति वाच्यम् । प्रतिपत्तिकालिकयावद्वृद्धिनिमित्तत्वस्य विवक्षितत्वेन क्वापि दोषाभावात् । तदेतद्ध्वनयन्नाह—तत्रेति ॥ छाया ॥

७ वैयाकरणेति । 'न य्वाभ्याम्' इति सूत्रस्थकैयटाद्यभिमतशब्देपीत्यर्थः ॥ छाया ॥

८ ननु प्रथमपक्षे तद्भावितत्वादप्राप्तिरिति फलभेदापत्तिरत आह—तद्भावीति । अपिर्द्वितीयसमुच्चायकः । अत्र वैयाकरणभार्ये ॥ छाया ॥

९ पाणिनिसंमतोऽप्ययमेव पक्ष इत्याह—आदैजिति ॥ छाया ॥

१० संज्ञासूत्रत्वसिद्ध्यर्थं पूर्वपक्षप्रतिपादकवार्तिकं खण्डशो व्याचष्टे—संज्ञेति । कर्तव्य इति शेषः ॥ अतएवाग्रेऽनुवादे तथा वक्ष्यति ॥ अतएव 'कथं कार्यः' इत्यपेक्षायां तत्प्रकारं प्रतिपादयन्व्याचष्टे—अथ संज्ञेत्येवमिति । प्रकृत्येति । प्रशब्द आदिकर्मणि कृञुच्चारणक्रियः । तथा च 'अथ संज्ञा' इत्येवमधिकारसूत्रं कृत्वेत्यर्थः ॥ वृद्ध्यादय इति । वृद्ध्यादिपदवन्ति सूत्राणीत्यर्थः ॥ छाया ॥

८१ अथशब्दाधिक्यादपव्याख्येति भ्रमनिरासायाह—तस्येति ॥ छाया ॥

(उद्द्योतः) वार्तिकमिति । सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्तिकत्वम् ॥ एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्याशुक्ता दुरुक्तचिन्तेत्यपास्तम् ॥ प्रस्तावेति । वार्तिकेऽधिकारशब्दोक्तः स इति भावः ॥ वृद्ध्यादीनां संज्ञात्[1]वाद्भेदनिवन्धनषष्ठ्यनुपपन्नेत्यत आह—संप्रत्यय इति ॥ भाष्ये—संज्ञेत्येष इति । शब्दार्थज्ञानानामितरेतराध्यासादिदं नानुपपन्नम् ॥

(९२ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥)

**॥ * ॥ [2]इतरथा ह्यसंप्रत्ययो यथा लोके ॥ * ॥**

(भाष्यम्)

**अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां संज्ञेत्येष संप्रत्ययो न स्यात् ॥**

**[3]इदमिदानीं बहुसूत्रमनर्थकं स्यात् ॥**

**[4]अनर्थकमित्याह ॥**

**[5]कथम् ? ॥**

**'यथा लोके' ॥ लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति तावत्—'देवदत्त गामभ्याज शुक्लां दण्डेन' 'देवदत्त गामभ्याज कृष्णाम्' इति ॥ अनर्थकानि—'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः' इति ॥**

(प्रदीपः) यथा लोके इति ॥ कात्यायनेनासंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः । भाष्यकारस्तु वाक्याध्याहारेणानर्थकत्वे लोकं दृष्टान्तत्वेन योजयति—बहुसूत्रमिति । बहुव्रीहिः । प्रकरणं चान्यपदार्थः । समाहारे द्विगुर्वा ॥ अर्थवन्ति चेति । यथा लोकोऽर्थवन्ति प्रयुङ्क्ते एवमनर्थकान्यपीत्यर्थः । यावदाप्तत्वमाचार्यस्य न साधितं तावदनर्थकत्वशङ्का, झटिति समन्वयानवगमाद्वा ॥ दश दाडिमानीति । पदार्थानां समन्वयाभावादत्रानर्थक्यम् ॥

(उद्द्योतः) भाष्यकारस्त्विति । अधिकारं विनाऽसंप्रत्यये दृष्टान्तस्य लौकिकस्याभावादर्थापरिज्ञाने दृष्टान्तानुपयोगाच्चेति तद्भावः ॥ वाक्याध्याहारेणेति । इदमिदानीमिति[6]वाक्याध्याहारेणेत्यर्थः ॥ ननु द्विगौ अकारान्तोत्तरपदत्वात् स्त्रीत्वे ङीप्स्यादत आह—बहुव्रीहिरिति । अन्यपदार्थस्याशाब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयोऽत आह—समाहारे इति । पात्रादित्वात्स्त्रीत्वाभावः । अत एव त्रिसूत्रीत्यादि सङ्गच्छते । बहुसूत्रशब्दस्यैव तत्र पाठादित्यभिमानैः[7] ॥ नन्वनर्थकदृष्टान्तेऽर्थवन्तीत्यादि व्यर्थमत आह—यथेति[8] । यद्यप्यन्वितार्थकपदसमूह एव वाक्यम् । तथापि भाष्ये पदसमूहे एव वाक्यशब्दः प्रयुक्तोऽतोऽनर्थकानि वाक्यानीति न विरुद्धम् ॥ झटिति विनाचार्याचारादिज्ञानेन ॥ पदार्थानाम्[9] कुण्डमजाजिनमित्यादीनाम् । स्फ्यकृतोऽपत्यं स्फैयकृतः ॥

(९३ आक्षेपान्तरवार्तिकम् ॥ २ ॥)

**॥ * ॥ [10]संज्ञासंज्ञ्यसंदेहश्च ॥ * ॥**

(भाष्यम्)

**क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः ॥ कुतो ह्येतत्—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति । न पुनरादैचः संज्ञा, वृद्धिशब्दः संज्ञीति ? ॥**

(आक्षेपनिराकरणभाष्यम् ।)

**[11]यत्तावदुच्यते—'संज्ञाधिकारः कर्तव्यः संज्ञासंप्रत्ययार्थः' इति ॥ न कर्तव्यः ।**

(९४ सिद्धान्तवार्तिकप्रथमखण्डम् ॥ ३ ॥)

**॥ * ॥ [12]आचार्याचारात्संज्ञासिद्धिः ॥ * ॥**

(भाष्यम्)

**आचार्याचारात्संज्ञासिद्धिर्भविष्यति ॥**

**किमिदम्—आचार्याचारादिति ? ॥**

**आचार्याणामुपचारात् ।**

---

१ संज्ञात्वादिति । तथाच वृद्ध्यादीनां शब्दानां संज्ञाप्रतियोगिकभेदाभाव इति भावः ॥ छाया ॥

२ अन्यथा दोषमाह—इतरथेति ॥ हि यतः ॥ छाया ॥

३ इष्टापत्तिं निराचष्टे—इदमिति । अविगीतपाठमित्यर्थः ॥ छाया ॥

४ अनर्थकमित्याहेति । अत्रेष्टापत्तिरेवेत्याहेति भावः ॥ छाया ॥

५ नन्वस्तेर्भूरित्यादौ तत्त्वदर्शनात्तदेककर्तृकस्य कथं तत्त्वमित्याशयेन शङ्कते—कथमिति ॥ लोके वाक्यद्वैविध्यदर्शनान्नात्र तथा सुवचमित्याशयेनाह—यथेति ॥ छाया ॥

६ इतिवाक्येति । इत्यादिवाक्येत्यर्थः ॥ छाया ॥

७ अभिमान इति ॥ अनेनारुचिः सूचिता । तद्बीजं तु तत्रोत्तरपदानामेव पाठे न तथा दुर्वचमिति ॥ तस्मात्संज्ञापदानिर्देशे सूत्रस्येपदसमाप्तत्वाद्बहुच् । यद्वा—बहुपदत्वाद्बहुत्वं सूत्रपदेन सूत्रं तत्समूहो वेति कर्मधारय इति बोध्यम् ॥ छाया ॥

८ यथेतीति । तद्वत्सूत्रेष्वपि द्वैरूप्यं स्यादिति भावः । एतदर्थमेव भाष्येऽर्थवद्वाक्योदाहरणम् । न केवलमेतत्सूत्रानर्थक्यमात्रेणान्यसूत्राणां तत्त्वमापाद्यम् । लोकेऽर्थवतामपि केषांचित्सत्त्वात्तद्वत्संभवासंसर्गाणामस्तेर्भूरित्यादीनामर्थवत्त्वे बाधकाभावादिति तद्भावः ॥ छाया ॥

९ पदार्थानामिति । मिथ इति शेषः । तथाच प्रत्येकक्रियाध्याहारेण समन्वयेन संसर्गबोधकत्वेपि महावाक्यस्यातत्त्वेनानर्थक्यम् । एवंच तादृशमानर्थक्यमभिहितं नतु पदानामर्थशून्यतारूपं सर्वेषां तेषां तस्य सत्त्वादिति भावः ॥ छाया ॥

१० यत्नान्तरस्य कर्तव्यतामाह—संज्ञेति ॥ असंदेह इति । बहुव्रीहिः । तन्निवर्तकः शब्दो वक्तव्य इत्यर्थः ॥ 'परा संज्ञा' इति वक्तव्यमिति यावत् ॥ छाया ॥

११ पूर्वाक्षेपवार्तिकं खण्डयितुमनुवदति—यत्तावदिति ॥ छाया ॥

१२ वार्तिकादिकृतिं विनापि तत्प्रतीतिमाह—आचार्येति ॥ आचार्याणां वृत्तिकाराणां व्यवहारादेवेमानि संज्ञासूत्राणीति निश्चयो भविष्यतीति न 'अथ संज्ञा' इति करणीयमिति भावः ॥

(प्रदीपः) आचार्याचारादिति । आचार्याणां व्यवहारादित्यर्थः ॥

(उद्द्योतः) उपचारो नाम गौणी वृत्तिरिति भ्रमं व्युदस्यति—व्यवहारादिति । अनेन व्यवहाराच्छक्तिग्रह उक्तः । स च शक्तिग्राहकशिरोमणिः ॥

( सिद्धान्तिवार्तिकद्वितीयखण्डम् ॥ ३ ॥ )

॥ * ॥ यथा लौकिकवैदिकेषु ॥ * ॥

( भाष्यम् )

तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥ लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृते[1]ऽवकाशे नाम कुर्वाते-देवदत्तो यज्ञदत्त इति । तयोरुपचारा[2]दन्येपि जानन्ति इयमस्य संज्ञेति ॥ वेदे याज्ञिकाः संज्ञां कुर्वन्ति—स्फ्यो[3] यूपश्चषाल इति । तत्रभवतामुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति ॥

(उद्द्योतः) भाष्ये वेदे याज्ञिका इति । यज्ञकाण्डद्रष्टार ऋषय इत्यर्थः । वेदकर्तृत्ववत्संज्ञाकर्तृत्वं[4] तेषां द्रष्टव्यम् ॥

( दार्ष्टान्तिकभाष्यम् )

एवमिहापि—इहैव तावत्केचिद्व्याचक्षाणा आहुः—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति ॥ अपरे पुनः "सिचि वृद्धिः" इत्युक्त्वाऽऽकारैकारौकारानुदाहरन्ति । ते[5] (न) मन्यामहे—यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन इति ॥

(प्रदीपः) वृद्धिशब्दः संज्ञेति । वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनैव[6] प्रकाश्यते । यथादैचां वर्णानामिति वर्णलम् ॥ अपर इति । प्रदेशाद्वा संज्ञासंज्ञ्यभिव्यक्तिः । संज्ञासूत्रार्थाद्वा प्रदेशार्थस्य व्यवस्थेति भावः ॥

(उद्द्योतः) भाष्ये इहैवेति । वृद्धिरादैच् सूत्रे एवेत्यर्थः ॥ असत्त्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह—वृद्धिशब्दस्येति । प्रत्यायनशक्तिः प्रत्यायने बोधजनने कारणीभूता शक्तिः । भाष्ये उदाहरन्तीति । वृद्धिरादैजिति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन सिचि वृद्धिरित्युक्त्वा तदुदाहरणत्वेनाकार्षीद् अक्षैषीदश्रौषीदित्युदाहरन्तीत्यर्थः । एवंच वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय वृद्धिरादैच्सूत्रस्य संज्ञाबोधकत्वं वृद्धिशब्दस्य संज्ञात्वं च निर्णयन्तीति भावः ॥ तेन अपराचार्योक्तोदाहरणेन ॥

( आक्षेपान्तरानुवादभाष्यम् )

यदप्युच्यते—क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्य इति ॥

( ९५ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

॥ * ॥ संज्ञासंज्ञ्यसंदेहश्च[7] ॥ * ॥

( भाष्यम् )

संज्ञासंज्ञिनोश्चासंदेहः सिद्धः ॥

कुतः ? ॥

आचार्याचारादेव । उक्त आचार्याचारः ॥

( ९६ सिद्धान्तहेतुवार्तिकप्रथमखण्डम् ॥ )

॥ * ॥ अनाकृतिः ॥ * ॥

( भाष्यम् )

अथवा[8]ऽनाकृतिः[9] संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥

(प्रदीपः) अनाकृतिरिति । आकृत्या साहचर्या[10]द्भेदो

---

१ संवृते श्रोतृजनासमवहिते गृहादावित्यर्थः ॥ छाया ॥

२ तयोरिति । मातापित्रोरित्यर्थः । द्विविधवृद्धव्यवहाराद्गवादिपदेष्विव वाचकताग्रह इति भावः ॥ छाया ॥

३ स्फ्यः । खादिरं खड्गसदृशं यज्ञसाधनकाष्ठम् । यूपःखक्षणादिसंस्कृतपशुनियोजनकाष्ठम् । चषालो यूपाग्रे स्थाप्यमानं यूपवलयसंज्ञकं काष्ठम् ॥ छाया ॥

४ वेदकर्तृत्वेति । पूर्वपक्षाभिप्रायेणेदम् । सिद्धान्ते तु प्रवक्तृत्ववदित्येवं बोध्यम् । तथाचोक्तम्—'आख्या प्रवचनात्' (पू. मी. १।१।३०) इति । तत्तत्पुरुषाणां नामानि तु पूर्वकल्पसमुद्भूतसमाननामरूपत्वादेव । तदप्युक्तं जैमिनिना—'परं तु श्रुतिसामान्यात्' (पू. मी. १।१।३१) इति । तत्र श्रुतिसामान्यादित्यस्य 'समाननामत्वात्' इत्येवार्थः । अतएव भगवता पाराशर्येणाप्युक्तम्—'समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च' (उ. मी. १।३।३०) इति ॥ एतेन श्रुतिसामान्यात्' इत्यस्यान्यथाव्याख्यानं शबरस्वाम्यादीनां प्रदर्शितोत्तरमीमांसासूत्रानवधानमूलकमेवेति बोध्यम् ॥ वस्तुतस्तु वेदे तिङ्व्यत्ययेन भाविन्यपि पदार्थे भूतप्रयोगः । अन्यथा प्रथमकल्पप्रोक्तवेदे नाम्नामनुपपत्तिस्तदवस्थैव । 'धाता यथापूर्वमकल्पयत्' इति श्रुतिपर्यालोचनायां तु प्रथमकल्पस्यैवासिद्धिरित्यत्र तत्त्वं महान्त एव विदांकुर्वन्तु ॥ इति दाधिमथाः ॥

५ ते इति विभक्तिप्रतिरूपकमव्ययमित्यन्यत्र ॥ छाया ॥ दाधिमथाः ॥

६ व्याख्यानेनैवेति । न तु प्रोक्षणेन व्रीहिष्वपूर्वसाधनशक्तिवदसती सा संज्ञा शास्त्रेणोत्पाद्यते । उक्तहेतोः । न च व्याख्यानाच्छक्तिज्ञानं, शक्तिज्ञानाच्च व्याख्यानमित्यन्योन्याश्रयः । पूर्वव्याख्यानाद्वृद्धुस्तत्संभवात् ॥ छाया ॥

७ यद्यप्यसंदेहे प्रथमहेतुः 'अनाकृतिः' इत्युक्तो वार्तिककृता, तथापि भगवान् सिद्धान्तवार्तिकोक्तहेतुं मध्यमणिन्यायेन तत्रापि संयोजयन् 'संज्ञासंज्ञ्य—' इति पूर्वपक्षवार्तिकमेव सिद्धान्तपरतया योजयति—संज्ञेति ॥ 'न वक्तव्यो यतः' इति शेषः (आदौ) । क्वचित् 'न वक्तव्यः' इति पाठ एव ॥ छाया ॥ वस्तुतस्त्विदमुत्तरपक्षवार्तिकमेव । प्रथमवार्तिकोक्तहेतुरनुवर्तते ॥ दा०

८ एवो हेतुसौलभ्यद्योतकः । तेन ह्येकस्य संज्ञात्वेऽपरस्य संज्ञित्वे निश्चिते 'का संज्ञा, कः संज्ञी' इति संदेहाभाव इति भावः ॥ छाया ॥

९ एकस्य हेतोरुक्तत्वादेव 'अनाकृतिर्लिङ्गेन वा' इति वाशब्दस्योभयत्र संबन्धमभिप्रेत्यासंदेहे साध्ये 'अनाकृतिः' इति प्रथमान्तं हेतुत्वेनान्वयायोग्यमिति संज्ञादिपदाध्याहारेण व्याचष्टे—अथवेति ॥ छाया ॥

१० साहचर्यादिति । यत्राकृतिस्तत्र भेद इति तत्त्वम् ॥ छाया ॥

लक्ष्यते। तेनायमर्थः—वृद्धिशब्द एकत्वात्[1]संज्ञा, आदैचां बहु[2]त्वात्संज्ञित्वम्। लाघवार्थं हि संज्ञाकरणम्। यथा—**सर्वादीनि सर्वनामानी**त्यनेकस्यैका संज्ञा क्रियते, न त्वेकस्यानेका संज्ञा, प्रयोजनाभावात्॥ **आकृतिमत इति**। अवस्थाभेदेष्वपि स एवायमिति प्रत्यभिज्ञानिमित्तकं देवदत्तत्वादिकं सामान्यमस्तीत्याकृतिमत इत्युक्तम्॥

**(उद्योतः)** नन्वाकृतिर्जातिस्तद्वद आदैक्ष्वपि तदभा[3]वस्तु न वृद्धिशब्देपीत्यत आह—**आकृत्येति**। बहुव्रीहिरिति भावः॥ अनाकृतिरित्येतन्न्यायसिद्धमित्याह—**लाघवार्थमिति**॥ नन्वेकस्यापि तव्यादेरनेकाः कृत्कृत्यप्रत्ययसंज्ञाः क्रियन्तेऽत आह— **प्रयोजनेति**। सति हि प्रयोजने तथा; प्रकृते तु न तथा प्रयोजनाभावादिति भावः॥ **प्रत्यभिज्ञानिमित्तकम्**। प्रत्यभिज्ञाप्रमाणकमित्यर्थः। वस्तुतो भाष्ये **आकृतिमत** इत्यस्य भेदवत इत्यर्थः। अवस्थाभेदेन च तत्रारोपितः सः। आरोपितभेदेन च जातिसत्त्वे न मानम्[4]। अत एव देवदत्तेत्यादौ न ङीषिति कश्चित्[5]॥

**( सिद्धान्तिहेतुवार्तिकद्वितीयखण्डम्॥ ५॥)**

**॥ * ॥ लिङ्गेन वा[6] ॥ * ॥**

**( भाष्यम्)**

**अथ वा—किं चिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा संज्ञेति। वृद्धिशब्दे च तल्लिङ्गं करिष्यते, नादैच्छब्दे॥**

**(प्रदीपः) लिङ्गेन वेति**। कलादिना वर्णदोषेणेत्यर्थः॥

**( आक्षेपभाष्यम्)**

**इदं[7] तावदयुक्तम्। यदुच्यते—आचार्याचारादिति॥**

**किमत्रा[8]युक्तम्?॥**

**तमेवो[9]पालभ्य 'अगमकं ते सूत्रम्' इति, तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम्। अपरि[10]तुष्यन् खल्वपि भवाननेन परिहारेण "*अनाकृतिर्लिङ्गेन वा*" इत्याह॥**

**(प्रदीपः) तमेवोपालभ्येति**। यो हि सूत्रकारमुपालभते—**अगमकं ते सूत्र**मिति, स कथं वृत्तिकारान्प्रामाण्येनाश्रयतीत्यर्थः॥ **अपरितुष्यन्निति**। त्वयापि परिहारान्तरं ब्रुवताऽऽचार्याचारो न प्रमाणत्वेनाश्रित इत्यर्थः॥

**(उद्योतः)** स कथंवृत्तिकारानिति। **तस्यैवेति** भाष्यस्य तदीयस्यैवेत्यर्थ इति भावः॥

**( तृतीयहेतौ गौरवाक्षेपभाष्यम्)**

**तच्चा[11]पि वक्तव्यम्॥**

**(प्रदीपः) तच्चापीति। लिङ्गेन वे**त्येतद्वक्तव्यमित्यर्थः। **अ[12]नाकृतिः संज्ञे**त्येतत्तु न्यायसिद्धत्वान्न वक्तव्यम्॥

**(उद्योतः)** लिङ्गेन वेत्येतदिति। लिङ्गं[13]सङ्ग; इत्थंलिङ्गा संज्ञेति च वक्तव्यमित्यर्थः॥

**( तृतीयहेतुस्वीकारे लाघवप्रदर्शकभाष्यम्)**

**य[14]द्यप्येतदुच्यते। अथवैतर्हि इत्संज्ञा न वक्तव्या। लोपश्च न वक्तव्यः। संज्ञालिङ्गमनुबन्धेषु करिष्यते। न च संज्ञाया निवृत्तिरुच्यते। स्वभावतः संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते। तेनानुबन्धानामपि निवृत्तिर्भविष्यति॥**

**(प्रदीपः) अथवैतर्हीति**। एवं सतीत्यर्थः। ङ[15]कारादिष्वनुबन्धेषु कलादिकमासङ्क्ष्यते। ततश्च तेषां संज्ञात्वे सति ङादात्मनेपदमिति करिष्यते। संज्ञाश्च संज्ञिनं प्रत्याय्य स्वयं निवर्तन्त इतीत्संज्ञा लोपश्च न वक्तव्यौ भवत इत्यर्थः॥

**(उद्योतः) ङकारादिष्विति**। धात्वादिपठितेष्वित्यर्थः। ननु संज्ञालिङ्गे कृतेऽपीत्संज्ञाद्यभावे कथं तेषां निवृत्तिरत आह—**भाष्ये स्वभावतः संज्ञेति**॥ तद्व्याचष्टे—**संज्ञाश्च संज्ञिनमिति**॥

---

१ एकत्वादिति। स्वरूपेण जात्यात्मना वेति भावः॥ छाया॥

२ बहुत्वादिति। अशब्दसंज्ञेतिनिषेधादादैच्छब्दः संज्ञिपर इत्याकारादीनां स्वरूपेण जात्यात्मना वेति भावः॥ तथाच 'अनाकृतिः' इत्यादेः 'एका व्यक्तिः' इत्यर्थकत्वेन घसंज्ञासूत्रे एककोटावेका व्यक्तिः अन्यकोटावनेकव्यक्तयः तत्र सा संज्ञा ताः संज्ञिन इति तात्पर्यम्॥ छाया॥.

३ तदभाव इति। प्रत्युच्चारणं शब्दभेदस्य सिद्धान्तितत्वेन वृद्धिशब्दस्वरूपजातिसत्त्वादिति भावः॥ छाया॥

४ न मानमिति। अतएव 'देवदत्त इति संज्ञा क्रियते' इति भाष्योक्तिः संगच्छते। अन्यथा गवादिवज्जातिशब्दत्वे तदसंगतिः स्पष्टैव॥ ॥ छाया॥

५ कश्चिदिति। अनेनारुचिः सूचिता। तद्बीजं त्वजादित्वात्तत्र टाबिति नेदं फलमिति॥ छाया॥

६ लिङ्गेनवेति। असंदेह इत्यस्यानुषङ्गः। तस्यैव प्रकृतत्वात्॥ छाया॥

७ प्रथमहेतुं दूषयति—इदं तावदिति॥ लिङ्गेन वेत्यस्य वक्ष्यमाणदूषणापेक्षस्तावच्छब्दः॥ छाया॥

८ किमत्रेति। शब्दोऽर्थो वेत्यर्थः। निर्धारणे त्रल्॥ छाया॥

९ तदयुक्तत्वमेव दर्शयति—तमेवेति। मूलभूतसूत्रकारमेवेत्यर्थः। उपालभ्य सनिन्दमुक्त्वा॥ तत्प्रकारमाह—अगमकमिति। संसर्गाबोधकत्वादनर्थकमित्यर्थः॥ छाया॥

१० वार्तिककृतोपीदमभिमतमित्याह—अपरीति॥*'आचार्याचारात्'* इति परिहारेणापरितुष्यन्निति संबन्धः॥ छाया॥

११ तृतीयं दूषयति—तच्चापीति॥ छाया॥

१२ द्वितीयं तु युक्तमेवेत्याह—अनाकृतिरिति॥ छाया॥

१३ लिङ्गेति। प्रतिसंज्ञमित्यादिः। संज्ञेतिचेति। तथाच संज्ञाधिकारासंदेहयोः करणे यथा गौरवं तथात्रापीति नास्ति ततो लाघवमित्यविशेषात्तद्वीत्यैतदुक्तिरयुक्तैवेति भावः॥ छाया॥

१४ कात्यायनीयस्तृतीयं लाघवेन समर्थयते—यद्यप्येतदिति। यद्यप्येतद्वचनेनैव साध्यते तथापि संज्ञाधिकारादितो लाघवातिशय एवेत्यर्थः॥ तमेवाह—अथवैतर्हीति॥ छाया॥

१५ संज्ञालिङ्गमिति भाष्यस्यार्थमाह—ङकारेति॥ छाया॥

( आक्षेपभाष्यम् )

**सिद्ध्यत्येवम्[1] । अपाणिनीयं तु भवति ॥**

(उद्द्योतः) भाष्ये अपाणिनीयं त्विति । अनन्तस्थलेषु[2] दोषविशिष्टपठने आनुनासिक्यादिवत् प्रतिज्ञाकरणे च दुर्ज्ञेयत्वादिति भावः ॥

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु[3] ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—"*संज्ञाधिकारः संज्ञासंप्रत्यार्थ इतरथा ह्यसंप्रत्ययो यथा लोके*" इति ॥**

( समाधानभाष्यम् )

**न च यथा लोके, तथा व्याकरणे । प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे[4] प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि[5] प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण ॥**

**किमतो यदशक्यम् ? ॥**

**अतः संज्ञासंज्ञिनावेव ॥**

(प्रदीपः) **प्रमाणभूत इति** । प्रामाण्यं प्राप्त[6] इत्यर्थः । **भू प्राप्तावित्यस्माधृषाद्वेति** णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते ॥ **दर्भपवित्रेति** । प्रमादाभावं दर्शयति ॥ **प्राङ्मुख इति** । प्राच्यां अभ्युदयहेतुत्वात् ॥ **महतेति** । मनःप्रणिधानं दर्शयति ॥ एतच्च सर्वमागमाद्बोद्धव्यम् । एवमानर्थक्ये परिहृते संज्ञासंप्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति—**किमत इति** ॥

(उद्द्योतः) ननु भवतेर्जन्मार्थत्वेनाभूततद्भावप्रतीत्या च्वौ सति प्रमाणीभूत इति स्यात् तदविवक्षायां तु प्रमाणमाचार्यः प्रकारान्तरेण भूत इति अर्थः स्यादत आह—**प्रामाण्यमिति** । **वृत्तिविषये** इति प्रकृताभिप्रायम् ॥ **प्रमादः** पिशाचादिसंबन्धः ॥ **आगमः** । संप्रदायः प्रकृतभाष्योक्तिर्वा ॥ भाष्ये **अनर्थकेनेति** । बोध्यार्थरहितेनेत्यर्थः । तेन पारायणे सर्वेषामदृष्टार्थत्वेपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं वर्णपदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानासङ्गतिः ॥ **संज्ञासंप्रत्ययाय** संज्ञात्वनिश्चयाय ॥ भाष्ये **किमत इति** । अतस्तादृशकर्तृकत्वात्किं कथमर्थवत्त्वं (**यद्**) यतस्तद् (**अशक्यम्**) अशक्यनिरूपणमित्यक्षरार्थः ॥

( आक्षेपभाष्यम् )

**कुतो[9] नु खल्वेतत्—संज्ञासंज्ञिनावेवेति । न पुनः साध्वनुशासनेऽस्मिञ्शास्त्रे साधुत्वमनेन क्रियते[10]? ॥**

(उद्द्योतः) **साध्वनुशासन इति** । अनेन साधुत्वपक्षस्याकाण्डता वारिता ॥

( आक्षेपनिराकरणभाष्यम् )

**कृतमनयोः[11] साधुत्वम् ॥**

**कथम् ? ॥**

---

१ इदं कात्यायनीयोक्तसमर्थनं दूषयति भगवान् (तृतीयः)—सिध्यत्येवमिति । अयं भावः—यया संज्ञया सह यः पठितस्तस्यैव सा संज्ञा प्रत्यासत्त्या नान्यस्येति 'ञीतः क्तः' इत्यादौ 'अः क्तः' 'टोरथुच्' 'डोः क्रिः' 'अनुप्रदात आत्मनेपदम्' इत्यादि लघुभूतो न्यासः कार्यं 'इत्थं संज्ञा' इत्यग्रे 'आदिरन्त्येनान्त्येन सह' इति सूत्रं कार्यम् । 'कलादिनान्त्येन वर्णेन सहोच्चार्यमाण आदिर्मध्यगानामुपलक्षणं स्यात्' इति तदर्थं इति ॥ छाया ॥

२ नन्वेवमपाणिनीयत्वे इष्टापत्तिरत आह—अनन्तेति । दुर्ज्ञेयेति । अयं भावः—यदीत्संज्ञादि नोच्यते तर्हि प्रत्याहारानुबन्धानां निवृत्त्यर्थं तेष्वपि कलाद्यासञ्जनीयम् । ततश्च एओङिति 'ङ' संज्ञाविधानसामर्थ्यादेदोतोरपि ङसंज्ञत्वात् ङादात्मनेपदमिति दोधेङ्भ्यामपि स्यात् । अनुदात्तग्रहणे च कृत्रिमत्वादेधत्यादिभ्य आत्मनेपदवद् एकाच इतीण्निषेधोपि स्यात् । न स्याच्च वसत्यादिभ्यः । अनुदात्तेषु तेषां पाठस्तु धातुस्वरबाधनार्थः स्यात् । उभयगत्याश्रयणे तु वसत्यादेरिण्निषेधवदात्मनेपदमपि स्यात् । षढोः कः सि कृत्रिमत्वात्षसंज्ञकस्य प्रत्ययाकारस्यैव स्यात् द्विमूर्धस्य दीर्घसक्थस्य पक्षाक्षस्य । छशां ष इत्येतच्च तुदतो भवत इत्यादौ शशपोरेव स्यात् शसंज्ञकत्वात् द्रष्टा द्रक्ष्यतीत्यादौ न स्यात् अशब्दसंज्ञेति निषेधात् । तथा—ऋच्छत्यृतामिति प्रश्लिष्टऋकारेण कृत्रिमत्वाद्विशृपिद्य इत्यादीनां लिटि गुणः स्यान्नार्तेः । परस्मैपदसंज्ञापि ल्युट्ण्वुलादेशानाकादीनामेव स्यात् । ततश्च शेषादेव परस्मैपदमिति नियमादेधत्यादिभ्यस्ते न स्युरिति दिक् ॥ छाया ॥

३ तस्माद्यथान्यासमित्संज्ञादिकं वक्तव्यमेवेत्याह भगवान् सिद्धान्ती—यथेति ॥ यद्यपि मध्यमसमाधानेनादुष्टेन तत्सिद्धिः तथापि तस्य काचित्कत्वं न सार्वत्रिकत्वमिति हृदि निधाय प्रथमसमाधेरिष्टत्वे संज्ञासिद्धिरेवादौ नेति प्रथमपूर्वपक्षस्तदवस्थ इत्यादौ तमनूद्यासंभवात्तत्त्वमित्येवंप्रकारेण निराकरोति—ननुचोक्तमित्यादिसंज्ञिनावेवेत्यन्तेन ॥ दृष्टान्तविघटनेन दूषयति—न यथेति । यथा लोके, न तथेत्यर्थः । लोके हि भ्रमप्रमादनिमित्तव्याकरणापाटवादिवक्तृदोषाद् दशदाडिमादिवाक्यानामानर्थक्यं भवितुमर्हति न तद्वत्सूत्रे तत्प्रयोजकवक्तृदोषाभावात् परमास्तिकमहर्षीणां प्रमादिशङ्कानवकाशाच्चेति तात्पर्यम् ॥ छाया ॥ वस्तुतस्तु—ननुचेति आक्षेप्तुराक्षेपस्मारणम् । नयथेति सिद्धान्तिन आक्षेपनिराकरणम् । खण्डनायानुवादत्वे तु—'यच्चोक्तम्' इति 'यदप्युक्तम्' इति वा पठनीयं स्यादिति दाधिमथाः ॥

४ भूप्रदेशाशुद्धिकृतचित्तविक्षेपाभावमाह—शुचाविति । जनवार्तादिकृतव्यासङ्गाभावमाह—अवकाश इति ॥ छाया ॥

५ सूत्राणीति पाठः । सूत्रमिति पाठे तु जात्यभिप्रायमेकवचनम् ॥ यद्वा बहुसूत्रप्रणयनानन्तरं श्रान्तस्योद्वेगादिना प्रमादादि संभाव्येतापि नत्विदं प्रथमसूत्र इत्येकवचनेनाह ॥ छाया ॥

६ नच तत्त्वमेव कथमिति वाच्यम् । यतः श्रुत्यादिषट्प्रमाणानि ज्ञातवान् । 'तन्मे प्रमाणं शिवः' इत्यभियुक्तोक्तेः 'ज्ञानं महेश्वरात्' इति स्मृतेश्च नित्यप्रमातृतया ज्ञानहेतुतया च प्रमाणं महेश्वरं प्राप्तोऽतस्तथेत्यर्थात् ॥ छाया ॥

७ प्राच्या इति । 'प्राचीं देवा अभजन्त पितरोऽवाचीम्' इति श्रुतेर्देवाभिमुख्येन च तदानुकूल्यसिद्धेरित्यपि बोध्यम् ॥ छाया ॥

८ ननु भवतेः सत्तार्थकत्वे भूतपदानर्थक्यम् सत्तायाः प्रमाणान्तराधृतत्वेनाविधेयत्वात्प्रामाण्यमात्रस्य विधेयत्वेन प्रमाणमितीयतैवेष्टसिद्धेः । प्राप्त्यर्थत्वे तु चुरादिण्यन्तत्वेन प्रमाणभावित इति स्यादत आह—जन्मेति । छाया ॥

९ प्रकारासंभवमजानन्पूर्वपक्षी शङ्कते—कुत इति । क्रियत इत्यन्तेन

१० क्रियत इति 'क्षय्यजय्यौ शक्यार्थे' इतिवत् । इतीति शेषः ॥ छाया ॥

११ सिद्धान्ती समाधत्ते—कृतमिति ॥ अलाक्षणिकं हि कार्यं निपातनेन साध्यत इति भावः ॥ छाया ॥

**वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे, तस्मात् क्तिन्प्रत्ययः। आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः॥**

(प्रदीपः) **कृतमनयोरिति** । आदैच्छब्दस्य द्वन्द्वत्वादनयोरिति द्विवचननिर्देशः ॥ **आदैच इति** । तेषां च द्वन्द्वनिर्देशोयमादैच्छब्द इत्यर्थः ॥

(उद्योतः) द्वन्द्वत्वादिति । अनयोरित्यस्य पदयोरिति विशेष्यम् ॥ पदानामेव साधुत्वान्वाख्यानादिति भावः ॥ भाष्ये **अविशेषेणेति** । प्रत्ययविशेषमनादायेत्यर्थः ॥ ननु वर्णसमाम्नाये आकाराद्युपदेशेप्यादैच्छब्दस्य किमागतमत आह—**तेषांचेति** । संज्ञाग्रहणद्वारेणेति शेषः ॥ **तपरइति आदिरन्त्येनेति** च तेषां कृतयोरादैच्संज्ञयोर्द्वन्द्वनिर्देशेन द्वन्द्वशास्त्रेण कृतं साधुत्वमित्यर्थः । ऐजित्यपि तन्मूलकादिरन्त्येनेत्यनेन बोधितमित्याशयेन भाष्ये ऽक्षरसमाम्नाये उपदिष्टा इत्युक्तम् ॥

( आक्षेपभाष्यम् )

**प्रयोगनियमार्थं तर्हीदं स्यात्—वृद्धिशब्दात्परे आदैचः प्रयोक्तव्या इति ॥**

(प्रदीपः) **प्रयोगनियमार्थमिति** । आदैज्वृद्धिरिति प्रयोगो माभूदित्यर्थः ॥

( आक्षेपनिराकरणभाष्यम् )

**नेह प्रयोगनियम आरभ्यते ॥ किं तर्हि? । संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति । तद्यथा-आहर पात्रम्, पात्रमाहरेति ॥**

(प्रदीपः) **नेहेति** । प्रयुज्यत इति प्रयोगस्तत्र स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यते, अपि तु पदावयवस्य प्रकृतिप्रत्ययोपसर्जनागमादिरूपस्य । लोके च केवल एव वृद्धिशब्दः प्रयुज्यत इति न तस्यानेन नियमः क्रियते, लोके प्रयुक्तानामिदमनुशासनम् ॥

(उद्योतः) ननूपसर्जनं पूर्वं परश्चेत्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह—**प्रयुज्यतइति** ॥ **स्वतन्त्रस्येति** गत्युपसर्गनिरासः । तौ हि द्योतकत्वात्परतन्त्रौ ॥ **पदावयवस्येति** । **आदिना** द्योतकाः ॥ युक्त्यन्तरमाह—**लोकेचेति** । शिष्टलोकाभिप्रायम् । प्रयुक्तानां चेदमनुशासनमिति भावः ॥ **केवलः** आदैच्पदासंबद्धः ॥ भाष्ये **संस्कृत्येति** । साधुत्वेनान्वाख्यायेत्यर्थः ॥ **अभिसंबन्धः** पौर्वापर्यलक्षणः ॥

( आक्षेपभाष्यम् )

**आदेशास्तर्हीमे स्युः । वृद्धिशब्दस्यादैच आदेशाः ॥**

( आक्षेपनिराकरणभाष्यम् )

**षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः ॥**

(प्रदीपः) **षष्ठीनिर्दिष्टस्येति** । स्थानशब्दोऽर्थवाची तिष्ठन्त्यस्मिञ्शब्दा इति स्थानम् । न च वृद्धिशब्दार्थमादैचो वक्तुं शक्तास्तेनात्र षष्ठ्यर्थाभावादिति तात्पर्यम् । तथा हि षष्ठ्यभावेपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावो यथा **'नाभि नभं च' 'परश्वी परशुं च'** इति ॥

(उद्योतः) पष्ठ्यभावेपि नाभि नभमित्यादावादेशदर्शनादाह—**स्थानेति** । षष्ठीस्थाने इति—सूत्रगत इति शेषः । तत्र हि सूत्रे स्थानशब्दोऽधिकरणव्युत्पत्त्यार्थवाची भावव्युत्पत्त्या प्रसङ्गवाची च तन्त्रेणोपादीयते । अन्यथा केवलार्थशब्दं प्राप्तिशब्दं वोपाददीत । एवंच—याऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसंबन्धार्थिकैवेत्येकोऽर्थः। द्वितीये तु षष्ठीशब्दो लक्षणया स्थानिपरः । स्थाने इति सप्तमी वाच्यस्यार्थास्याधिकरणत्वविवक्षया बोध्या । योगशब्दश्च युज्यत इति व्युत्पत्त्या आदेशवाची ततोर्शआद्यच् । तेन स्थानी स्वार्थाभिधानसमर्थादेशवानित्यर्थं इति भावः ॥ भाष्यस्य तु षष्ठीनिर्दिष्टस्य स्थानिनो योऽर्थस्तस्य वाचका उच्यन्ते । न चात्रादैक्षु षष्ठीनिर्दिष्टस्य स्थानिनोऽर्थानभिधेयत्वेन पश्याम इत्यर्थः ॥ **षष्ठ्यर्थाभावादिति** षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याभावादिति भावः ॥ **तदर्थसद्भावादिति** । आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः ॥ वस्तुतस्तु स्थानं प्रसङ्ग एव । सचार्थवत एव । अर्थप्रत्यायनाय शब्दप्रयोगात् । एवंचार्थप्रयुक्त एव स्थान्यादेशयोः संबन्ध इति स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति वदन्ति ॥

---

१ अक्षरसमाम्नाय इत्युक्तिस्वारस्यमाह—ऐजित्यपीति । अपिनाकारादिसमुच्चयः । प्रत्ययस्त्वत्र न श्रुत इति प्रकृतिमात्रं व्युत्पादितम् । बहुवचनं तु तस्यार्थपरत्वं, न शब्दपरत्वमिति सूचयितुम् ॥ छाया ॥

२ एतावता प्रबन्धेन प्रधाने साधुत्वे निरस्ते 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन विधेयान्तरमाशङ्कते पूर्वपक्षी—प्रयोगेति । सच संज्ञातोऽन्तरङ्ग इति भावः । अत्र पौर्वापर्यरूपः प्रयोगनियमोऽभिप्रेतो न साधुभाषणनियमः । तदाह—वृद्धीति । आदैच इति । न च स्वरूपग्रहणम्, अशब्दसंज्ञेति निषेधात् । यद्यपि साहचर्यमनियतम् आदैच उपदेश इत्यादिदर्शनात् । तथापि सति साहित्ये एव तथा नियमः । तत्र स्वरूपाग्रहणेन वृद्धिरादित्यादि प्रयोगो व्यावर्त्यत इति केचित् । अन्येतु केवलाकारादेस्तदसंभवेपि तदन्तद्वारेण नियमः स्यादित्याहुः ॥ छाया ॥

३ सिद्धान्तीदं दूषयति—नेहेत्यादि-हरेतीत्यन्तेन ॥ छाया ॥

४ द्योतकत्वादिति । अनेन वाचकानां तेषां निरासः । इदमामन्तस्याप्युपलक्षणम् । उपसर्जनस्य परार्थाभिधायित्वात् आमन्तस्यानभिव्यक्तपदार्थत्वात्त्वमिति भावः ॥ छाया ॥

५ एवं प्रयोगनियमार्थत्वे खण्डिते पक्षान्तरमाशङ्कते पूर्वपक्षी—आदेशा इति ॥ छाया ॥

६ सिद्धान्तीदमपि निरस्यति—षष्ठीत्यादिपश्याम इत्यन्तेन ॥ छाया ॥

७ अन्यथा केवलेऽर्थे प्रसङ्गे वा विवक्षिते ॥ छाया ॥

८ व्युत्पत्त्येति । कर्मेत्यादिः ॥

९ वाचक इति । आदेशा इति शेषः ॥ छाया ॥

१० अभिमतार्थस्य प्रसिद्धार्थतोपि लाभात्कैयटश्चिन्त्य एवेति ध्वनयन्नाह—वस्तुत इति । एवेन द्वितीयार्धनिरासः । भाष्यस्य तु स एवार्थोत्रापीति भावः ॥ एतेन कैयटोक्तं चिन्त्यम् । अत्र स्थानशब्दानुक्त्या तद्व्युत्पादनस्या-

( आक्षेपभाष्यम् )

**आगमास्तर्हीमे स्युर्वृद्धिशब्दस्यादैच आगमाः ॥**

( आक्षेपनिरासभाष्यम् )

**आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते । लिङ्गेन च । न चात्र षष्ठीं, न खल्वप्यागमलिङ्गं पश्यामः ॥**

**(प्रदीपः) आगमा अपीति ।** अत्राप्यर्थोऽपेक्ष्यते । अनागमकानामर्थे सागमका इत्यर्थः ॥ **लिङ्गेन चेति ।** देशविशेषप्रतिपत्तये टकारादिलिङ्गं तत्र क्रियत इत्यर्थः ॥

**(उद्योतः) अत्रापीति ।** वस्तुतोऽवयवषष्ठ्येवागमा उच्यन्ते इत्यर्थो भाष्यस्य ॥ कलादिलिङ्गभ्रमव्यावृत्तये आह—**देशेति ।** देशविशेषप्रतिपत्त्यर्थंयत्साध्यागमप्रतीतिर्यत्तभावे नेत्यर्थः ॥

( सिद्धान्तसमाधानभाष्यम् )

**इदं खल्वपि भूयः सामानाधिकरण्यमेकविभक्तित्वं च । द्वयोश्चैतद्भवति ॥**

**कयोः ? ॥**

**विशेषणविशेष्ययोर्वा संज्ञासंज्ञिनोर्वा ॥**

**तत्रैतत्स्याद्विशेषणविशेष्ये इति ॥**

**तच्च न, द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति । न चादैच्छब्दः प्रतीतपदार्थकः । तस्मात्संज्ञासंज्ञिनावेव ॥**

**(प्रदीपः) इदं खल्वपीति ।** विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति ॥ देवदत्तः पचतीत्यस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम्, गौरश्व इत्यस्त्येकविभक्तित्वं न तु सामानाधिकरण्यमित्युभयोरुपादानम् । संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम् ।

तत्तु सामानाधिकरण्यं शब्दयोरेव केचिदिच्छन्ति । द्वाभ्यां शब्दाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकस्याधिकरणस्याभिधेयस्य प्रतिपादनाद्विशेषणविशेष्यार्थंप्रतिपादनाच्च विशेषणविशेष्यत्वम् ॥ अन्ये तु नीलमुत्पलमिति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं विशेषणविशेष्यभावं चार्थयोरेव मन्यन्ते ॥ **न चादैच्छब्द इति ।** न ह्यस्य कश्चिल्लौकिकोऽर्थः प्रसिद्ध इत्यर्थः ॥

**(उद्योतः) इदं खल्वपीति** भाष्यं पूर्वोक्तपक्षाणामसंभवं प्रतिपादयति ॥ [ तद्व्याचष्टे—विशेषणेति ॥ ] अस्तिसामानाधिकरण्यमिति । न च तादृशे संज्ञासंज्ञित्वसंभावनेति भावः ॥ **इत्युभयोरिति ।** विशेषणविशेष्यत्वसंज्ञासंज्ञित्वसंभावनास्थलप्रदर्शनायेत्यर्थः ॥ **संज्ञासंज्ञिनोरपीति ।** उद्भिदादिसंज्ञा हि स्वरूपेणैव संज्ञिनं सजातीयाद्यागान्तराद्विजातीयाच्च होमादेर्व्यवच्छिनत्तीति विशेषणम् । संज्ञी च व्यवच्छेद्यः सन्विशेष्यः । विषयताविशेषरूपमपि तत्तयोरस्त्येवेति भावः ॥ **प्रसिद्धीति । द्वयोर्हि** प्रतीतेत्यादिना भाष्ये उक्तमेतत् । यद्वा सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनोर्विशेष्यविशेषणभावो लोके न प्रसिद्ध इत्यर्थः ॥ ननु सामानाधिकरण्यं नाम द्वयोः शब्दयोरेकाभिधेयसंबन्धः । तत्तु न युक्तम् । सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेश्चार्थधर्मत्वेन **विशेषणविशेष्ययोः सामानाधिकरण्यमिति** भाष्यासङ्गतेः । संज्ञासंज्ञिनोरेकाभिधेयसंबन्धाभावेन **संज्ञासंज्ञिनोर्वा सामानाधिकरण्यमि**त्यस्याप्यसङ्गतेरत आह— **तत्त्विति ॥** **भिन्नप्रवृत्तीत्य**नेन पर्यायनिरासः ॥ वस्तुत इदं चिन्त्यम् । अग्ने देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानीत्यादौ नामन्त्रिते समानाधिकरणे इत्यस्य व्यावृत्तये तत्र सामान्यवचनग्रहणमिति तत्सूत्रस्थभाष्यविरोधोपत्तेः । युगपदधि-

काण्डताण्डवत्वात् । तत्सूत्रगतस्य तु तस्य तदर्थकत्वेन तथा व्याख्यानानौचित्यात् । प्रकृतानुपयोगाच्च । नहि तस्य तत्त्वं विनात्रत्यस्य षष्ठीपदस्य तदर्थलक्षकत्वं न युज्यते येन तस्य तत्त्वप्रतिपादनं प्रकृतोपयोगि स्यात् । किंच षष्ठ्यर्थाभावादिति दुर्वचमेव षष्ठ्यर्थसंबन्धस्य वस्तुमात्रे सत्त्वात् । सुध्युपास्य इत्यादौ तत्राशक्तानां तत्त्वदर्शनाच्च । सर्वे सर्वपदा—इति न्यायाश्रयणं तु अत्रापि तुल्यम् । प्रकृतभाष्यस्य प्रायोभिप्रायेण तत्र परिभाषाश्रयणोपपत्त्या नाभि नभमित्यादौ तदङ्गीकारेऽपि बाधकाभावात् । एवं च षष्ठीनिर्दिष्टस्य षष्ठीस्थाने इति परिभाषोक्तेः प्रायेणादेशविधौ षष्ठ्यन्तेनैव स्थानिनो निर्देशाच्चेत्याशयः ॥ नन्वेवमुक्तरीत्याऽयं परिहारो न सम्यगितिचेत् । न, वृद्धिर्यस्येति सूत्रे वृद्धिशब्दस्यादैजादेशागमादर्शनात्पाणिनेः स्थान्यादेशभाव आगमागमिभावश्च न संमत इत्यत्र तात्पर्यात् । इति रत्नोक्तमपास्तम् । हेतोराभासत्वाभावाय तथोक्तेरावश्यकत्वात् । त्वदीयतात्पर्यस्याशब्दार्थत्वाच्च ॥ छाया ॥

१ एवमादेशपक्षे निराकृते पूर्वपक्षी आगमत्वमापादयति—आगमा इति । संज्ञाद्वारेण परनिर्दिष्टानामादैचामन्तावयवत्वं कथंचित्प्रतीयमानं संज्ञाविधानादन्तरङ्गमिति भावः ॥ छाया ॥

२ सिद्धान्तीदमपि निरस्यति—आगमा इत्यादि पश्याम इत्यन्तेन ॥

३ ननु न य्वाभ्यामित्यादौ षष्ठ्यभावेऽप्यागमत्वं दृष्टमत आह—अत्रापीति ॥ अयंभावः—षष्ठीपदेन प्राग्वत्षष्ठ्यर्थस्यागम्यर्थाभिधानसामर्थ्यं विवक्षितम् । षष्ठीस्थान इत्यत्राद्यन्तावित्यनुवर्तते स्थानशब्दः सप्तमी च प्राग्वत् । योगेत्यपि प्राग्वत् आगमवाचीति विशेषः । षष्ठीपदमागमिपरं प्राग्वत् । आगमी आगम्यर्थाभिधानसमर्थागमवान्भवतीत्यर्थः । नचागमस्यानर्थकत्वेन तद्बाधितम्; अनागमकानां सागमका आदेशा इति सिद्धान्तात् । एवंचात्रापि सोऽभिधेयत्वेनोपेक्ष्यते । भाष्यं तु प्राग्वदेव व्याख्येयमिति ॥ छाया ॥

४ वस्तुत इति । लिङ्गशून्यस्थल इति शेषः ॥ छाया ॥

५ यत्नेति । पूर्वौ रित्यादौ पूर्वादिग्रहणमेव लिङ्गं यत्न इति भावः ॥ छाया ॥

६ सिद्धान्ती पूर्वोक्तपक्षाणामसंभवमेव सूचयन्संज्ञासंज्ञिभावनिर्णये दृढतरां युक्तिं प्रतिपादयति—इदमिति ॥

७ शङ्ककवाक्यं स्वयमेवाशङ्कते—तत्रेति ॥ छाया ॥

८ सिद्धान्ती निरस्यति—तच्च नेति ॥ लोक इति मध्यमणिन्यायेनान्वेति ॥ छाया ॥

९ तदेवं तन्निरासे परिशेषात्संज्ञासंज्ञिनावेवेत्याह—तस्मादिति ॥ छाया ॥

१० संज्ञासंज्ञिनोरिति । मध्यमणिन्यायेनान्वयः ॥ छाया ॥

११ इदं भिन्नप्रवृत्तिनिमित्ताभ्यामिति विशेषणम् ॥ छाया ॥

१२ विरोधेति । त्वन्मते तस्यैवाभावेनाप्राप्त्या तत्सार्थक्योक्तेस्तच्छङ्कायाश्चासंगतत्वादिति भावः ॥ छाया ॥

१३ अयं पक्षश्चार्थे द्वन्द्व इत्यत्र भाष्येऽङ्गीकृतो निराकृतश्च । तदाशयस्त्वित्थं मञ्जूषायां व्यक्तीकृतः—'युगपदधिकरणवचने द्वन्द्वः' इति न्यासस्य—अधिकरणं वर्तिपदार्थौ तयोर्युगपत्पदद्वयेनाभिधाने द्वन्द्व इत्यर्थः । एवंच रामकृष्णावित्यादौ रामपदेन रामकृष्णयोः कृष्णपदेन च तयोरभि-

करणवचनतापक्षे पट्वीमृद्व्यावित्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च ॥ विशेषणत्वादिकं चोपपद्यत इत्याह—**विशेषणेति** । भाष्ये **संज्ञासंज्ञिनोः** इत्यत्र संज्ञिपदेन संज्ञिसमर्पकः शब्दोऽभिप्रेतः । संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तं संज्ञिनि तत्सम्बन्धात्। संज्ञिवोधकशब्दे च संज्ञिगततत्तद्धर्मः प्रवृत्तिनिमित्तम्। एवं च वृद्धिशब्दवदभिन्ना आदैच इति वोधः । वृद्धिशब्दवत्त्वं च लोकसिद्धतादात्म्येनेत्याशयः ॥ **अन्येत्विति**[1] । संज्ञासंज्ञिनोस्तूक्तं प्रवृत्तिनिमित्तमिति सामानाधिकरण्यम् । एकविभक्तिकत्वं त्वत्र पक्षे शब्दद्वारा वोध्यम् । विभक्तिशब्देन शक्तिर्वा । भाष्ये **संज्ञासंज्ञिनोरित्यस्य** तत्प्रवृत्तिनिमित्तयोरित्यर्थः ॥ अन्येत्विति मतेऽरुचिवीजं तु प्रतीतपदार्थकयोरिति वहुव्रीहिस्वरसभङ्गः ॥ **विशेषणविशेष्यभावो भवतीत्यस्य** तदर्थप्रतिपादकत्वं भवतीत्यर्थः ॥ ननु वैयाकरणानामादैच्छब्दः प्रतीतपदार्थक एवेत्यत आह—**नहीति** । वृद्धिशब्दार्थान्वययोग्य[2] इति शेषोऽत्र द्रष्टव्यः ॥ केचित्तु[3] वृद्ध्यादिशब्दाः शब्दपरा एव । वृद्धिशब्दाभिन्ना आदैच इति वोधः । तदुक्तं हरिणा—

> "वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः[4] ।
> आदैच्प्रत्यायितैः शब्दैः[5] सम्बन्धं यान्ति संज्ञिभिः ॥"

इति । सामानाधिकरण्यं चैकविशेष्यकप्रतीतिजनकत्वमित्याहुः ॥

**( सिद्धान्तभाष्यम् )**

**तत्र[6] त्वेतावान्संदेहः—कः संज्ञी का संज्ञेति ॥ स चापि क्व सन्देहः? ॥ यत्रोभे[7] समानाक्षरे ॥ यत्र त्वन्यतरल्लघु[8] सा संज्ञा, यद्गुरु स संज्ञी ॥**

**कुत एतत्? ॥**

**लघ्वर्थं हि संज्ञाकरणम् ॥ तत्राप्ययं[9] नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति ॥ किं तर्हि? अनाकृतितामपि[10] । अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

(उद्द्योतः) भाष्ये यत्रोभे इति । प्रत्यय अनीयरित्यादौ ॥ लघ्वर्थमित्यस्य लाघवार्थमित्यर्थः[11] ॥

**( समाधानान्तरभाष्यम् )**

**अथवाऽऽवर्तिन्यः[12] संज्ञा भवन्ति । वृद्धिशब्दश्चावर्तते, नादैच्छब्दः । तद्यथा[13]—इतरत्रापि देवदत्तशब्द आवर्तते, न मांसपिण्डः ॥**

(प्रदीपः) आवर्तिन्य इति । देवदत्तादिशब्दा हि दानादिप्रतिपादनायावर्तन्ते ॥

(उद्द्योतः) न मांसपिण्ड इति । दूरस्थस्यापि[14] नामोच्चारणमात्रेण दानादिसंभवादिति भावः ॥

**( समाधानान्तरभाष्यम् )**

**अथवा[15] पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा ॥**

---

धानाद्भवति द्वन्द्वः । गामश्वमित्यादौ तु गवादयो भिन्नैः शब्दैरेकैकरूपा एव पृथक् प्रत्याय्यन्त इति न दोषः ॥ विरूपाणामित्येकशेपस्तु नात्र, द्वन्द्वविधिसामर्थ्येन समानार्थानामिति सामर्थ्येन च युगपदधिकरणतां विनापि समानार्थतायामेवैकशेपात् । पट्वीमृद्व्यावित्यत्र पुंवत्त्वमपि न, वृत्तेः प्रागपि यत्र सामानाधिकरण्यं तत्रैव तत्प्रवृत्तेः । सहभूतयोरेव युगपदर्थवोधनसामर्थ्यमिति नान्यतरवैयर्थ्यम् । द्वन्द्वविपयं चैतत् । अतः केवलरामपदाद्रामं कृष्णं चेति वाक्यघटकाच्च नोभयवोधः । वेदे तु क्वचिद्वाक्येऽपि सा द्यावा ह क्षमेत्यादौ । एकैकेनार्थाभिधानेऽपि तिष्यपुनर्वस्वोरितिसूत्रस्थवहुवचनस्येत्यनेन सर्वो द्वन्द्वो विभापैकवद्भवतीतिज्ञापनात्पक्षे धवखदिरमित्यादिसिद्धिरित्यङ्गीकाराशयः ॥ सेयं युगपदधिकरणवचनता दुःखा दुरुपपादाचेत्यादिभाष्यस्य तु 'दुःखत्वं प्रतीतावनुपारोहात् । तथाहि—वृद्धव्यवहाराद्धि शब्दार्थावसायः । न च प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं लोके दृश्यते । न च प्लक्षशब्दस्य लक्षणा, न्यग्रोधशब्देनैव तल्लाभात् । द्विवचनाद्यन्तप्रयोगस्यान्यथासिद्धेश्च ॥ समूहस्यावयवापेक्षद्वित्वादिमतः समुदायात्प्रतीतेः ॥ दुरुपपादेत्यस्य दुष्टं निःसारमुपपादनं यस्याः सा निष्प्रमाणेत्यर्थः इति ॥ दाधि०

१ समानमधिकरणमभिधेयं ययोरिति व्युत्पत्तिः पूर्वमते । समानमधिकरणमाधाराधेययोः प्रवृत्तिनिमित्तयोरितिव्युत्पत्त्यनुसारेणाह—अन्ये त्वितीति॥ ॥ छाया ॥

२ ननु सर्वं नाम धातुजमिति व्युत्पादने तत्रापि कश्चिदर्थः प्रसिद्ध एवात आह—वृद्धीति । लोकप्रसिद्धेत्यादिः ॥ छाया ॥

३ इत्याशय इति सूचितामरुचिं प्रकटयन्प्रागुक्तरीत्या सिद्धान्तमाह—केचित्त्विति ॥ छाया ॥

४ स्वरूपोपेति । तद्बोधका इत्यर्थः ॥ छाया ॥

५ शब्दैराकारादिभिः ॥ छाया ॥

६ निर्णीतेऽप्यर्थे विशेपमभिधातुमुपक्षिपति स्वयमेव—तत्रेति ॥ संदेह इति । स्यादिति शेपः ॥ छाया ॥

७ उभे विधेयानुवाद्ये ॥ छाया ॥

८ लघु अल्पाक्षरम् ॥ छाया ॥

९ ननु सर्वनामसंप्रसारणसर्वनामस्थानकर्मप्रवचनीयादौ वैपरीत्येन न लाघवमिति तत्र कथम् । नचान्वर्थत्वाय तत्, तत्त्वनियन्धनस्य तस्य संज्ञात्वनिर्णयात्प्रागसिद्धेरत आह—तत्राप्ययमिति ॥ निर्णयेऽपि अध्येतेत्यर्थः । सूत्रकारो वा संज्ञासंज्ञिभावो वा ॥ वोपेति । निर्णायकत्वेन स्वीकर्तुमित्यर्थः । अन्यस्यापि तस्य तादृशस्य त्यागे मानाभावात् ॥ इदं तु स्पष्टत्वात्प्रागुक्तम् । नतु तदेवादर्तव्यमिति भावः ॥ छाया ॥

१० अनाकृतीति । अस्य प्रागदूपितत्वादिति भावः । अपिर्लाघवसमुच्चायकः । तथाच क्वचित्किंचिदाश्रयणीयमिति भावः ॥ छाया ॥

११ लाघवार्थमिति । अन्यथा व्यावृत्तानुवृत्तभिन्नभिन्नधर्मोक्तौ प्रतिव्यक्तिनिर्देशे वा गौरवं स्यात् । तथाच हलोनन्तरा इत्यत्र विशिष्टानुवाद्यस्य संज्ञित्वमिति भावः ॥ छाया ॥

१२ यद्यनाकृतिशब्देनाखण्डपदत्वं विवक्षितं तर्हि तदपि सर्वनामादिसंज्ञास्वतिव्याप्तमत आह—अथवेति आवर्तिन्यः प्रदेशेपु पुनः पुनरुच्चार्यमाणाः । संज्ञी तु तदधीनप्रतीतिकत्वात्स्वरूपेण नोच्चार्यते । तदाह—वृद्धीति ॥ छाया ॥

१३ न केवलमत्रैवेदं किंतु लोकेऽपीत्याह—तद्यथेति ॥ छाया ॥

१४ दूरस्थेति । तथाच स्मृतिः—

> 'दूरस्थं पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् ।
> दाता तत्फलमाप्नोति प्रतिग्राही न दोपभाक् ॥'

इति ॥

१५ ननु संज्ञाया अपि नावर्तननियमो गुह्यस्यापि नाम्नः 'पुमानयं जनिष्यते असौ नामेति नामधेयं गृह्णाति यत्तद्गुह्यमेध भवति' इति गृह्ये दर्शनादत आह—अथवेति । रूपेण संज्ञाद्वारेण वा पूर्वनिर्दिष्टोऽनुवाद्य इ-

**कुत एतत्? । सतो हि कार्यिणः कार्येण भवितव्यम् । तद्यथा—इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

**(प्रदीपः) अथवेति** । सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वं निर्दिष्टे संज्ञा प्रवर्तत इत्यर्थः ॥ ततश्चादेङ् **गुण** इत्यादावदेङादयः संज्ञिनो गुणादयः संज्ञाः ॥

**(उद्द्योतः) सतो** हीत्यादिना न भावरूपं विवक्षितमभावस्यापि लोपादिसंज्ञादर्शनात् । नापि विद्यमानत्वं प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधानादत आह—**बुद्ध्येति** । अत एव सावर्णिर्भविता मनुरित्यादौ न दोषः । एवं च सच्छब्देन पूर्वं बुद्ध्या विषयीकृतत्वं[2] विवक्षितमित्यर्थः ॥ बुद्धिसत्तासमाविष्ट एव चार्थः शब्देन बोध्यत इति सिद्धान्तात् । तत्त्वं हि पूर्वोच्चारितस्यैव भवतीत्याह—**शब्देन पूर्वमिति** ॥

( आक्षेपभाष्यम् )

**कथं[3] "वृद्धिरादैच्" इति? ॥**

( समाधानभाष्यम् )

**एतदेकमाचार्यस्य[4] मङ्गलार्थं मृष्यताम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति ॥ सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा "अदेङ् गुणः" इति यथा ॥**

**(प्रदीपः)** इह तु मङ्गलार्थोऽन्यथा पाठक्रमः, आर्थस्त्वन्यथा क्रमः । अन्ये तु सिद्धिहेतवो भविष्यन्ति ॥ **अपृक्त एकाल्प्रत्यय** इति परिभाषा, न संज्ञेति नास्ति व्यभिचारः । अपृक्तशब्देन ह्येकाकी कथ्यत इत्यनेनानियमेन ग्रहणे प्राप्ते नियमः क्रियते ॥

**(उद्द्योतः)** भाष्ये माङ्गलिको मङ्गलप्रयोजनः ॥ **महतः** अर्थतः ॥ एकैकं सूत्रं शास्त्रमिति **शास्त्रौघस्येत्युक्तम्** ॥ **मङ्गलादीनीत्यादिना** स्वप्रयोजनं श्रोतृप्रयोजनं चोक्तम् ॥ **प्रथन्ते** विस्तृतानि भवन्ति । तेन समाप्तिरर्थाक्षिप्ता ॥ **आर्थस्त्वन्यथेति** । आदैज् वृद्धिरित्याकारः । आनुपूर्वीज्ञानस्यासत्तिविषया[6] हेतुत्वादिति भावः ॥ कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह—**अन्ये त्विति** । लाघवादयः । आदैचो वृद्धिपदाभिन्ना इत्यर्थः । एवंचानुपूर्वीव्यत्यासेन विलम्बेन बोधजनकशब्दोच्चारणं मङ्गलार्थं क्षम्यतामिति बोध्यम् । अत्रैकशब्दः[7] प्रथमार्थकः प्रथमं तथाकरणं मङ्गलार्थमेव । एवंचान्यत्रापि तथाकरणमुद्देश्यविधेयभावेनान्वये तादृशस्यैव साधुत्वमिति भ्रमवारणार्थमित्याहुः ॥ **परिभाषेति** । तदा हि **यत्रापृक्तपदं तत्रैकालित्याद्युपतिष्ठत** इत्यर्थात्प्राथम्यं युक्तमेवेत्यर्थः ॥ वस्तुत[8] इदं वृद्धिसूत्रेपि सुवचम् । किं चैवमपृक्तसंज्ञायामित्यादि भाष्यवार्त्तिकव्यवहारानुपपत्तिः ॥ केचित्तु[9] परिभाषात्वेपि एकाल्प्रत्यय इत्येतदुद्देशेनापृक्तपदवद्देशस्थत्वं विधेयम् पदपरत्वार्थं तत्रापि लक्षणावश्यकत्वेन सामानाधिकरण्यान्वयार्थं तावत्पर्यन्तलक्षणाया उचितत्वात् । पदत्रयाध्याहारे[10] गौरवाच्च । एवं च परिभाषात्वेऽप्युद्देश्यत्वेन तस्यैव पूर्वपाठो युक्तः । आनुपूर्वीव्यत्यासाद्बोधस्तूभयोः सम इति वदन्ति ॥

( सिद्धान्तिभाष्यम् )

**दोषवान्खल्वपि[11] संज्ञाधिकारः । अष्टमेऽपि हि संज्ञा[12] क्रियते—"तस्य परमाम्रेडितम्" इति । तत्रापीदमनुवर्त्यं स्यात् ॥**

**(उद्द्योतः)** भाष्ये **अनुवर्त्यं स्यादिति** । तच्चासंबद्धबहुव्यवाया[13]दशक्यमिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथवा[14]ऽस्थानेऽयं यत्नः क्रियते । न हीदं लोकाद्भिद्यते । यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात् ।**

---

त्यर्थः । संज्ञाविधौ तस्योद्देश्यत्वम्

'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' ।
सिद्धं धर्मिणमुद्दिश्य साध्यो धर्मो विधीयते ॥'

इति न्यायादिति भावः । तदाह—सतो हीति ॥ छाया ॥

१ नन्वेवमत्र सूत्रे वैपरीत्यापत्तिरित्याह—कथमिति ॥ छाया ॥

२ लाघवादिभिर्व्यवस्थामत्र हृदि निधाय पाठव्यत्यये बुद्धिपूर्वे हेतुमाह—एतदेकमिति ॥ छाया ॥

३ लोकदृष्टान्तमुक्त्वा शास्त्रदृष्टान्तमाह—सर्वत्रैवहीति । हिर्निश्चये । बहुष्वपीत्यर्थः । यद्वा क्वचिदभिमतार्थबोधनायान्यथा पाठेऽपि शाब्दबोधोपयोगिसामग्रीसंपादनायान्यथावाक्यकल्पनमावश्यकमिति सर्वत्र तदस्तीति न व्यभिचार इत्याह—सर्वत्रैवेति ॥ छाया ॥

४ विद्येति । सत्ताजातियोगिविवक्षापि न अदेङादावतिप्रसक्तेरित्यपि बोध्यम् ॥ छाया ॥

५ कृतत्वमिति । अज्ञातस्यानुवादानुपपत्तेरिति भावः ॥ छाया ॥

६ आसत्तीति । आसत्तेरुपस्थितिरूपत्वादिति भावः ॥ छाया ॥

७ ननु 'आर्धधातुकं शेषः' 'कृदतिङ्' 'स्वं रूपं शब्दस्य' 'अपृक्त एकाऽल्' 'अणुदित्सवर्णस्य' 'तपरस्तत्कालस्य' 'आदिरन्त्येन' 'येनविधिस्तदन्तस्ये'त्यादावपि तथा सत्त्वात्कथमेकत्वमत आह—अत्रैकेति ॥ छाया ॥

८ कैयटं खण्डयति—वस्तुत इति ॥ वदन्तीत्यत्रान्वयः ॥ छाया ॥

९ तत्त्वमभ्युपेत्यापि खण्डयति—केचित्त्विति ॥ छाया ॥

१० पदत्रयेति । यत्र तत्रोपतिष्ठते इतीत्यर्थः ॥ पददोषापेक्षया वाक्यदोषस्य गुरुभूतत्वादिति भावः ॥ छाया ॥

११ न केवलमुक्तहेतुत एव तदधिकाराकरणम् । अपितु दोषवत्त्वादपीत्याह—दोषेति ॥ छाया ॥

१२ संज्ञेति । क्वचित् 'संज्ञाः क्रियन्ते' इति बहुवचनं दृश्यते तत्र 'आष्टमे' इत्यपि पाठो भवेत् । अव्ययीभावोऽभिविधौ समाश्रयणीयः । अन्यथा बहुवचनानुपपत्तिः । परंत्वपिशब्दस्तेषां निरर्थकः स्यात् । तस्मादेकवचनान्त एव 'संज्ञा क्रियते' इति पाठः ॥

१३ असंबद्धेति हेतुद्वयम् । 'व्यवायान्नानुषज्येत' इति न्यायबाधितत्वादनुपपादमित्यर्थः ॥ छाया ॥

१४ क्रियमाणोऽप्ययं यत्नो निष्फलत्वादनुचित इत्याह—अथवेति ॥ अयं संज्ञाधिकारः । इदं संज्ञाकरणम् । लोकात् तद्व्यवहारात् ॥ अस्य हेतुत्वाय विपरीतव्याप्तिमाह—तद्यथेति ॥ उपेति । कालान्तराविवक्षया व्यवहारपरम्परया वा तत्त्वात्तथा निर्देशः ॥ छाया ॥

**तद्यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति—अयं गौरिति । न चास्मायाचष्टे 'इयमस्य संज्ञा' इति । भवति चास्य संप्रत्ययः ॥**

(प्रदीपः) अस्थान इति । अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र संज्ञासंज्ञिसंबन्धः सिध्यतीत्यर्थः ॥

(उद्द्योतः) अस्थाने [1]अनवसरे । भिद्यते विलक्षणं भवतीत्यर्थः ॥

( आक्षेपभाष्यम् )

**[2]तत्रैतत्स्यात्-'कृतस्तत्र पूर्वैरभिसंबन्धः' इति ॥**

(उद्द्योतः) अभिसंबन्धः संज्ञासंज्ञिभावः । ततो ज्ञातुं शक्य इति भावः ॥

( समाधानभाष्यम् )

**[3]इहापि कृतः पूर्वैरभिसंबन्धः ॥**

**कैः ? ।**

**[4]आचार्यैः ॥**

( आक्षेपभाष्यम् )

**[5]तत्रैतत्स्यात्—यस्मै तर्हि सम्प्रत्युपदिशति तस्याकृत इति ॥**

(उद्द्योतः) तस्याकृत इत्यस्य तेनाज्ञात इत्यर्थः । तथा च तेन कथं प्रतिपत्तुं शक्य इति भावः ॥

( समाधानभाष्यम् )

**[6]लोकेऽपि हि यस्मै सम्प्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः, इहापि कृतो द्रष्टव्यः ॥**

(उद्द्योतः) अथ तत्रेति । अनुमाना[7]दिना ज्ञात इत्यर्थः ।

( इति संज्ञाधिकारसंज्ञासंज्ञिसंदेहापाकरणाधिकरणम् )

( अन्योन्याश्रयपरिहाराधिकरणम् )

( ९८ अथान्योन्याश्रयाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ [8]सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥**

( भाष्यम् )

**[9]सतः संज्ञिनः संज्ञाभावात् । तदाश्रये संज्ञाश्रये संज्ञिनि वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः ॥ का इतरेतराश्रयता ? ॥ सतामादैचां संज्ञया भवितव्यम्, संज्ञया चादैचो भाव्यन्ते । तदे[10]तदितरेतराश्रयं भवति । [11]इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा—नौर्नावि[12] बद्धा नेतरत्राणाय भवति ॥**

(प्रदीपः) सतो वृद्ध्यादिष्विति । विधौ[13] चायं दोषो नानुवादे—वृद्धिर्यस्येत्यादौ । तत्र च संज्ञाविधानस्य चरितार्थत्वान्मृजेर्वृद्धिरित्यादौ वृद्धिशब्द एवादेशः प्राप्नोति ॥

(उद्द्योतः) सतो वृद्ध्यादिष्विति । [14]सतो निष्पन्नस्य संज्ञाभावात्संज्ञासंबन्धात् तदाश्रये संज्ञाश्रये संज्ञया संज्ञिविधायके शास्त्रे मृजेर्वृद्धिरित्यादौ ॥ वृद्ध्यादिषु वृद्ध्यादिपदेषु ॥ इतरेतराश्रयत्वादप्रसिद्धिर्वाक्यार्थाप्रसिद्धिरित्यर्थः । अविद्यमाने संबन्धस्य वक्तुमशक्यत्वादिति भावः ॥

( इतराश्रयिदृष्टान्तभाष्यम् )

**[15]ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा—नौः शकटं वहति, शकटं च नावं वहति ॥**

(प्रदीपः) ननुच भो इति । नौश[16]कटस्याभिमतदेशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम् ॥

(उद्द्योतः) वहनक्रियायामितरेतराश्रयत्वाभावेपि तत्फल[17]तीत्याह—नौशकेति ॥

१ अनवसरे निवर्त्यसंदेहशून्यविषये ॥ छाया ॥

२ एतदाक्षिपति—तत्रैतदिति । तथोक्तावेतद्वैपरीत्यं संभावितमित्यर्थः । पूर्वैः व्यवहर्तृभिः । कृतः व्यवहृतः ॥ आद्यसंकेतकर्त्रेश्वरेण सृष्टः उपदेष्टा तु सन्तमेव बोधयति, इह त्वसतः कथं सृष्टिर्बोधनं चेति भावः ॥

३ उत्तरमाह—इहापीति । कृत एव संबन्ध उत्तरकालं बोध्यते ॥ छाया ॥

४ अन्यकृत एव बोधनीय इत्यनियमादुत्तरमाह—आचार्यैरिति । प्रश्नानुरूपमुत्तरम् ॥ ततश्चोपदेशः सुकर इति भावः ॥ छाया ॥

५ संभवत्यप्युपदेष्टृत्वे श्रोत्रा कथं बोद्धव्यमिति शङ्कते—तत्रैतदिति ॥ छाया ॥

६ परिहरति—लोकेऽपीति ॥ इहापीति । सामानाधिकरण्यनिर्देशेनेत्यर्थः ॥ छाया ॥

७ आदिना 'अयं गौरिति वाक्यप्रयोगसामर्थ्यादिपरिग्रहः ॥ छाया ॥

८ आदैज्मात्रस्य संज्ञेति सिद्धान्तपक्षे दोषमाह—सत इति ॥ छाया ॥

९ सत इत्यादेर्विशेष्यं दर्शयन्व्याचष्टे—सत इति । संज्ञिनि तद्विधायके ॥ छाया ॥

१० तदेतदिति । संज्ञासंज्ञिद्वयरूपमित्यर्थः ।

११ तत्रेष्टापत्तिं परिहरति—इतरेतरेति । मुख्यकारणस्य हि सहकारिकारणसमवधानाच्छक्तिलाभः सहकारिणोऽपि सा शक्तिः स्वोपकार्यव्यापारमपेक्ष्य भवेत् तदैकव्यापारात्पूर्वमितराप्रवृत्तिनियमात्कार्यानारम्भ एव स्यादित्यर्थः ॥ छाया ॥

१२ नौर्नावीति । कर्णधाररहितं नौद्वयं मिथः संबद्धं मिथः परतीरप्रापणाय न भवतीत्यर्थः ॥ छाया ॥

१३ ननु संज्ञाविधानसामर्थ्याद्विधिषु भाविसंज्ञाविधानेनायं न दोषोऽत आह—विधौ चेति ॥ सिचि वृद्धिरित्यादावित्यर्थः ॥ छाया ॥

१४ भगवता सर्ववार्तिकस्याविवृतत्वात्तदक्षरस्वारस्यादाह—सत इति ॥ छाया ॥

१५ तत्र व्यभिचारमाशङ्कते—ननु चेति ॥ छाया ॥

१६ नौशकटस्येति । सेनाङ्गत्वादेकवद्भावः ॥ छाया ॥

१७ तत्फलतीति । देशान्तरप्राप्तिरूपफले तत्सत्त्वात्तत्रापि सत्त्वमिति भावः ॥ छाया ॥

( दृष्टान्तनिरासभाष्यम् )

**अन्यदपि[1] तत्र किंचिद्भवति जलं स्थलं वा । स्थले शकटं नावं वहति । जले नौः शकटं वहति ॥**

( इतरेतराश्रयिदृष्टान्तान्तरभाष्यम् )

**यथा[2] तर्हि त्रिविष्टब्धकम् ॥**

( दृष्टान्तान्तरनिराकरणभाष्यम् )

**तत्राप्यन्ततः[3] सूत्रकं भवति ॥**

(प्रदीपः) सामग्र्यन्तरानुप्रवेशेन चोत्तरम् ॥

(उद्द्योतः) सामग्र्यन्तरेति । कारणान्तरेत्यर्थः ॥ सूत्रकं कीलकादि ॥ न[4] च सामान्यलक्षणया भूतभाविसकलविषयकशक्तिग्रहः संभवत्येव । अन्यथा तवापि तत्तद्बोद्धबुद्धौ असंनिहितसकलाकारविषयकशक्तिग्रहासंभवेनानुवादेपि दोषः स्यात् । सामान्यलक्षणानङ्गीकारेपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावाभ्युपगमान्न दोष इति वाच्यम् । जातिप्रकारकशक्तिग्रहस्य स्वाश्रयीभूतसकलव्यक्तिबोधकत्वेप्यनुत्पन्ने जात्याश्रयत्वसंबन्धस्य वक्तुमशक्यतया भाविव्यक्तेर्जात्याश्रयत्वाभावात् तद्बोधासंभवेन मृजेर्वृद्धिरित्यत्र तज्जन्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात्[5] । वृद्धिरादैजित्यस्य विद्यमानेषु बुद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वासंभवेन तत्र वृद्धिपदस्य शक्तिग्रहासंभवाच्च ॥

( आक्षेपोपसंहारभाष्यम् )

**इदं[6] पुनरितरेतराश्रयमेव ॥**

( ९८ अन्योन्याश्रयवारकसिद्धान्तिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं[7] तु नित्यशब्दत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम्? ॥**

**नित्यशब्दत्वात् । नित्याः शब्दाः, नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते, न च संज्ञया आदैचो भाव्यन्ते ॥**

(प्रदीपः) सिद्धं त्विति । न हि मृजेरपूर्वं आकारो भाव्यते किं तु मृजावुपदिष्टे मार्ष्टीत्यादीनामसाधुत्वबुद्धिः प्राप्नोतीति तेषां साधुत्वान्वाख्यानं क्रियते ॥

(उद्द्योतः) यद्यप्यस्य सूत्रस्य शाटकं वयेत्यादाविव भाविसंज्ञाविज्ञानेन सिध्यति, यथा च तत्रोत्पत्त्यनन्तरं गृहीतशक्तिकशाटकसादृश्याच्छाटकपदशक्तिग्रहस्तथा प्रकृतेपि । स्पष्टंचेदमिग्यण इति सूत्रे भाष्ये । तथाप्यत्र वास्तवमेव[8] परिहारमाह—भाष्ये सिद्धं त्विति । एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

( आक्षेपभाष्यम् )

**यदि[9] तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम्? ॥**

( ९९ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ किमर्थं[10] शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥ * ॥

( भाष्यम् )

**निवर्तकं शास्त्रम् ॥**

**कथम्? ॥**

**मृजिरस्माय[11]विशेषेणोपदिष्टः । तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते मृजेरकुङित्सु[12] प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवतीति ॥**

( इत्यन्योन्याश्रयनिराकरणाधिकरणम् । )



१ ( व्यभिचारं निरस्यति ) उत्तरमाह—अन्यदपीति ॥ अन्यदेवेत्यर्थः ॥ छाया ॥

२ ( तदेवं व्यभिचारे खण्डितेऽन्यत्र व्यभिचारमाशङ्कते ) दृष्टान्तान्तरमाह—यथातर्हीति ॥ त्रिवीति । मिथःसंबद्धास्त्रयो वेणवस्तत् ॥ छाया ॥

३ अत्रापि व्यभिचारं निरस्यति—तत्रापीति ॥

४ ननु शब्दानित्यत्वपक्षे इयं शङ्का । तत्रहि लक्षणैकचक्षुष्को व्याकरणबलेनैव शब्दव्युत्पत्तिमिच्छति इति यद्यपि, तथापि न दोष इति नित्यत्वपर्यन्तधावनं भगवतो व्यर्थमिति कौस्तुभोक्तिं खण्डयति—नचेति । 'मालादावाकारे श्रुते आत्व—' इति शेषः । लक्षणया प्रत्यासत्त्या । शक्तीति । वृद्धिशब्देत्यादिः ॥ अन्यथा उक्तप्रकारानङ्गीकारे ॥ तवापि तन्नित्यत्ववादिनोऽपि ॥ छाया ॥

५ भावादिति । 'सतो वृद्ध्यादिषु' इति वदतो भाष्यकृदादेरिति भावः ॥ छाया ॥

६ अत्र त्वन्योन्याश्रयस्यापरिहार्यत्वेनाप्रसिद्धिरेवेत्युपसंहरति—इदमिति ॥

७ एवं प्राप्तमन्योन्याश्रयं परिहरति—सिद्धं त्विति ॥

८ वास्तवमिति । अयं भावः—यद्यपि तत्र गत्यन्तराभावात्तदाश्रयणेऽपि कृतेऽनुवादविषये मालादौ चारितार्थ्येन तदाश्रयणं दुर्वचं तथापि सिद्धान्तितादैज्ग्रहणपक्षोपपत्त्यर्थमनुवाद इव विधावप्यस्योपस्थितेरवश्यं वाच्यतयैतदुपस्थितिसामर्थ्येनात्रापि तदाश्रयणं सुवचम् । अन्यथा तद्भावितग्रहणपक्षस्यैव सिद्ध्याऽऽदैज्मात्रग्रहणमिति पक्षासंगतिः स्पष्टैवेति ॥ छाया ॥

९ शब्दानां नित्यत्वे शास्त्रवैयर्थ्यमिति शङ्कते—यदीति ॥

१० नित्यशब्दत्वपक्षेऽपि न शास्त्रवैयर्थ्यमित्युत्तरयति वार्तिककारः—किमर्थमिति ॥

११ अस्मै साधुशब्दबुभुत्सवे । पाणिनिना प्रत्ययविशेषानाश्रयेण 'मृजूष् शुद्धौ' इति धातुपाठ उपदिष्ट इत्यर्थः । तस्य साधुशब्दबुभुत्सोः । सर्वत्र तिबादावपि । तत्रानेन तद्बुद्धौ प्रसक्तायां मृजेरितिसूत्रेण ॥ छाया ॥

१२ अकुङित्स्विति । क्ङितिचेति निषेधविषयपरिहारेण विधिप्रवृत्तेरेवमुक्तम् । मार्जिरिति । कृतवृद्धिक इत्यर्थः ॥

( अथ समुदितसंज्ञानिराकरणाधिकरणम् )

( १०० आक्षेपवार्तिकम् ॥ ४ ॥ )

## [ ॥ * ॥ [1]वृद्धिगुणसंज्ञयोः प्रत्येकं वचनम् ॥ * ॥

( भाष्यम् )

**वृद्धिगुणसंज्ञयोः प्रत्येकं ग्रहणं कर्तव्यम् ॥ ] प्रत्येकं वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**समुदाये मा भूतामिति ॥**

(प्रदीपः) **प्रत्येकमिति** । यद्यपि नित्यशब्दत्वेनैतदपि व्यवतिष्ठते तथापि न्यायव्युत्पादनायोपन्यासः ॥ **समुदाये मा भूतामिति** । अन्यथा मृजेर्वृद्धिरित्यादौ समुदाय आदेशः प्राप्नोति । समुदायावयवसन्निधौ क्व तात्पर्यं कस्य च नान्तरीयकत्वमिति विचार्यते ॥

(उद्योतः) **न्यायेति** । वक्ष्यमाणन्याय[2]द्वयेत्यर्थः ॥ ननु वृद्धिर्यस्येत्यादौ समुदायासंभवात् प्रत्येकमेव संज्ञेत्यत आह—**अन्यथेति** । एवं च तमादाय तत्रापि संभवः । [3]द्वन्द्वनिर्देशात्समुदायस्यैव स्यादिति भावः ॥ **समुदायेति** । "मातापित्रोर्मृतेहनी" तिवद्बोधे साहित्यं न तु क्रियानिष्पत्तौ इति भावः ॥

( १०१ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ [4]अन्यत्र सहवचनात्समुदाये संज्ञाप्रसङ्गः ॥ * ॥

( भाष्यम् )

**अन्यत्र सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं करोति तत्र सहग्रहणम् । तद्यथा "सह सुपा" "उभे अभ्यस्तं सह" इति ॥**

(प्रदीपः) **अन्यत्रेति** । यत्नसाध्या समुदायप्रतिपत्तिरिति यत्नाभावे न भवतीत्यर्थः ॥ ननु सहग्रहणं नियमार्थं स्यात्समुदायस्यैव समाससंज्ञा यथा स्यान्नावयवानामिति ॥ नैतदस्ति, उभयत्र तात्पर्याभावाद्युगपदुभयत्र प्रसङ्गाभावाल्लिङ्गत्वमेव सहग्रहणस्यान्यत्र समुदाये तात्पर्यं नास्तीत्यस्यार्थस्य ॥ **उभे अभ्यस्तं सहेति** । [5]अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम् । भाष्यकारस्तूभेग्रहणस्यैतत्प्रयोजनं स्थापयिष्यति ॥

(उद्योतः) **उभयत्रेति** । समुदायेऽवयवे चेत्यर्थः ॥ उभयत्र तात्पर्याभावे हेतुर्युगपदिति । फलाभावादिति भावः ॥ यद्यपि पर्यायः प्राप्नोति, तथापि समासविधिनियमोभयपरत्वे गौरवमित्यतो लिङ्गत्वकल्पनमेवोचितमित्यत्र तात्पर्यम् ॥ **भाष्यकारस्त्विति** । [6]तदेकदेशीत्यर्थः । द्वे इत्यनुवृत्त्यैव सिद्धे **उभेग्रहणं** सहार्थकमिति भावः ॥

( १०२ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ [7]प्रत्यवयवं च वाक्यपरिसमाप्तेः ॥ * ॥

( भाष्यम् )

**प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकं च भुजिः परिसमाप्यते ॥**

(प्रदीपः) **प्रत्यवयवं चेति** । अत्र वाक्यशब्देन वाक्यार्थः फलमुच्यते । तच्च देवदत्तादीनां भोजनम् । तस्य [8]चैतदेवं रूपं यत्प्रत्येकपरिसमाप्त्या संपद्यतेऽन्नादनादिरूपत्वात्तृप्तिफलत्वाच्च भोजनस्य । नाट्यक्रिया तु समुदाये समाप्यते गीतादिक्रियासमुदायरूपत्वात्तस्याः । संयोगसंज्ञा त्वन्वर्थत्वात्समुदाये प्रवर्तते । वृद्धिसंज्ञा तु लक्ष्ये पृथगादैचां दर्शनाद् **मालादीनां** चेति लिङ्गाच्च प्रत्येकं व्यवतिष्ठते ॥

(उद्योतः) न ज्ञापकादेव, किं तु युक्तितोपि प्रत्येकं संज्ञे-

---

१ अयं कोष्टकान्तर्गतो वार्तिकपाठः सव्याख्यः प्राय आधुनिकपुस्तके त्रुटितः प्रतीयते संयोगसंज्ञाभ्यस्तसंज्ञासूत्रभाष्यसमानशैलीकत्वस्यैव न्याय्यत्वात् 'प्रत्येकमिति वार्तिकेनोच्यते' इति छायायां स्पष्टमुपलभ्यमानत्वाच्च ॥ दा०

२ न्यायद्वयेति । ब्राह्मणभोजनन्यायगर्गदण्डनन्यायेत्यर्थः ॥ छाया ॥

३ ननु समुदायस्य प्राप्तिरेव कथं यदर्थं प्रत्येकमित्युच्यते । ये तु प्रत्याहारेण मिथः सापेक्षप्रतीतेर्मिलितानामेव सेत्याहुः । तन्न अचीत्यादिष्वपि मिलितानामेव निमित्तत्वापत्तेरत आह—द्वन्द्वेति ॥ छाया ॥

४ तत्रादौ [ सिद्धान्ती प्रत्येकवचनाक्षेपं ] ज्ञापकेन परिहरति—अन्यत्रेतिवार्तिकेन ॥ छाया ॥

५ ननु भगवत 'उभे अभ्यस्तम्' इत्युक्त्वा 'सह' इत्युक्तिः पूर्वापरविरुद्ध उभेग्रहणेनैव तदर्थं प्रतिपाद्य सहग्रहणप्रत्याख्यानादत आह—अत्रेति ॥ छाया ॥

६ ननु तत्सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनेष्टसिद्धिमाश्रित्य सहेति वार्तिकं प्रत्याख्यातम् । एवं च तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभेग्रहणमपि प्रत्याख्यातप्रायमेव । एवंच द्वेइत्यनुवृत्त्यैव सिद्धे तत्स्पष्टार्थम् । यत्तूभेग्रहणसामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकम् । तेन समुदिते इत्यर्थलाभः इति । तन्न, अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भगवतोपहसितत्वाच्च । ध्वनितं चेदं 'तदसति प्रयोजने सहार्थं विज्ञास्यते' इति ग्रन्थेन भाष्येऽत आह—तदेकेति । तच्छिष्य इत्यर्थः ॥ छाया ॥

७ एवं वार्तिककारो ज्ञापकेनाक्षेपं निराकृत्य लोकयुक्तितोऽपि निराकरोति—प्रत्यवयवमिति ॥

८ चैतदेवेति । वाक्यार्थफलभूतप्रयोज्यब्राह्मणकर्तृका भुजिक्रिया सामर्थ्यात्प्रत्येकं पर्यवस्यतीत्यर्थः । एवेनान्यथा तदसिद्धिः सूचिता । तथाहि—एकेन पादप्रक्षालनम्, अन्येनासन उपवेशनम्, अपरेणान्नगिलनमित्येवं भुजिक्रिया न निवर्तते भिन्नाधिकरणत्वेन तत्स्वरूपस्यैवाप्रतिलम्भात् । अपितु एकाधिकरणेनैव निवर्त्यते । तदाह—अन्नादेवेति ॥ छाया ॥

त्याह—भाष्ये प्रत्यवयवमिति ॥ ननु प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकं भुजिसमाप्त्युक्तिरयुक्ता, न हि भुज्यर्थोत्र वाक्यार्थः। किं तु ण्यन्तार्थोत आह—अन्नेति । वाक्यार्थस्तु अत्र प्रयोजकव्यापारस्तस्य समुदायविषयत्वसंभवात्फलग्रहणम् । तच्च प्रयोज्यव्यापाररूपमित्याह—तच्चेति ॥ ननु विशिष्टपरिमाणस्यादनीयस्य भोजनक्रिया समुदायपर्याप्तेत्यपि वक्तुं शक्यमत आह—तृप्तिफलत्वाच्चेति ॥ सर्वोपि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य इत्याह—नाव्येति ॥ गीतादीति । आदिना नृत्तवाद्यादि ॥ अन्वर्थत्वात् संयुज्यन्ते वर्णा अन्नेति ॥ लक्ष्यानुसारात्तत्र समुदाये वाक्यपरिसमाप्तेराश्रयणमिति तत्त्वम् ॥ प्रकृतेऽन्यतरन्यायाश्रयणे हेतुमाह—वृद्धिसंज्ञेति ॥ लिङ्गादिति । प्रस्थेऽवृद्धमिति निषेधबाधनार्थं हि तदिति भावः ॥ न च नामधेयरूपमालादीनामाद्युदात्तार्थं तत्; तस्य वा नामधेयस्येति पक्षे वृद्धत्वादिति वाच्यम् । अभिव्यक्तेति न्यायेन तत्राप्रवृत्तेः ॥

## ( आक्षेपभाष्यम् )

**ननु चायमप्यस्ति दृष्टान्तः—"समुदाये वाक्यपरिसमाप्तिः" इति। तद्यथा—'गर्गाः शतं दण्ड्यन्ताम्' इति। अर्थिनश्च राजानो हिरण्येन भवन्ति। न च प्रत्येकं दण्डयन्ति ॥**

(प्रदीपः) गर्गाः शतं दण्ड्यन्तामिति । अत्र शतस्येप्सिततमत्वात् प्राधान्यम्,अपादानस्थानप्राप्ता गर्गा गुणकर्म, न च गुणभेदे प्रधानस्य भेद इति शतदण्डनं समूहे परिसमाप्यते ॥ अर्थिनश्चेति । शतस्य प्राधान्यं प्रतिपाद्यते । दण्डपरायां हि चोदनायां शतस्य प्राधान्यमतो वाक्यादवगम्यते ॥

(उद्द्योतः) समुदाये समाप्तौ युक्तिमाह—अत्र शतस्येति । एवंचाकथितसूत्रे दण्डिरपि परिगणनीय इति भाव इत्येके ॥ उद्देश्यत्वरूपमार्थं प्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म । दण्डेश्च स्वसंप्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः । शासनं नियन्त्रणम् । तत्र ण्यन्त इव कर्तुरित्युभयोः कर्मत्वम् । कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दं प्राधान्यम् । तत्रैव प्रधाने कर्मणि लकारः । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्युक्तेः । दुहादिष्वस्याप्रामाणिकः पाठ इति वक्ष्यते ॥ अपादानस्थानप्राप्ता इत्यनेन चानुद्देश्यत्वमात्रमभिप्रेतमिति परे ॥ शतस्य प्राधान्यमिति । शारीराभिहननलक्षणदण्डव्यावर्त्तनेनेति भावः ॥

## ( समाधानभाष्यम् )

**सत्येतस्मिन्दृष्टान्ते यदि तत्र सह ग्रहणं क्रियते, इहापि प्रत्येकमिति वक्तव्यम् । अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति, इहापि नार्थः प्रत्येकमिति वचनेन ॥**

(प्रदीपः) अथ तत्रान्तरेणेति । न्यायादन्वर्थत्वाच्च समाससंज्ञायाः समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं तत्र सहग्रहणं स्थितमिति तत्रान्तरेणेत्युक्तम् ॥

(उद्द्योतः) नन्वन्तरेणापीति वाच्ये सार्वकालिकासत्त्वप्रतिदकमपिशब्दरहितमयुक्तमत आह—न्यायादिति । शतदण्डनन्यायेत्यर्थः ॥ योगविभागेति । तिङन्तसमासायेति भावः ॥

( इति समुदायसंज्ञानिराकरणाधिकरणम् । )

## ( अथ तपरग्राह्यनिराकरणीयाधिकरणम् । )

## ( आक्षेपभाष्यम् )

**अथ किमर्थमाकारस्तपरः क्रियते? ॥**

---

१ ननु भाष्ये 'वाक्यपरिसमाप्तिः' इत्युक्त्वा भुजिपरिसमाप्त्युक्तिरयुक्ता इकप्रत्ययान्तभुजिशब्दस्य धातुपरत्वाद्वाक्यस्य पदसमूहपरत्वात् । किं च परिसमाप्तिः पर्यवसानं तच्चार्थस्य, न शब्दस्येत्युभयत्र तथोक्तिरयुक्तेति चेत् । न भुजिवाक्यशब्दयोरर्थपरत्वात् । एवमप्ययुक्तत्वमाह—ननु प्रत्येकमिति॥ वाक्यार्थः वाक्यजन्यधीविशेषः ॥ छाया ॥

२ न्यतरेति । ब्राह्मणभोजनन्यायेत्यर्थः ॥ छाया ॥

३ तदितीति । समुदायस्य संज्ञायां तु मालादौ तदभावेन तदभावात्तदभावेन पूर्वेणापर्युदासात्तेनैव सिद्धे सूत्रारम्भो व्यर्थ एव स्यादिति भावः ॥ छाया ॥

४ अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यो न शब्देषु तदुक्तिषु ॥ १ ॥

५ ननु केवललोकयुक्तित एव निर्णये तत्र युक्त्यन्तरस्यापि सत्त्वेन संदेहस्तदवस्थ एवेति ज्ञापकाश्रयणमेव युक्तम्, न द्वितीयमित्याशयेनाशङ्कते—ननुचेति ॥ छाया ॥

६ अर्थिनश्चेति वाक्यशेषस्योपयोगं प्रकटयति—शतस्येति ॥ छाया ॥

७ समुदाय इति । शङ्कोक्ते समुदायपरिसमाप्तिदृष्टान्त इत्यादि ॥ छाया ॥

८ एक इत्यनेन सूचितामरुचिं प्रतिपादयन् सिद्धान्तमाह—उद्देश्येति ॥ छाया ॥

९ नन्वेवमपि 'प्रधानकर्मण्याख्येये' इत्युक्तेः शतरूपे कर्मणि लापत्तिरत आह—कर्तृप्रत्ययेति ॥ छाया ॥

१० तत्रैवेति । शब्दशाब्दे तस्यैव प्राधान्येन ग्रहणात्तस्मिन्नेवेत्यर्थः ॥ छाया॥

११ दुहादिष्विति । एवं चेत्यादिः ॥ छाया ॥

१२ अत्रत्यकैयटस्यापीदमेवाभिमतमित्याह—अपादानेति । चोऽप्यर्थे । मात्रपदेनापादानत्वेनाविवक्षितत्वरूपशब्दार्थनिरासः । एवं चेप्सिततमत्वादित्यस्योद्देश्यत्वादित्यर्थ इति बोध्यम् ॥ छाया ॥

१३ सिद्धान्त्युक्तस्य दृष्टान्तस्य प्रतिदृष्टान्ते शङ्ककेन दत्ते सिद्धान्ती निर्णेतुकाम आह—सत्येतस्मिन्निति । सत्यप्येतस्मिन्नित्यर्थः ॥ लौकिकदृष्टान्ताश्रयणमुभयत्र भवतीत्येकरूपतैवोचिता नत्वर्धजरतीयमिति भावः ॥ छाया ॥

१४ क्रियत इति । भोजनन्यायसंभवात् ॥ छाया ॥

१५ वक्तव्यमिति । गर्गदण्डनन्यायसंभवात् ॥ छाया ॥

१६ नार्थ इति । न्यायान्मालादीनां चेतिज्ञापकाद्वेष्टसिद्धेरिति भावः ॥ छाया ॥

१७ 'आकारस्य तपरकरणम्' इत्येव पाठो भवेत् अभिमसिद्धान्तवार्तिकभाष्ययोस्तथैव पाठस्योपलम्भात् ॥ तथैव भगवतः शैलीदर्शनात् ॥ छाया ॥

(प्रदीपः) अथ किमर्थमिति । किमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थमथवा व्यक्तिपक्षे गुणान्तरयुक्तानां ग्रहणार्थमितिप्रश्नः॥

(उद्योतः) भाष्ये किमर्थमिति । चतुर्थीतत्पुरुषः ॥

( १०३ सिद्धान्तसमाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ आकारस्य तपरकरणं सवर्णार्थम् ॥ * ॥

( भाष्यम् )

आकारस्य तपरकरणं क्रियते ॥

किं प्रयोजनम् ? ॥

सवर्णार्थम् ॥ "तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥

केषाम् ? ॥

उदात्तानुदात्तस्वरितानाम् ॥

(प्रदीपः) आकारस्येति । व्यक्तिः पदार्थो, भेदकाश्च गुणा इति दर्शने यद्गुणस्यैवोच्चारणं तद्गुणस्यैव संज्ञाप्रसङ्गे गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थं तपरत्वमित्यर्थः ॥

(उद्योतः) तपरकरणं क्रियत इति । पाकं पचतीतिवत् सामान्यविशेषभावेन सहप्रयोगः ॥ आत्वजातेर्भिन्नकालावर्णवृत्तित्वाभावाद् द्वितीयमाश्रयति—व्यक्तिरिति ॥ यद्गुणस्येत्यादि बहुव्रीहिः ॥

( कारणजिज्ञासाभाष्यम् )

किं च कारणं न स्यात् ? ॥

(प्रदीपः) किं च कारणमिति । अभेदका हि गुणाः, मुण्डेन हि कृते चौर्ये कुन्तलिलावस्थायामपि चौरोयमिति व्यपदिश्यत इति प्रश्नः ॥

(उद्योतः) भाष्ये किंच कारणमिति । निमित्तकारणहेतुष्विति हेतौ प्रथमा ॥

( १०४ कारणप्रदर्शकैकदेशिवार्तिकम् ॥ २ ॥ )

॥ * ॥ भेदकत्वात्स्वरस्य ॥ * ॥

( भाष्यम् )

भेदका उदात्तादयः ॥

कथं पुनर्ज्ञायते—भेदका उदात्तादय इति ? ॥

एवं हि दृश्यते लोके,—य उदात्ते कर्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति अन्यत्त्वं करोषीति ॥

( भाष्यम् )

अस्ति प्रयोजनमेतत् ॥ किंतर्हि ? ॥ इति—

(उद्योतः) अस्ति प्रयोजनमेतदिति काका सूचितमाशयं पृच्छति—किं तर्हीति । किंतर्हीति प्रश्ने इति इदं वक्तव्यमित्यर्थः ॥

( १०५ कारणप्रदर्शकवार्तिकन्यासान्तरम् ॥ २ ॥ )

[ ॥ * ॥ भेदकत्वाद्गुणस्य ॥ * ॥ ]

( भाष्यम् )

भेदकत्वाद्गुणस्येतिवक्तव्यम् ॥

किं प्रयोजनम् ? ॥

आनुनासिक्यं नाम गुणः, तद्भिन्नस्यापि ग्रहणं यथा स्यात् ॥

किं च कारणं न स्यात् ? ॥

भेदकत्वाद्गुणस्य । भेदका गुणाः ॥

कथं पुनर्ज्ञायते—भेदका गुणा इति ? ॥

एवं हि दृश्यते लोके, एकोऽयमात्मा=उदकं नाम, तस्य गुणभेदादन्यत्वं भवति—अन्यदिदं शीतम्, अन्यदिदमुष्णमिति ।

(प्रदीपः) भेदकत्वादिति । सर्वगुणसंग्रहार्थं गुणग्रहणं कर्तव्यमित्यर्थः ॥ एकोऽयमिति । उदकत्वजातियोगादत्रैकत्वं न विवक्षितं किं तर्हि विशिष्टभाजनस्थमेकमुदकद्रव्यम् । तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते ॥

(उद्योतः) तदाह—भेदकत्वादित्यादि ॥ जात्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यादत आह—उदकत्वेति । आत्मशब्दो द्रव्यवाची भाष्ये ॥

( अभेदकत्वाक्षेपसिद्धान्तिभाष्यम् )

ननु च भो अभेदका अपि गुणा दृश्यन्ते । तद्यथा देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति ॥

---

१ संशयस्यानेककोटिविषयत्वात्कोटिद्वयमाह—किमाकृतीति ॥ छाया ॥

२ व्यक्तिपक्षे आकारस्यानण्त्वेन सवर्णग्रहणाप्रसङ्गादाह—गुणेति । तदाण्विषये गुणानां भेदकतैव अण्ग्रहणाज्ज्ञापकादिति भावः ॥ छाया ॥

३ वार्तिकेन विशिष्यास्य विधानादाह—चतुर्थीति ॥ छाया ॥

४ वार्तिके तपरेति भावपरम् । सवर्णपदं तद्ग्रहणपरम् ॥ तथाच तस्य तपरत्वकरणं सवर्णग्रहणार्थमित्यर्थः ॥ छाया ॥

५ भेदकत्वादिति । उपात्तविजातीयनिवर्तकत्वादित्यर्थः ॥ छाया ॥ वार्तिकमिदम्, प्राचीनतरभाष्यपुस्तके, 'आकारस्य' इत्यस्य 'भेदकत्वात्' इत्यस्य टिप्पण्यां 'वार्तिकावयवमवतार्य व्याचष्टे' इत्युपलम्भात् ॥ दाधि० ॥

६ वर्गपञ्चाशदितिवत् खण्डिकेति संज्ञाथर्वणानाम् । तदध्यापक इत्यर्थः । भगवतस्तत्त्वादेवमुक्तिः ॥ छाया ॥

७ उक्तार्थं प्रकारान्तरेणापि द्रढयंस्तत्सूचककाकुस्वरेण तपरत्वस्योक्तफलमङ्गीकरोति—अस्तीति ॥ छाया ॥

८ पृच्छतीति । प्रश्नपूर्वं प्रतिपादयतीत्यर्थः ॥ छाया ॥

९ उक्तप्रत्यभिज्ञावष्टम्भेनोक्तदृष्टान्तेन स्वरमात्रस्यैव तत्त्वं सिद्धमित्यभिमानेन चाह—कथं पुनरित्यादि ॥ छाया ॥

१० एवमेकदेशिना तपरसूत्रे तपरशब्दे बहुव्रीहिमेव जानता गुणानां भेदकत्वमाश्रित्य गुणभिन्नानां सवर्णानां ग्रहणार्थं तपरकरणमिति स्थापिते सिद्धान्ती स्वाभिमतमभेदकत्वपक्षं प्रापयति—ननुचेति ॥ छाया ॥

(उद्द्योतः) बालोयुवेति । भाष्ये स्वामाख्यां न जहातीत्यनुकर्षः । एतेनाभेदकत्वे प्रत्यभिज्ञा प्रमाणं दर्शितम् ॥

( आक्षेपभाष्यम् )

**[1]उभयमिदं गुणेषूक्तम्—भेदकाः, अभेदका इति । किं पुनरत्र न्याय्यम्? ॥**

(प्रदीपः) **उभयमिति** । आम्नायशब्दा नियतस्वरा[2] इति वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः, गोपिण्डो हि वत्साद्यवस्थाभेदात् क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते, स एवायमिति प्रत्यभिज्ञानादभेदेनापि[3] ॥ इति प्रश्नः—**किं पुनरिति । अत्रेति** । शास्त्रे ॥

(उद्द्योतः) ननु गुणेषूभयाङ्गीकारे खण्डिकोपाध्याय(स्य) चपेटादानं विरुध्येतेति चेन्न, यत उभयमिति लोकमात्रविषयमिति न विरोध इत्याह—**आम्नायेति** ॥ ननूभयोरपि न्याय्यत्वप्रतिपादनेन किं पुनरत्र न्याय्यमिति प्रश्नोऽयुक्तोऽत आह—**शास्त्रे इति** । अत्रेति निर्धारणसप्तमी नेति भावः ॥

( सिद्धान्तसमाधानभाष्यम् )

**[4]अभेदका गुणा इत्येव न्याय्यम् ॥**

**कुत एतत्? ।**

**यदयम्—"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्युदात्तग्रहणं करोति तज्ज्ञापयत्याचार्योऽभेदका गुणा इति । यदि हि भेदका गुणाः स्युः, उदात्तमेवोच्चारयेत् ॥**

(प्रदीपः) **उदात्तमेवेति** । तस्माद्गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि गुणः प्रयत्नमन्तरेण न विवक्षित इत्यर्थः ॥ यद्येवं कथमन्यत्रोक्त**मुदात्तनिपातनं करिष्यत** इति, यावता तत्राप्यविवक्षा प्राप्नोति ॥ नैष दोषः, तत्रापि **स्थानेन्तरतम**वचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्य उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं [5]विज्ञायते । [6]एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारणं तद्विवक्षार्थमेव । उञः ऊँ इति यथा । अन्ये त्वाहुः—एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति ॥

(उद्द्योतः) **इत्येव न्याय्यमिति** । विधेयाणभिन्नविषये इति शेषः । तत्रैतत्कृतस्यापि अप्रत्यय इति निषेधात् । अतस्तथैव ज्ञापकमुपन्यस्यति—**यदयमिति** ॥ प्रयत्नं स्वशब्देनोपादानरूपम् ॥ **कथमिति** । यथा[7] वध्यादेशे उदात्तनिपातनेन एकाच इति सूत्रस्थमेकाज्ग्रहणं न कार्यमिति ॥ **यः स्वरः प्राप्त इति** । हन्तेरनुदात्तत्वादनुदात्त इत्यर्थः । न चैवमस्त्यादीनामाद्युदात्तत्वेनादेशानङः स्थान्यनुरूपेऽनुदात्ते उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेऽपि व्यर्थ[8]मुदात्तग्रहणमिति वाच्यम् । परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि[9] स्थानित्वेन विवक्षायां[10] मानाभावादित्याशयात् ॥ नन्वेवमपि चतसर्याद्युदात्तनिपातनसामर्थ्याच्चतस्र इत्यत्र **चतुरः शसी**त्यस्याप्रवृत्तिरिति [11]भाष्योक्तमनुपपन्नम् । चतुःशब्दस्य त्रः संख्याया इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या **चतुरः शसी**त्येतद्बाधकत्वायोगादत आह—**अन्येत्विति**[12] । एकश्रुतिश्च **विभाषा छन्दसी**ति वैकल्पिकी, तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम् । त्रैस्वर्येण पाठमभिप्रेत्य[13] तु प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः ॥ अन्ये त्वित्यरुचिबीजं तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं तद्रूपाद्यत्वात् तत्र तत्रोदात्तादिविवक्षा । तिसृचतसृ इत्यत्रापि द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । संपूर्णाष्टाध्यायी आचार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्कस्यचित्पदस्यैकश्रुत्यां पाठो यथा दाण्डिनायनादिसूत्रे ऐक्ष्वाकेति । एतावदेव भाष्याल्लभ्यते ॥ यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः ॥

---

१ एवं सिद्धान्तिना गुणानामभेदकत्वपक्षे दर्शिते संदिग्धचेता एकदेशी सिद्धान्तिनमेव न्याय्यपक्षं पृच्छति—उभयमिति ॥

२ 'मन्त्रे त्रैस्वर्यं ब्राह्मण एकश्रुतिर्बह्वृचानाम् । तैत्तरीयाणां तूभयत्रापि त्रैस्वर्यमित्यादिरूपेण' इति प्रभा ॥

३ नाप्यन्तः कैयटग्रन्थः पूर्वप्रतीकविवरणम् । इति प्रश्न इत्युत्तरप्रतीकावतरणम् ॥ इति इत एव हेतोः प्रश्न इति तदर्थः ॥ छाया ॥

४ सिद्धान्ती तत्संदेहं नियमपूर्वकं निरस्यति—अभेदका गुणा इत्येवेति ॥

५ विज्ञायत इति । एवं चोदात्तोच्चारणरूपयत्नसत्त्वात्तत्र तद्विवक्षायां तत्प्रयुक्तनिषेधाप्राप्त्या तदकार्यत्वोक्तिर्युक्तैवेति भावः ॥ छाया ॥

६ प्रसङ्गादाह—एवमिति । लाघवेन प्राप्तानुनासिकोपदेशं विहाय गौरवेणेति शेषः ॥ छाया ॥

७ यथेति । हन्त्यादेशवधेः स्थानिवत्त्वादिण्निषेधे प्राप्ते तद्वारणायेति शेषः ॥ छाया ॥

८ व्यर्थमिति । तथा च तत्त्वासंभव इति भावः ॥ प्रत्युत क्रियमाणं तद्यत्नाधिक्येप्यविवक्षां ज्ञापयेदित्यपि बोध्यम् ॥ छाया ॥

९ गुणस्यापीति । अन्त्यस्येति शेषः ॥ छाया ॥

१० विवक्षायामिति । त्वदुक्तरीत्येत्यादिः ॥ छाया ॥

११ 'भाष्योक्तमिति । 'त्रिचतुरोः'—'चतुरः शसि' इत्यत्रेति शेषः ॥ एवंच भाष्यान्तरविरोधस्तदवस्थ एवेति भावः ॥ यद्यपि 'चतेरुरन्' इति व्युत्पत्तावपि निरवात्तत्त्वमेव तथाप्यव्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वात्तत्र युक्तमिति ध्वनयन्नाह—त्र इति ॥ छाया ॥

१२ नन्वेतावतापि कथं मिथो विरोधपरिहारः प्रकृतभाष्यसंगतेस्तादवस्थ्यात् । किं चैवं सत्यनङोप्युदात्तोच्चारणेनैव सिद्धावुदात्तग्रहणवैयर्थ्यापत्तिः उक्तज्ञापनासंभवश्च । तथाहि—आश्रीयमाणत्वं स्वशब्देन विवक्षितम् उत यत्नविशेषेण । नाद्यः । निपातनस्वरस्य भेदकत्वाभावापत्तेः । नान्त्यः । अनङादिषूदात्तोच्चारणादियत्नविशेषाश्रयणादेव सिद्धे तदानर्थक्यापत्तेरतो मूलशैथिल्यात्कथं ज्ञापकतेति नारायणादयः । तत्खण्डकां तदाशयप्रतिपादिकां प्रवर्तकोक्तिमाह—एकेति । तां वैकल्पिकीमङ्गीकृत्य पक्षान्तरैरिति न्यायावष्टम्भेन तत्र तत्र तथोक्तमिति भावः ॥ 'अच्छन्दसि' इति च्छेदः ॥ छाया ॥

१३ भिप्रेत्यस्त्वित्यनेनास्याभ्युपेत्यवादत्वं ध्वनितम् ॥ प्रकृतेति । 'स्वरूपेणोपात्तस्य गुणस्य नान्तरीयकत्वेनाविवक्षितत्वसंभवात्तस्य तत्त्वोपपत्तेरिति भावः ॥ छाया ॥

( आक्षेपभाष्यम् )

**[1]यदि तर्ह्यभेदका गुणा अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति ॥**

(प्रदीपः) **अनुदात्तादेरिति** । अजुपलक्षणार्थोऽनुदात्तश्रुतिः स्यादिति प्रश्नः ॥

(उद्योतः) स्वरितादेरिति भाष्ये उपलक्षणम्—उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम् ॥

( समाधानभाष्यम् )

**[2]नैष दोषः । आश्रीयमाणो गुणो भेदको भवति । तद्यथा—'शुक्लमालभेत' 'कृष्णमालभेत' । तत्र यः शुक्ल आलब्धव्ये कृष्णमालभते, न हि तेन यथोक्तं कृतं भवति ॥**

(प्रदीपः) उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः ॥

(उद्योतः) आश्रीयमाण इति । [3]शब्देन निपातनेन वाश्रीयमाण इत्यर्थः ॥ नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह—अजिति ॥

( एकदेशिसमाधानभाष्यम् )

**[4]असंदेहार्थस्तर्हि तकारः । ऐजित्युच्यमाने संदेहः स्यात्—किमिमावैचावेव, आहोस्विदाकारोऽप्यत्र निर्दिश्यत इति ? ॥**

( समाधानबाधकभाष्यम् )

**[5]संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति । त्रयाणां ग्रहणमिति व्याख्यास्यामः । अन्यत्रापि ह्ययमेवंजातीयकेषु संदेहेषु न कंचिद्यत्नं करोति । तद्यथा—"औतोम्शसोः" इति ॥**

(प्रदीपः) **व्याख्यानत इति** । **प्रस्थेऽवृद्धमित्याद्युदात्तत्वे सिद्धे मालादीनां चेति** मालाशब्दस्य वृद्धार्थत्वादुपादानस्याकारप्रश्लेषनिश्चय इत्यर्थः ॥

( सिद्धान्तिसमाधानभाष्यम् )

**[6]इदं तर्हि प्रयोजनम्—आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । [7]खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकम्, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति ॥**

(प्रदीपः) **इदं तर्हीति** । ननु भाव्यमानत्वादैचोऽत्र ग्राहका न भविष्यन्ति ॥ नैतदस्ति । न ह्यत्र संज्ञाविधावैचो भाव्यन्ते, किं त्वैज्भिरण्त्वात्त्रिमात्रचतुर्मात्राणां ग्रहणात्संज्ञाप्रसङ्गाद्वृद्धिगुणविधौ च तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम् ॥

(उद्योतः) [8]ऐजर्थं तपर(त्व)मित्याह—**इदं तर्हीति** भाष्ये । [9]चतुर्मात्रोऽपि प्लुतः प्लुतावैच इति सूत्रे भाष्ये स्पष्टः ॥ कार्यकालमाश्रित्य नोदयति—**नन्विति** । अयं भावः—तत्पक्षे **मृजेर्वृद्धि**रित्यादावुपस्थितं **वृद्धिरादैजि**ति पदैकवाक्यतयान्वेति । एकं वृद्धिपदं तु प्रत्यभिज्ञामात्रफलकमनुवाद एव । एवं च भाव्यमानत्वं स्पष्टमेवेति ॥ उत्तरस्य त्वयं भावः—अनुवादत्वकल्पनापेक्षया तत्रोपस्थितं **वृद्धिरादैजि**ति तत्रैव शक्तिग्रहं संपाद्य [11]वाक्यभेदेन **मृजेर्वृद्धि**रित्यस्यार्थं बोधयति । **ज्योतिष्टोमेन यजेते**त्यादौ तु शक्तिग्राहकशास्त्रान्तराभावादगत्या विधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः कल्प्यते । न तु विद्यमाने शक्तिग्राहके तथाकल्पनमुचितं पदस्यानुवादकत्वकल्पनं चेति ॥ यत्तु—कार्यकाल-

---

१ अभेदज्ञापने भेदवाद्येकदेश्यतिप्रसङ्गमाह—यदीति ॥ यद्यभेदका गुणास्तर्हीत्यर्थः ॥ छाया ॥

२ अभेदवादी सिद्धान्ती तदतिप्रसङ्गं निरस्यति—नैष दोष इति । यत इति शेषः ॥ छाया ॥

३ शब्देनेति । स्वशब्देन निपातनेन वा कार्यान्वयितयोपात्त इत्यर्थः ॥ छाया ॥

४ सिद्धान्तनिर्दिष्टाभेदपक्षेण स्वैकदेशिप्रोक्तसवर्णग्रहणार्थत्वे खण्डिते सिद्धान्तिना पुनरेकदेशी फलान्तरमाह—असंदेहार्थ इति ॥ असति तकारे किमत्र वर्णत्रयमुत वर्णद्वयमिति संदेहः स्यादित्यर्थः ॥ छाया ॥

५ इदमपि खण्डयति सिद्धान्ती—संदेहमात्रमिति ॥ छाया ॥

६ एवं तपरकरणस्याकारांशे अनण्त्वादप्राप्तसवर्णग्रहणार्थत्वे गुणानामभेदकत्वाङ्गीकारेण संदेहनिवृत्त्यर्थत्वे व्याख्यानेन सिद्धान्तिना निराकृते 'सवर्णार्थम्' इत्यत्रत्यस्यार्थपदस्याभिधेयान्तरविस्मृत्या मूकीभूते तस्मिन्नेकदेशिनि सिद्धान्ती स्वयमेवार्थशब्दस्य निवृत्तिवाचितामभिप्रेत्यैचि सवर्णग्रहणस्याण्त्वात्प्राप्तस्य निवृत्तये तपरकरणमिति दर्शयति—इदं तर्हीति ॥

७ सूत्रद्वयेऽपि भिन्नकालानां संज्ञानिवृत्त्यर्थं तपरकरणमिति सूचयन्नेव गुणोदाहरणपूर्वं वृद्ध्युदाहरणं दर्शयति—खट्वेति ॥ सर्वत्र शेषषष्ठ्या समास इति च्छायाकरोक्तिस्तु 'नित्या समासे' इति संहितानियमविरुद्धा । तस्मादसमस्तान्येवोदाहरणानि बोध्यानि । एतेन व्यपेक्षा अपि नापेक्षणीयेषु सूत्रेष्विति ध्वन्यते ॥ अतएव 'स्थानेन्तरतम उरण्रपर' इति तुल्या संहिता' 'करपोयजश्च' 'तिष्ठतु दध्यशान त्वं शाकेन' इत्यादि भाष्यम्, 'करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः ।' इत्यत्र यणपि निराबाध एव संगच्छते ॥ इति दाधिमथाः ॥

८ उत्तरसूत्रसाधारण्येनात्रत्यस्य तस्यासाधारणं फलं भाष्यकृदाह—ऐजर्थमिति ॥ तदर्थमपीत्यर्थः ॥ तत्रोत्तरसूत्रे उभयार्थता स्पष्टैव । अत्रत्वन्यथा । अतदर्थत्वेप्यसंदेहार्थतया पूर्वार्थता बोध्या । अतएव जश्त्वमित्यग्रे स्पष्टमिति दिक् ॥ छाया ॥

९ नन्वूकाल इत्युक्तेश्चतुर्मात्रस्याप्लुतत्वेन कथमिदम् । न च ह्रस्वदीर्घप्लुतसंज्ञा एकमात्रद्विमात्रत्रिमात्राणां भवतु गानादौ प्रसिद्धानां चतुर्मात्रादीनां सत्त्वं तु चातुर्वर्ण्यबहिष्कृतानामपि मनुष्यत्वमिवाव्याहतमिति वाच्यम् ।

'ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि' ।

इति शिक्षानुसारेणोक्तत्रयभिन्नानामच्त्वस्याप्यभावादिति चेत् । न, तत्र तृतीयवाक्ये 'ऊ' इति एकमात्रद्विमात्रभिन्नपरमिति भगवदभिप्रेतमिति ध्वनयन्नाह—चतुर्मात्र इति ॥ छाया ॥

१० न्वेतीति । वृद्धिसंज्ञाविशिष्टादैचो भवन्तीति वाक्यार्थः ॥ प्रत्यभिज्ञेति । तथाच तत्रैवोपस्थितिसंपादनेन साफल्यमिति सर्वथानर्थक्यं नेति भावः ॥ छाया ॥

११ वाक्यभेदेनेति । पूर्वान्वयि ॥ छाया ॥

पक्षे वृद्धिरादैजित्यादेर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्यर्थः। यथा च ज्योतिष्टोमादिपदानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहापि मृजेर्वृद्धिरित्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः। उपस्थापकेन वृद्ध्यादिपदेन उपस्थाप्यस्य वृत्त्या बोधनात्परं संज्ञासूत्रत्वावगतिरिति॥ तन्न, कार्यकालं संज्ञापरिभाषं भवत्येत्युपस्थितमिदं भवति—'यचिभम्' इतीति व्यङः संप्रसारणमिति सूत्रस्थभाष्येण कार्यकालं संज्ञापरिभाषं प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति—'ईदूदेद्द्विवचनं प्रगृह्य'मिति ईदूदेदिति सूत्रस्थभाष्येण च विरोधात्। त्वद्रीत्या ह्युपस्थितमिदं भवति यचीतीत्येव वक्तव्यं स्यात्। अथ संज्ञेत्यादिप्रकृतसूत्रस्थवार्तिकविरोधश्च। प्रकारान्तरेणात्रत्यतत्प्रत्याख्यानपरभाष्यविरोधश्च। किंच मृजेर्वृद्धिरित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाभावात्। तत्रैक्यपरिभाषानुपस्थित्यापत्तिः वृद्धिपदेनाविधानात्॥ मृजेर्वृद्धिरित्यादौ इक्पदोपस्थापकस्यापि विधेयाकाङ्क्षासत्त्वाद् विधिविषये[2] एव तत्प्रवृत्तेश्च भवत्येवान्वयः। एवंच ज्योतिष्टोमवाक्याद्वैलक्षण्येनात्र नामधेयता दुरुपपादा। किं चोपस्थाप्यार्थस्य वृत्त्या बोधनात्संज्ञासूत्रत्वं वा, इको गुणेत्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः॥ वृद्ध्यादिपदैर्वृत्त्या बोधनं च दुरुपपादम्। अनुवादेऽपि संज्ञासूत्रोपस्थितिरणोऽप्रगृह्यस्य वृद्धिर्यस्येत्यादिविषये भाष्ये स्पष्टेति दिक्॥

( आक्षेपभाष्यम् )

अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति?॥

( समाधानभाष्यम् )

"तपरस्तत्कालस्य" इति नियमात्॥

( समाधानबाधकभाष्यम् )

ननु तः परो यस्मात्सोयं तपरः॥

( समाधानसाधकभाष्यम् )

नेत्याह। तादपि परस्तपरः॥

( इष्टानुपपत्तिसाधकभाष्यम् )

यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्—यवः स्तवः, लवः पव इत्यत्र न स्यात्॥

( अनुपपत्तिबाधकभाष्यम् )

नैष तकारः॥

कस्तर्हि?॥

दकारः॥

( आक्षेपभाष्यम् )

किं दकारे प्रयोजनम्?॥

( प्रतिवन्द्या समाधानभाष्यम् )

अथ किं तकारे?। यद्यसंदेहार्थस्तकारः, दकारोऽपि। अथ मुखसुखार्थस्तकारः, दकारोऽपि।

वृद्धिरादैच्॥ १॥

(प्रदीपः) एवं स्थिते चोदयन्ति यद्यैजर्थस्तकारस्तेनाकारस्य संबन्धाभावात् कथमादित्येतत्पदम्॥ उच्यते—तात्पर्येणैजर्थत्वं तकारस्योच्यते आनुषङ्गिकं त्वाकारार्थत्वं तकारस्योच्यते। ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञायमाने प्रतिपत्तिगौरवं भवति। सति तु तकार आकारस्य स्वरूपप्रतिपत्तिः सद्य भवतीति तकारसहितस्याकारस्यासंदिग्धानुकार्यप्रतिपादनार्थवत्त्वाद्भिभक्तेरुत्पत्तौ सत्यामादित्येतत्पदं सिद्धम्॥ १॥

(उद्द्योतः) भाष्ये किंतकार इत्यस्य तादपि परस्तपर इत्यनङ्गीकुर्वत इति शेषः॥ संबन्धाभावादिति। शेषशेषिभावाभावादित्यर्थः। तान्तस्य पदत्वाभावे जश्त्वं न स्यादिति भावः॥ आनुषङ्गिकं फलं दर्शयति—ज्ञापकद्वारेणेति॥ १॥



१ स्थापकस्यापि वृद्ध्यादिपदस्य॥ विधेयेति उद्देश्यस्येत्यादिः॥ छाया॥

२ ननु न विधेयाकाङ्क्षा सर्वत्र, अनुवादेऽपि तत्प्रवृत्त्या तत्रैवोपस्थितौ मानाभावादत आह—विधिविषयेति। अयं भावः—विधेयसमर्पकगुणादिपदश्रुतिस्तदुपस्थितौ लिङ्गम्। विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः एतन्मूलक एव विधावित्युद्घोषः। एवं च तत्र विधीयत इत्यस्यैवाध्याहारः। अतएव 'अतो गुणे' इत्यादौ न दोष इति॥ छाया॥

३ तपरः इत्यत्र पञ्चमीसमासमनाश्रितवतः एकदेशिनः शङ्का—अथेत्यादिना॥ छायाशयः॥

४ पञ्चमीसमासं मनसि धृतवतः सिद्धान्तिन उत्तरम्—तपर इति॥ छायाशयः॥

५ एकदेशी पञ्चमीसमासाज्ञानं प्रकटयति—ननु चेति॥ छायाशयः॥

६ (सिद्धान्ती स्वाभिमतं पञ्चमीसमासं प्रकटयति—) नेत्याहेति॥ एवमेव नेत्याहेत्यर्थः॥ अतएवाह तादपीति। व्याख्यानादिति भावः॥ अपिना बहुव्रीहिसमुच्चयः॥ छाया॥

७ एकदेशी पञ्चमीसमासाङ्गीकारेऽव्याप्तिं दर्शयति—यदीति॥ छायाशयः॥

८ सिद्धान्ती तामनुपपत्तिं परिहरति—नैष इति॥ दकार इति। घस्थानिको धस्थानिको वेति शेषः॥ छायायां तु स्वतःसिद्ध इत्यर्थ इत्युक्तं तत्तु दकारप्रश्लेषपरभाष्येण विरुद्धम्॥ इति दाधिमथाः॥

९ एकदेशी दकाराश्रयणे प्रयोजनं पृच्छति—किमिति॥

१० सिद्धान्ती प्रतिवन्द्युत्तरं ददाति—अथेति॥

११ सिद्धमिति। अयं भावः—तात्पर्येण ऐजर्थत्वेऽपि न तस्य परशेषत्वम्, किंत्वगत्या प्रासङ्गिकोपकार्यस्य पूर्वस्यैव शेषत्वम्। दैजिति तु न पदमिति स्पष्टं कौस्तुभादौ! अत एवात्र 'वृद्धिः, आत्, ऐच्' इति पदविभागमदर्शकभाष्यसंगतिरिति॥ छाया॥

१२ नन्वव्यवहितोत्तरत्वस्य सत्त्वात्कथं तदभावोऽत आह—शेषेति॥ अयं भावः—एकार्थकवर्णसमूहः पदम्। इदं त्वैजर्थं नाकारार्थम्। तथा च तदनुपकारिणस्तस्य कथं तच्छेषत्वम्। तदुक्तम्—

'तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः।
राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम्'॥

इतीति॥ छाया॥

( २ इक्परिभाषासूत्रम् ॥ १ । १ । ३ आ. २ ॥ )

## इको गुणवृद्धी ॥ १ । १ । ३ ॥

( योगविभागप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**इग्ग्रहणं किमर्थम् ? ॥**

(प्रदीपः) **इको गुणवृद्धी ॥ ३ ॥ इग्ग्रहणमिति ।** वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भविष्यत इति प्रश्नः ॥

(उद्योतः) **इको गुण-** ॥ ३ ॥ गुणवृद्धिग्रहणस्योत्तरत्र निषेध्यसमर्पणायावश्यकत्वेऽपि इकपदस्येकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योगविभागविषयकोयं प्रश्नो भाष्ये **इग्ग्रहणमिति** ॥

( १०५ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् )

**इग्ग्रहणं क्रियते ॥**

**किं प्रयोजनम् ? ॥**

**आकारनिवृत्त्यर्थं सन्ध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च ॥**

(प्रदीपः) **आत्सन्ध्यक्षरेति** । आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः ॥

(उद्योतः) ननु इग्ग्रहणेनाकारादीनां निवृत्तिरशक्या कर्तुमत आह—**स्थानित्वस्येति** ॥

( प्रथमप्रयोजनोपपादनभाष्यम् )

**आकारनिवृत्त्यर्थं तावद्—याता वाता । आकारस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

(प्रदीपः) आकारस्याङ्गान्त्यस्य वृद्धिविधावभावाद्विशेषाभावाच्चाकारस्य **चातो लोप** इति लोपविधानादाकारस्य गुणप्रसङ्गमुदाहरति—**यातेति** ॥

(उद्योतः) ननु आकारस्य वृद्ध्युदाहरणादाने गुणांशे च अकारोदाहरणादाने किं बीजमत आह—**आकारस्येति । वृद्धिविधौ** सिज्वृद्धिविधौ । अयासीदित्यादौ अपवादत्वात्सगिड्भ्यां सा वाध्यते इति भावः ॥ इतरवृद्धिविधौ संभवेऽप्याह—**विशेषाभावादिति । अकारस्येति** । ण्यल्लोपाविति पूर्वविप्रतिषेधेनातो लोपस्य वृद्धिगुणवाधकत्वादिति भावः ॥ पुत्रीयतीत्यादौ त्वविशेष इति वोध्यम् ॥ **आकारस्य गुणेति । सार्वधातुकार्धधातुकयोरित्यनेन** ॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**सन्ध्यक्षरनिवृत्त्यर्थम्—ग्लायति म्लायति । सन्ध्यक्षरस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

(प्रदीपः) **ग्लायतीति** । एचां द्विमात्रत्वाविशेषात् प्रयत्नाधिक्याभावादेकारोपदेशेऽप्येकारो गुणः स्यात् ॥

(उद्योतः) नन्वैकारोच्चारणसामर्थ्याद् गुणो नेत्यत आह—**एचामिति** । सर्वेषां विवृत एव प्रयत्न इत्यभिमानः ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

**व्यञ्जननिवृत्त्यर्थम्—उम्भिता उम्भितुम् उम्भितव्यम् । व्यञ्जनस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

(प्रदीपः) **उम्भितेति** । भकारस्यौष्ठ्यत्वादोकारो गुणः स्यात् ॥

( प्रथमप्रयोजननिराकरणभाष्यम् )

**आकारनिवृत्त्यर्थेन तावन्नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति—नाकारस्य गुणो भवतीति । यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**कित्करण एतत्प्रयोजनम्—कितीत्याकारलोपो यथा स्याद् । यदि चाकारस्य गुणः स्यात्, कित्करणमनर्थकं स्याद् । गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्याद्—गोदः कम्बलद इति । पश्यति त्वाचार्यो—नाकारस्य गुणो भवतीति, ततः ककारमनुबन्धं करोति ॥**

(प्रदीपः) **पररूपेणेति । अतो लोपस्तु** न भवत्यार्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात् ॥

(उद्योतः) **आर्धधातुकोपदेश इति** । गुणनिष्पन्नश्च तदुत्तरकालिक इति भावः ॥

(द्वितीयप्रयोजननिराकरणभाष्यम् )

**सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः । उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भवति ॥**

---

१ इदानीं पदोपस्थितिपक्षाभावेनेक इति षष्ठ्यन्तमेवार्थपरं नतु सान्तं प्रथमान्तं शब्दपरमित्याशयेनाह—इकपदेति ॥ छाया ॥

२ योगविभागेति । 'न धातुलोप आर्धधातुके' इत्यनेन सहैव पठितव्यं स्यादिति भावः ॥

३ स्थानित्वस्येति । तस्य तत्र लक्षणेति भावः ॥ छाया ॥

४ विधानादिति । तस्य च गुणवृद्ध्योरप्रसङ्गादिति शेषः ॥ छाया ॥

५ इतरेति । अचो ञ्णितीति वृद्धिविषय इत्यर्थः ॥ विशेषाभावादितीति । कृतायामकृतायां वा वृद्धौ विशेषाभावान्निर्दिष्टस्थानिकत्वेन परिभाषायाः सत्त्वेऽसत्त्वे च विशेषाभावाचेत्यर्थः ॥ छाया ॥

६ बाधकत्वादिति । तथाच चिकीर्षिताऽचिकीर्षीदवधीदित्यादावङ्गान्त्यस्यातोऽसंभव इति भावः ॥ छाया ॥

७ आदिना भवति पचतीति संग्रहः । तत्रहि तिङ्निमित्तकः शब्निमित्तकश्च प्राप्तः ॥ छाया ॥

८ स्यादिति । तथा चोनवितेति स्यात् । तत्र कार्येऽनुस्वारादेरसिद्धत्वात् । यद्यपि व्यञ्जनस्य मात्रिक उचितस्तथापि स्थानत आन्तर्यस्य प्राबल्यात्स एवेति भावः ॥ छाया ॥

९ ज्ञापकेन फलातिक्रमेण दूषयति—आकारेति ॥ छाया ॥

(प्रदीपः) उपदेशसामर्थ्यादिति । प्रतिपत्तिलाघवार्थमेकारमेवोपदिष्टोदित्यर्थः ॥

(उद्द्योतः) प्रतिपत्तिलाघवम् प्रक्रियालाघवम् । "तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥" इति पाणिनीयशिक्षोक्तेः प्रयत्नलाघवमपि बोध्यम् ॥

( तृतीयप्रयोजननिराकरणभाष्यम् )

**व्यञ्जननिवृत्त्यर्थेनापि नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति-न व्यञ्जनस्य गुणो भवतीति । यदयं जनेर्डं शास्ति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**डित्करण एतत्प्रयोजनम्-डितीति टिलोपो यथा स्याद् । यदि व्यञ्जनस्य गुणः स्याद्, डित्करणमनर्थकं स्याद् । गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यादुपसरजो मन्दुरज इति । पश्यति त्वाचार्यो-न व्यञ्जनस्य गुणो भवतीति । ततो जनेर्डं शास्ति ॥**

(प्रदीपः) यदयं जनेरिति । यद्येवमिदे[1]र्गुणो विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणाभावाच्च सर्वादेशः प्राप्नोति । मिद इर्मिदिरित्याश्रयणादिकारस्यैव भविष्यतीत्यदोषः ॥

(उद्द्योतः) इग्ग्रहणेति । ततश्च मिदेरिति नावयवषष्ठी, किंतु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः ॥

(प्रथमप्रयोजनबाधकज्ञापकनिराकरणभाष्यम् )

**नै[2]तानि सन्ति ज्ञापकानि । यत्तावदुच्यते-क्त्करणं ज्ञापकं नाकारस्य गुणो भवतीति, ॥ उ[3]त्तरार्थमेतत्स्यात्—"तुन्दशोकयोः परिमृजापनुदोः" इति ॥**

(प्रदीपः) यत्तावदिति । विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः । केचिदाहुः—टकः कित्त्वेन ज्ञापकेनाकारनिवृत्त्यर्थत्वे निराकृते यदप्युच्यत इति ज्ञापकाक्षेपो ग्रन्थच्छायां न पु[4]ष्णाति । तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोपन्यासं कृत्वा यथासंभवं ज्ञापकसमर्थनं कर्त्तव्यम् ॥

(उद्द्योतः) भाष्ये नैतानि सन्ति ज्ञापकानीति । छ[5]त्रिन्यायेन ॥ ननु नैतानि सन्ति ज्ञापकानीति प्रतिज्ञायाग्रे ज्ञापकसमर्थनमयुक्तमित्यत आह—विशेषेति । 'टकः कित्त्वं ज्ञापकम् । 'यं विधिं प्रति' इत्यादिविशेषप्रतिपादनायेत्यर्थः ॥ शङ्कते—केचिदिति ॥ यदप्युच्यते इति समुच्चयार्थापिशब्देनेति शेषः ॥ आर्थेन सामर्थ्यप्राप्तेन ॥ भङ्गेति । भङ्गसदृश इति भावः ॥

( प्रथमप्रयोजनबाधकज्ञापकान्तरभाष्यम् )

**य[6]त्तर्हि "गापोष्टक्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥**

( द्वितीयप्रयोजनबाधकसामर्थ्यदूषकभाष्यम् )

**य[7]दप्युच्यते-उपदेशसामर्थ्यात्संध्यक्षरस्य गुणो न भवतीति ॥ यदि—यद्यत्संध्यक्षरस्य प्राप्नोति, तत्तदुपदेशसामर्थ्याद्बाध्यते । आ[8]यादयोऽपि तर्हि न प्राप्नुवन्ति ॥**

(प्रदीपः) आयादयोऽपीति । ऐकारोच्चारणस्याविकृतरूपश्रवणार्थत्वादिति भावः ॥

( सामर्थ्यदूषणनिराकरणभाष्यम् )

**नै[9]षं दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । गुणं च प्रत्युपदेशोऽनर्थकः, आयादीनां पुनर्निमित्तमेव ॥**

(प्रदीपः) यं विधिमिति । आयादेशस्यैकार एव निमित्तमित्यायादेशो न बाध्यते । न हि ग्लायित्येवं पाठः शक्यः कर्तुम्, त्वया ग्लायात इत्यादिरूपासिद्धिप्रसङ्गात् । न ध्याख्येति निपातनाच्चात्वं गुणवन्न बाधिष्यते ॥

---

१ ज्ञापकेन निर्वाहकारिणं प्रति शङ्कते—यद्येवमिति । ज्ञापकेन निर्वाहः परिभाषाया अभावे इत्यर्थः ॥ छाया ॥

२ सूत्रारम्भवादी उक्तान्प्रत्याख्यानोपायान्दूषयितुं प्रतिजानीते—नैतानि सन्तीति ॥ आद्यान्त्ययोः साफल्येनान्यत्वात् । मध्यमस्यातिप्रसक्तत्वाच्चेति भावः ॥ छाया ॥

३ उत्तरार्थमिति । तदयुक्तम् । यत इत्यादिः ॥ छाया ॥

४ नं पुष्णातीति । ज्ञापकत्वनिरासोत्तरं ज्ञापकान्तरनिरासश्चेत्तत्समुच्चायकोऽपिशब्दो घटेत । न च प्रकृतेऽस्ति सः मध्ये टकः कित्त्वस्य ज्ञापकत्वोपन्यासात् । किंच ज्ञापकस्थापनोत्तरं ज्ञापकान्तरस्थापनमेव युक्तं न तु तत्खण्डनम्, क्रमदोषात् । तथाच सामान्यप्रतिज्ञानुसारेण 'पनुदोः'—इत्यग्रे 'यदप्युच्यते उप'—इत्यादि 'न प्राप्नुवन्ति' इत्यन्तं 'यदप्युच्यते जनेः'—इत्यादि 'ओकारः प्राप्नोति' इत्यन्तं च ग्रन्थं समाप्य ततो 'यत्तर्हि' इत्यादि 'करोति' इत्यन्तं 'नैष' इत्यादि 'निमित्तमेव' इत्यन्तं च ग्रन्थं लिखित्वा 'तस्मादिग्ग्रहणं कर्तव्यम्' इत्युचितमिति भावः ॥ परिहरति—तस्मादिति ॥ अत्र केचिदित्यनेनारुचिः सूचिता तद्बीजं तु—तथाकरणे 'यत्तर्हि' इत्यादिफक्किकात्रयस्यासंगत्यापत्तिः, तत्स्थाने फक्किकान्तरकल्पने स एव दोष इति । तस्माद्यथाश्रुतमेव भाष्यं युक्तम् । मध्य एव ज्ञापकान्तरकथने सामर्थ्यसमर्थने च बाधकाभावात् । किं च—'नैतानि' इति सर्वज्ञापकखण्डनस्य महाक्रमात् । अवान्तरखण्डनप्रक्रमस्य टकः कित्त्वेन ज्ञापकेन विच्छेदेऽपि महाप्रक्रमस्याविच्छेदात् । तदावेशात्तेन विच्छेदमनालोच्य तथोक्तेरिति ॥ छाया ॥

५ ननु सूत्रनिबन्धनज्ञापकव्यवहारस्योपदेशसामर्थ्येऽभावेन ज्ञापकाज्ञापकसमुदाये ज्ञापकशब्दस्याप्रवृत्त्या कथं बहुवचनमत आह—छत्रीति ॥ ॥ छाया ॥ एकसार्थवाहित्वेन छत्र्यच्छत्रिसमुदाये छत्रिणो यान्तीति प्रयोगवद्बहुवचनमिति भावः ॥

६ एवमुक्तज्ञापके निराकृते ज्ञापकान्तरमाह—यत्तर्हीति । तज्ज्ञापकमित्यग्रे शेषः । अत्राकारलोप एव तात्पर्यमितिसूचयितुमनन्यार्थमिति । अग्रे प्रत्ययान्तरकरणात्तत्र चानिकां गुणभाजामभावादकारस्य तु विशेषाभावादिति भावः ॥ छाया ॥

७ संध्यक्षरेषु तदभावार्थं सूत्रं स्थापयितुमाह—यदप्युच्यते इति ॥

८ उपदेशसामर्थ्याङ्गीकारेऽव्याप्तिं दर्शयति—आयादय इति ॥

९ अनुपपत्तिं परिहरति—नैष दोष इति ॥ छाया ॥

**(उद्योतः)** ग्लायत इत्यादीति । आदिना जग्लावित्यादि ॥ नन्वेवमात्वमपि बाध्येत । न हि तस्य ऐकारो निमित्तं ग्ले इति पाठेऽपि सुकरत्वाद् अत आह—नध्याख्येति । ध्या इति कृतात्वनिर्देशेनैकारोच्चारणस्यात्वाबाधकत्वज्ञापनादिति भावः ॥ न चास्य सौत्रत्वम् । बाधकत्वमङ्गीकृत्य सौत्रत्वकल्पनापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः ॥ न च रैशब्दादिभ्य आचारक्विपि रायतीत्यादौ सन्ध्यक्षरस्य गुणः स्यादिति वाच्यम् । एजन्तेभ्य आचारक्विभाव एतद्भाष्यप्रामाण्यादित्यदोषात् ॥ गुणवदिति । वैधर्म्ये दृष्टान्तः ॥

**( तृतीयप्रयोजनबाधकज्ञापकनिराकरणभाष्यम् )**

**यद्प्युच्यते—जनेर्डवचनं ज्ञापकम्?—न व्यञ्जनस्य गुणो भवतीति ॥ सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति । न च जनेर्गुणेन सिद्ध्यति । कुतो ह्येतत्-जनेर्गुण उच्यमानोऽकारो भवति, न पुनरेकारो वा स्यादोकारो वेति? ॥**

**( ज्ञापकसाधकभाष्यम् )**

**आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति ॥**

**( ज्ञापकबाधकभाष्यम् )**

**एवमप्यनुनासिकः प्राप्नोति ॥**

**( ज्ञापकसाधकभाष्यम् )**

**पररूपेण शुद्धो भविष्यति ॥**

**(प्रदीपः)** पररूपेणेति । रूपग्रहणस्येदमेव प्रयोजनम्—यादृक्परस्य रूपं तादृगेव यथा स्यादिति ॥

**(उद्योतः)** ननु पररूपेऽपि गुणानामभेदकतया कदाचित्सानुनासिकोऽपि स्यादत आह—रूपग्रहणस्येति ॥ परे तु अत्र पररूपशब्देन परशब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणम् स्थाने जायमानः किंगुणक इत्याकाङ्क्षायामन्तरतमपरिभाषयोभयगुणकः । प्रकृते चोभयान्तरतमासंभवात् परशब्देन यद्गुणस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्याशयाद्रूपग्रहणस्येत्यादि चिन्त्यम् । गुणानां शब्दत्वादिवत् शब्दस्वरूपत्वाभावेन व्यावृत्त्यसंभवश्च रूपग्रहणेनेत्याहुः ॥

**( ज्ञापकबाधकभाष्यम् )**

**एवं तर्हि गमेरप्ययं डो वक्तव्यः । गमेश्च गुण उच्यमान आन्तर्यत ओकारः प्राप्नोति ॥ तस्मादिग्ग्रहणं कर्तव्यम्॥**

**(प्रदीपः)** गमेरप्ययमिति । सप्तम्यां जनेर्ड इत्यतोऽन्येष्वपि दृश्यत इत्यत्र डोऽनुवर्तमानो गमेरपि विधीयत इत्यज्ञापकं डित्त्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम्॥

**(उद्योतः)** ननु गमेरप्ययं ड इति भाष्यमनुपपन्नं गमो गमश्चान्तात्यन्ताध्वदूरपारेति सूत्रे पठितेनान्यत्रापि दृश्यत इति वार्त्तिकेन नगोऽग इत्यादौ डस्य सत्त्वादत आह—सप्तम्यामिति । सप्तम्यां जनेरित्युत्तरं पठितेऽन्येष्वपि दृश्यत इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन तेनैव प्रकृत्यन्तरादपि डे सिद्धेऽन्तात्यन्तेति प्रकरणस्थं वार्त्तिकं न कार्यमिति भावः ॥ भाष्ये आन्तर्यत औकार इति । स्थानत आन्तर्यादिति भावः ॥ ननु तनोतेर्डडः सन्वच्चेति डित्करणान्न व्यञ्जनस्य गुण इति चेन्न । उणादीनामव्युत्पत्तिपक्षाङ्गीकारात् ॥ नचैवमपि स्थानप्रयत्नान्तरतमेषु इकारादिषु चरितार्थानि गुणादिशास्त्राणि व्यञ्जने न प्रवर्त्तन्त इति वाच्यम् । ईशादौ शकारे तथाप्यतिप्रसङ्गात् । सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः । स्थानेऽन्तरतमे इति सप्तम्यन्तपाठस्य भाष्ये प्रत्याख्यानेनास्या युक्तेरसंभवदुक्तिकत्वाच्च[12] ॥

( इति योगविभागप्रयोजननिरूपणाधिकरणम् ॥)

---

**( अथ इक्पदोपस्थापकलिङ्गाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**यदीग्ग्रहणं क्रियते, द्यौः, पन्थाः, सः, इममिति, एतेऽपीकः प्राप्नुवन्ति ॥**

**(उद्योतः)** भाष्ये एतेपीति । औकारादयः ॥ एधूदाहरणे-

---

१ सुकरेति । न चात्वं निरवकाशम्, 'दो पो' इत्यदौ सावकाशत्वात् । न च तत्रापि तत्सामर्थ्यादात्वं न, द्यतीत्यादौ तस्य लोपार्थत्वात् । नचैवम् 'आदेचः' इत्येव वाच्यं किमेच्ग्रहणेनेति वाच्यम् । धेट्प्रभृत्यर्थमेच्ग्रहणस्यावश्यकत्वात् । नच तत्रोपदेशसामर्थ्यम्, धयतीत्याद्यर्थत्वादिति भावः ॥छाया॥

२ लघुत्वादिति । किं चानुमानिकवचनकल्पने मानाभावात् । मम तु ऐजुपदेशसामर्थ्यप्राप्तात्वबाधकवचनस्याभावमात्रकल्पनमिति न किंचिदपूर्वं कल्प्यमिति दिगित्यपि बोध्यम् ॥ आहुरित्यरुचिबीजं तु एज्ग्रहणसामर्थ्यादेव बाधाभावे सिद्धे इदमयुक्तमेवेति ॥ छाया ॥

३ व्यञ्जनस्य तदभावार्थं सूत्रं स्थापयितुमनुवदति—यद्यप्युच्यत इति ॥ छाया ॥

४ एवमसूद्य योगविभागवादी दूषणायाभिधत्ते—सिद्धे इति ॥

५ असिद्धिमेव प्रतिपादयति—कुतोन्वियति ॥

६ योगविभागखण्डको सिद्धिं परिहरति—आन्तर्यत इति । अत्यन्ताधिककालापेक्षया स्वल्पाधिककाल एवान्तरतमो भवतीति भावः ॥ छाया ॥

७ योगविभागवादी पुनरप्यसिद्धिं दर्शयति—एवमपीति ॥

८ खण्डकः पुनः परिहरति—पररूपेणेति ॥

९ एवं व्यञ्जनस्य तदभावार्थत्वे ज्ञापकेन खण्डिते योगविभागवादी डित्त्वमन्तरानुपपन्नां प्रयोगसिद्धिं प्रतिपादयति—एवं तर्हीति ॥

१० प्राप्नोतीति । तस्माड्डित्वमवश्यं वक्तव्यमेवेति न ज्ञापकमिति शेषः॥

११ उपसंहरति—तस्मादिति ॥ व्यञ्जननिवृत्तेरन्यथा दुःशकत्वादित्यर्थः ॥ छाया ॥

१२ कत्वाच्चेति । वस्तुतः सप्तम्यन्तपाठेऽपि स्वराणां घोषसंवारनादाल्पप्राणप्रयत्नसत्त्वेन कवर्गतृतीयानामकारस्य चवर्गतृतीयानामेकारस्य पवर्गतृतीयपञ्चमानामोकारस्य स्थानस्येवान्तरतम्यपरीक्षायां गुणस्य बाह्यप्रयत्नस्याप्यपेक्षणेन घाग्घरिरित्यादौ स्थानबाह्यान्तरतमादेशविधानेन चरितार्थस्यापि 'झयो हः' इत्यस्य तद्धविरित्यादौ सर्वबलीयःस्थानसाम्याभावेऽपि प्रवृत्तिवत्प्रवृत्तेर्दुर्वारत्वाच्चेति केचित् ॥ दाधिमथाः ॥

१३ एवं योगविभागेन परिभाषया गुणवृद्धिमात्रविषयकत्वे स्थापिते खण्डको दूषणमभिधत्ते—यदीति ॥

श्विकः प्राप्नुवन्तीत्यन्वयः ॥ स इत्यत्र तु न स्यादेवेति भावः ॥ त्यदादीनाम् इत्यत्र त्यदादीनामिति तु तदोः सः सावित्युत्तरार्थं स्यात् संज्ञोपसर्जनव्यावृत्त्यर्थं च स्यादिति बोध्यम् ॥

( १०६ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ संज्ञया विधाने नियमः ॥ * ॥**

( भाष्यम् )

**संज्ञया ये विधीयन्ते तेषु नियमः ॥**

(प्रदीपः) **संज्ञयेति** । गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्ध(स्थानि)त्वाद्द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारार्थं विज्ञायते । तेन गुण इत्येवं यो गुणः वृद्धिरित्येवं या वृद्धिरिति विज्ञायते । अथवा गुणवृद्धिमात्रग्रहणे गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते ॥

(उद्द्योतः) **आश्रितेति** । आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं येषु आदैक्षु विधीयमानेषु तदर्थमित्यर्थः ॥ **तेनेति** । इत्येवमित्यध्याहृत्य स्वरूपपदार्थकेनान्यतरेण विशेषणादीदृशार्थलाभ इति भावः ॥ अत एव संबन्धानुवृत्तिप्रदर्शनपरभाष्ये गुणवृद्धी इत्युच्चार्य गुणवृद्धिग्रहणमनुवर्त्तत इति उक्तम् ॥ [२]उपक्रमस्थगुणवृद्धिग्रहणसामर्थ्यादित्येतद्भाष्यस्वारस्यादाह—**अथ वेति** । पुनरुपादानसामर्थ्यादिहत्यं गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षिणकमिति भावः ॥

( आक्षेपभाष्यम् )

**किं[३] वक्तव्यमेतत् ? ॥**

( समाधानभाष्यम् )

**नहि, ॥**

**कथमनुच्यमानं गंस्यते ? ॥**

**गुणवृद्धिग्रहणसामर्थ्यात् ॥**

( आक्षेपसाधकभाष्यम् )

**कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् ?[४] ॥**

(समाधानसाधकभाष्यम्)

**प्रकृतं[५] गुणवृद्धिग्रहणमनुवर्तते ॥**

**कं प्रकृतम् ? ॥**

**"वृद्धिरादैजदेङ्गुणः" इति ॥**

( आक्षेपभाष्यम् )

**यदि तदनुवर्तते "अदेङ्गुणो वृद्धिश्च" इत्यदेङां वृद्धि संज्ञाऽपि प्राप्नोति ॥**

(प्रदीपः) **अदेङामिति** । पूर्वसूत्रे संज्ञासंज्ञिसंवन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश एवोत्तरत्रानुवर्तते इत्यदेङामित्युक्तम् । तेनैतत्र चोदनीयं वृद्धिशब्दोनुवर्तमान आदैचः प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोतीति ॥

(उद्द्योतः) **यादृश इति** । स्वरूपपदार्थक इत्यर्थः ॥ नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् । अनुवर्त्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेत् ॥ न । आगन्तूनामन्ते निवेश इति न्यायेनादेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य, उत्तरत्र तु योग्यतयाऽर्थपरत्वम् । इक इति सूत्रेऽपि न धात्वित्यादिसाहचर्येणार्थपरत्वमिक इति षष्ठीनिर्देशाचेति भाष्याशयात् ॥

( समाधानभाष्यम् )

**संबन्धमनुवर्तिष्यते—"वृद्धिरादैच्" । "अदेङ्गुणः" इति वृद्धिरादैच् । ततः-"इको गुणवृद्धी" इति गुणवृद्धिग्रहणमनुवर्त्तते, आदैजदेङ्ग्रहणं निवृत्तम् ॥**

(प्रदीपः) **संबन्धमिति** । संबध्यत इति संबन्धं कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः । आदैज्ग्रहणसंबद्धं वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तते, तेनादेङ्भिर्न संबध्यते । इह त्वनुवृत्तमादैचो जहाति । कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने ॥

(उद्द्योतः) **नपुंसकस्येति** । घञजपः पुंसीति तु प्रायिकमिति भावः ॥ यत्तु भावविषयमेवैतदिति । तन्न । मांसं भक्षोऽस्येति कर्मण्यणिति सूत्रस्थभाष्यप्रयोगविरोधात् ॥ **तेनेति** । अत्रादैजित्यनुवृत्तिर्न स्वकार्याय, किं तु वृद्धिशब्दस्यान्यसंबन्धनिवृत्तये इति भावः ॥ भाष्ये वृद्धिरादैजदेङ्गुण इति सूत्रक्रमनिर्देशः ।

---

१ संज्ञयेति । सामर्थ्याद्गुणवृद्धिसंज्ञयोरेव ग्रहणम् । सामान्यविवक्षयैकवचनम् । विधानेकैकोक्तेर्वा करणे तृतीया । विधानशब्दे कर्मणि ल्युड्बाहुलकात् । विषयसप्तमी । नियमः परिभाषारूपो नियामकोयं योगः ॥ छाया ॥

२ यद्यप्येवमुपपादितम् । तथापीदं चिन्त्यम् अनुवर्तमानयोस्तयोरसमस्तयोरेकवचनान्तयोः समस्तद्विवचनान्ततापरपदार्थविभागापन्नगुणभूतवर्तिपदार्थतद्विशेषणत्वासंभवात् । प्रत्येकं समुदायविशेषणत्वं तु बाधितमेव । न हि संभवति देवयज्ञयज्ञदत्तौ गदी कुण्डलीति सामानाधिकरण्येनान्वये समानविभक्तिकत्वस्येव समानवचनत्वस्यापि तन्त्रत्वादित्यभिप्रेत्याह—उपक्रमेति ॥ तत इत्यादिः । अन्यथा सामर्थ्यादित्युक्त्यसंगतिः स्पष्टैव ॥ छाया ॥

३ उक्ताशयानभिज्ञ आह—किमिति । संज्ञयेति विशेषणं किमपूर्वं कर्तव्यमित्यर्थः ॥ छाया ॥

४ अधिकारेण विधेयसिद्धा नोक्तदोष इत्याह—प्रकृतमिति ॥ छाया ॥

५ ननु समस्तद्विवचनान्तस्याप्रकृतत्वात् 'प्रकृतम्' इत्ययुक्तमित्याह—क्वेति ॥ छाया ॥

६ असमस्तमेव सूत्रद्वयादनुवर्तत इत्याह—वृद्धिरिति ॥ छाया ॥

७ ननु शब्दाधिकारे संज्ञासूत्रतोऽन्यत्र संज्ञाशब्दानां संज्ञिपरत्वमिति नियमेन 'आदैचां गुणसंज्ञा प्राप्नोति' इति वक्तुमुचितमत आह—पूर्वसूत्र इति ॥ अर्थाधिकार इति भावः ॥ छाया ॥

८ तत् गुणपदेत्यर्थः ॥ छाया ॥

९ उत्तरत्र तु न धात्वित्यादौ तु ॥ छाया ॥

१० संबन्धमिति । 'नैष दोषः । यतः'—इत्यादिः ॥ छाया ॥

पुनर्वृद्धिरादैजित्यभिधानमदेङित्यत्र संबन्धानुवृत्तिं दर्शयितुम् ॥ इको गुणवृद्धी इत्युक्तिस्तु यथान्यासाभिप्रायेण ॥ आदैजदेङ्ग्रहणमिति । स्वरितत्वाप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः ॥ क्वचित्तु आदैज्ग्रहणं निवृत्तमित्येव पाठः ॥

( समाधानान्तरभाष्यम् )

**अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥**

(प्रदीपः) **अथवेति** । वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं नत्वदेङित्यत्र ॥

(उद्योतः) ननु मण्डूकस्य चेतनत्वात्तथा गतिसंभवेऽपि शब्दस्य कथं सेत्यत आह—**वृद्धिशब्दस्येति** । स्वरितत्वासङ्गादनुवर्तमानस्यापीति शेषः ॥ **इहेति** । इक इति सूत्र इत्यर्थः । **अदेङित्यत्र** तु न संबन्धः । गुणसंज्ञासंबन्धेनादेङां निराकाङ्क्षत्वादिति बोध्यम् ॥

( एकदेशिसमाधानान्तरभाष्यम् )

**अथवैकयोगः करिष्यते—"वृद्धिरादैजदेङ्गुणः" ततः "इको गुणवृद्धी" इति । न चैकयोगेऽनुवृत्तिर्भवति ॥**

(प्रदीपः) **अथवैकयोग इति** । एको भवतिरध्याहियते । वृद्धिरादैजदेङ्गुणो भवतीत्येकवाक्यत्वं संपद्यते । यद्यपि प्रतिपत्तिकाले भवतिक्रिया भिद्यते, तथाप्येककाला प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसंज्ञाऽदेङ्संबद्धा गुणसंज्ञेति नास्ति वृद्धिसंज्ञाया अदेङ्भिः संबन्धः ॥

(उद्योतः) नन्वेकयोगत्वं नैकार्थत्वं भिन्नविषयसंज्ञाद्वयविधानात् । नापि निरन्तरपाठः तस्येदानीमपि सत्त्वेन **करिष्यत** इत्यस्यासङ्गतेः । णेरणावित्यादौ एकयोगेऽप्यनुवृत्तिदर्शनाच्चात आह—**एक इति** ॥ **प्रतिपत्तिकाले** लक्ष्यसंस्कारकवाक्योपप्लवकाले ॥ **एककालेति** । आदैज् वृद्धिसंज्ञोऽदेङ्गुणसंज्ञो भवतीति संग्राहकवाक्यार्थबोध एककाल इति भावः ॥ समूहालम्बनात्मक एको वाक्यार्थबोध इति तात्पर्यम् ॥ यद्वादैज् वृद्धिसंज्ञोऽदेङ्गुणसंज्ञश्च भवत इत्येको वाक्यार्थबोध इति तात्पर्यम् । **प्रतिपत्तिर्वाक्यार्थबोधः** । णेरणावित्यादौ अवान्तरवाक्यार्थभेदान्न दोषः ॥ केचित्तु एककाला प्रतिपत्तिर्भवतु । तावतापि स्वरितत्वगुणप्राप्तवृद्धिपदसबन्धाभावः कुत इति चिन्त्यम् । न च स्वविषयैकवाक्यजबोधानन्तरं निराकाङ्क्षतयान्यत्रान्वयाप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गो न त्वेतदेकयोग इति वाच्यम् । व्यवधाननिबन्धनायामनेकसंबन्धाप्राप्तावनेकसंबन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् ॥ तस्मादयमत्र भाष्यार्थः—तदधीते तद्वेदेत्यत्र द्विस्तद्ग्रहणादेकयोगेऽनुवृत्त्यभावः—इति । स्पष्टं चेदं तदस्मिन्नस्तीति सूत्रे भाष्ये । एकयोगत्वं च द्वयोः संहितापाठ एव ॥ वस्तुत एकयोगेऽप्यनुवृत्तिर्भवति तदस्यास्त्यस्मिन्निति सूत्रे द्विस्तद्ग्रहणाभावात् तदधीत इति सूत्रे तु बालानां सुखबोधाय द्विस्तद्ग्रहणमित्यप्युक्तं तत्रैव । अतोऽत्र भाष्येऽयं समाधिरेकदेशिन इत्याहुः ॥

( समाधानान्तरभाष्यम् )

**अथवा—**

*** अन्यवचनाच्चकाराकरणाच्च प्रकृतापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति * ॥**

**अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति । यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥**

(प्रदीपः) **अथवान्यवचनादिति** । यथा कप्रत्ययेनाण् बाध्यतेऽसंदिग्धत्वादनवकाशत्वात्तात्पर्याच्च कविधेः । अणस्तु विपर्ययात् । एवमदेङ्गुण इत्यत्र वृद्धिग्रहणमनुवृत्तं सत्संदिह्यते—किमुत्तरार्थमेवेहास्यानुवृत्तिरथेहार्थापीति । सावकाशा च वृद्धिसंज्ञा, तात्पर्यं च नास्ति । गुणसंज्ञा तु तात्पर्यादसंदेहान्निरवकाशत्वाच्च वृद्धिसंज्ञासंबन्धमदेङां बाधते । प्रत्ययसंज्ञा तु संज्ञिविशेषेणासंयुक्ताधिकारेणैव विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्तते ॥

(उद्योतः) ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषत्वाभावात्कथमुत्सर्गापवादसाम्यमत आह—**यथेति** । **आत** इत्युपादानादेव तद्विषये कस्यासंदिग्धत्वम् । अत एव तदतिरिक्तावकाशविरहस्तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च ॥ ननु गुणसंज्ञयां वृद्धिसंज्ञावत् कृत्यादिसंज्ञयापि प्रत्ययसंज्ञा बाध्येतेत्यत आह—**प्रत्ययेति** । न तव्याद्याकाङ्क्षया प्रत्ययसंज्ञायाः संबन्धः । येन संनिहितकृत्या-

१ गुणेति । विधेयगुणरूपसंज्ञाश्रवणेन तत्संबन्धेनेत्यर्थः ॥ तदुक्तम्—
"यस्य येनाभिसंबन्धो दूरस्थस्यापि तस्य सः ।
अर्थतोह्यसमर्थानामानन्तर्यमकारणम्" इति छाया ॥

२ 'गुणः' 'इति' इति पाठः ॥ छाया ॥

३ एककालेति । यदैवादैचां वृद्धिसंज्ञा प्रतीयते तदैवादेङां गुणसंज्ञेति समूहावलम्बनवत्प्रतीतिक्रमः संज्ञिविशेषसंबद्धसंज्ञाद्वयसाध्याहृतभवतिक्रियया युगपत्तत्क्रमेणान्वय इति भावः ॥ छाया ॥

४ दानीमपि । भिन्नसूत्रसंहितापाठकालेऽपि ॥ छाया ॥

५ नन्वेवं तथा बोधो न इष्टचरोऽत आह—यद्वेति । द्विवचनान्तो भवतिरध्याहरिष्यते । तत्र समुच्चयस्तु 'ग्रामश्रम्' इतिवदिति भावः ॥ छाया ॥

६ कैयटोक्तमाभ्याशयं खण्डयति—केचित्त्विति । माष्यतत्त्वविद इत्यर्थः ॥ छाया ॥

७ स्वविषयत्वं बोधेऽन्वेति ॥ छाया ॥

८ सवाक्यं व्याचष्टे—अन्यस्या इति । 'कुलः श च' इत्यादावन्यवचनं चश्चेत्युभयमस्तीति तत्र तेन प्रकृतकित्त्वादेः समुच्चय उचितः, इह तु चाभावाद् 'आतोऽनुप'—इत्यत्रेव स नेति भावः ॥ छाया ॥

९ सदिति । सदपीत्यर्थः ॥ छाया ॥

१० नास्तीति । अदेङ्भ्योऽदेङ्क्षेनाप्रवृत्तत्वादिति भावः ॥ छाया ॥

११ स्यासंदिग्धत्वमिति । आदन्तो धातुः कप्रत्ययविषयो नवेति संदेहाविषयत्वमित्यर्थः ॥ छाया ॥

१२ संज्ञयापीति । अपिर्व्युत्क्रमे । संज्ञया प्रत्ययसंज्ञापीत्यर्थः । संनिहितकृदादिसंज्ञाभिस्तव्यादीनां निराकाङ्क्षत्वादिति भावः ॥ छाया ॥

दिसंज्ञया निराकाङ्क्षत्वान्न प्रत्ययसंज्ञया संवन्धः स्यात् । किं तु संज्ञाकाङ्क्षया ॥ सा हि स्वस्य बहुविषयत्वलाभाय कतिपयानन्तर-विषयलाभेऽपि पुनः पुनर्विषयान्तरमाकाङ्क्षते । बहुविषयत्वं चास्याः संज्ञिविशेषासंवन्धेनाधिकारकरणादवसीयत इति भावः ॥ प्रकृते तु न तथेति बोध्यम् ॥

( समाधानान्तरभाष्यम् )

**अथवा वक्ष्यत्येतद्[2]—"अनुवर्तन्ते च नाम विधयः । न चानुवर्तनादेव भवन्ति । किं तर्हि ? । यत्नाद्भवन्ति" इति ॥**

(प्रदीपः) **अथवेति** । **विभाषा[3]तिलमाषोमेत्यत्र** क्षुमाभङ्गयोरधान्यत्वात्खञोऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता, अनुवर्तमानश्च खञ् यत्नाभावाद् व्रीहिशाल्यादिभिर्न संवध्यते, अपि तु विभाषाश्रुत्या[4] यत्नेन तिलादिभिरेव संवध्यते । तथेहापि वृद्धिग्रहण**मदेङ्गुण** इत्यत्रानुवर्तमानमपि यत्नाभावाददेङ्भिर्न संवध्यते । इह तु पुनर्गुणवृद्धिग्रहणं यत्नो भवति ॥

(उद्द्योतः) **खञोऽप्राप्ताविति** । यता मुक्ते इति शेषः । मण्डूक[5]गतयोऽधिकारा इत्यस्यैव 'स्वरितलिङ्गेनानुवर्तमानं यत्राकाङ्क्षा, तत्रैव संवध्यते' इति विशेषमभिधातुमयं पक्षः । स[6] च संवन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोऽप्यभिमतः । अस्य[7] विशेषस्य प्रागकथनं तु एतद्विशेषद्वारा पुनस्तत्परामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम् ॥ **इहत्विति** । अकर्तव्य[8]त्वविशिष्टपुनर्गुणवृद्धिग्रहणं यत्न इत्यर्थः । अनुवृत्तौ हि तदकर्तव्यं भवतीत्याहुः ॥

( समाधानान्तरभाष्यम् )

**अथवा—उभयं निवृत्तम् । तदपेक्षिष्यामहे ॥**

(प्रदीपः) **अथवेति** । अपेक्षालक्षणं लौकिकमधिकारमाश्रयति । समुदाय[9]स्य चापेक्षायां नास्त्येतद् **अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति** गुणस्यैवापेक्षा युक्तेति । समुदायस्य भेदाभावात् ॥

(उद्द्योतः) भाष्ये—**उभयं निवृत्तमिति** । स्वरित[10]लिङ्गानासङ्गेनाननुवृत्तिरेव निवृत्तिरित्यर्थः ॥ **अपेक्षेति** । इक इत्येतावन्मात्रस्येतराकाङ्क्षत्वात् । समुदायापेक्षायां च लक्ष्यानुसार एव वीजम् । अनन्तरस्येति न्यायेन गुणस्यैवापेक्षा युक्तेत्येतन्नास्तीत्यन्वयः । समुदायत्वं[11] च युगपद्बुद्धौ संनिधानात् क्रमेणासंनिधानाच्चेति बोध्यम् ॥

(इतीक्पदोपस्थापकलिङ्गाधिकरणम् )

( अथ परिभाषात्वसाधकाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयमलोन्त्यशेषः[12], आहोस्विदलोन्त्यापवादः ? ॥**

(प्रदीपः) **किं पुनरिति** । उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः । तत्राङ्गस्य गुण इति षष्ठीनिर्देशाल्लिङ्गाद**लोन्त्यस्येत्युपतिष्ठते** गुणश्रुत्या **त्विक** इति । तत्र यदि पूर्वमिकाऽङ्गं विशेष्यते—इगन्ताङ्गस्य गुणो भवतीति स च भवन्न**लोन्त्यस्येत्यन्त्यस्य**, भवति, तदा सोऽस्य शेषो भवति । यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयते[13]—अङ्गान्त्यस्य गुण इति पश्चादिकान्त्योल् विशेष्यते, तदा तस्यायं विशेषणत्वात्तच्छेषो भवति ॥ अथ **त्वङ्गस्येति** । गुणवृद्धिविधौ न स्थानषष्ठी, किं तर्ह्यंगपेक्षयाऽवयवषष्ठी, तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानमिति तदपवादपक्षो भवति । अप्राप्त्यै[14]वानुमानमेव

१ चास्या इति । प्रक्रान्तप्रत्ययसंज्ञाया इत्यर्थः ॥ छाया ॥

२ वक्ष्यत्येतदिति ॥ गोनर्दीय इति शेषः ॥ च एवार्थः ॥ नाम निश्चये विधयो विधीयमानाः ॥ न च नहि ॥ छाया ॥

३ कुत्र वक्ष्यतीत्यत आह—विभाषेति ॥ छाया ॥

४ श्रुत्या यत्नेनेति । तद्रूपयत्नेनेत्यर्थः । स तत्समुच्चायको न तु विकल्पार्थः । वाक्यस्य महाविभाषयैव सिद्धेः । यद्यप्यन्यांशे तस्य विकल्पार्थत्वमेव तथापि तिलादिभिः प्रत्येकं तत्संवन्धादुमाद्यंशे तत्संवन्धस्तदर्थं एव । न च तत्र मानाभावः । तथासति पूर्वत्रैव तयोः पाठौचित्यात् । तस्मात्तदंशे तथैव । अनुवर्तमानमपि वृद्धिग्रहणमदेङ्गुण इत्यत्रादेङ्भिर्न संवध्यते इत्यन्वयः ॥ चकाराकरणाच्चेति समाधिनायं गतार्थस्तु न, तत्र विशेषरूपेणोक्तम्, अत्र तु सामान्यरूपेणेति भेदात् । यद्वाधिकारेणोपस्थिताया अपि वृद्धिसंज्ञाया अङ्गपदसंज्ञावत्समुच्चयो न चाकरणादिति पूर्वमुक्तम् । इहतु तस्या उपस्थितिरेव नेति विशेष उच्यते ॥ छाया ॥

५ द्वितीयपक्षेण पौनरुक्त्यं परिहरति—मण्डूकेति ॥ छाया ॥

६ स च विशेषश्च ॥ तत्रेति । मध्यमणिन्यायेनान्त्येति ॥ छाया ॥

७ नन्वयं तत्रैव कुतो नोक्तोऽत आह—अस्येति ॥ केचित्तु—तत्रासत्यामाकाङ्क्षायां संनिधिरेव नास्तीत्युक्तम् । अत्र तु संनिधौ सत्यसत्यपि वाऽऽकाङ्क्षाभावे संवन्धो नेति भेद इत्याहुः ॥ छाया ॥

८ ननु पुनर्गुणवृद्धिग्रहणस्य न यत्नत्वं तथासति वैयर्थ्यापत्तेरत आह—अकर्तव्येति । हि यतः । तत् पुनर्गुणवृद्धिग्रहणम् ॥ छाया ॥

९ निषेधे हेतुमाह—समुदायेति । तस्यैकापेक्षाविषयत्वादानन्तर्यस्य च भेदसापेक्षत्वादिति भावः ॥ छाया ॥

१० नन्वनुवृत्तिवन्निवृत्तिरपि यत्नसाध्येति कथं कस्य च सा किंचाप्रकृता साऽत आह—स्वरितेति ॥ अनेन—'उभयम्' आदैजदेङ्ग्रहणं निवृत्तम् । तत् गुणवृद्धिग्रहणमपेक्षिष्यामहे' इति 'यदुभयं गुणवृद्धिग्रहणमनुवृत्तं तदपेक्षिष्यामहे' इति वा भाष्यार्थः सूचितः ॥ छाया ॥

११ ननु न समुदायः शब्दोपात्तोऽत आह—समुदायत्वमिति ॥ तीक्ष्णबुद्धीनामिति भावः ॥ छाया ॥

१२ अलोन्त्यशेष इति । एकदेशानुकरणेन सूत्रबोधकस्य तस्य शेषशब्देन षष्ठीतत्पुरुषो बहुव्रीहिर्वा । एतेन—सूत्रमनुकृत्य तथा समासे कृते 'प्रकृतिवद्' इति न्यायेन तदवयवस्य 'सुपः' इति लुक्—इति रत्नोक्तमपास्तम् । अस्य वामीयमित्यादौ दोषापत्तेः ॥ तथाच स्वसंज्ञाभ्यां विहितयोरिक्स्थानिकत्वनियामकत्वेऽप्यसति तद्भ्रमासङ्गिकोऽयं विचार इति भावः ॥ छाया ॥

१३ नीयते इति । तत्रोपसंह्रियत इत्यर्थः ॥ छाया ॥

१४ नन्वपवादो नाम बाधः । स च प्राप्तस्य प्रवृत्तत्वेनायुक्तः अप्रवृत्ते च बाध्यविषयाभावात्कस्य बाधः । नचातिदेशिकवचनप्राप्तानां तेषां 'ऋरसर्व

हि बाधो, वचनेन प्राप्तस्य बाधायोगात् । ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी इत्यर्थः संपद्यते [1]संमुच्चयस्त्वसंभवान्नोपन्यस्तः । न हि युगपद्द्वौ षष्ठ्यर्थौ संभवतः—स्थानेयोगोऽवयवयोगश्चेति । विकल्पोऽपि न भवत्येकत्वात्षष्ठ्यर्थस्य । तस्मात्तच्छेषतदपवादपक्षावेवात्राशङ्कितौ ॥

(उद्द्योतः) षष्ठीति । स्थानषष्ठीत्यर्थः ॥ षष्ठी स्थान इति परिभाषया तत्त्वनिर्णयः । [2]अस्य च सूत्रस्य वृद्धिगुणशब्दाभ्यां विधीयमानौ वृद्धिगुणाविकः स्थाने इत्यर्थेऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या । गुणश्रुत्येत्यस्य गुणशब्देन विधेयत्वबोधिकयेत्यर्थः ॥ तत्र यदीति । वुद्धेः क्रमिकत्वद्विशेषणविशेष्यभावे कामचाराच्चेति भावः ॥ सोस्येति । इगन्तस्येति पष्ठ्यास्तेनान्त्येल्युपसंहारादेतद्विशेषणत्वमे[3]तत्परिच्छेदकत्वं तस्येति भावः ॥ तदा तस्यायं विशेषणत्वादिति । तच्छेषशब्दे तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः ॥ [भाष्ये—[4]'[इको]गुणवृद्धी' इति पूर्वपरान्व[5]यि, तेनैतद्द्वयलाभ इति भावः ॥ परिच्छेद्यपरिच्छेदकभावकृत एव च शेषशेषित्वव्यवहार इति बोध्यम् ॥] अथत्विति । अवान्तरवाक्यार्थबोधकालेऽनिर्णीतार्थकत्वेन स्थानषष्ठीत्वसंभावनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ मिदेरित्यादौ योग्यत्वेन तत्साहचर्येण चान्यत्राप्यवयवषष्ठीत्वनिर्णये तदसंबन्ध इति भावः ॥ बाधायोगादिति । आत्यन्तिकबाधायोगादित्यर्थः । [6]पाक्षिकस्तु बाधः षोडशीग्रहणादौ भवत्येवेति बोध्यम् ॥ समुच्चय इति । मिदेरन्त्यस्येकश्चेत्येवमाकारः ॥ नहीति । प्रत्यर्थशब्दनिवेशेनैकस्य नानेकाभिधायकत्वम् । तन्त्रे आवृत्तौ च न मानमिति भावः ॥

(प्रत्याक्षेपभाष्यम्)

[7]कथं चायं तच्छेषः स्यात्, कथं वा तदपवादः ?॥

(प्रत्याक्षेपसमाधानभाष्यम्)

[8]यद्येकं वाक्यम्—तच्चेदं च, अलोन्त्यस्य विधयो भवन्ति='इको गुणवृद्धी अलोन्त्यस्य' इति । ततोऽयं तच्छेषः ॥ अथ नानावाक्यम्—तच्चेदं च, अलोन्त्यस्य विधयो भवन्ति,' 'इको गुणवृद्धी अन्त्यस्य चानन्त्यस्य च' इति । ततोऽयं तदपवादः ॥

(प्रदीपः) यद्येकमिति । अनेकयोगव्यवहितयोरप्येकस्मिन्कार्यप्रदेशे स्वस्वनिमित्तसन्निधापितयोरङ्गाङ्गिभावाद्विशेषणविशेष्यभावादेकवाक्यतोपपत्तिः ॥ अथ नानेति । अङ्गस्येतीगपेक्षयावयवषष्ठ्यामिकः स्थानित्वात्तद्विशेषणत्वादङ्गस्यानुपस्थानमलोन्त्यस्येत्यस्य । ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम् ॥

(उद्द्योतः) [9]अनेकयोगेति । एवं चैकं वाक्यमिति भाष्य-

---

वर्हिः' इति प्रत्यक्षवचनप्रापितैस्तैर्बाधो युक्तः प्रकृते तूभयमपि प्रत्यक्षम् । अतस्तथासति षोडशिग्रहणाग्रहणवद्विकल्प एव तुल्यबलत्वात्स्यात् । अत आह—अप्राप्स्येति ॥ हि यतः केनचिद्रूपेणाप्रवृत्तस्य बाध्यत्वात् । तथाच बुध्या प्रवृत्तं बाध्यते । तद्धि नात्यन्तं प्रवृत्तम् । अनुष्ठानरूपफलापर्यवसानात् । नाप्यत्यन्तमप्रवृत्तं तद्बुद्धेः प्रवृत्तत्वात् । तथाच लक्ष्यभेदाल्लक्षणभेद इति न्यायेनावयवषष्ठ्यावरुद्धविषये स्थानषष्ठीक्रमेण प्राप्तनियमाभासस्यावयवषष्ठीदर्शनादप्राप्तस्य बाध इत्यर्थः ॥ छाया ॥

१ भाष्यीयन्यूनतां निराचष्टे—समुच्चय इति ॥ छाया ॥

२ नन्वेवं तस्या अवान्तरवाक्यार्थबोधोत्तरं प्रवृत्तिः, अस्यास्तु पदश्रुतिलिङ्गमिति पूर्वं प्रवृत्तिरिति कथमनयोः संभवोऽत आह—अस्यचेति । प्रवृत्तेरित्यनेनान्वयः ॥ छाया ॥

३ न गुणगुणिभावकृतं नापि मिथोऽपेक्षाकृतं तदित्याह—एतत्परीति ॥ छाया ॥

४ अयं कोष्ठकान्तर्गतः पाठो यद्यप्येकस्मिन्पुस्तकेऽग्रे प्रत्याक्षेपसमाधानभाष्यप्रदीपोद्द्योते 'विशेषणेति' इति प्रतीकोत्तरं समुपलभ्यते युज्यते च तत्रापि तथापि 'तेनैतद्द्वयलाभः' इति ग्रन्थस्य पुस्तकान्तरस्य छायोपलभ्यमानव्याख्यानक्रमस्य चानुरोधेनास्माभिरप्यत्रैव स्थापितः ॥ दाधिंमथाः ॥

५ उक्तं समूलयति—पूर्वपरान्वयीति । मध्यमणिन्यायेनेति भावः ॥ छाया ॥

६ तथाव्याख्यानफलमाह—पाक्षिक इति ॥ द्वितीयवचनेन पूर्ववचनप्राप्तस्येति भावः ॥ छाया ॥

७ 'गुणानां च परार्थत्वात्'—इति (पू. मी. ३।१।२१) न्यायेन मिथोसंबन्धादनेकयोगव्यवहितत्वादप्राकरणिकत्वान्मिथोनपेक्षित्वाद्द्वयोर्विध्युपकारकत्वाच्च कथं शेषशेषिभावादीति पूर्वपक्षिणं [तटस्थः] पृच्छति—कथं चायमिति ॥ चस्त्वर्थे । कचिद्वेति पाठः ॥ छाया ॥

८ [एतच्छ्रुत्वा पूर्वपक्षी स्वाशयं प्रकाशयितुं] 'गुणः कृतात्मसंस्कारः'(पू. मी.) इति न्यायेन ।

'यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः ।
अर्थहेतु( तो ह्य )समर्थानामानन्तर्यमकारणम् ॥'

इति न्यायेन व्यवहितयोरप्येकत्र कार्यप्रदेशे स्वस्वनिमित्तसंनिधापितत्वेन च तत्संभवः । तत्र च प्रदेशभेदाद् द्वयी गतिः । तथाहि—'सार्वधातुकार्ध' 'जुसि च' इत्यादाववान्तरवाक्यार्थबोधोत्तरमनयोर्जातवाक्यार्थबोधयोरागमने पृथग्वाक्यार्थबोधोत्तरं वाक्यैकवाक्यतान्यायेन गृहीतपरिभाषार्थेन देशसामान्याश्रयेण प्रवृत्तायास्तस्या गुणवृद्धिरूपादेशविशेषाश्रयेण प्रवृत्ताया अस्याः सहैव लक्ष्यसंस्कारकत्वसंभवेन पदैकवाक्यतयान्वयः । तत्र च 'अङ्गस्य' इत्यधिकारप्राप्तम् । तथा च विशेषणविशेष्यभावे कामचाराद् 'अङ्गान्त्यस्याल इको गुणः' इति 'अङ्गस्येकोऽन्त्यस्यालो गुणः' इति वा वाक्यार्थेन फलितेन लक्ष्यसंस्कारकेन मिथो विशेषणविशेष्यभावापन्नयोरेव प्रवृत्तिराश्रीयते—इत्येका ॥ 'इगन्ताङ्गस्यान्त्यालः' इति 'संभवति'—इति न्यायेन व्याख्याने तु तयोर्मिथोविशेषणविशेष्यभावो न प्रतिपादितः स्यात् । 'यद्येकं वाक्यम्' इत्यादि तथा प्रदर्शकभाष्यविरोधापत्तिश्च । तत्साध्यफलं त्वनेनैव सिद्धम् । तदाह—यद्येकमिति । 'विधयो भवन्ति' इत्यनेन विधिदेशे पृथग्वाक्यार्थबोध आदौ सूचितः ॥ अथ 'मिदेर्गुणः' इत्यादाववान्तरवाक्यार्थबोधोत्तरमनयोरुपस्थितौ पृथग्वाक्यार्थबोधोत्तरमुक्तरीत्या 'मिदेरङ्गस्यान्त्यस्याल इको गुणः' इति 'मिदेरङ्गस्येकोऽन्त्यस्यालो गुणः' इति वार्थो न संभवति बाधात् । अतो भिन्नवाक्यता वाच्या—'मिदेरङ्गस्येको गुणः' । 'मिदेरङ्गान्त्यस्यालो गुणः' इति । सा च समकक्षत्वे संभवति न तु प्रवृत्तिसमाश्रयणे (?) येन नाप्राप्तिन्यायेन सामान्यायास्तस्या अनया बाधसंभवात् । तथा च तदनुपस्थितिरेवेति 'मिदेरङ्गस्येको गुणः' इत्येक एव वाक्यार्थः पर्यवसन्नः—इत्यपरा ॥ तदाह—अथ नाना वाक्यम्—तच्चेदं चेति । तत्रापाततः संभावितवाक्यमादावाह—अलोन्त्यस्येत्यादि ॥ एतद्बाधकबाध्यमाह—इक इत्यादि ॥ द्वयोर्भिन्नवाक्यतामेव स्फोरयितुमाह—अन्त्यस्यानन्त्यस्येति ॥ छाया ॥

९ अनेकयोगेतीति ॥ शङ्कत इत्यादिः ॥ छाया ॥

मयुक्तमिति भावः ॥ उत्तरम्—एकस्मिन्नित्यादि । अङ्गाङ्गिभावश्च गुणगुणिभाव इत्याह—विशेषणेति ॥ इकः स्थानित्वादिति । सा च नालोन्त्यसूत्रप्रवृत्तौ निमित्तमलसमुदायोत्तरस्थानषष्ठीत्वाभावात् । अङ्गस्येति च न स्थानषष्ठीति भावः ॥ [तदाह—] तद्विशेषणत्वादिति । अवयवित्वेन विशेषणत्वादित्यर्थः ॥ नानावाक्यत्वमिति । अत्र पक्षे पुगन्तेत्यादि नियमार्थमिति बोध्यम् ।

( भाष्यम् )

कश्चात्र विशेषः ? ।

( १०७ तच्छेषपक्षदूषणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ वृद्धिर्गुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यम् ॥

"मिदेर्गुणः" "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति ॥

"मृजेर्वृद्धिः" "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति ॥

पुगन्तलघूपधस्य गुणः, "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति ॥

ऋच्छेर्लिटि गुणः "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति ॥

"ऋदृशोऽङि गुणः" "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति ॥

क्षिप्रक्षुद्रयोर्गुणः "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति ॥

(प्रदीपः) वृद्धिगुणाविति । मिदादीनामनिगन्तलादलोन्त्यस्येत्येतदङ्गमिग्ग्रहणं न सन्निपततीति तेषु प्रदेशेष्विग्ग्रहणं कर्तव्यम् ॥

(उद्द्योतः) मिदादीनामिति । गुणादिविधौ परिभाषाद्वयस्य परस्परं संबन्धापरित्यागेनोपस्थानं तच्छेषत्वम् । तत्रैकस्या असंभवे द्वितीयापि न प्रवर्तत इति भावः ॥ भाष्ये अनन्त्यत्वाद्धीति । तच्छेषपक्षेऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः ॥

( १०७ तच्छेषदूषणान्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सर्वादेशप्रसङ्गश्चानिगन्तस्य ॥ * ॥

( एकदेशिव्याख्याभाष्यम् )

सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति । याता वाता ॥

किं कारणम् ? ॥

"अलोन्त्यस्य" इति षष्ठी चैवं ह्यन्त्यमिकमुपसंक्रान्ता, अङ्गस्येति च स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति ॥

(प्रदीपः) दोषान्तरमप्याह—सर्वादेशप्रसङ्गश्चेति । अङ्गस्येत्येतद्भेदेन सर्वाङ्गेषु व्याप्रियते । तत्रेगन्तेष्वेवालोन्त्यस्येति विधिरन्यत्र तु षष्ठ्यान्त्येऽल्यनुपसंहाराद्याता वातेति सर्वादेशो गुणः प्राप्नोति ॥

(उद्द्योतः) अङ्गस्येति च स्थानषष्ठीति । अङ्गस्य स्थाने गुणो भवति । स च यत्रान्त्य इक् तत्रान्त्यस्येक इत्यर्थ इत्यसिमानस्तदाह—भेदेनेति । शास्त्रस्य बहुविषयत्वायेत्यर्थः ॥ तत्रेगन्तेष्वेवेति । तच्छेषत्वादिति भावः ॥ अन्यत्र अनिगन्तविषये गुणशास्त्रे ॥

( दूषणोद्धारभाष्यम् )

नैष दोषः, यथैव ह्यलोन्त्यस्येति षष्ठी अन्त्यमिकमुपसंक्रान्ता, एवमङ्गस्येत्यपि स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति, कुतो गुणः कुतः सर्वादेशः ॥

१ उत्तरमिति । इदं कार्यकालपक्षवद्योद्देशेऽपि बोध्यम् ॥ छाया ॥
२ ननु तामादायैव कुतो नोपस्थितिरत आह—साचेति ॥ छाया ॥
३ नन्वङ्गस्येति षष्ठीमादाय कुतो नात आह—अङ्गस्येतीति ॥ छाया ॥
४ अयं कोष्टकान्तर्गतः पाठो यद्यपि Bangal Asiatic Socitey मुद्रितपुस्तकेपि नोपलभ्यते तथापि "तदाहेति । चरममाहेत्यर्थः" इति छायायां प्रतीकव्याख्यानदर्शनादस्माभिः स्थापितः ॥ दाधिमथाः ॥
५ [पुनरपि तटस्थो द्वयोर्विशेषं] पृच्छति—कश्चात्रेति ॥ छाया ॥
६ पूर्वपक्षी तच्छेषपक्षदूषकं वार्तिकमाह—वृद्धिगुणावित्यादि ॥
७ अलोऽन्त्यस्येति । इक इति शेषः ॥ छाया ॥
८ न प्राप्नोतीति । क्षिप्रक्षुद्रशब्दाभ्यामिष्ठनि 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति सूत्रेण यणादिपरस्य रस्य लोपेऽवशिष्टे हलन्तेऽनन्त्यत्वादिकारस्य गुणो न प्राप्नोतीत्यर्थः ॥ छाया ॥
९ स्येतदङ्गमिति । मायवत्समासद्वयम् ॥ छाया ॥
१० तेषु 'मिदेर्गुणः' इत्यादिषु ॥ छाया ॥
११ तत्रैकस्या इति । तयोर्मध्ये । इकोन्त्यत्वाभावेन तदसंभवेनेदमपि न प्रवर्तत इत्युक्तवाक्यार्थासंभवादनिष्टापत्त्या तत्कर्तव्यमित्यर्थः ॥
१२ हीत्यस्यार्थमाह—तच्छेषेति । सार्वेत्यादौ स्त्रीक्रियमाणे सतीत्यर्थः ॥ अत्रेति शेषः ॥ छाया ॥
१३ 'चैवहि' इत्यनन्तरम् 'अङ्गस्य' इति शेषः ॥ छाया ॥
१४ स्थानषष्ठीति । भेदेन व्याप्रताऽनिगन्तेष्वनुपसंहृता चान्त्येऽलि' इति शेषः ॥ छाया ॥
१५ चशब्दस्वारस्यादेकदेशिमतमाह—दोषान्तरमिति ॥ छाया ॥
१६ स्यमीति ॥ एकदेश्युक्तित्वात् ॥ छाया ॥
१७ भेदेनेतीति । प्रतिलक्ष्यं लक्षणभेदादित्यर्थः ॥ छाया ॥
१८ ष्वेवेतीति । भिन्नानां तेषां मध्ये इगन्तविषयकगुणशास्त्रेष्वेवेत्यर्थः ॥ छाया ॥
१९ सिद्धान्त्येकदेशी दूषणानि परिहरति—नैष दोष इति ॥
२० तत्र षष्ठ्येवेति । तद्विषयकतादृशषष्ठीघटितलक्षणमेवेत्यर्थः ॥ छाया ॥

(प्रदीपः) यथैव हीति । अङ्गस्येति षष्ठ्युच्चारितैवान्त्यमलं नीतेति नास्या अपरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः ॥

(उद्योतः) अन्त्यमलमिति । इकूपरिभाषाशेषभूतालोन्त्यपरिभाषयेत्यर्थः ॥ अङ्गस्येत्यपि स्थानषष्ठीति भाष्येऽन्त्यमिकमुपसङ्क्रान्तेत्यनुकर्षः । एवं च संग्राहकवाक्यस्येगन्तमात्रविषयकत्वादनिगन्तविषयकलक्षणाभाव एव । आवृत्तौ च न मानमिति भावः । अत एव गांपोष्टकः किन्त्वं सार्थकम् ॥

(वार्तिकसमन्वयान्तरभाष्यम्)

एवं तर्हि नायं दोषसमुच्चयः ॥

किं तर्हि ? ।

पूर्वापेक्षोऽयं दोषः । ह्यर्थे चायं चः पठितः—

* मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्य* इति ।

मिदेर्गुणः 'इक' इति वचनादन्त्यस्य न, 'अलोन्त्यस्य' इति वचनादिको न । उच्यते च गुणः । स सर्वादेशः प्राप्नोति ॥ एवं सर्वत्र ॥

(प्रदीपः) पूर्वापेक्षोऽयमिति । मिदादिष्विग्ग्रहणं कर्तव्यमित्यत्रैवार्थे हेतुत्वेनेदमुपात्तमित्यर्थः ॥ उच्यते चेति । मिदेरिति चोदनया ।

(उद्योतः) हिश्च हेत्वर्थ इत्याह—मिदादिष्विति ॥

(इति तच्छेपपक्षदूषणम् ।)

(अथ तदपवादपक्षाभ्युपगमभाष्यम्)

अस्तु तर्हि तदपवादः ॥

(१०४ तदपवादपक्षदूषणवार्तिकम् ॥ ५ ॥)

॥ * ॥ इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः ॥ * ॥

(भाष्यम्)

इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः ॥

जुसिगुणः—सयथेह भवति—'अजुहवुः अबिभयुः' इति । एवम् 'अनेनिजुः पर्यवेविषुः' अत्रापि प्राप्नोति ॥

सार्वधातुकार्धधातुकयोर्गुणः—स यथेह भवति—'कर्ता हर्ता नयति तरति' इति । एवम् 'ईहिता ईहितुम् ईहितव्यम्' इत्यत्रापि प्राप्नोति ॥

ह्रस्वस्य गुणः—सयथेह भवति—'हे अग्ने हे वायो' इति । एवं 'हे अग्निचित् हे सोमसुद्' इत्यत्रापि प्राप्नोति ॥

जसि गुणः—स यथेह भवति—'अग्नयो वायवः' इति । एवं 'अग्निचितः सोमसुतः' इत्यत्रापि प्राप्नोति ॥

ऋतो ङिसर्वनामस्थानयोर्गुणः—स यथेह भवति—'कर्तरि कर्तारौ कर्तारः' इति एवं 'सुकृति सुकृतौ सुकृतः' इत्यत्रापि प्राप्नोति ॥

घेर्ङिति गुणः—स यथेह भवति—'अग्नये वायवे' इति । एवम् 'अग्निचिते सोमसुते' इत्यत्रापि प्राप्नोति ॥

ओर्गुणः—स यथेह भवति—'बाभ्रव्यो माण्डव्यः' इति । एवं 'सुँश्रुत्सौश्रुतः' इत्यत्रापि प्राप्नोति ॥

(प्रदीपः) इङ्मात्रस्येति । यद्यङ्गस्येतीगपेक्षयावयवषष्ठी तदाऽलोन्त्यस्येत्यस्य निमित्ताभावादनुपस्थानम् स्थानषष्ठी हि तस्योपस्थाने निमित्तम् । ततश्चाङ्गावयवस्यान्त्यस्यानन्त्यस्य चेको गुणः प्राप्नोतीति दोषः । ह्रस्वस्य गुण इति समानन्यायत्वादेतदुक्तम् । अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण इति । न त्वत्रेकूपरिभाषोपतिष्ठते निर्दिष्टस्थानिकत्वात् ॥ अन्ये त्वाहुः—अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग्विशेष्यते ह्रस्वस्येको गुणो यथा स्याद् दीर्घस्य मा भूदिति ॥ ओर्गुण इत्यत्राप्यस्या उपस्थानमनन्त्यस्याप्युकारस्य गुणार्थम् । असति ह्यस्या उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यादङ्गं चोकारेण विशेष्यत इत्युकारान्तस्यैवाङ्गस्य गुणः स्यात् ॥

(उद्योतः) अनन्त्यस्य चेक इति । यद्यपि जुसि चेत्यादीनां प्रधानभूतेग्विशेषणत्वे तस्मिन्निति परिभाषया व्यवहितस्येको न भविष्यति, तथापि प्रत्ययस्याङ्गाक्षे उत्थिताकाङ्क्षतया जुसिचे-

१ नन्वेवं वार्तिकासंगतिरत [पूर्वपक्षीदं वार्तिकं पूर्ववार्तिकशेषत्वेन]आह—एवं तर्हीति । एवं सतीत्यर्थः ॥ नायं द्वितीयवार्तिकबोध्यः ॥ पूर्वापेक्ष इति । इग्ग्रहणाकरणापेक्ष इत्यर्थः ॥ छाया ॥

२ स एव फलितसमस्तवार्तिकपाठमाह—मिदीति ॥

३ ततश्च मिथ एकवाक्यतापन्नयोर्द्वयोरपि निवृत्तिः, अन्यतरप्रवृत्तौ विनिगमकाभावात् । तथाच 'षष्ठी स्थाने योगेति सर्वादेशः स्यादित्याह—स सर्वेति ॥ छाया ॥

४ एवमाद्ये तच्छेषपक्षे दूषणान्यभिधाय तदपवादपक्षेपि दूषणान्यभिधातुमुपक्रमते—अस्तुतर्हीति ॥

५ इङ्मात्रेति । मात्रपदेन बाध्यालोन्त्यपरिभाषाव्यवच्छेदः ॥ छाया ॥

६ 'सार्वधातुकार्धधातुकह्रस्वाद्योः' इति उवर्णपर्यन्तशब्दानां समाहारद्वन्द्वे छान्दसत्वान्नुमभावः, मध्यमपदलोपिसमासेनोकारान्तस्य पुंस्त्वं वा । गुणेष्विति पृथक् पदम् । इति ॥ छाया ॥ वस्तुतस्तु सर्वाणि यथासंभवं सूत्रसूत्रैकदेशानुकरणानि । तथा च 'जुसि' इत्यारभ्य 'ओर्गुणेषु इत्यन्तमेकमेव पदम् ॥ दाधिमथाः ॥

७ सुश्रुदिति । मकृतेर्हलन्तत्वबोधनाय ॥ छाया ॥

८ 'इङ्मात्रस्य चेत्' इति वार्तिकस्वरसभङ्गस्यात्र पक्षे सत्त्वादाह—अन्येत्विति ॥ छाया ॥

त्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रायः॥ समानन्यायेति। गुणप्रकरणावैरूप्याय सर्वत्राङ्गस्येत्यवयवषष्ठ्येव स्यादिति भावः॥ निर्दिष्टेति। अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः॥ अन्ये त्विति। अयंभावः—न ह्यनियम इति श्रुतिः स्मृतिर्वा, किं तु परिभाषा लिङ्गवती फलवती चेति नियमः फलं चेतरव्यावृत्तिरितरसंग्रहोपीति ह्रस्वस्येत्यस्याङ्गविशेषणत्वव्यावर्त्तनेनावयवषष्ठीत्वबोधनेनानन्त्यस्यापि गुणसम्पादनमेव फलं स्यात्। अकारे तु गुणागुणयोर्न विशेष इति॥ तदेतद्वक्ष्यति—अनन्त्यस्याप्युकारस्येति॥ नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह—दीर्घस्येति। चिसंज्ञी वर्णयोरेवेति पक्षे ङिति गुणस्याप्निचिते इत्यादौ प्रसङ्गो बोध्यः॥

(भाष्यम्)

**नैष[2] दोषः।**

(१०९ सिद्धान्त्येकदेशिवार्तिकम्॥ ६॥)

## ॥ * ॥ पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम्॥ * ॥

(भाष्यम्)

**पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति—पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति॥**

**(प्रदीपः) पुगन्तेति।** मेत्तेत्यादौ गुणे सिद्धे[3] पुनःश्रुतिर्नियमार्थेति गुरूपधस्येहितेत्यादौ न भविष्यति, नापि हे अग्निचिदित्यादावुभयनियमाश्रयणादिति भावः॥ ननु च मेत्तेति दकारस्य हेपयतीति पकारस्य च यथा स्यादिति विध्यर्थमेतत्स्यात्॥ नैतदस्ति, पुकि अन्तः पुगन्तो, लघ्वी उपधा लघूपधा ततः समाहारद्वन्द्वनिर्देश इत्यन्त्यस्य गुणेन न भाव्यम्॥

**(उद्द्योतः) पुनःश्रुतिः** पुनर्गुणविधानम्॥ **ननु चेति।** बहुव्रीहिसमासः। सामर्थ्यादिक्परिभाषानुपस्थितिश्चेति भावः॥ भिदो दकारोच्चारणं तु भिन्नो भित्तमित्यादौ चरितार्थम्, क्नोः क्त्विनानिग्लक्षणत्वेपि निषेधप्रवृत्तेः। पुग्विधानमपि क्ष्मापयतीत्यादौ यलोपार्थम्। ओकाररूपगुणार्थं च चरितार्थमित्याशयः॥ **पुकीति।** लाघवात्तत्पुरुषे निर्णीते निषादस्थपतिन्यायेन नियमार्थत्वं न दोषावहमित्यर्थः॥ ननु पुगन्तग्रहणं दापयत्यादौ अनन्त्यस्यानिकोपि गुणार्थं स्यादिति कथं नियमार्थत्वमिति चेन्न। गुणे उपधावृद्ध्या विशेषाभावात्॥

(नियमदूषणभाष्यम्)

**प्रकृत[5]स्यैव नियमः स्यात्॥**

**किं च प्रकृतम्?॥**

**"सार्वधातुकार्धधातुकयोः" इति॥ तेन भवेदिह नियमान्न स्याद् 'ईहिता ईहितुम् ईहितव्यम्' इति। ह्रस्वाद्योर्गुणस्त्वनियतः सोऽनन्त्यस्यापि प्राप्नोति॥**

**(प्रदीपः) प्रकृतस्येति।** एकेन वाक्येन नियमद्वयस्यालाभात्प्रकृतस्यैव गुणस्य नियमः स्यात् पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोरिति, न तु सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति॥

**(उद्द्योतः) प्रकृतस्यैवेति।** अनन्तरस्यैवेत्यर्थः॥

(नियमान्तरदूषणभाष्यम्)

**अथा[6]प्येवं नियमः स्यात्—पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवेति॥ एवमपि सार्वधातुकार्धधातुकयोर्गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति—ईहिता ईहितुम् ईहितव्यमिति।**

**(प्रदीपः) अथापीति। अनन्तरस्य विधिर्वे**ति परिभाषा यदि नाश्रीयते इत्यर्थः॥

**(उद्द्योतः)** नन्वनन्तरस्येतिन्यायविरुद्धोऽयं नियम इत्यत आह—अनन्तरस्येति। लक्ष्यानुसारश्चानाश्रयणे बीजं बोध्यम्॥

(उभयविधनियमदूषणभाष्यम्)

**अथाप्युभयतो नियमः स्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोः। सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति॥ एवमप्ययं जुसि गुणोऽनियतः सोनन्त्यस्यापि प्राप्नोति—'अनेनिजुः पर्यवेविषुः' इति॥**

**(प्रदीपः) अथापीति।** अभ्युपेत्यवादेनोच्यते आवृत्त्यादिन्यायाश्रयणेन वा। एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते॥ **अनेनिजुरिति।** अत्र लघूपधं चाङ्गं सार्वधातुकं चास्तीति जुसि चेति गुणः प्राप्नोति। हेपिचैव्य हेवुद्दे हेवुद्दय इत्यादौ चालघूपधत्वादनन्त्यस्य गुणोऽपरिहृतः॥

**(उद्द्योतः) अभ्युपेत्यवादः** क्लेशेनाङ्गीकार इत्याद्युः॥ **पिचव्येति।** उंगवादित्वाद्यत्। उवर्णान्तस्याङ्गस्येको गुण इति व्याख्यानमभिप्रेत्यात्र दोषोपन्यासः॥ परंतु सौश्रुत इत्यत्रापि

---

१ ननु भाष्ये 'घेर्ङिति' इत्युपन्यासोऽयुक्तः अग्निचिदादेरघ्यन्तत्वादधिस्याचेत्यत आह—चिसंज्ञेति॥ छाया॥

२ एवं तदपवादपक्षेपि दत्तान्दोषान्परिहरति सिद्धान्त्येकदेशी—नैषदोष इति॥ जातावेकवचनम्॥ यत इति शेषः॥ छाया॥

३ 'सिद्धे पुनरिति॥ सार्वधातुकार्ध-' इति सूत्रेण गुणे सिद्धे, 'पुगन्त-' इत्यनेन पुनर्गुणविधानमित्यर्थः॥ छाया॥

४ उक्तनियमेन कचिद्गुणोद्धारो न सर्वत्रेति सयुक्तिकं दर्शयति—प्रकृतस्यैवेति॥ छाया॥

५ 'प्रकृतस्यैव' इत्येवकारव्यवच्छेद्यमाह—नत्विति॥ अनन्तरस्य 'विधिर्वा' इति न्यायादिति भावः॥ छाया॥

६ विपरीतनियमाङ्गीकारे ह्रस्वाद्योर्गुणविषये दूषणपरिहारेपि पूर्वोक्तपरिहारे एव दूषणपात इति वदति—अथाप्येवमिति॥ छाया॥

७ भाष्यमुपलक्षणमित्याह—हेपिचव्येति॥ छाया॥

८ उगवादीति पिचुशब्दादित्यादिः॥ हितार्थ इति भावः॥ छाया॥

९ एवं संयोज्य दूषयति—परंत्विति॥ छाया॥

प्राप्नोतीति भाष्याननुगुणा सा व्याख्येति चिन्त्योऽयं कैयट इत्याहुः ॥ केचित्तु[१] कैयटपुस्तके पिचव्य इति न दृश्यत एव ॥

( इति तदपवादपक्षदूषणप्रकरणम् )

( अथासंबद्धपरिभाषापक्षनिराकरणाधिकरणम् )

( भाष्यम् )

**एवं[२] तर्हि—नायं तच्छेषः, नापि तदपवादः । अन्यदेवेदं[३] परिभाषान्तरमसंबद्धमनया परिभाषया ॥**

**( प्रदीपः ) एवं तर्हीति** । परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसन्निधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वस्वकार्यप्रतिपादनम् । तत्र यदि कथंचिदेकविषये सन्निपातो भवति, नैतावता परस्परापेक्षा भवतीत्यर्थः ॥ **अन्यदेवेति** । अन्तरशब्दो विशेषवाचीत्यन्यान्तरशब्दयोरविरुद्धः प्रयोगोऽपर्यायत्वात्॥

**(उद्योतः)** तच्छेप इति शब्दोऽसंभवदुक्तिकत्वग्रस्तोऽपीत्याह—**परस्परेति** । विशेषणविशेष्यभावमात्रेण शेपशेषिव्यवहारो न क्वापि दृष्टचर इति भावः ॥ अत एवाग्रे एतत्पक्षोक्तदूपणोद्धारेऽपि **नायं तच्छेप** इत्युक्तिः सङ्गच्छते ॥ **सन्निपात इति** । जायमानोपि संनिपातः सावकाशत्वेन विप्रतिषेधोपयोग्येव न तच्छेपत्वोपयोगी । अत एव नापवादत्वमपि । उक्तदोपाच्चेति भावः ॥ **असंबद्धमनयेति** भाष्यस्य शेपशेपिभावानापन्नमुत्सर्गापवादभावानापन्नं चेत्यर्थः ॥

( भाष्यम् )

**परिभाषान्तरमिति[४] च मत्वा क्रोष्ट्रीयाः पठन्ति—**

**॥ * ॥ नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन ॥ * ॥**

**इति ॥ यदि[५] चायं तच्छेषः स्यात्तेनैव तस्यायुक्तो विप्रतिषेधः । अथापि तदपवादः[६], उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः ॥ तत्र[७] नियमस्यावकाशः—"राज्ञः क च" राजकीयम् । "इको गुणवृद्धी" इत्यस्यावकाशः—'चयनं चायको लवनं लावकः' इति । इहोभयं प्राप्नोति—'मेद्यति मार्ष्टि' इति । "इको गुणवृद्धी" इत्येतद्भवति विप्रतिषेधेन[८] ॥**

**( प्रदीपः ) चयनमिति** । अलोन्त्यपरिभाषायाः प्रयोजनाभावादत्रानुपस्थानमित्याशयः ॥ **चायक इति** । कथमिक्परिभाषात्रो[९]पतिष्ठते यावताऽच इति स्थानी निर्दिष्टः, ॥ अत्राहुः, अच इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाभावाद्वृद्धिग्रहणेन लिङ्गेनेक्[११]परिभाषात्राप्युपतिष्ठत एव ॥ **मेद्यतीति** । इक इति वचनादिकारस्य प्राप्नोत्यलोन्त्यस्येति वचनादृकारस्य ॥

**( उद्योतः ) नियमादिति** । अलोन्त्यपरिभाषायाः पूर्वाचार्यसंज्ञा नियम इति ॥ **तेनैव तस्यायुक्त इति** । स्वाङ्गेन स्वस्येत्यर्थः । शेपशेपिणोरभेदं मत्वा तेनैवेत्याद्युक्तम्[१२] ॥ नन्वङ्गस्येति स्थानपष्ठीदर्शनात्सार्वधातुकेत्यादावप्यलोन्त्यपरिभाषाप्रवृत्त्या कथमिक्परिभाषायाश्रयनमित्यवकाशोऽत आह—**अलोन्त्येति** । अङ्गेनेको विशेषणेन पुगन्ते[१३]त्यादिनियमेन च तत्प्रयोजनसिद्धेरिति भावः ॥ **अत्राहुरिति** । अचा[१४] विशेपिताङ्गेनेको विशेपणसंभवात्त्वा[१५]पयति । गांवावित्यादि त्वेष[१६] न जानातीति भावः ॥

( विप्रतिषेधबाधकभाष्यम् )

**नैष[१७] युक्तो विप्रतिषेधः । 'विप्रतिषेधे[१८] परम्'' इत्युच्यते । पूर्वश्चायं योगः, परो नियमः ॥**

**( प्रदीपः ) नैष युक्त इति** । इष्टसिद्धये इत्यर्थः । यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यम्, न तु कार्यकालतायाम् ॥

---

१ आहुरित्यरुचिबीजं प्रकटयति—क्वचित्त्विति ॥ छाया ॥

२ तदेवं [ तच्छेपतदपवाद ] पक्षद्वयं संदूष्य "स्वतन्त्रोयं परिभाषाविशेपः" इति क्रोष्ट्रीयसंमतं पक्षं दूपयितुमाह—एवं तर्हीति ॥ अयं योगः परिभापाविशेप इत्यर्थः ॥ छाया ॥

३ किं तर्हि ?' इत्यत आह—अन्यदेवेति । अन्यदेवेत्यस्यार्थमाह—असंबद्धमनया परिभापयेति ॥ प्रागुक्तया प्रक्रियया तच्छेपत्वतदपवापत्वरूपयानाक्रान्त मत्यर्थः ॥ एवकारः स्फुटार्थः ॥ छाया ॥

४ नन्वयुक्तमेतत् एवं सति क्व संनिपातः क्वान्यतरत्यागः स च कस्येत्यत्र नियामकाभावेन सर्वेष्टासिद्धेः । अतः क्रोष्ट्रीयवार्तिकमत्र योजयति—परिभापान्तरमिति ॥ च एवार्थे । 'परिभापान्तरम्' इत्येव हृदि निधायत्येर्थः ॥ 'विप्रतिपेधवार्तिकम्' इति शेपः ॥ तदाह—नियमादिति ॥ विधेयगतद्वित्वस्य सूत्रे आरोपेण भवत इत्युक्तम् ॥ अतएव—'इको गुणवृद्धी' इत्येतद्भवति पिप्रतिपेधेन'—इत्यग्रे वक्ष्यति ॥ छाया ॥

५ ननु कथमिदं वार्तिकमुक्ताशयकमेव पूर्वपक्षयोरपि प्रवृत्तिसंभवादत आह—यदिचायमिति ॥ स्यादिति । तर्हीति शेपः ॥ छाया ॥

६ वाद इति । स्यात्तर्हीति शेपः ॥ एकत्र युगपदप्राप्ते मिथो विपये' लब्धानवकाशत्वेनातुल्यबलत्वमिति भावः ॥ छाया ॥

७ [ एवं विप्रतिपेधानुपपत्त्या तच्छेपतदपवादयोरयुक्ततां ध्वनयित्वा ] विप्रतिपेधं निरूपयति—तत्रेति ॥ वार्तिकोक्तयोर्मध्ये ॥ छाया ॥

८ विप्रतीति । पूर्धविप्रतीत्याशयः ॥ छाया ॥

९ अत्रेति । एतद्विपयके सार्वधातुकेत्यादावित्यर्थः ॥ छाया ॥

१० अत्रेगिति । एतद्विपयके 'अचोञ्णिति' इत्यत्रेत्यर्थः ॥ छाया ॥

११ नेगिति । अनिगङ्गनिरासायेति भावः ॥ छाया ॥

१२ युक्तमिति । मिथोनिरपेक्षयोस्तुल्यबलविरोधलक्षणो विप्रतिपेधो मिथ एकवाक्यतापन्नयोर्द्वयोर्न युक्त इति भावः ॥ छाया ॥

१३ नन्वेवमनन्त्येऽतिप्रसङ्गापत्तिरत आह—पुगन्तेति । तदिति । अलोन्त्यपरिभाषेत्यर्थः ॥

१४ अचेति ॥ हलन्तनिरासायेति भावः ॥ छाया ॥

१५ यत्तु 'चायक' इत्याद्यपि गुणावकाश एव गौरित्यादौ सावकाशां वृद्धिंबाधित्वा परत्वात्तत्र स एवेति गुणस्यैव प्रवृत्तेः । अच इत्यत्र तत्सामर्थ्येनैतदनुपस्थानात् । गुणोत्तरमुपधावृद्धयेष्टसिद्धेश्च इति रत्नकृत् । तदयुक्तम्—इति ध्वनयितुमाह—प्रापेति ॥ छाया ॥

१६ एप इति । असिद्धान्तित्वादिति भावः ॥ छाया ॥

१७ सिद्धान्ती विप्रतिपेधं दूपयति—नैप इति ॥ छाया ॥

१८ एकदेशी हेतुमाह—विप्रतीति ॥ छाया ॥

(उद्द्योतः) इष्टेति । इष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमिति भावः ॥ ननु कार्येति । द्वयोरप्येकदेशस्थत्वेन परत्वासंभवादिति भावः ॥ वस्तुतः कार्यकालपक्षेपि पाणिन्युच्चारणरूपपाठकृतं परत्वमस्त्येव । अन्यथैकत्र प्रयोगरूपदेशे सर्वेषां मेलनेन परत्वस्योच्छेद एव स्यात् । प्रयोगसाधनफलकान्येव शास्त्राणि । न चैवं कार्यकालपक्षमादाय त्रिपाद्यामेषां प्रवृत्तिर्यथोद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यादिति भाष्याद्युक्तं विरुध्येतेति वाच्यम् । परिभाषायाः सिद्धत्वेन तत्पक्षेऽसिद्धेनापि कार्येण स्वार्थं तदाकर्षणसंभवादित्यष्टमे उपपादयिष्यमाणत्वाद् । ध्वनितं चेदं तस्मिन्निति निर्दिष्ट इत्यत्र भाष्यकैयटयोरिति च्चिन्त्यमेतत् ॥

( विप्रतिषेधसाधकभाष्यम् )

**इष्टवाची[1] परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।**

( विप्रतिषेधबाधकभाष्यम् )

**एवमप्ययुक्तो[2] विप्रतिषेधः । द्विकार्ययोगो[3] हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः ॥**

( प्रदीपः ) द्विकार्ययोग इति । द्वाभ्यां कार्याभ्यां योगो यस्य स्थानिनः स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

(उद्द्योतः) ननु द्विकार्ययोग इत्यस्य द्वाभ्यां कार्याभ्यामन्यस्य योग इत्यर्थः, उत द्वयोः परस्परेण योग इत्यर्थः । उभयथापि त्रिपदतत्पुरुषो दुर्लभः[4] । कर्मधारयपूर्वपदकोपि[5] न, दिक्सङ्ख्ये इति नियमेन तस्य दुर्लभत्वादत आह—द्वाभ्यामित्यादि[6] ॥ अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह—विप्रतिषेधेति ॥

( विप्रतिषेधसाधकभाष्यम् )

**नावश्यं[7] द्विकार्ययोग एव विप्रतिषेधः ॥**

**किंतर्हि ? ॥**

**असंभवोऽपि । स चास्त्यत्रासंभवः ॥**

**कोऽसावसंभवः ? ॥**

**इह[8] तावद्—'वृक्षेभ्यः प्लक्षेभ्यः' इति—एकः स्थानी, द्वावादेशौ, न चास्ति संभवः यदेकस्य स्थानिनो द्वावादेशौ स्याताम् । इहेदानीं—'मेद्यति मेद्यतः, मेद्यन्ति' इति द्वौ स्थानिनौ, एक आदेशः, न चास्ति संभवः—द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसंभवः । सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः ॥**

(प्रदीपः) नावश्यमिति । द्विकार्ययोगत्वाभावे केवलोप्यसंभवो विप्रतिषेध इत्यर्थः ॥ इह तावदिति । दीर्घत्वं यञ्यनन्तरे विधीयते, एत्त्वं च झल्यनन्तरे । न च संभवोस्ति यद् द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात् ॥ इहेदानीमिति । मिदेत्येका षष्ठी सा यद्यवयवसंबन्धे तदेकारस्य गुणेन भाव्यम् । अथ स्थानषष्ठी तदालोन्त्यस्येति वचनादिकारस्य । न चास्ति संभवो युगपदुभयोर्गुणस्येत्यर्थः ॥

(उद्द्योतः) द्विकार्ययोगेप्यसंभवसत्त्वादाह—केवलोपीति । ननु आ ए इति ए आ इति वादेशसंभवोस्त्येवेत्यत आह—न चेति ॥ द्वयोरिति । कार्ययोरित्यर्थः । अनन्तरे यञि दीर्घः साधुरनन्तरे झलि एत्त्वं साधुरित्यर्थ इति भावः ॥ आद्गुण इत्यादौ द्वयोः स्थानिनोरेकादेशस्य संभवादाह—मिदेरिति ॥ नचास्ति संभवो युगपदिति । युगपद्वाक्यार्थद्वयबोधाभावादिति भावः ॥

( विप्रतिषेधबाधकभाष्यम् )

**एवमप्ययुक्तो[9] विप्रतिषेधः । द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति । अनवकाशश्चायं योगः ॥**

( विप्रतिषेधसाधकभाष्यम् )

**ननु[10] च—इदानीमेवास्यावकाशः प्रक्लृप्तः—चयनं चायको लवनं लावक इति ॥**

( विप्रतिषेधबाधकभाष्यम् )

**अत्रापि[11] नियमः प्राप्नोति । नाप्राप्ते नियमेऽयं योग आरभ्यते । यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते, ततस्तस्यापवादोऽयं योगो भवति । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ॥ अथापि कथंचिद्[12] "इको गुणवृद्धी" इत्यस्यावकाशः स्यात् । एवमपि यथेह विप्रतिषेधादिको गुणो भवति मेद्यति मेद्यतः मेद्यन्ति, इति, एवमिहापि स्यात्—अनेनिज्उः पर्यवेविषुरिति ॥**

---

१ विप्रतिषेधवादी आह—इष्टवाचीति ॥ अत्रचेदं भाष्यमेव मानम् ॥ छाया ॥

२ सिद्धान्ती स्वोक्तं द्रढयति—एवमप्येति ॥ छाया ॥

३ एकदेशी हेतुमाह—द्विकार्येति ॥ नचात्रेति । नहि मेद्यतीत्यादाविकारदकारान्यतरादिरूप इत्यर्थः ॥ छाया ॥

४ दुर्लभ इति । विधायकाभावादिति भावः ॥ छाया ॥

५ कर्मेति । विशेषणमिति समासपूर्वपदकषष्ठीतत्पुरुष इत्यर्थः ॥ तस्येति । कर्मधारयस्यैवेत्यर्थः । न च तद्धितार्थोत्तरेति समाहारे द्विगुः, ङीप्प्रसङ्गात् । पात्रादित्वकल्पने मानाभावात् ॥ छाया ॥

६ द्वाभ्यामित्यादीति । तथा च त्रिपदव्यधिकरणबहुव्रीहिरगत्याश्रीयत इति भावः ॥ छाया ॥

७ विप्रतिषेधवादी आह—नावश्यमिति ॥ न नियत इत्यर्थः ॥ संभवोपीति । केवलेत्यादिः ॥ छाया ॥

८ उक्तमेव दृष्टान्तपूर्वमसंभवद्वयं प्रतिपादयन् विशदयति—इह तावदिति ॥ छाया ॥

९ सिद्धान्ती आह—एवमप्ययुक्त इति ॥ उक्तासंभवमात्रसत्त्वेपीत्यर्थः । तत्र हेतुमाह—द्वयोर्हीति । समवेति । युगपदेकत्र प्राप्तयोरित्यर्थः ॥ छाया ॥

१० विप्रतिषेधवादी आह —नन्वेति ॥

११ सिद्धान्ती दूषयति—अत्रापीति ॥ अफलत्वेपि पर्जन्यन्यायेति भावः ॥ छाया ॥

१२ कथंचिदिति । अफलत्वान्नियमानुपस्थित्येत्यर्थः ॥ छाया ॥

(प्रदीपः) **एवमपीति** । यदीदं नारभ्येत गुणवृद्धी कस्य स्याताम्, **अलोन्त्यस्येति** चेत्, **येन नाप्राप्तिन्यायेन** तद्ध्यपवादत्वाद्विप्रतिषेधानुपपत्तिरित्यर्थः । एवं च क्रोष्ट्रीयमतम्- संवद्धपरिभाषान्तरपक्षश्च नोपपद्यते ॥

(उद्योतः) ननु उक्तरीत्या प्रयोजनाभावादलोन्त्यस्याप्रवृत्तौ अत्रापि नियमः प्राप्नोतीत्यसङ्गतमित्यत आह—**यदीदमिति** । एतदभावे संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सर्वत्राङ्गस्येति स्थानषष्ठ्येव । कृते त्वस्मिन्नवयवषष्ठी सेति भावः ॥ **अथापि कथंचिदिति** भाष्यस्य उक्त एवाशयः ॥ **क्रोष्ट्रीयमतं** विप्रतिषेधः । **असंवद्धपरिभाषापक्षश्च** तदुपजीव्यः । तत्र[1] विप्रतिषेधरहितोऽन्त्यस्त्वयुक्त एव । क संनिपातः कान्यतरत्यागः स च कस्येत्यत्र विनिगमकाभावेन सर्वेष्टासिद्धेः । तस्माद् द्वयमप्येकपक्षभूतमेव बोध्यम् ॥

(इत्यसंवद्धपरिभाषापक्षनिरासाधिकरणम् ॥)

---

(अथ सिद्धान्तभूतपदोपस्थितिपक्षनिरूपणम्)

(सिद्धान्तिभाष्यम्)

**एवं[2] तर्हि—वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयाद् 'इकः' इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥**

**किं कृतं भवति ? ॥**

**द्वितीया[3] षष्ठी प्रादुर्भाव्यते ॥ तत्र कामचारः—गृह्यमाणेन वेकं विशेषयितुम्, इका वा गृह्यमाणम् । यावता[4] कामचारः, इह तावन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः—एतेषां य इगिति । इहेदानीं जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः—एतेषां[5] गुणो भवति 'इकः' इगन्तानामिति ॥**

(प्रदीपः) **एवं तर्हीति** । प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात्परस्परेण संवन्धाभावात्प्रदेशवाक्यपर्यालोचनया वाक्यार्थस्यावस्थानमित्यर्थः ॥

(उद्योतः) **प्रदेशार्थत्वादिति** । **परस्परेण संवन्धाभावादित्यन्तेन** तच्छेषत्वासंभव उक्तः । पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्या लिङ्गमित्येषान्तरङ्गा । तत्त्वेन[6] ग्रहश्च प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल एव । तदुक्तं भाष्ये—**गुणो भवतीति । यत्रेत्यादि** ॥ नियमस्तु स्थानषष्ठीलिङ्गक इति अवान्तरवाक्यार्थवोधोत्तरकालिकत्वेन वहिरङ्गः ॥ एवं च मिदादावुपस्थितेक्परिभाषायाः सामानाधिकरण्यासंभवाद्वैयधिकरण्यान्वये वृत्ते निमित्ताभावादेवालोन्त्यस्येत्यस्यानुपस्थितिः । **सार्वधातुकार्धधातुकयोरित्यादौ** सामानाधिकरण्यान्वयेऽलोन्त्यस्येत्यनेनान्त्यस्यादेशव्यवस्था ॥ एतेनैकस्या अप्रवृत्तौ अपरापि न प्रवर्तेतेत्यपास्तम् ॥ **पर्यालोचनयेति** । प्रदेशे सति संभवे परिभाषाद्वयैक[7]वाक्यतया वाक्यार्थः । अन्यथा त्विक्परिभाषागर्भ एव, अस्या अन्तरङ्गत्वादित्यर्थः ॥ भाष्ये—**वृद्धिर्भवतीत्यादि** । इति[8]शब्दो यत्रेत्यर्थः ॥ **इक इत्येतदिति** । सूत्रे इक इति षष्ठ्यन्तानुकरणमित्यर्थः ॥ अनुवृत्तस्य स्वरूपपरत्वेन गुणशब्दो भवतीत्याद्यर्थः स्यादतः पुनरत्र गुणवृद्धिग्रहणम् । अनुवृत्तस्यार्थपरत्वं तु न । शब्दाधिकारापत्तेः । उभाभ्यां च गुणशब्दवान् गुणो यत्रेत्यादिरर्थस्तदुक्त**मिति यत्रेत्यादि** । गुणपदं यत्र वर्तते इत्याद्यर्थस्तु न, **अतोगुण** इत्यादावप्यापत्तेः । भवतिक्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणादत्र विधीयत इत्यस्य तदर्थकस्य भवतीत्यस्य वाध्याहार इति वोध्यम् । एतन्मूलकमेवानुवादे **परिभाषा नोपतिष्ठते** इति । अत एव तदेतद्विषयमेवाचश्चेत्येतद्विषयमेव च । अचो[9]ञ्णितीत्यादौ तु वाक्यार्थबोधकाले श्रौतात्[10]पदेनैवाकाङ्क्षाशान्तौ लिङ्गोपस्थितस्य दुर्वलतयानन्वय इति दिक् ॥

---

१ तत्रेति । तयोर्द्वयोर्मध्य इत्यर्थः ॥ छाया ॥

२ अथ सिद्धान्ती निर्दुष्टं पक्षमाह—एवं तर्हीति ॥ छाया ॥

३ द्वितीया षष्ठीति । द्वितीयं षष्ठ्यन्तं पदं प्रादुर्भाव्यत इत्यर्थः ॥ छाया ॥

४ यावतेति । यतः कामचारः । अत इत्यग्रे शेषः ॥ छाया ॥

५ एतेषामिति । ह्रस्वाद्यभिप्रायेण वहुवचनम् । सूत्रभेदेनानुवृत्ताङ्गस्येत्यस्यापि भेदेन तदभिप्रायेण वा ॥ व्यधिकरणसंवन्धभ्रमनिरासाय प्रागुक्तं स्पष्टयति—इगन्तानामिति ॥ अतएव पूर्वं षष्ठ्यन्तस्येका संवन्धः प्रदर्शितः' अत्र गुणेन ॥ छाया ॥

६ तत्त्वेन विधेयसमर्पकत्वेन । चो यत इत्यर्थे । असति वाधक इति शेषः । तदुक्तमिति । तदभिप्रेत्योक्तमित्यर्थः । अन्यथा 'भवतीति' यत्र 'ब्रूयात्' इत्यस्यासंगतिः स्पष्टैव । ममतु 'भवति' इत्यनेन विधेयसमर्पकत्वम् 'ब्रूयात्' इत्यनेन पदज्ञानकालिकत्वं वोधितमिति न तदसंगतिः ॥ छाया ॥

७ द्वयैकेति । परिभाषाद्वयस्य विधिवाक्येन सह वाक्यैकवाक्यतया पदैकवाक्यतया वेत्यर्थः ॥ छाया ॥

८ इतिशब्देन 'त्यदादीनाम' इत्यादौ 'वृद्धिर्यस्या' इत्यादौ च व्यावृत्तिः सूचितेत्याह—इतिशब्दो यत्रेत्यर्थ इति ॥ विधेयसमर्पकगुणादिशब्दो यत्रेत्यर्थवोधार्थं वाक्यस्येतिना परामर्श इत्यर्थः ॥ छाया ॥

९ नन्वेवम् 'अचोञ्णिति' इत्यादावप्युपस्थितिः स्यात्, गुणादिपदश्रवणात् । न च निर्दिष्टस्थानिकत्वान्न तथा, अच इत्यादेः स्थानित्वनिर्णयस्य वाक्यार्थवोधोत्तरकालिकत्वेन पूर्वमभावादत आह—अच इति ॥ आदिना 'अत उपधायाः' इत्यादिपरिग्रहः ॥ छाया ॥

१० 'इमामगृभ्णन्रशनामृतस्य' इति मन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेपि 'इत्यश्वाभिधानीमादत्ते' इति तदीयब्राह्मणे 'आदत्ते' इति लेट् विधायकः । इति—मंत्रस्य करणत्वबोधकः । अश्वाभिधानीमिति द्वितीयाश्रुतिर्निरपेक्षव्याख्यासाध्यत्ववोधिकेति तस्याः प्रावल्यादश्वरशनादाने तस्य विनियोगो नोक्तलिङ्गेन तन्मात्रादान इति पूर्वमीमांसायां "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्वल्यमर्थविप्रकर्षात्" (३।३।१४) इति सूत्रे स्पष्टमित्यभिप्रेत्याह—श्रौतेति ॥ शान्ताविति । तयाऽनियमप्रसक्त्यभाव इति भावः ॥ लिङ्गोपेति । इक्पदोपस्थितिद्वारा तदर्थप्रकाशकगुणादिपदरूपलिङ्गोपस्थितस्येक इत्यस्येत्यर्थः ॥ नन्वय इति ॥ अर्थद्वारेति शेषः । जातेष्टान्वयवोधेन नैराकाङ्क्षात् । तथाच फलाभावादपि न तथेति भावः ॥ छाया ॥

( तच्छेषपक्षोक्तदूषणनिराकरणभाष्यम् )

[1]अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते । इह तावन्मिदेरित्यविभक्तिको निर्देशः—मिद् एः मिदे-रिति ॥ [2]अथवा षष्ठीसमासो भविष्यति—मिद इः मिदिः मिदेरिति ॥

पुगन्तलघूपधस्येति । नैवं विज्ञायते—पुगन्ताङ्गस्य लघूपधस्य चेति ॥

कथं तर्हि? ॥

पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधम्, पुगन्तलघूपधस्येति । अवश्यं चैतदेवं विज्ञेयम्, अङ्गविशेषणे सतीह प्रसज्येत भिनत्ति छिनत्तीति ॥

[3]ऋच्छेरपि [4]प्रश्लिष्टनिर्देशोऽयम्—ऋच्छति ऋ ऋ ऋताम्="ऋच्छत्यृताम्" इति ॥

दृशेरपि योगविभागः करिष्यते,—"उरङि गुणः" उः अङि गुणो भवति । ततो "दृशेः"-दृशेश्चाङि गुणो भवति । उरित्येव ॥

[6]क्षिप्रक्षुद्रयोरपि "यणादिपरं गुणः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्—इको यथा स्यादनिको मा भूदिति ॥

( प्रदीपः ) अथवेति । तच्छेषपक्षो[7]क्तदोषपरिहारः । क्षिप्रक्षुद्रयोरपीति । अत्र च योगविभागः क्रियते स्थूलादीनां यणादि परं लुप्यते, ततः-पूर्वस्य च गुण इति । अत्र च [8]स्वरितत्वात् क्षिप्रक्षुद्रशब्दावेवानुवर्तेते, स्थूलादयो निवृत्ताः तेषां तु यणादिलोपे सत्योर्गुण इति गुणो भवतीति । असिद्धवदत्राभादित्यसिद्धत्वमनित्यत्वान्न भवति । तत्र क्षि[9]प्रक्षुद्रयोर्यण आदिः पकारो दकारश्च तस्माद्यणादेः परं लुप्यते, तस्मादेव च यणादेः पूर्वस्य गुण इति सिद्धम्—क्षेपिष्ठः क्षोदिष्ठ इति ॥ यणादिपरमिति पञ्चमीसमासः ॥ [11]यदि तर्हि पुगन्तलघूपधस्येति स्थानी निर्दिश्यते तच्छेषपक्षाश्रयणाच्चात्रेक्परिभाषा नोपतिष्ठते तदा तस्य गुणस्यानिग्लक्षणत्वाद् भिन्नं छिन्नमित्यादौ क्ङिति चेति गुणनिषेधो न प्राप्नोति । यथा लैगवायन इति ॥ नैष दोषः, क्नुसनोः कित्त्वविधानाज् ज्ञापकादनिग्लक्षणत्वेऽपि लघूपधगुणस्य प्रतिषेधो भविष्यति ॥

( उद्द्योतः ) ( पुकि अन्त इति ) । सुपूसुपेति समासः । भिनत्तीत्यत्र गुणापादनं क्ङितीत्यस्य निमित्तसप्तमीत्वाद् । इकः सार्वधातुकार्धधातुकयोरिति विशेषणमिति तु न युक्तम् । तस्याङ्गांशे उत्थिताकाङ्क्षत्वात् ॥ भाष्ये य[12]णादिपरं गुण इति । यणादिपरं लुप्यतेऽवशिष्टस्य गुण इत्यर्थेन क्षिप्रादेः सर्वादेशो गुणः सिद्धः । स्थूलादौ तु ओर्गुण इत्येव सिद्धमिति भावः ॥ ननु पूर्वस्येत्युक्तावपि यणपेक्षादेः परमित्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ स्थूलादिषु थकारादेर्गुणः स्यात् । यणादिर्यस्य तद्रूपं परं लुप्यते ततः पूर्वस्य च गुण इत्यर्थे क्षिप्रक्षुद्रयोरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह—अत्रचेति ॥ अनित्यत्वादिति । आसन्नित्यत्र [13]लोपनिवृत्त्यर्थाच् श्नसोरल्लोप इति तपरकरणादित्यर्थः ।

---

१ तच्छेपपक्षे वार्तिककृदुक्तदोषाः सर्वे मृजिदोषं विनाऽन्यथा सूद्धरा इति पक्षे न सर्वत्र दोषः किंतु मृजावेवेति यदि चायं तच्छेपपक्षसमर्पको ग्रन्थः स्यात्तदादौ तन्नामोल्लेखः स्यादुत तथोपसंहारश्च स्यात् । यतस्तस्य चर्चाप्यत्र न, अतस्तत्र न, अतस्तन्नातात्पर्यम् । किंच—प्रागुक्तरीत्या तदसंभव उक्त एव । अतएवासंबद्धानामेकवाक्यतापि दुर्लभा । किंच मिदादिषूक्तरीत्या बाधे जुसीत्यादावपि तदापत्तिः, निरवकाशत्वे 'विप्र—' इति सूत्राप्रवृत्तेः । अन्यथा मिदादावतिप्रसङ्गाच्च । वार्तिकमयुक्तमेवेतिसूचयितुं वक्ष्यमाणसिद्धान्तं प्रतिपादयितुं पदोपस्थितिपक्षमेव गूढाशयेन समर्थयितुं गुरुभूतत्वेनैकदेश्युक्तपक्षान्तरमाह—अथवेति । सर्वत्रैवात्रेति । बहुष्वित्यर्थः । एवो व्युत्क्रमे । निर्दिश्यत एवेत्यर्थः ॥ तथाच 'इकः' इति तदर्थं तत्र न वक्तव्यमिति भावः ॥ छाया ॥

२ लाघवादाह—अथवेति ॥ छाया ॥

३ 'ऋच्छेरपीति' । स्थानी निर्दिष्टः । यतः' इति शेषः ॥ एवमेव 'दृशेरपी'त्यत्र बोध्यः ॥ छाया ॥

४ द्व्योर्ऋतोर्दीर्घस्य चेति त्रयाणां प्रश्लिष्टनिर्देशः । तद्यथा—आच ऋतश्च ॠतः । ऋच्छतेरा ऋच्छत्या स च ॠतश्च तेषामिति षष्ठीतत्पुरुषद्वन्द्वोभयगर्भो द्वन्द्वः । ऋच्छत्या च आच ऋतश्चेति त्रिपदद्वन्द्वो वा ॥ वस्तुतस्तु चतुर्णामिह प्रश्लेषो बोध्यः । तेनारिवान् सर्वा ॠणान्यारुपीत्यादावर्तेः क्सौ गुणः सिद्धः । पुनर्विधानसामर्थ्यात् । अन्यथा क्सोः कित्करणसामर्थ्यात्तितीर्वानित्यत्रेव गुणो निषिध्येत ॥ इति प्रकृतसूत्रे शब्दकौस्तुभे कृत्प्रक्रियायां शब्दरत्ने च स्पष्टम् ॥

५ 'ऋदृशः' इति समाहारद्वन्द्वान्ते श्रूयमाणषष्ठ्याः प्रत्येकं संबन्धसमभि-त्याह—उरङि गुण इति । ततो दृश इति च—इति च्छायाकारोक्तिस्तु 'योगविभागः करिष्यते' इति भाष्योक्त्यननुगुणैव । 'दृशेः' इत्यत्रानुवृत्तिसूचकस्य 'उरित्येव' इति भाष्यस्यासंगत्यापत्तेः । किंच द्वन्द्वनिर्दिष्टयोरपि विशेषणविशेष्यभावस्येष्टत्वे भूयाननुपप्लवः । तस्मादत्राप्यन्यत्रेव तथा न्यासकरण एव तात्पर्यम् । अतएव चैकदेशित्वमिति बोध्यम् ॥ दाधिमथाः ॥

६ क्षिप्रक्षुद्रयोरपीति । 'सिद्धम् । यतः' इति शेषः ॥ छाया ॥

७ दोषेति । मृजिभिन्नेत्यादिः ॥ छाया ॥

८ स्वरितेति । एकदेशो उभयत्रेति भावः ॥ छाया ॥

९ नन्वेवं तेषां गुणासंबन्धे - स्थवीयानित्यादेः कथं सिद्धिरत आह—तेषां त्विति ॥ छाया ॥

१० तयोरेवानुवृत्तौ पूर्वत्वेऽवधिं प्रदर्शयितुं पूर्ववाक्यार्थैकदेशमनुवदति—क्षिप्रेति ॥ परं विशिष्टं वर्णरूपं वा । चो वाक्यालंकारे ॥ छाया ॥

११ ननु तच्छेपपक्षे पुगन्तेत्यत्र स्थानिनिर्देशार्थत्वानावश्यकत्वेऽपि निषेधप्रवृत्त्यर्थं तदर्थमपि परिभाषावश्यकत्वमिति क्षिप्राद्यंशवत्पुगन्तलघूपधांशेऽपि वार्तिकमयुक्तमिति शङ्कते—यदितर्हीति ॥ छाया ॥

१२ अनुवृत्त्यर्थचकाराणां सर्वेषां प्रत्याख्यानादाह—यणादिपरं गुण इतीति ॥ अयं भावः—यणादीति पृथक् पदम् । षष्ठ्यर्थे प्रथमा । बहुव्रीहिश्च । शब्दस्वरूपं विशेष्यम् । परमिति तु युवह्रस्वशब्दयोः पूर्वेणापि तयोः सत्त्वेन तत्रानतिप्रसङ्गाय । आदेः परस्येति तु न, आदिग्रहणवैयर्थ्यापत्तेः । न च टिलोपेनैव सिद्धे तदर्थमेवेति वाच्यम् । सिद्धान्ते तस्यानावश्यकत्वात् । तथाचावशिष्टस्य गुण इत्यर्थाल्लब्धमिति ॥ छाया ॥

१३ लोपेति । भाट इत्यादि ॥ छाया ॥

तथा हि । अस् अन्तीति स्थिते परत्वादल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गेनाटि विकारान्यानुपूर्व्यै[1]क्याभावेन लक्ष्ये लक्षणस्येति न्यायाप्राप्तौ प्रा[2]प्तलोपवारणार्थं तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वे ज्ञापकम् । न चाटोप्यनापत्तिः[3] । तत्रा[4]नित्यत्वे मानाभावात् । तस्मादेवचेति । पूर्वत्वस्यावध्याकाङ्क्षायां परत्वेऽवधित्वेन क्लृप्तत्वादुप[5]स्थितत्वाच्च तस्यैवावधित्वमिति भावः । तद्ध्वनयन्व्याचष्टे—पञ्चमीसमास इति । सुप्सुपेत्यनेन अवयवभूते यणादीत्यत्र समुदिते चेत्यर्थः । न चैवं ह्रस्वशब्दे रस्वशब्दस्यापि लोपापत्तिः, स्थूलादिसाहचर्येणोपान्त्ययणादेः परस्यैव लोपादित्या[6]हुः ॥ पक्षाश्रयणाच्चेति । परिभा[7]षाणामनियमे नियमकारिणीत्वाच्चेत्यपि बोध्यम् । एवं क्ष्मापयति इत्यादौ पुगन्तेति गुणे उपधावृद्धिरिति न दोषः ॥ क्नुसनोरिति । एतक्किङ्तिचेति सूत्रे उपपादयिष्यते ॥

( वृद्धिपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अ[8]थ वृद्धिग्रहणं किमर्थम् ? ॥**

( उद्द्योतः ) भाष्ये शङ्कते[9]—अथ वृद्धिग्रहणमिति ।

( प्रत्याक्षेपभाष्यम् )

**किं[10] विशेषेण वृद्धिग्रहणं चोद्यते, न पुनर्गुणग्रहणमपि । य[11]दि किंचिद्गुणग्रहणस्य प्रयोजनमस्ति, वृद्धिग्रहणस्यापि तद्भवितुमर्हति । को वा विशेषः ?॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**अय[12]मस्ति विशेषः । गुणविधौ न क्वचित्स्थानी निर्दिश्यते, तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणं कर्तव्यम् । वृद्धिविधौ पुनः स[13]र्वत्रैव स्थानी निर्दिश्यते "अचो ञ्णिति" "अत उपधायाः" "तद्धितेष्वचामादेः" इति ॥**

( प्रदीपः ) गुणविधाविति । क्वचिन्न निर्दिश्यत इति नञो व्यवहितेन संबन्धः । क्वचिन्निर्दिश्यत एव, ओर्गुण इत्यादौ ।

(उद्द्योतः) न क्वचित्स्थानी निर्दिश्यते इत्युक्त्या—सर्वत्रैव न निर्दिश्यते—इति प्रतीयते, क्वचिदादिपदप्राग्वर्त्तिनञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रतीतेर्व्युत्पत्तिसिद्धत्वात्तच्चायुक्तमत आह—क्वचिदिति ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

**( ११० सिद्धान्तिसमाधानवार्तिकप्रथमखण्डम् ॥ ६ ॥ )**

**॥ * ॥ वृद्धिग्रहणमुत्तरार्थम् ॥ * ॥**

**वृद्धिग्रहणं क्रियते ॥ किमर्थम् ? । उत्तरार्थम् । "क्ङिति" इ[14]ति प्रतिषेधं वक्ष्यति । स वृद्धेरपि यथा स्यात् ॥**

( उद्द्योतः ) भाष्ये सिद्धान्त्याह—वृद्धिग्रहणमुत्तरार्थमिति ।

( पूर्वपक्षिभाष्यम् )

**कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः । या[15]वता "ञ्णिति" इत्युच्यते ? ॥**

(उद्द्योतः) पूर्वपक्ष्याह—कश्चेत्यादि ॥

**( ११० सिद्धान्तिसमाधानवार्तिकद्वितीयखण्डम् ॥ ७ ॥ )**

**॥ * ॥ त[16]च्च मृज्यर्थम् ॥ * ॥**

( भाष्यम् )

**मृ[17]जेर्वृद्धिरविशेषेणोच्यते । सा क्ङिति मा भूत्—मृष्टः मृष्टवानिति ॥**

---

१ विकारान्येति । आगमसत्त्वेन विकाराभावानुपूर्वीत्यर्थः ॥ छाया ॥

२ प्राप्तेति । आट इत्यादिः ॥ छाया ॥

३ नापत्तिरिति । प्राप्त्यभावापत्तिरित्यर्थः ॥ छाया ॥

४ तत्रेति । आटीत्यर्थः । ज्ञापकस्य विशेषापेक्षत्वात् । अन्यथा तस्य तद्वारणाय कृतस्यानर्थक्यापत्तिरिति भावः ॥ छाया ॥

५ उपस्थीति । तस्य विशेष्यत्वेन द्रागुपस्थितत्वादिति भावः ॥ छाया ॥

६ आहुरिति । एतत्सूचितारुचिबीजं तु साहचर्यस्यानित्यत्वेनाप्रवृत्तावत्र दोष एवेत्येतदर्थाश्रयणेन परिभाषाप्रत्याख्यानमयुक्तमेवेत्यावश्यकपरिभाषैव युक्तेति प्रागुक्तबहुव्रीह्यादिकमेव युक्तमिति भाष्यमेकदेश्युक्तिरेवेति ॥ छाया ॥

७ ननु तच्छेषपक्षाश्रयणादेतदनुपस्थितौ तथा स्थानिनिर्देश इति कथं तन्निर्देशोत्तरमेव तदनुपस्थितौ तस्य हेतुत्वमत आह—परीति ॥ छाया ॥

८ पूर्वपक्षी शङ्कते—अथेति ।

९ शङ्कत इति ॥ यद्यपीग्ग्रहणं किमर्थमित्यादिना गुणग्रहणवद्वृद्धिग्रहणस्यापि प्रयोजनमुक्तमेवेति 'वृद्धिग्रहणमुत्तरार्थम्' इत्यादिवार्तिकासंगतिः, तथापि 'अथवा—' इत्यादिना कृततच्छेषपक्षोक्तदोषोद्धारमध्ये क्रमप्राप्तमृज्यंशदोषस्यानुद्धारेण तस्य दुरुद्धरत्वसूचनभ्रमस्य निरासद्वारा 'तस्य पक्षस्य दुष्टत्वमेव' इति गूढतात्पर्यमाविष्कर्तुं तदुद्धारप्रकारस्य संभावितस्य 'स्वरूपव्याक्रियैव पराक्रिया' इति न्यायेन गुरुभूतत्वेनैकदेश्युक्तित्वं ध्वनयितुं पूर्वं गुणांशे एव प्रतिपादनेन 'तदर्थमेवेदं सूत्रं न वृद्ध्यंशे' इति भ्रममपाकर्तुं यदर्थम् 'अथवा—' इत्याद्युक्तं तत्प्रतिपादयितुं कंचिद्विशेषं गुणग्रहणतो वृद्धिग्रहणे प्रतिपादयितुं सिद्धान्तभूतनिर्दुष्टपदोपस्थितिपक्षकथनोत्तरम् 'अथवा'—इत्यादिना तत्पक्षोज्जीवनप्रकाराभासोट्टङ्कनम् 'एतद्वार्तिकोक्तसिद्धान्तस्य पूर्ववार्तिकायुक्तत्वादेश्च प्रतिपादनायैव, नतु तत्पक्षस्य निर्दुष्टत्वप्रतिपादनाय' इति ध्वनयितुं 'नायं तच्छेषः' इति प्रागुक्तिं सिद्धान्तयितुं च पुनः प्रवृत्तवार्तिकमुत्थापयितुमित्यादिः ॥ छाया ॥

१० तटस्थः पूर्वपक्षिणमाक्षिपति—किमिति ॥

११ तटस्थ एव पूर्वपक्ष्याशयाविष्करणाय तन्निराकरणेन स्वकीयाक्षेपं समर्थयते—यदीति ॥ छायाशयः ॥

१२ पूर्वपक्षी स्वाशयमाविष्करोति अयमिति ॥ छायाशयः ॥

१३ सर्वत्रेति । बहुष्वित्यर्थः । तेन सिचि वृद्धिरित्यादौ तदनिर्देशेऽपि न क्षतिः ॥ छाया ॥

१४ उत्तरार्थमित्यस्योत्तरस्य निषेधसूत्रस्य स्वविषये प्रवृत्त्यर्थं तस्येग्लक्षणतासंपादनार्थमित्याशयेन न धात्वित्यस्य तादृशलक्ष्याभावं मनसि निधायाह—क्ङितीतीति ॥

१५ इदानीमित्यस्यार्थमाह—यावतेति ॥ छाया ॥

१६ एकदेशी आह—तच्च मृज्यर्थमिति । इदं वृद्धिग्रहणमिति वार्तिकस्यैव शेषभूतखण्डमित्यन्ये ॥ भाष्यकारवचनमित्यपरे ॥ छाया ॥

१७ वृद्धिग्रहणं मृजेर्वृद्धिरिति प्राप्तवृद्धेः क्ङितीतिनिषेधार्थमिग्लक्षणत्वसंपादनार्थमित्यर्थः । तदाह—मृजेरिति ॥ छाया ॥

(उद्योतः) अविशेषेणोच्यते । सा क्ङितीति ॥ प्रत्यय-विशेषानाश्रयणमत्राविशेषः[1] ॥

( १११ सिद्धान्तिसमाधानान्तरवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ इहार्थं[2] चापि ॥ * ॥

( भाष्यम् )

**इहार्थं चापि मृज्यर्थं वृद्धिग्रहणं कर्तव्यम् । मृजेर्वृद्धिरविशेषेणोच्यते । सेको यथा स्यात्, अनिको[3] मा भूदिति ॥**

( प्रदीपः ) मृजेर्वृद्धिरिति । तत्र हि सूत्रेऽभिमतस्थान्यनुपादानादलोन्त्यपरिभाषयान्त्यस्यैव स्यादित्यर्थः ॥

(उद्योतः) उत्तरस्याविशेषेणेत्यस्य[4] स्थानिविशेषानुच्चारणेनेत्यर्थः ॥ तदाह—तत्र हि सूत्र इति ॥

( ११२ अन्यथोपपत्तिवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ मृज्यर्थमितिचेद्योगविभागात्सिद्धम्[5] ॥ * ॥

( व्याख्याभाष्यम् )

**मृज्यर्थमिति चेद्योगविभागः करिष्यते—"मृजेर्वृद्धिरचः" । ततः—"ञ्णिति" ञिति णिति च वृद्धिर्भवति 'अचः' इत्येव ॥**

( अन्यथोपपत्तिबाधकभाष्यम् )

**यद्यचो[6] वृद्धिरुच्यते, 'न्यमार्ट्' अटोऽपि वृद्धिः प्राप्नोति ॥**

( प्रदीपः ) अटोपीति । नन्वडागमात्पूर्वमेव परत्वाद्वृद्धिर्भविष्यतीति लक्षणस्य प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते ॥ एवं तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ ॥

(उद्योतः) अडागमात्पूर्वमिति । लादेशेषु कृतेष्वडिति पक्षे—इदम् ॥ अटि कृते इति । विकारान्यानुपूर्व्या भेदेन लक्ष्यभेदाचिन्त्यमिदम् । परत्वादित्यपि चिन्त्यं द्वयोर्यौगपद्यासंभवात् ॥ एवं तर्हीति । लाँवस्थायामडिति[7] पक्षे इति भावः ॥

( ११२ अन्यथोपपत्तिसाधकशेषवार्तिक(भाष्य)म् )

## ॥ * ॥ अटि[8] चोक्तम् ॥ * ॥

( भाष्यम् )

**किमुक्तम् ? ॥**

**'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवति' इति ॥**

(उद्योतः) भाष्ये अनन्त्यविकारे इति । तथापि सिध्यतीत्यभिमानः ॥ सिद्धान्ते त्वन्यार्थमिग्ग्रहणे कृते तेनैवाटो व्यावृत्तिसिद्धौ सा नैतदर्थेति ष्यङ इति सूत्रे वक्ष्यत इति न विरोधः ॥

(११३ सिद्धान्तवार्तिकम् ॥ ११ ॥)

## ॥ * ॥ वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् [तस्मादिग्लक्षणा वृद्धिः] ॥ * ॥

( भाष्यम् )

**वृद्धेस्तु[10] प्रतिषेधो नोपपद्यते ।**

**किं कारणम् ? ।**

**इक्प्रकरणात् । इग्लक्षणयोर्गुणवृद्ध्योः[11] प्रतिषेधः । न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति । तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ॥**

(उद्योतः) तस्मान्मृजेरिति । निषेधस्य सिद्धये योगविभागमकृत्वा स्थानिसमर्पणायास्या[12] एवोपस्थितिरङ्गीकार्येति भावः ॥

( इक्परिभाषानुपस्थितिसूचकभाष्यम् )

**[13]एवं तर्हि—इहान्ये वैयाकरणा मृजेरजादौ सं-**

---

१ ननु धातुना प्रत्ययसामान्याक्षेपादविशेषेणेत्ययुक्तमत आह—प्रत्ययविशेषेति ॥ छाया ॥

२ ननु वक्ष्यमाणरीत्या नोत्तरार्थत्वमतो वार्तिककृदेवाह—इहार्थं चापीति ॥ अनिकः स्थानितानिरासायेहैव सफलमित्यर्थः ॥ अपिना पूर्वसमुच्चयः ॥ वक्ष्यमाणयुक्तेरेकदेश्युक्तित्वात् ॥ तद्व्याचष्टे—इहार्थं चापीति ॥ छाया ॥

३ अनिक इति । अन्त्यस्येत्यर्थः ॥ पदोपस्थितिपक्षे तच्छेपपक्षे चेह वृद्धिग्रहणाभावे स्थानषष्ठीसत्त्वेनालोन्त्यस्येत्यस्य दुर्वारत्वात् ॥ छाया ॥

४ पूर्वत्र 'अत्र' इत्युक्तत्वादाह—उत्तरस्येति । द्वितीयस्येत्यर्थः । अन्यथा तदुक्तेर्वैयर्थ्यमिति भावः ॥ छाया ॥

५ एवं फलद्वये श्रुते सिद्धान्त्येकदेशी द्वितीयं फलं प्रत्यासत्त्या व्युत्क्रमेण खण्डयति—मृज्यर्थमिति ॥ इहार्थमित्यादिः ॥ छाया ॥ मृज्यर्थत्वे आक्षेपदर्शकमिदमिति ॥ दाधिमथाः ॥

६ पूर्वपक्ष्याह—यद्यच इति ॥ इति छाया ॥ आक्षेपदूषणमिति ॥ दा० ॥

७ लावस्थायामिति । 'मयतेरिदन्यतरस्याल्लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति संहितापाठे द्विल्कारनिर्देशस्य विवक्षेति भावः ॥ छाया ॥

८ सिद्धान्त्येकदेश्याह—अटिचोक्तमिति ॥

९ अयं कोष्ठकान्तर्गतो वार्तिकभागो लेखकप्रमादात्माक्तनपुस्तके त्रुटितोऽत्र भवेत् । * नवाशब्दपूर्वकोऽर्थसंप्रत्ययस्तस्मादर्थनिवृत्तिः * इति संरूप-मित्यत्र, * प्रतिषेधे तु पूर्वनिपातप्रसङ्गस्तस्माद्राजदन्तादिषु पाठः * इति निष्ठासूत्रे वार्तिकसंवादात् ॥ दाधिमथाः ॥

१० यद्यपि पूर्वं फलयोर्व्युत्क्रमेणोक्तिर्वार्तिककृतोऽनुचिता तथाप्युत्तरार्थतां विनेहार्थत्वमपि दुर्वचमित्यभिप्रायेण तथोक्तम् । अथैकदेशिना योगविभागेनेहार्थत्वे खण्डिते इहार्थत्वाभावे उत्तरार्थत्वमपि त्वदुक्तमनुपपन्नमिति मृष्ट इत्यादौ दोष एवेत्याह—वृद्धिप्रेति ॥ यथाश्रुतोक्तेरफलत्वादन्यथा वार्तिकं व्याचष्टे—वृद्धेस्त्विति ॥ छाया ॥

११ अविशेषेण श्रुताया अपि निषेधश्रुतेः लैगवायनः कामयते इत्याद्यनुरोधेन स्थानिनियामकेक्परिभाषोत्तरमेव पठितायाः संकोचावश्यकत्वेनेतस्त्रकः तत्पदस्यार्थाधिकाराच्छब्दपरस्य प्रक्रमात्प्रस्तावादित्यर्थः । तथासति 'इक इति ये गुणवृद्धी ते न स्तः' इति तदर्थ इत्याह—इग्लक्षणयोरिति ॥ सिद्धान्ती सर्वथा पर्यवसितमुपसंहरति—तस्मादिति ॥ छाया ॥

१२ एवेन गुरुभूतनियमादिनिरासः ॥ अन्यथा 'स्थानिसमर्पणाय' इत्यस्याधिक्यं स्पष्टमेवेति बोध्यम् ॥ छाया ॥

१३ अथ 'तस्माद्'—इति ग्रन्थस्योक्ताशयमजानान एकदेशी द्वितीयफलमपि खण्डयति 'एवं तर्हीति ॥ यद्वा सिद्धान्त्येवोक्तग्रन्थस्य तथाशयनिरासपूर्वकोक्ताशयप्रतिपादनार्थमाह—एवं तर्हीति ॥ इहेति ॥ मृजिविषये इत्यर्थः ॥ छाया ॥

क्रमे विभाषा वृद्धिमारभन्ते—परिमृजन्ति परिमार्जन्ति परिमृजन्तु परिमार्जन्तु परिममृजतुः परिममार्जतुरित्याद्यर्थम् ॥ तदिहापि साध्यम् । तस्मिन् साध्ये योगविभागः करिष्यते—"मृजेर्वृद्धिरचो" भवति ॥

ततः—"अचि क्ङिति" अजादौ च क्ङिति मृजेर्वृद्धिर्भवति । परिमार्जन्ति परिमार्जन्तु परिममार्जतुः ॥ किमर्थमिदम् ? ।

नियमार्थम्, अजादावेव क्ङिति, नान्यत्र ॥

क्वान्यत्र मा भूत् ? ॥

मृष्टः मृष्टवानिति ॥

ततो "वा" वाचि क्ङिति मृजेर्वृद्धिर्भवति । परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरिति[२] ॥

(उद्योतः) संक्रम इति गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां संज्ञा । "अचि" इत्येव वचनम् । आदाविति तु तदादिपरिभाषालब्धार्थानुवादः । अत एवाग्रे वक्ष्यति—ततोचिक्ङितीति । एवं च ममृजे यूयं ममृजेत्यादौ विकल्पो भवत्येव ॥ एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिस्तेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम् ॥ तुन्दपरिमृज इत्यत्र यदि वृध्यभाव इष्टस्तर्हि व्यवस्थितविभाषया नेति बोध्यम् ॥ अजादावेवेति । विपरीतनियमस्तु न । इष्टानुरोधात् ॥

( इक्परिभाषोपस्थितिसूचकभाष्यम् )

इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम् । सिचि वृद्धिरविशेषेणोच्यते सेको यथा स्याद्, अनिको मा भूदिति ॥

(उद्योतः) उत्तरार्थत्वे खण्डिते सिद्धान्त्याह—इहार्थमेवेति । [सिचि वृद्धौ स्थानिविशेषानाश्रयणरूपोऽविशेषः ॥]

( इक्परिभाषानुपस्थितिभाष्यम् )

कस्य पुनरनिकः प्राप्नोति ? ॥

(उद्योतः) तत् खण्डयति पूर्वपक्षी—कस्य पुनरित्यादि ॥

( इक्परिभाषोपस्थितिभाष्यम् )

अकारस्य । अचिकीर्षीत् अजिहीर्षीत् ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

नैतदस्ति । लोपोऽत्र बाधको भविष्यति ॥

(प्रदीपः) अचिकीर्षीदिति । पूर्वविप्रतिषेधादतो लोपो यथा चिकीर्षक इत्यादौ ॥

(उद्योतः) पूर्वविप्रतिषेधेति ॥ ण्यल्लोपावियङ्यादि ॥ चिकीर्षक इति । अन्यथा ह्यत्र परत्वाद्वृद्धौ युकि चिकीर्षायक इति स्यात् ॥

( इक्परिभाषोपस्थितिभाष्यम् )

आकारस्य तर्हि प्राप्नोति—अयासीत् अवासीत् ॥

( इक्परिभाषानुपस्थितिभाष्यम् )

नास्त्यत्र विशेषः सत्यां वृद्धावसत्यां वा ।

१ यदनन्तरं वचनपाठ इष्टस्तदभ्युपेत्याह—मृजेरिति ॥ 'अचि क्ङिति वा' इत्यपूर्ववचनयोगस्य विभागं दर्शयति—तत इति ॥ विभक्तं व्याचष्टे—अजादाविति ॥ छाया ॥

२ इति । योगविभागेन व्याख्यानसमाप्तौ । तथाच तदर्थकृतापूर्ववचनस्य विभज्य व्याख्यानेनैव तावन्मात्रेष्टसिद्धिरिति न तावन्मात्रं फलम्, किं तूक्तमपीति भावः ॥ छाया ॥

३ 'अपेक्षातोऽधिकाराः' इति न्यायेन 'आतो ङितः' इत्यतो विभक्तिविपरिणतस्य ङित इत्यस्य 'अचि र ऋतः' इत्यतोऽचीत्यस्य 'जराया'–इत्यतोऽन्यतरस्यामित्यस्यानुवृत्त्या 'क्ङिति च' इत्यस्यापकर्षेण च तादृशार्थलाभ इति वदत्सु असंगतिं सूचयन्नाह—अचीत्येवेति । 'अचि क्ङिति वा' इत्येवापूर्वं वचनं 'मृजेः' इति सूत्रादग्रे पाठ्यमित्यर्थः । अतएव "साध्यम्" इत्येतद्घटितभाष्यसंगतिः । साध्यमित्यस्य चापूर्वं कार्यमित्यर्थः । एवेन आदिपदव्यावृत्तिर्न क्ङितीत्यादेः । तदाह—आदाविति रित्यति ॥ इत्येवं छायायां निजगुरोराशयः प्रकटितः ॥ परंत्वेवमपूर्ववचनकरणे पाणिनेर्न्यूनता भगवतोऽसमताविष्कृता भवति । भगवतस्त्वेष आग्रहः—यद्यप्यक्रमपि वार्तिककृदुक्तं सूत्राक्षरान्तर्गतमेव यावच्छक्यं करणीयमिति । किं चात्रापूर्ववचनस्य करणीयत्वमेवाभिप्रेतं चेत् साध्यमित्यनुक्त्वा 'वाच्यम्' इत्येव गदेत् । तथाच वाच्यमित्यनुक्त्वा साध्यमिति कथनेन पाणिनीयाक्षरैरेव साध्यम्, नत्वपूर्ववचनेनेति सूचितम् । तस्मात् प्रागुक्तानुवृत्त्यापकृष्टपदैः सह 'मृजेर्वृद्धिरचोचि क्ङिति वा' इत्येवं सूत्रे निष्पन्ने व्याकरणान्तरसंमतविकल्पसिद्धावपि मार्ष्टीत्यादीनामनुपपत्तिं मनसि निधाय तत्सिद्ध्यनुगुणं योगविभागमेव दर्शयति—मृजेरित्यादिना । तथा च 'मृजेर्वृद्धिरचः' 'अचि क्ङिति' 'वा' इत्येवं विभागत्रयकरणे न काप्यनुपपत्तिरिति ध्येयम् ॥ दाधिमथाः ॥

४ भाष्याक्षरस्वारस्यमप्यैवेत्याह—अतएवेति । तद्व्याख्याने च 'अजादौ क्ङिति' इति वक्ष्यते चेत्यपि बोध्यम् ॥ छाया ॥

५ यदीति । अनेन वस्तुतो वृद्धिरिष्टैवेति सूचितम् । एतेनं तासां परिगणनादिदं चिन्त्यमित्यपास्तम् ॥ छाया ॥

६ उभयार्थत्वे गूढाशयेन स्थापिते सिद्धान्ती अन्यार्थत्वमप्याह—इहार्थमेवेति । एवोऽप्यर्थे ॥ सिजर्थमिति । सिज्विभक्तिकवृद्धेरिक्स्थानिकत्वसंपत्त्यर्थमपीत्यर्थः ॥ छाया ॥

७ उत्तरार्थत्वेऽपि मृजर्थे तसादितिग्रन्थाशयानभिज्ञेनैकदेशिना गुरुभूतप्रकारेण खण्डिते सिद्धान्तप्रतिपादनं सर्वथा निर्बाधमेवेत्याशयेन तमनुद्भाव्य तदभ्युपेत्यैवान्यथापि फलसत्त्वादेतदावश्यकत्वं प्रतिपादयन्पूर्ववार्तिकद्वयं व्युत्क्रमेणान्यथायोजयन्परिहार्यत्वं ध्वनयन्नसिद्धान्तमाहेत्यर्थः ॥ छाया ॥

८ अयं कोष्ठकान्तर्गतः पाठो यद्यपि 'उत्तरार्थत्वे' इत्याद्यवतरणिकाग्रन्थतः प्रागेव Bengal Asiatic Society मुद्रितपुस्तकेऽपि समुपलभ्यते । तथापि तत्रानौचित्याच्छायानुरोधेन योग्यस्थाने स्थापित इति बोध्यम् ॥ दा० ॥

९ सिद्धान्त्येकदेश्याशयं प्रकाशयति—अकारस्येति ॥

१० पूर्वपक्षी खण्डयति—नैतदस्तीति ॥

११ 'लोपोऽत्र' इति भाष्यार्थं प्रतिपादयन् पूर्वपक्षस्य प्रतीकं धृत्वा परिहारमन्यार्थमाह—पूर्वेति ॥ एवमग्रेऽपि बोध्यम् ॥ वृद्धेरिग्लक्षणत्वे स्वीकृतेऽस्वीकृते चैतदावश्यकमिति सूचयन्नाह—यथेति ॥ छाया ॥

१२ अन्यथेति । वृद्धेरिग्लक्षणत्वमङ्गीकृत्य पूर्वविप्रतिषेधानङ्गीकार इत्यर्थः ॥ छाया ॥

१३ सिद्धान्त्येकदेश्यन्यत्रातिव्याप्तिं दर्शयति—आकारस्येति ॥

१४ पूर्वपक्षी तत्खण्डयति—नास्त्यत्रेति ॥

(प्रदीपः) अयासीदिति । परत्वादत्र सगिटोः कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोस्ति, तथापि विशेषाभावेन परिहृतत्वान्नायमाश्रितः ॥

(उद्द्योतः) परत्वादत्रेति[1] । अपवादत्वादित्यर्थः । परशब्द उत्कृष्टवाची ॥

( इक्परिभाषोपस्थितिभाष्यम् )

**संध्यक्षरस्य[2] तर्हि प्राप्नोति ॥**

( इक्परिभाषानुपस्थितिभाष्यम् )

**नैवं[3] संध्यक्षरमन्त्यमस्ति ॥**

(उद्द्योतः) भाष्ये नैव सन्ध्यक्षरमिति । वृद्धियोग्यमिति शेषः । उपदेश[4] आत्वविधानादिति भावः ॥ अन्त्यमिति । अङ्गस्य वृद्धिरित्यर्थेऽलोन्त्यपरिभाषाप्रवृत्तेरिति भावः ॥

( इक्परिभाषोपस्थितिभाष्यम् )

**ननु[5] चेदमस्ति ढलोपे कृते उदवोढाम् उदवोढम् उदवोढेति ॥**

( इक्परिभाषानुपस्थितिभाष्यम् )

**नैतदस्ति[6] । असिद्धो ढलोपः । तस्यासिद्धत्वान्नैतदन्त्यं भवति ॥**

(प्रदीपः) उदवोढामिति । ढलोपादीनामसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः ततो ढलोपादिषु कृतेषु ढलोपस्यासिद्धत्वादोकारस्य न भविष्यति ॥ गोशब्दादाचारक्किपि कृतेऽगवीदिति संध्यक्षरमन्त्यमस्ति तस्य कस्माद्वृद्धिर्न भवति । उच्यते— सिचि वृद्धिरित्यत्र धातुग्रहणमूत इद्धातोरित्यत औपदेशिकधातुग्रहणार्थमनुवर्तत इत्यदोषः ॥

(उद्द्योतः)ढलोपस्यासिद्धत्वादिति । पूर्वं हलन्तलक्षणाया वृद्धेर्जातत्वेनेदानीं सिचि वृद्धिरित्यस्य प्राप्त्या लक्ष्ये लक्षणस्येत्यस्याप्रवृत्तिरिति भावः ॥ धातुग्रहणमिति । सिचा तदाक्षेपे सिद्धे इति भावः ॥ एवंच क्व्यादिभ्य आचारक्किपि अकवायीदित्यादौ वृद्धिर्नेति लभ्यते ॥ माधवस्तु वृद्धिं मनुते । बहुलं[7] छन्दसीत्यतो बहुलग्रहणानुवृत्त्या सन्ध्यक्षरान्तनामधातौ वृद्धिर्न, अन्यत्र[8] भवत्येवेति तदाशयः ॥ तेन सेशब्दादिभ्य आचारक्किपि न वृद्धिरित्यलम् । वस्तुतस्तु नैव सन्ध्यक्षरमिति एवगर्भतद्भाष्यप्रामाण्येन सन्ध्यक्षरान्तेभ्य आचारक्विबेव नेत्याहुः ॥

( इक्परिभाषोपस्थितिभाष्यम् )

**व्यञ्जनस्य[9] तर्हि प्राप्नोति अभैत्सीत् अच्छैत्सीत् ॥**

( इक्परिभाषानुपस्थितिभाष्यम् )

**हलन्तलक्षणा[10] वृद्धिर्बाधिका भविष्यति ॥**

(उद्द्योतः) हलन्तलक्षणावृद्धिर्बाधिकेति भाष्ये इग्ग्रहणाभावे येन नाप्राप्तिन्यायेनेति भावः ॥

( इक्परिभाषोपस्थितिभाष्यम् )

**यत्र[11] तर्हि सा प्रतिषिध्यते—"नेटि" इति अकोषीद् अमोषीत् ॥**

( इक्परिभाषानुपस्थितिभाष्यम् )

**सिचिवृद्धेरप्येष[12] प्रतिषेधः ॥**

**कथम्[13] ? ॥**

**लक्षणं[14] हि नाम ध्वनति भ्रमति मुहूर्तमपि नावतिष्ठते ॥**

(प्रदीपः) लक्षणं हीति । नेटीति लक्षणमविशेषेण[15] वृद्धिमात्रस्य निषेधं कथयतीति ध्वनतीत्युच्यते । यो ह्यव्यक्तं[16] कथयति स ध्वनतीत्युच्यते । एवमिहाप्यस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः ॥ स्यादेतत्—प्रतिषेधस्यैकनिषेध्ये चरितार्थत्वात्पुनः प्रतिषेध्यान्तरे प्रवृत्तिर्न स्यादित्याह— भ्रमतीति । सर्वत्र व्याप्रियत इत्यर्थः ॥ स्यादेतत्—यावदेकनिषेधेऽस्य व्यापारस्तावदेव द्वितीयो विधिः प्रवृत्तः, प्रवृत्तस्य च निषेधोऽशक्यः कर्तुमित्याह—मुहूर्तमिति । उभयत्रापि[17] व्यापारान्नैकत्र विश्राम्यतीत्यर्थः ॥

( उद्द्योतः ) इत्याहेति । इत्याशङ्कायामाहेत्यर्थः ॥ नैकत्रेति ।

१ यथाश्रुतासंगतेराह—अपवादत्वादिति ॥ तत्रोदक्षरत्वं निराचष्टे—परेति ॥ छाया ॥

२ सिद्धान्त्येकदेश्यन्यत्रातिप्रसङ्गं दर्शयति—संध्येति ॥

३ पूर्वपक्षी खण्डयति—नैवेति ॥

४ तदन्त्यत्वनिषेधस्य सामान्यतो ग्रहणापि दुर्वचत्वादाह—उपेति ॥ छाया ॥

५ सिद्धान्त्येकदेशी पूर्वपक्ष्यज्ञानं प्रकटयति—ननु चेति ॥ छायाशयः ॥

६ पूर्वपक्षी खण्डयति—नैतदिति ॥ छायायां तु—"उदवोढेत्यग्रे 'असिद्धो ढलोपः' इति ग्रन्थः । 'नैतदस्ति' इति मध्येऽपाठः असंबद्धत्वात्" इत्युपलभ्यते ॥

७ माधवमते भाष्यासंगतिं परिहरति—बहुलमिति ॥ छाया ॥

८ अन्यत्रेति । अकवायीदित्यादाविसर्थः ॥ छाया ॥

९ सिद्धान्त्येकदेश्याक्षिपति—व्यञ्जनस्येति ॥

१० पूर्वपक्षी समाधत्ते—हलन्तेति ॥

११ [ सिद्धान्त्येकदेश्याक्षिपति— ] यत्र तर्हीति ॥ तत्र व्यञ्जनस्यादेवेति भावः ॥ छाया ॥

१२ [ पूर्वपक्षी दूषयति—सिचीति ॥ ] एष इति । नेटीति योग इत्यर्थः ॥ छाया ॥

१३ 'अतो हलादेः—' इत्यत्र हलन्तानुवृत्तेः 'नेटि' इत्यत्रापि तथा भाव्यमिति 'अनन्तरस्य' इति च हलन्तलक्षणवृद्धेरेव निषेध इति सिचिवृद्धेर्निषेधो दुर्वच इति पृच्छति—कथमिति ॥ छाया ॥

१४ लक्षणशब्देन निषेधः । अत्यन्तलक्ष्याधीनत्वात्तत्वम् ॥ छाया ॥

१५ अविशेषेणेति । विशेषं विना सामान्यमात्रेणेत्यर्थः ॥ इडादौ परस्मैपदपरे सिचि तन्निमित्ता हलन्तस्य सर्वा वृद्धिर्नेति तदर्थः । अत एव 'अतो हलादेः' इत्यत्र तदनुवृत्तिरिति भावः ॥ छाया ॥

१६ अव्यक्तमिति । निर्विशेषमित्यादिः ॥ छाया ॥

१७ उभेति ॥ शब्दबुद्धिकर्मणां विरम्याव्यापारायुगपदेव सर्वत्र प्रवृत्तेरिति भावः ॥ छाया ॥

वाध्यसामान्यचिन्तेयम्[1]। नेटीत्यत्र हलन्तस्येत्यनुवर्त्य हलन्तस्य या वृद्धिः प्राप्ता सा सर्वापि नेत्यर्थः। तेनालावीदित्यादौ न दोष इति बोध्यम्॥

(इक्परिभाषानुपस्थितिभाष्यम्)

**[2]अथवा "सिचि वृद्धिः परस्मैपदेषु" इति सिचि वृद्धिः प्राप्नोति। तस्या हलन्तलक्षणा वृद्धिर्वाधिका। तस्या अपि "नेटि" इति प्रतिषेधः॥**

(प्रदीपः) **तस्या अपीति।** अपिशब्दात्सिचि वृद्धेरपि॥

(उद्द्योतः) [3]वाध्यविशेषचिन्तायामाह—भाष्ये अथवेति। [4]तद्व्याचष्टे—अपिशब्दादिति।

(इक्परिभाषोपस्थापकभाष्यम्)

**[5]अस्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति?॥**

(उद्द्योतः) [6]स्वप्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा अष्टावसरन्यायेन सिचि वृद्धेरप्यभावः प्रतिपाद्यते इत्यर्थस्तद्ध्वनयन्नाह—भाष्ये अस्ति पुनः क्वचिदित्यादि॥

(इक्परिभाषानुपस्थापकभाष्यम्)

**[7]अस्तीत्याह, सुजाते[8] अश्वसूनृते, अध्वर्यो[9] अद्रिभिः सुतम्, शुक्रं[10] ते अन्यदिति। पूर्वरूपे प्रतिषिद्धेऽयादयोऽपि न भवन्ति॥**

(प्रदीपः) **अस्तीत्याहेति। नान्तःपादमव्यपर** इति पाठमाश्रित्यैवमुक्तम्॥ यद्येवं वृक्षावित्यत्र **नादिचीत्यनेन** पूर्वसवर्णदीर्घवद् वृद्धेरपि निषेधप्रसङ्गः। नैष दोषः, **संघोद्धावित्यादेर्ज्ञापकादनन्तरस्यैव नादिचीति** निषेधात्॥

(उद्द्योतः) ननु[11] तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिर्न त्वपवादेन बाधादुत्सर्गस्येत्यत आह—**नान्त इति॥** भाष्ये न भवन्तीति। अष्टावसरन्यायेनेति भावः॥ **पूर्वसवर्णदीर्घवद्वृद्धेरपीति।** अवर्णाद्धिचि यत्प्राप्तं तन्नेति बाध्यसामान्यचिन्तारूपाद्यपेक्षेणेयं शङ्का॥ ज्ञापकाद्बाध्यविशेषचिन्तैवाश्रीयते इत्युत्तरम्॥ **पूर्वसवर्णदीर्घे निषिद्धे वृद्धेरपीति** पाठे अष्टावसरन्यायानित्यत्वेन क्वचिदपवादनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यते इति भावः॥

(उद्द्योतः) परे त्वथवेति भाष्यं पूर्वपक्ष्युक्तित्वात्प्रौढ्या। अष्टावसरन्यायस्तु नास्त्येवोक्तनिर्देशात्। अत एव **नान्तः पादमिति** सूत्रे एङोऽतीत्यनुवर्त्य एङोऽति यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति॥

(प्रयोजनान्तरभाष्यम्)

**उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते सा क्ङिति मा भूत्, न्युनुवीत्, न्यधुवीत्॥**

(उद्द्योतः) इहार्थत्वे पूर्वपक्षिणा द्वेधा[12] प्रौढ्यापि खण्डिते सिद्धान्ती तदभ्युपेत्याप्याह—**उत्तरार्थमेवेति॥** नुधू धातू कुटादी॥

(प्रयोजनान्तरनिराकरणभाष्यम्)

**[13]नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशे कृतेऽनन्त्यत्वाद्वृद्धिर्न भविष्यति॥**

(प्रदीपः) **अन्तरङ्गत्वादिति।** उवङादेशः सिचमेवा[14]पेक्षते, वृद्धिस्तु सिच्परस्मैपदे॥

(उद्द्योतः) भाष्ये **अनन्त्यत्वादिति।** अचोऽनन्त्यत्वादित्यर्थः॥ नन्विक्परिभाषाभावेऽन्त्याल्मात्रस्य सा प्राप्नोतीति अनन्त्यत्वादित्यसङ्गतमिति चेत्। न, हलन्तेषु हलन्तलक्षणया बाधेनास्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात्॥

(सिद्धान्तिभाष्यम्)

**यदि तर्हि सिच्यन्तरङ्गं भवति—'अकार्षीत्, अहार्षीत्, गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति॥**

(उद्द्योतः) सिद्धान्त्याह—**यदि तर्हीति॥** अत्र यदीत्यनेनापवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम्॥ इत उत्तरग्रन्थस्तु[15] सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति बोध्यम्॥

(पूर्वपक्षिभाष्यम्)

**[16]मा भूदेवम्। "हलन्तस्य-" इत्येवं भविष्यति।**

(दूषणभाष्यम्)

**[17]इह तर्हि—न्यस्तारीत् न्यदारीत्। गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति। हलन्तक्षणायाश्च "नेटि" इति प्रतिषेधः॥**

१ चिन्तेयमिति। अत्र पक्षे—'अनन्तरस्य विधिर्वा' इति न्यायाप्रवृत्तिः॥ छाया॥

२ पूर्वपक्षी वाध्यसामान्यचिन्तापक्षेण समाधाय वाध्यविशेषचिन्तापक्षेणापि समाधत्ते—अथवेति॥

३ वाध्यविशेषेति। तथाच—'अनन्तरस्य'—इति न्यायप्रवृत्त्या तस्या एव निषेध इति भावः॥ छाया॥

४ नन्वेवं पूर्वपक्षतो न भेद इति कथं पक्षभेदेन व्याख्यानम्। अतो भाष्यं योजयितुं कैयटं तथैव प्रतीयमानमन्यथा योजयन् 'एवं सति सिचि वृद्धिः स्यादेवेति कथं विशेषपक्षे निर्वाहः' इति शङ्कापनोदायाह—तदिति। विशेषचिन्तनमित्यर्थः॥ छाया॥

५ तटस्थः पूर्वपक्षिणं पृच्छति—अस्ति पुनरिति॥

६ कथमितोऽत्र पक्षे तल्लाभोऽत आह—स्वेति॥ छाया॥

७ पूर्वपक्षी समाधत्ते—अस्तीत्याहेति॥

८ (ऋ० ५–७९–१) ९ (ऋ० ९–५१–१) १० (ऋ० ६–५८–१)

११ प्रकृत्येति पाठेन शङ्कते—नन्विति॥ छाया॥

१२ द्वेधाप्रौढ्येति। तत्र द्वितीयस्य प्रौढित्वमुक्तम् आद्यस्य तु वक्ष्यमाणमिति बोध्यम्॥

१३ एकदेशी आह—नैतदिति॥ छाया॥ पूर्वपक्षीति तूचितम्॥

१४ सिचोऽजादित्वाभावेऽपीडादेरजादित्वमस्त्येवेति भावः॥ दा०॥

१५ ग्रन्थस्त्विति॥ 'माभूत्' इत्यादि 'कृतेपि' इत्यन्त इति भावः॥छाया॥

१६ पूर्वपक्ष्यैकदेशी समाधत्ते—माभूदिति॥

१७ सिद्धान्त्येकदेशी दूषयति—इहतर्हीति॥

( दूषणनिराकरणभाष्यम् )

मा[1] भूदेवम् । "लून्तस्य" इत्येवं भविष्यति ॥

( दूषणभाष्यम् )

इह[2] तर्हि अलावीत् अयावीत् । गुणे कृतेऽवादेशे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः ॥

( दूषणनिराकरणभाष्यम् )

मा[3] भूदेवम् । "लून्तस्य" इत्येवं भविष्यति ॥

( निराकरणबाधकभाष्यम् )

"लून्तस्य"[4] इत्युच्यते, न चेदं लून्तम् ॥

( निराकरणसाधकभाष्यम् )

"लून्तस्य"[5] इत्यत्र वकारोऽपि निर्दिश्यते ॥

किं[6] वकारो न श्रूयते ? ॥

लुप्त[7]निर्दिष्टो वकारः ॥

(प्रदीपः) लुप्तनिर्दिष्ट इति । लोपो व्योर्वलीति भावः ॥ किमत्र प्रमाणमिति चेदभियुक्तस्मरणमेव ॥

( उद्द्योतः ) लुप्तनिर्दिष्ट इत्यत्र पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थे मयूरव्यंसकादित्वात्समासः । न च गुणे वार्णादाङ्गमिति न्यायेनावं बाधित्वा वृद्धौ आवादेशेऽलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थ इति वाच्यम् । सिचि वृद्धिरित्यस्यापवादत्वाज्ञानेनेव एतत्परिभाषाऽज्ञानेनैवास्य प्रवृत्तेरदोषात् । न च वकारप्रश्लेषेऽशवीदशावीदिति शव धातोर्नित्यवृद्ध्यापत्तिः । अस्या एकदेश्युक्तित्वेन तदज्ञानेनैवास्य भाष्यस्य प्रवृत्तेः जिरिञ्चिर्योद्यज्ञानवद् इत्याहुः ॥ एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो बवयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये ॥

( निराकरणबाधकभाष्यम् )

यद्येवम्[8]—मा भवानवीत्, मा भवान् मवीद् अत्रापि प्राप्नोति ॥

(उद्द्योतः) अवेराटि वृद्ध्यवृद्ध्योरविशेष इति आण्निवृत्तये भाष्ये माङ् प्रयुक्तः । एकादेशे पुनरप्यविशेषस्तदवस्थ इति भवानित्युक्तं मवौ तु प्रयोजनान्तरासत्त्वेऽप्यैकरूप्याय तत्प्रयोगः ॥

( निराकरणसाधकभाष्यम् )

अविमव्योर्नेति[9] वक्ष्यामि ॥

( आक्षेपभाष्यम् )

तद्वक्तव्यम्[10] ।

( समाधानबाधकभाष्यम् )

न[11] वक्तव्यम् । 'णिश्विभ्यां तौ निमातव्यौ' ।

यद्यप्येतदुच्यते[12] । अथ वैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृतेऽयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति[13] ॥

(प्रदीपः) णिश्विभ्यामिति । णिश्विग्रहणमकृत्वौ[14]ऽविमवी प्रतिषेधार्थं वक्तव्यौ । एवं सति गौरवाभावः ॥ निमातव्याविति । मेङो रूपम् । परिवर्तनीयावित्यर्थः ॥

(उद्द्योतः) अविमव्योर्नेति निषेधश्च मध्येऽपवादन्यायेनातो-लून्तस्येत्यस्यैव । तेनातोहलादेरिति विकल्पो भवत्येवेति बोध्यम् । सिचि वृद्धिरिति सूत्रं तु अचैषीदित्यादौ गुणे कृते चरितार्थमेतन्मते[15] इति बोध्यम् ॥

( भाष्यम् )

एवं[16] तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—न सिच्यन्तरङ्गं भवति—इति । यदयम् "अतो हलादेर्लघोः" इत्यकारग्रहणं करोति ॥

कथं कृत्वा ज्ञापकम् ? ॥

अकारग्रहणस्यैतत्प्रयोजनम् । इह मा भूत्—अकोषीत् अमोषीत् । यदि सिच्यन्तरङ्गं स्याद्, अकारग्रहणमनर्थकं स्याद् । गुणे कृतेऽलघुत्वाद्वृद्धिर्न भविष्यति । पश्यति त्वाचार्यो 'न सिच्यन्तरङ्गं भवति' इति । ततोऽकारग्रहणं करोति ॥

---

१ पूर्वपक्ष्येकदेशी समाधत्ते—माभूदेवमिति ॥

२ सिद्धान्त्येकदेशी दूषयति—इहेत्यादि ॥

३ पूर्वपक्ष्येकदेशी समाधत्ते—मा भूदेवमिति ॥

४ सिद्धान्त्येकदेशी दूषयति—लून्तेति ॥

५ पूर्वपक्ष्येकदेशी समाधत्ते—लून्तस्येत्यत्रेति ॥

६ सिद्धान्त्येकदेशी खण्डयति—किमिति ॥

७ पूर्वपक्ष्येकदेशी समाधत्ते—लुप्तेति ॥

८ सिद्धान्त्येकदेशी दूषयति—यद्येवमिति । अत्रापीति । तथाचोमयत्र नित्या वृद्धिः स्यात् । इष्यते ह्याद्ये 'नेटि' इति निषेधः, अन्त्ये 'अतो हलादेः' इति विकल्पः ॥ छाया ॥

९ पूर्वपक्ष्येकदेशी समाधत्ते—अविमेति ॥

१० सिद्धान्त्येकदेशी दूषयति—तदिति ॥ तथाच गौरवमिति भावः ॥ ॥ छायार्थः ॥

११ पूर्वपक्ष्येकदेशी गौरवं परिहरति—नेति ॥ तदेवोपपादयति—णिश्विभ्यामिति ॥ छायाशयः ॥

१२ नन्वेवं कथं णिश्व्योः प्रतिषेधोऽत उक्तविवरणपूर्वमाह—यद्यप्येतदिति । यदि 'अविमव्योर्न' इत्येतदुच्यते तर्हि णिश्विग्रहणाकरणमेवाभीष्टमिति न गौरवमिति णिश्विग्रहणवैयर्थ्यं दर्शयति—गुण इत्यादिना ॥ छायाशयः ॥

१३ यद्यप्यत्र न्यासे सार्धमात्राधिक्यं तथापि वृद्धिशब्दाकरणलाघवस्या—सार्वत्रिकत्वं 'जाग्रब्रूमवेदिताम्' इति पाठे तदभावश्चेति बोध्यम् ॥ छाया ॥

१४ नह्यस्मिन्पक्षे णिश्विग्रहणमुपयुज्यते । ऊनयतीति चङि प्रतिषिद्धे औनयीत् अश्वयीदित्यादावन्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तानां नेत्येव निषेधसिद्धेरिति भावः ॥ श. कौ. ॥

१५ एतन्मते इत्यनेनास्याप्येकदेशित्वेनारुचिः सूचिता । तथा हि णिश्विस्थानेऽविमव्योः पाठे तदंशे मध्येऽपवादन्यायाश्रयणम् न तु ह्यन्तक्षणश्वसेषु इत्यर्धजरतीयाङ्गीकरणमेव तत्रापि तस्याङ्गीकारे तत्रापि तत्रैव विकल्पापत्तिरिति ॥

१६ सिद्धान्त्येकदेशी सिच्यन्तरङ्गप्रवृत्तिं ज्ञापकेन वारयति—एवमिति ॥

( ज्ञापकनिराकरणभाष्यम् )

**नैतदस्ति[1] ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ; ? ॥**

**यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् न्यकुटीत् न्यपुटीत् ॥**

(उद्द्योतः) नैतदस्ति ज्ञापकमिति । न्यकुटी[2]दित्यादावन्तरङ्गतया वृद्धिबाधकगुणस्य निषेधेऽपि भ्रष्टावसरन्यायेन न वृद्ध्यभावः । सिद्धान्ते न्यायाभावादिति भावः ॥

( ज्ञापकान्तरभाष्यम् )

**य[3]त्तर्हि णिश्व्योः प्रतिषेधं शास्ति । तेन 'नेह[4]ान्तरङ्गमस्ति' इति दर्शय[5]ति ॥**

(उद्द्योतः) यत्तर्हि णिश्व्योरिति । ननु णिश्विस्थानेऽविमवी इति वदन्तं प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाभिधानमयुक्तमिति चेत् । न ज्ञापकत्वे संभवति निमानासंभव इत्य[6]ाशयात् ॥

( पूर्वोक्तज्ञापकस्थिरीकरणभाष्यम् )

**य[7]च्च करोत्यकारग्रहणं लघोरिति कृतेऽपि ॥**

**( प्रदीपः ) न सिचीति न्य[8]ायादप्येतत्सिध्यति—येन नाप्राप्तिन्यायेनान्तरङ्गस्य वृद्ध्या बाधनात् । प्र[9]योजनं च चिरिजियौयङ्लुगन्तानां च नयत्यादीनामचिरायीद् अजिरायीद् अनेनायीद् अचेचायीद् इत्यादौ सिचि वृद्धिः । अन्यथा गुणायादेशयोः कृतयोर्यान्तत्वाद्वृद्धिप्रतिषेधः स्यात् ॥**

(उद्द्योतः) **यच्च करोतीति** । इग्ग्रहणाभावेऽकोपीदित्यादौ व्यञ्जनस्य वृद्धिवारणाय बाध्यविशेषचिन्तापक्षे त्वया सिचिवृद्ध्यपवादहलन्तलक्षणाया निषेधे ते[10]न न्यायेन सिचि वृद्ध्यप्राप्तेः स्वीकारेण त्वद्रीत्य[11]ा ज्ञा[12]पकमेवेति भावः ॥ एतेन सिच्यन्तरङ्गाभावेऽपि परत्वाद्गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाकोपीदित्यादौ लघुत्वाभावादेव वृद्ध्यभावेऽत इति व्यर्थमेवेत्यन्त्यं ज्ञापकमसङ्गतम् । तथा णिश्व्योर्गुणे वार्णपरिभाषयाऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसङ्गतमित्यपास्तम् ॥ एकदेश्युक्तित्वेनादोषात् ॥ एतदेव ध्वनयन्—**'यदि तर्हि'** इति सिद्धान्त्युक्तौ य[13]द्यन्तर्भावसूचितं [ 'कृतेऽस्य[14] चारितार्थ्येऽपि स्वप्राप्तिकाले प्रा[15]प्तस्य येन नाप्राप्तिन्यायेन बाधः' इत्येतदाह—**न्यायादपीत्यादि** । बा[16]ध्यसामान्यचिन्तया च सकलान्तरङ्गबाध इति बोध्यम् । एवंच न ज्ञापकोपयोगः । नापि ज्ञा[17]पकसंभवो नापि प्र[18]योजनं वार्णपरिभाषयाऽचिरायीदित्यादौ गुणे कृतेऽयादेशात्पूर्वं वृद्धिप्राप्तेः । न वा वकारप्रश्लेषस्य फलं नाप्यविमव्योः प्रतिषेधस्येति शवधातौ वृद्धिविकल्प एवेति बोध्य[19]म् ] ॥

---

१ पूर्वपक्ष्येकदेशी ज्ञापकत्वं निरस्यति—नैतदस्तीति ॥

२ ननु भ्रष्टावसरन्यायेन तत्रापि वृद्ध्यभावः सिद्ध इति ज्ञापकत्वमेवास्येति खण्डनासंगतिरत आह—न्यकुटीदित्यादाविति । अपिर्गुणसत्तासमुच्चायकः ॥ छाया ॥

३ सिद्धान्त्येकदेशी ज्ञापकान्तरं दर्शयति—यत्तर्हीति ॥

४ इहेति । सिचीत्यर्थः ॥ छाया ॥

५ दर्शयतीति । बोधयतीत्यर्थः । ननु (तु) ज्ञापयतीत्यर्थः इति भावः ॥ एवमुक्तिफलं त्वनुपदमेव स्फुटीभविष्यति ॥ छाया ॥

६ इत्याशयादिति । अनेनास्यैकदेशित्वं सूचितम् । तच्च स्फुटीभविष्यति ॥ अस्याशयस्त्वित्थम्—सति ज्ञापकत्वे तदनाश्रयणे गुणाभावेनावान्तत्वे तत्र वृद्ध्यर्थं वकारप्रश्लेषानाश्रयणे तयोस्तदर्थं निमानानुपयोग इति ॥ छाया ॥

७ सिंहावलोकनन्यायेन निरस्तज्ञापकं समर्थयते—यच्चेति ॥ छाया ॥

८ न्यायादपीत्यपिः पूर्वपक्ष्युक्तज्ञापकसमुच्चायकः ॥ छाया ॥

९ नन्वपिना तत्समुच्चयस्तदा स्यात् यदि प्रयोजनं स्यात् । तेन तस्योत्तरार्थत्वस्थापनं च युज्येत नत्वन्यथाऽत आह—प्रयोजनमिति ॥ छाया ॥

१० तेनेति । भ्रष्टावसरन्यायेनेत्यर्थः ॥ छाया ॥

११ त्वद्रीत्येति । अकुटीदित्यादावपि तेन न्यायेन तदप्राप्तेरिति भावः ॥ छाया ॥

१२ अयमाशयः—अतो हलादेरिति सूत्रेऽद्ग्रहणस्य न तावत्संध्यक्षरादिकं व्यावर्त्यम्, लघुग्रहणेनैव तद्व्युदासात् । अचेतीत् अकोपीत् अनर्तीदित्यादिषु इदुद्धतोऽपि गुणेनान्तरङ्गेणैवापहृताश्चेत् तर्हि व्यर्थमद्ग्रहणं स्यात् । न च—अकुटीदित्यादावप्युकारव्युदासाय तदिति वाच्यम् । तत्राप्यन्तरङ्गेण गुणेन वृद्धिबाधे सति गुणे ङित्त्वान्निषिद्धेऽपि वृद्धेरप्राप्तेः । नहि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुज्जीवनं भवतीति न्यायात् ॥ अतएव नान्तःपादमिति पाठे पूर्वरूपनिषेधे सत्ययादयोऽपि न प्रवर्तन्त इति स्वीकृतं भाष्ये ॥ नचैवमपवादाभावे पुनरुत्सर्गस्य स्थितिरिति निर्विषयं स्यात् । वृक्षावित्यादौ नादिचीति पूर्वसवर्णे निषिद्धे वृद्धिश्च न प्रवर्तेतेति वाच्यम् । भिद्योद्ध्यौ नदे तौ सदित्यादिलिङ्गेनापवादे निषिद्ध उत्सर्गोऽपि न प्रवर्तते इत्यस्यासार्वत्रिकत्वाभ्युपगमात् । तदेतत्तत्रतत्रोच्यते—नोत्सहते प्रतिषिद्धा सती बाधितुम्—इति ॥ तथाच पक्षभेदाश्रयेण अतो हलादेरिति अद्ग्रहणमपि ज्ञापकमिति स्थितम् ॥ इति श. कौ. ॥

१३ यद्यन्तर्भावसूचितमिति । यद्यन्तर्भावेन सूचितमित्यर्थः । अस्य 'बाध इत्येतद्' इत्यत्रान्वयः ॥ छाया ॥

१४ कृतेऽस्येति । गुणे कृते वृद्धिशास्त्रस्येत्यर्थः ॥ छाया ॥

१५ प्राप्तस्येति । गुणादेरिति शेषः ॥ छाया ॥

१६ येननेत्यस्य स्वविषये स्वेतरेण प्राप्तस्य सर्वस्य स्वेन बाध इत्यर्थ इत्याशयेनाह—बाध्येति ॥ भाष्यकृतोऽपि तत्कथनमात्रेण न्यायेन बाधे सामान्यचिन्तैवाश्रयणीया, न तु विशेषचिन्तेत्येतत्प्रतिपादन एव तात्पर्यम् । न ज्ञापकत्वप्रतिपादने । अत एव—अद्ग्रहणस्य प्रागुक्तं संखण्ड्य 'यत्तर्हि'—इत्यादि 'दर्शयति' इत्यन्तेनैवमुक्त्वा पुनः 'यच्च' इत्यनेन साकाङ्क्षमुक्तम् । तेन तस्याप्येतत्प्रदर्शकत्वं न ज्ञापकत्वमिति सूचितम् ॥ छाया ॥

१७ वस्तुतस्तदेव नेत्याह—नापि ज्ञापकेति । उक्तरीत्या द्वयोरपि चारितार्थ्यात् । एवं च भाष्यमेकदेश्युक्तिरेव ॥ छाया ॥

१८ ननु तदसंभवेऽपि फलबलात्तथा कल्प्यतेऽत आह—नापि प्रेति । वार्णेति । तत्र गुणेऽन्तरङ्गत्वात्पूर्वं कृते तया ततः पूर्वं वृद्धिप्राप्तेरित्यर्थः । तथा च तत्र प्रतिषेधार्थं णिश्विग्रहणं चरितार्थमिति भावः ॥ छाया ॥

१९ अयं कोष्ठकान्तर्गतपाठः Bengal Asiatic Society मुद्रितपुस्तके नैतदस्तिज्ञापकमिति' इति प्रतीकतः प्राक् स्थापितः । तत्र 'यद्यन्तर्भावसूचितम्' इत्यस्यान्वयानुपपत्तिर्नैव विचारिता । अधोऽपि 'यद्यन्तर्भावः सूचितः' इत्येवं पाठे मुद्रिते यदीत्यस्य प्रत्यक्षमुपादानाद्यद्यन्तर्भावे सूचितत्वं कथमित्यपि न विचारितम् ॥ दाधिमथाः ॥

( सिद्धान्तिवार्तिकोपसंहारखण्डम् )

## ॥ * ॥ तस्मादिग्लक्षणा वृद्धिः ॥ * ॥

( भाष्यम् )

**तस्मादिग्लक्षणा वृद्धिरास्थेया ॥**

(उद्द्योतः) एवंच न्यनुवीदित्यादौ उक्तं बाधित्वा प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचिवृद्धिरास्थेयेत्युपसंहरति सिद्धान्ती—तस्मा[1]दिति भाष्ये । इग्लक्षणत्वेन निषेधायाकोपीदित्यादावनिको गुणव्यावृत्तये चेति भावः ॥ बाध्यसामान्यचिन्ता अत्रावसरन्यायश्चैकदेश्युक्ति[2]र्न तु सिद्धान्तः ॥ अत एवं न्यस्तारीदित्युपक्रम्य हलन्तलक्षणायाश्च नेटीति प्रतिषेध इत्युक्तमित्यलम् ॥

(इति पदोपस्थितिस्थापनाधिकरणम् ॥ )

—०:०:०—

( अथ स्वतन्त्रविधित्वनिराकरणाधिकरणम् )

(११४ आक्षेपवार्तिकप्रथमखण्डम् ॥ १२ ॥ )

## ॥ * ॥ षष्ठ्याः स्थानेयोगत्वादिग्-निवृत्तिः ॥ * ॥

( भाष्यम् ) ·

**षष्ठ्[3]याः स्थानेयोगत्वात्सर्वेषामिकां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति दधि मधु ॥**

(प्रदीपः) षष्ठ्या इति । स्वतन्त्रमिदं गुणवृद्ध्योर्विधायकमिति पूर्वः पक्षः ॥

(उद्द्योतः) विधा[4]यकमिति । इको यणचीत्यादि तु स्वविषयेऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः ॥ भाष्ये इङ्निवृत्तिरित्यस्य गु[5]णवृद्धिरूपादेशेनेत्यादिः ॥

( अस्य स्वतन्त्रत्वे दूषणभाष्यम् )

**पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥**

(उद्द्योतः) पुनर्वचनं 'मिदेर्गु[6]ण' इत्यादिरूपम् ॥

(११४ स्वतन्त्रत्वे दूषणसमाधानवार्तिक २ यखण्डम् ॥ १३ ॥)

## ॥ * ॥ अन्यतरार्थं पुनर्वचनम् ॥ * ॥

( भाष्यम् )

**अ[8]न्यतरार्थमेतत्स्यात्—सार्वधातुकार्धधातुकयोर्गु[7]ण एवेति ॥**

(प्रदीपः) अन्यतरार्थमिति ॥ नन्वनिकोऽपि यथा स्यादिति विध्यर्थं स्यात्, न तु नियमार्थम्, नियमाद्धि विधेर्बलीयस्त्वात् ॥ एवं मन्यते—द्वितीयं गुणवृद्धिग्रहणमनुवर्तते, तेन गुणवृद्धिप्रदेशेषु इक इत्यस्योपस्थानान्नास्त्यनिकः प्रसङ्गः ॥

(उद्द्योतः) नियमाद्धि विधेरिति । प्राप्तबाधादिरूपदोषापत्त्या परिसंख्यारूपो नियमो गुरुरिति भावः ॥ द्वितीयमिति । केवलविधायकत्वेऽनुवृत्त्येव सिद्धे इहत्यगुणवृद्धिग्रहणमनर्थकं स्यादिति भावः ॥ यातीत्यादिनिर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये ॥

(११९ आक्षेपवार्तिकप्रथमखण्डम् ॥ १४ ॥)

## ॥ * ॥ प्रसारणे च ॥ * ॥

( भाष्यम् )

**प्रसारणे च सर्वेषां यणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—याता वाता ॥**

(प्रदीपः) प्रसारणे चेति । तुल्यन्यायत्वादुपन्यासः । इग्यण इत्यत्र यण इति स्थानषष्ठी । तेन यणः स्थान इग्भवति, स च संप्रसारणसंज्ञ इति वाक्यार्थः स्यात् । वा[10]क्यभेदेन च कार्यद्वयं विधीयते ॥

(उद्द्योतः) तुल्यन्यायेति । षष्ठीदर्शनरूपो न्या[11]यः ॥ वाक्य-

---

१ तस्मादितीति पूर्ववद्बुद्धिस्थाद्धेतोरित्यर्थः ॥ यस्मादकोपीदित्यादौ व्यञ्जनस्य सा प्राप्नोति न्यनुवीदित्यादौ च प्राप्नोति तस्मादिति यावत् ॥ यदि यस्मात् सिच्यन्तरङ्गं न, तस्मात्—इत्यर्थ इष्टस्तर्हि 'तस्मादुत्तरार्थं वृद्धिग्रहणम्' इत्येवोपसंहृतं स्यात् ॥ नच महता यत्नेनोत्तरार्थत्वमुपपाद्येहार्थत्वोपसंहारो न युक्त इति वाच्यम्, । उत्तरार्थता मया सम्यक् प्रतिपादिता सा विनाप्युपसंहारं सुज्ञाना । इहार्थता तु प्रौढ्या निरस्ता । सा प्रौढिरनेनोपसंहारेण ज्ञापिता भवतीति भाष्याशयात् ॥ किं चानेनोभयोरप्युपसंहारकरणेनादोषात् । अतएव भाष्ये दार्ढ्याय द्विरुक्तिः । तस्य च—इग् लक्षणं स्थानी यस्याः सा वृद्धिरिति स्वीकार्येत्यर्थः ॥ छाया ॥

२ तत्राद्यस्यैकदेश्युक्तित्वमाह—अतएवेति । अन्त्यस्य तु तत्त्वं प्रागुक्तमेव ॥ छाया ॥

३ षष्ठ्या इति । इक इति षष्ठ्या इत्यर्थः ॥ तच्च षष्ठ्यन्तमर्थपरं नानुकरणम् । तथाचानिर्धारितसंबन्धविशेषत्वात् 'षष्ठीस्थाने' इत्यस्य प्रवृत्तिस्तदाह—स्थानेयोगेति ॥ छाया ॥

४ विधायकमितीति । विधिनियमसंभवे विधेरेव ज्यायस्त्वादिति भावः ॥ छाया ॥

५ गुणेति । अनेन विधीयमानेत्यादिः ॥ छाया ॥

६ Bengal Asiatic Society मुद्रितपुस्तके 'अदेङ्गुणः' इत्यस्य स्थापनं शोधकस्य पाण्डित्यं लोकोत्तरं सूचयति ॥ दाधिमथाः ॥

७ आदिना सार्वधातुकार्ध—मृजेर्वृद्धिः—सिचिवृद्धीत्यादिपरिग्रहः । तथाच तैर्विशिष्य गुणादिविधानादस्य परिभाषात्वमेवोचितमिति भावः ॥ छाया ॥

८ अन्यतरार्थमिति । पर्यायेण सर्वत्र प्राप्तयोरनेन गुणवृद्ध्योस्तत्तन्निमित्तेऽन्यतरस्य निवृत्त्यर्थमिदम्—तत्र गुण एव न वृद्धिः, मृजेर्वृद्धिरेव न गुण इत्येवमेक एव यथा स्यादन्यन्माभूदित्येतदर्थमित्यर्थः ॥ छाया ॥

९ आदिना—स्वार्थहानिपरार्थकल्पनयोः संग्रहः । दोषेति । दोषत्रयेत्यर्थः ॥ परीति । अत्र शास्त्रे परिसंख्याया अपि आर्थिकेतरनिवृत्तिफलकत्वस्य तत्रापि सत्त्वेन नियमत्वेन व्यवहार इत्यन्यत्र स्पष्टम् ॥ छाया ॥

१० नन्वनन्तरस्येति न्यायेन 'इग्यणः' इति विहितस्यैव संप्रसारणसंज्ञा स्यादिति 'ष्यङ'—इत्यादिविहिते न स्यादत आह—वाक्यभेदेन चेति ॥ छाया ॥

११ न्याय इति । तथाच परिभाषाप्रसङ्गात्सूत्रावयवेऽपीयं शङ्केति भावः ॥ छाया ॥

---

१ द्विरुक्तिरिति । चिन्त्यमेतत् । सर्वत्रैव व्याख्येयवार्तिकावयवस्य प्रतीकतयोपादानस्य भाष्यशैलीसिद्धत्वात् ॥ दाधिमथाः ॥

भेदेनेति । ष्यङः संप्रसारणमित्यादि निर्वाहाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः ॥

( स्वातन्त्र्ये दूषणभाष्यम् )

पुनर्वचनमिदानीं किमर्थं स्यात् ! ॥

(११५ स्वातन्त्र्ये दूषणनिराकरणवार्तिकस्यखण्डम् ॥ १५॥)

**॥ * ॥ विषयार्थं पुनर्वचनम् ॥ * ॥**

( भाष्यम् )

विषयार्थमेतत्स्यात् वचिस्वपियजादीनां कित्ये-वेति ॥

(उद्योतः) विषयार्थमित्यस्य निमित्तनियमार्थमित्यर्थः ॥

(११६ आक्षेपवार्तिकम् ॥ १६ ॥)

**॥ * ॥ उरण्रपरे च ॥ * ॥**

( भाष्यम् )

उरण्रपरे च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—कर्तृ हर्तृ ॥

(प्रदीपः) कर्तृ हर्तृ इति । अन्तरतमस्याभावात्सर्वेऽप्यणः पर्यायेण प्राप्नुवन्ति ॥

(११७ सर्वाक्षेपनिराकरणसिद्धान्तवार्तिकम् ॥ १७ ॥)

**॥ * ॥ सिद्धं तु षष्ठ्यधिकारे वचनात् ॥ * ॥**

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ॥

षष्ठ्यधिकारे इमे योगाः कर्तव्याः । एकस्तावत् क्रियते तत्रैव । इमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते ॥

(प्रदीपः) सिद्धमिति । स्वातन्त्र्यमेषां निवर्तयति । तेन[4] यत्र षष्ठी तत्रैषामुपस्थानम् । अङ्गस्य वच्यादीनामृत इद्धातोरित्यादौ ॥ इमावपीति । स्वरितत्वादनयोरन्तरालवर्तिभिश्चायोग्यत्वात्संबन्धाभावः ॥

(उद्योतः) गुणादिविधावपि अधिकारलब्धा षष्ठीत्याह—अङ्गस्येति । तत्रोरण् रपर इत्यत्र षष्ठीत्यनुवर्त्य पूर्वोक्तार्थः सुलभः । एतयोरपि तत्रानुवृत्त्या षष्ठीति संबन्धेन तदर्थलाभः ॥ तत्र[5]ानुवर्त्तनं यदि लौकिकोधिकारस्तर्हि स आकाङ्क्षानिबन्धनः । न च षष्ठीस्थान इत्यस्याकाङ्क्षेत्यत आह—स्वरितत्वादिति ॥ [6]लक्ष्यानुरोधाच्चेत्यपि वोध्यम् ॥

( भाष्यम् )

अथवा[7]—षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे॥

(प्रदीपः) अथवेति । षष्ठीस्थाने योगेत्यत्र योगविभागः करिष्यते—"षष्ठी," यदेतदनुक्रान्तं तद्, यत्र षष्ठी, तत्रोपतिष्ठत इत्यर्थः । तत्र योग्यत्वादनयोरेवापेक्षा नान्येषाम् । ततः–"स्थानेयोगा" इति, षष्ठीत्येतदुपतिष्ठते ॥

(उद्योतः) षष्ठीति । योगविभागे च षष्ठीति सूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षालक्षणोऽधिकार इति भावः ॥ योग्यत्वादिति । व्याख्यानाच्चेत्यपि वोध्यम् ॥ उपतिष्ठत इति । अनुवर्तत इत्यर्थः ॥

( समाधानान्तरभाष्यम् )

अथवेदं तावदयं प्रष्टव्यः—"सार्वधातुकार्धधातुकयोर्गुणो भवति" इतीह कस्मान्न भवति—याता वाता ? ॥ इदं तत्रापेक्षिष्यते—"इको गुणवृद्धी" इति ॥ यथैव तर्हि इदं तत्रापेक्षिष्यते, एवमिहापि तदपेक्षिष्यामहे "सार्वधातुकार्धधातुकयोः" इति ॥ इको गुणवृद्धी ॥ ३ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥ ३ ॥

(प्रदीपः) अथवेति । अन्यतरार्थं पुनरिति वदताऽवश्यमेवं संबन्धः कर्तव्यो—'यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रेक इति उपतिष्ठते' इति । अन्यथा याता वातेत्यादिषु विध्यर्थत्वे संभवति कथमन्यतरार्थं पुनर्वचनं स्यादित्युच्यते । अवश्यकर्तव्यायां चापेक्षायामेकवाक्यतयैवा-

१ पुनर्वचनं वचिस्वपीत्यादिरूपम् ॥ छाया ॥

२ पाणिनिना यदभिप्रायेण 'उरण्' इति सूत्रं षष्ठ्यधिकारे कृतम्, स समाधिरुभयत्रेति ध्वनयितुं तत्रापि शङ्कते—उरणिति ॥ उरण् भवति स रपरो भवतीत्यादिव्याख्यानादिति भावः ॥ इति च्छायाकृदुक्तिस्तु समाधानज्ञाने जिज्ञासोः पूर्वपक्षेऽप्रवृत्तेश्चिन्त्यैव । तस्मात्समाधानमधुना न ज्ञायतेऽतः प्रश्नः क्रियते । यत्र स्थानषष्ठी दृश्यते तत्रैव इकोयणचीत्यत्रेव स्वतन्त्रविधायकत्वं संभवतीत्येव मष्टुराशयः ॥ दाधिमथाः ॥

३ षष्ठ्यधिकारे इति । षष्ठी स्थाने इति सूत्रस्थषष्ठ्यधिकारे इत्यर्थः ॥ तथाच तदधिकारे 'उरण् रपरः' इति पठितात्प्रागग्रे वा एतावप्यनुवर्त्याविति भावः । एकः उरण् रपर इति ॥ इमाविति । 'इको गुण' 'इग्यणः' इत्येतावित्यर्थः ॥ छाया ॥

४ तेनेति । तदधिकारस्थत्वेनेत्यर्थः । अयंभावः—'यत्र स्थानषष्ठीनिर्दिष्टस्य उरण् विधीयते तत्र रपर इत्युपतिष्ठते' इति तस्यार्थः । एवं 'यत्र स्थानषष्ठीनिर्दिष्टस्य गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते' 'यत्र च स्थानषष्ठीनिर्दिष्टस्य संप्रसारणं विधीयते तत्रेग्यण इत्युपतिष्ठते इति चैषां वाक्यार्था वोध्याः । संज्ञासिद्धिस्त्वर्थापत्तिमूलकवाक्यान्तरेण । अत एवानुवादे संप्रसारणस्येत्यादौ न दोष इति ॥ छाया ॥

५ तत्रेति । षष्ठ्यधिकार इत्यर्थः ॥ नन्वित्यादिः ॥ छाया ॥

६ वहुषु पदेषु स्वरितत्वकल्पने मानाभावाद्गौरवाच्चाह—लक्ष्येति ॥छाया॥

७ एवं शास्त्रीयाधिकारमुक्त्वा तत्रापि संबन्धस्याकाङ्क्षामूलकत्वात्ताहशमेव लौकिकमाह—अथवेति ॥ छाया ॥

८ ननु षष्ठीपदं स्थानेयोगेत्यनेन संबद्धं नैतावाकाङ्क्षतीति कथमिदमत आह—षष्ठी स्थानेयोगेत्यत्रेति ॥ छाया ॥

९ एवं स्वातन्त्र्यं संभाव्य द्वेधा समाहितम् । वस्तुतस्तु तदेव नेति विद्यमानस्वातन्त्र्यके दोषं प्रतिवन्दीमुखेनाह—अथवेति ॥ छाया ॥

१० उत्तर(मवश्यदेय)माह—इदमिति ॥ छाया ॥

पेक्षास्तु । तेनैकरूप एवार्थो, न तु वाक्यभेदेन स्वातन्त्र्यं पारतन्त्र्यं च ॥ **तदपेक्षिष्यामह इति** । अस्य स्वातन्त्र्यं निरसितुमित्यर्थः ॥ ३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायप्रथमपादे तृतीयमाह्निकम् ॥ ३ ॥

**(उद्द्योतः)** **अन्यतरार्थमिति** । केवले विधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव ॥ **न तु वाक्यभेदेनेति** । एकवाक्यत्वे संभवति तस्यायुक्तत्वमिति भावः । एतेनेग्यण इत्यपि व्याख्यातम् । तत्रापि संज्ञाविधाने इगनुवादः । अनुवादत्वं च ष्यङः संप्रसारणमित्यादीनां सार्थक्यायावश्यकम् । एवं चैकरूप्यायानुवादत्वमेवास्तु । न तु विधेयत्वं वचिस्वपीत्यादीनां नियामकत्वापादकमिति बोध्यम्[1] ॥ **तदपेक्षिष्याम इति** । एवं च यथा विधेः स्वान्याकाङ्क्षा, तथास्यापि स्वसंबन्धिविधेयबोधकशास्त्रापेक्षेति एकवाक्यतैवेति भावः ॥ एवं च स्वातन्त्र्यं दूरापास्तमेव । तदाह—**अस्येति** । आवृत्तौ तु न मानमिति शिवम् ॥ ३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजी(नागेश)भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

# प्रथमाध्याये प्रथमपादे चतुर्थमाह्निकम् ।

( ३ परिभाषासूत्रम् ॥ १ । १ । ४ आ० १ सू० )

## न धातुलोप आर्धधातुके ॥ १ । १ । ४ ॥

**(प्रदीपः)** **न धातुलोप आर्धधातुके** ॥ ४ ॥ गुणवृद्ध्योः प्राधान्यादयं निषेधो, न तु तद्गुणभावादिक्परिभाषायाः[2] । **दीधीवेवीटा**मिति चासंबद्धं परिभाषाया निषेधे स्यात् ॥ कृत्स्नस्य धातोर्लोपे गुणवृद्धिप्रसङ्गाभावादनर्थको निषेधः स्यादिति सामर्थ्याद्धात्वेकदेशलोपोऽत्र धातुलोपोऽभिमतोऽवयवक्रिययापि समुदायस्य व्यपदेशदर्शनात् । यथा पटो दग्ध इति । अथवा समुदायशब्दोऽवयवे तद्रूपारोपाद्वर्तते ॥

**(उद्द्योतः)** **न धातु** ॥ ४ ॥ **प्राधान्यादिति** । प्राधान्यं च संस्कार्यत्वरूपम् ॥ **असंबद्धमिति** । अलोन्त्यस्येत्यनेनापि इक एव प्रसक्त्या परिभाषानिषेधे वैयर्थ्यम् ॥ **कृत्स्नस्येति** । दुरीणो लोपश्चेति रसंनियोगेन कृत्स्नधातुलोपोऽस्तीति तदसंभवो नोक्तः ॥ **अथवेति** । आद्यपक्षे अवयवधर्मस्य[3] समुदाये आरोपोऽन्त्ये समुदायधर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः ॥

**( पदकृत्यनिर्वचनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**धातुग्रहणं किमर्थम्?** ॥

**(प्रदीपः)** **धातुग्रहणमिति** । उपसर्जनस्यापि यथा परामर्शस्तथा **केषां शब्दानामि**त्यत्र प्रतिपादितम् ॥ विनापि[4] धातुग्रहणेन लोपविशेषणमार्धधातुकग्रहणं विज्ञास्यते । अनुबन्धलोपस्य चानैमित्तिकत्वाल्लवितेति गुणनिषेधो न भविष्यतीति प्रश्नः ॥

**(उद्द्योतः)** **परामर्शः** शब्देन पृथगुपादानम् ॥ **प्रतिपादितमिति** । बुद्ध्या पृथङ् निष्कर्षादिति भावः ॥ **लोपविशेषणमिति** । सूत्रे श्रुतत्वादिति भावः ॥

**( समाधानभाष्यम् )**

**इह मा भूत्—लूञ् लविता लवितुम्, पूञ् पविता पवितुम्** ॥

**(प्रदीपः)** सिद्धान्ते तु गुणवृद्धिविशेषणमार्धधातुकग्रहणमित्यभिप्रायः ॥ अनुबन्धो न धात्वेकदेशो, यस्मादुपदेश एवेत्संज्ञा । प्रयोगे तु लूशब्द एव धातुसंज्ञः । केवलमसौ ञित्कार्यं लभते । लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ता ॥

**(उद्द्योतः)** **सिद्धान्तेत्विति** । निषेध्यत्वेन गुणवृद्ध्योः शाब्दप्राधान्याल्लोपस्य[5] तद्विशेषणत्वादिति[6] भावः ॥ न च लोपशब्दोधिकरणघञन्तः[7] । **अदर्शनं लोप** इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात् ॥ गणे सानुबन्धस्य पाठाद् विशिष्टस्यैव धातुत्वं स्यादत आह—**अनुबन्धविति** ॥ **यस्मादिति** । उपदेशपदाभावेऽपि अन्तरङ्गत्वात्सर्वतः पूर्वं सा । धातुसंज्ञा तु प्रत्ययविशेषे विधित्सित इति भावः ॥ धातुसंज्ञेत्संज्ञयोः समकालत्वेऽपि[8] न क्षति-

१ नन्वावृत्त्या द्वितीयोर्थोऽत आह—आवृत्तौ त्विति । वस्तुतस्तु—अस्य विध्यर्थतावादिना पुनर्वचनस्यान्यतरार्थत्वमुक्ताशयेनैवोक्तम्, न तु कैयटोक्तरीत्येति । अत्रान्यतरार्थमित्यादिरीत्या भाष्यव्याख्यानं चिन्त्यम् । भाष्यस्य तु—अस्य विधित्वेऽपि तस्य (स्या) विधित्वस्य निर्विवादत्वाद्विधिनियमसंभवे विधेरेव ज्यायस्त्वात्तत्र दोषप्रसक्त्यापादनरूपप्रतिबन्दीद्वारा तन्मुखेन निर्णयोऽत्राकाङ्क्षया मिथ इति तात्पर्यं स्पष्टमेवेति शिवम् ॥ छाया ॥

२ प्राधान्यं चेति । प्रत्ययोपात्तभावनाक्षिप्तस्य कर्तुः क्रियां प्रति गुणभावेऽपि यथा प्राधान्यम्, यथा वा दध्ना जुहोतीत्यत्र तृतीयान्तोपात्तदधिगुणं प्रति अनुवादार्थं विध्युपस्थापकतया गुणभूतस्यापि होमस्य, तथा परिभाषोपस्थित्यर्थं तत्प्रदेशभूतस्थानिप्रदर्शनलिङ्गतया गुणभूतयोरपि तदुपकार्यतया प्राधान्यं तयोरिति भावः ॥ छाया ॥

३ अवयवधर्मस्येति । क्रियारूपस्येत्यर्थः ॥ छाया ॥

४ प्रश्नबीजमाह—विनापीति ॥ छाया ॥

५ शाब्देति । अश्रुतत्वेऽपीत्यादिः ।
'सर्वो हि गुणमुद्धृत्य प्रधानेनैव संबध्य ( युज्यते )
इति न्यायादिति भावः ॥ छाया ॥

६ तद्विशेषणत्वादिति । निषेधविशेषणत्वेनोपक्षीणत्वादित्यर्थः ॥ तथा च न तस्य विशेषणसंबन्धयोग्यतेति भावः ॥ छाया ॥

७ धिकरणेति । तथा च लुप्यतेऽस्मिन्निति व्युत्पत्त्या आर्धधातुकविशेषणं तदिति भावः ॥ छाया ॥

८ समकालेति । विरोधाभावेन धातुसंज्ञाया इत्संज्ञाप्रतीक्षायां मानाभावादिति भावः ॥ छाया ॥

रित्याह—लूशब्दस्यैवेति । अन्वयव्यतिरेकाभ्यां तस्यैव क्रियावाचित्वावगमात् । गणपठितक्रियावाचिनां[1] च धातुत्वविधानादिति भावः ॥

( आक्षेपभाष्यम् )

**आर्धधातुक[2] इति किमर्थम् ? ॥**

( समाधानभाष्यम् )

**'त्रिधा बद्धो वृषभो रोरवीति' ( ऋ. सं. ४। ५८। ३ ) ॥**

(प्रदीपः) **रोरवीतीति** । सत्यार्धधातुकग्रहणे शब्दवत्त्वादन्यपदार्थस्य बहुव्रीहिरसंदिग्धो भवति नान्यथा ॥ क्रमेण सूत्रप्रत्याख्यानायार्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणानर्थक्यप्रतिपादनाय प्रत्युदाहरणोपन्यासः ॥

(उद्द्योतः) **रोरवीतीति** । यङ्लुगन्तस्य रूपम्[3] ॥ **शब्दवत्त्वात्** शब्देनोपादानात् ॥ **नान्यथेति** । अन्यथाऽन्तरङ्गत्वात्तत्पुरुष एव स्यादित्यर्थः[4] ॥ ननु पदप्रयोजनचिन्ता वृत्तिकारस्योचिता, न भाष्यकारस्येत्यत आह—**क्रमेणेति** । तत्तत्पदप्रयोजनखण्डनक्रमेणेत्यर्थः ॥ क्रममेवाह—**आर्धधातुकस्य चेति** ॥

( अथार्धधातुकपदार्थान्वयविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम्—'आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति ।**

**आहो स्विद्—गुणवृद्धिविशेषणमार्धधातुकग्रहणम् 'धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति ? ॥**

(प्रदीपः) **किं पुनरिति** । आर्धधातुकग्रहणं लोपविशेषणं वा, गुणवृद्धिविशेषणं वा, बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षत्रयसंभवात् प्रश्नः ॥

(उद्द्योतः) **लोपविशेषणम्** । श्रुतत्वात् ॥ **गुणादिविशेषणम्** । प्राधान्यात् ॥ तत्र लोपविशेषणत्वे 'आर्धधातुके परे पूर्वस्य धात्वंशस्य लोपे' इति वाच्योऽर्थस्तत्फलितमुक्तम्—भाष्ये **आर्धधातुकनिमित्ते लोप इति** । एवं गुणवृद्धिविशेषणत्व 'आर्धधातुके परे प्रत्यासत्त्या पूर्वस्य धातोर्ये गुणवृद्धी' इति वाच्योऽर्थः । अनुवादेऽपि **इको गुणवृद्धी' 'अचश्चेति** परिभाषातिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात् । तत्फलितमुक्तम्—**आर्धधातुकनिमित्ते ये इति** ॥ **प्राप्नुत** इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति ॥ **बहुव्रीहीति** । उभयानुग्रहायेति भावः ॥ यद्यपि[6] धातुलोप इति समस्तमार्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः ॥

( विशेषप्रश्नभाष्यम् )

**किं[7] चातः ? ॥**

( विशेषदर्शनभाष्यम् )

**यदि[8] लोपविशेषणम्, 'उपेद्धः, प्रेद्धः' अत्रापि प्राप्नोति[9] ।**

**अथ गुणवृद्धिविशेषणम्, 'क्नोपयति'[10] अत्रापि प्राप्नोति ॥**

( उभयेष्टापत्तिभाष्यम् )

**यथेच्छसि[11] तथास्तु ॥**

( प्रथमपक्षाङ्गीकारभाष्यम् )

**अस्तु लोपविशेषणम् ॥**

---

१ ननु तस्यैव तत्त्वेऽपि केवलगणपठितानां सेति सानुबन्धकस्य स्यादेवात आह—गणपठितक्रियेति ॥ छाया ॥ तत्र गणपठितत्वे नाग्रहः किंतु शिष्टप्रयोगक्रियावाचित्वयोरेव । अत एव भूवादिसूत्रोपसंहारे 'आणपयत्यादिनिवृत्त्यर्थः पाठः कर्तव्यः । न कर्तव्यः । शिष्टप्रयोगादाणपयत्यादीनां निवृत्तिर्भविष्यति । स चावश्यं शिष्टप्रयोग उपास्यः—इत्यादि भगवतोक्तमिति भावः ॥ दाधिमथाः ॥

२ ननु 'एकाचो द्वे' इति वद् 'धातोर्लोपो यस्मिन्' इति बहुव्रीहौ रोरवीतीत्यत्र लुकोऽनैमित्तिकत्वेन न दोष इत्याशयेनाह—आर्धधातुकेति ॥ छाया ॥

३ रूपमिति । 'रु शब्दे' अतो यङि अनैमित्तिकत्वेनान्तरङ्गत्वाल्लुकृत्वाच्च तल्लुकि अन्तरङ्गत्वाद्द्वित्वेऽभ्यासकार्ये 'चर्करीतम्' इत्यस्यादादौ पाठेन भूवादिसूत्रेण धातुत्वाल्लटि तिपि शपि तल्लुकि 'यङो वा' इति तस्येटि तन्निमित्ते गुणेऽवादेशे च रूपमित्यर्थः ॥ छाया ॥

४ स्यादिति । एवं चानैमित्तिके यङ्लुकि रोरवीतीत्यत्र गुणनिषेधः स्यादिति बहुव्रीहिलाभार्थं तदावश्यकमिति भावः ॥ छाया ॥

५ भाष्ये यद्यपि द्विकोटिक एव संशयः कृतः । तावता 'सर्वत्र संशयः कोटिद्वयावलम्ब्येव' इति न भ्रमितव्यम् । सहस्रसंवत्सराधिकरणे ( पू. मी. ६।७।१३ ) बहुकोटिकसंशयस्य दृष्टत्वात् । अतएव—'ईदूदेद्द्विवचनम्'—इति सूत्रभाष्यमपि संगच्छते । 'कोटिद्वयावलम्बी विमर्शः संशयः' इति तार्किकोक्तावप्येककोटिकत्वं तस्य व्यावर्त्यम् नतु बहुकोटिकत्वम् । तथापि तदुपलक्षणं कोट्यन्तरेणापि संभवात् । कण्ठतस्तदनुक्तिस्तु बहुव्रीहिपक्षस्य निर्दुष्टत्वेन गुरुभूतजघन्यत्वेऽपि प्रतिपादयिष्यमाणत्वात्तत्रादिनोभयविशेषणत्वपक्षस्य यदीत्यादिना पक्षद्वयसाधारणदोषेण दूष्यत्वेन तत्रादिजगौरवग्रस्तत्वेन पक्षद्वयविविक्तदोषाभावेन चायुक्तत्वमेवेति ध्वनयिष्यमाणत्वाच्चेति तदेव कोटित्रयं संशयोपपत्तये प्रश्नबीजत्वेन प्रतिपादयन्नादौ तत्पुरुषपक्षे कोटिद्वयमाह—आर्धधातुकेति ॥ छाया ॥

६ बहुव्रीहिपक्षेतु—धातुलोप इत्यार्धधातुकस्य विशेषणम्, तच्च गुणवृद्ध्योरित्यत एव तत्पुरुषपक्षे युक्तमुभयविशेषणत्वं न तु बहुव्रीहि[पक्षे । इति । तथाच बहुव्रीही]त्यनुपपन्नं तत्र योजयति—यद्यपीति ॥ तथाचोभयविशेषणमित्यसंगतमिति भावः ॥ छाया ॥

७ विशेषं पृच्छति किं चात इति ॥

८ विशेषमन्यतरपक्षे दोषरूपं दर्शयति—यदीति । आद्यपक्षे धातुपदस्य खण्डनीयत्वसूचनायाह—लोपेति ॥ छाया ॥

९ उपेद्धः प्रेद्ध इति । इन्धेः क्ते तन्निमित्तेऽनिदितामिति नलोपे धत्वे प्रोपयोगे आद्गुणे रूपे इति भावः ॥ प्राप्नोतीति । आद्गुणस्य निषेधः प्राप्नोतीत्यर्थः ॥ छाया ॥

१० क्नोपयतीति । क्नूयधातोर्णिचि अर्तिह्रीव्लीति पुकि तन्निमित्ते लोपोव्योरिति यलोपे णिज्रूपार्धधातुकनिमित्तकस्य पुगन्तेति प्राप्तस्य गुणस्य प्रतिषेधः प्राप्नोतीत्यर्थः ॥

११ उभयथापि दूषणानां सुपरिहरत्वं सूचयितुं यथेच्छां सिद्धान्ती स्वीकरोति—यथेति ॥

( आक्षेपभाष्यम् )

**[1]कथम्—'उपेद्धः प्रेद्धः' इति ? ॥**

(प्रदीपः) **प्रेद्ध इति** । नन्वाद्गुणोऽनिग्लक्षण इति तन्निषेधो न भविष्यति ॥ परिहारान्तराभिधानादेतन्नाश्रितमित्यदोषः ॥

(उद्द्योतः) **नन्वाद्गुण इति** ॥ नन्विक्स्थानिकत्वादयमपि इग्लक्षणः । न चात्राप्यनुवृत्तमिक इति स्वरूपपरम् । उत्तरसूत्रे इव स्वरूपपदार्थकत्वव्यवस्थापकचशब्दाभावादिति चेत् । न, । **इको गुणवृद्धी** इति संपूर्णमनुवर्त्य यत्रेदं तत्र न धात्वित्युपतिष्ठत इत्यर्थेनास्यापि परिभाषात्वाङ्गीकार इति भावात् । यद्वा यत्रेदं तद्विहिते गुणवृद्धी नेत्यर्थः । तद्वक्ष्यति **'यत्रेक्परिभाषा व्याप्रियते तत्रायं निषेधः'** इति **इक्प्रकरणादिति** भाष्यप्रतीके ॥ अर्थाधिकारेण स्वरूपपरस्यैवेक इत्यस्यानुवर्तनाद्वा ॥

( समाधानभाष्यम् )

**[2]वहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

(प्रदीपः) **वहिरङ्ग इति** । यदा पूर्वं प्रत्ययः, पश्चादुपसर्गयोगस्त[3]दा प्रतिषेधोऽन्तरङ्गो गुणो वहिरङ्गः ॥ [4]यदा तु पूर्वमुपसर्गयोगस्तदा गुणोऽन्तरङ्गः पश्चात्प्रत्य[5]योत्पत्तौ निषेधो वहिरङ्गः । [6]सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः ॥ ननु **नाजानन्तर्य** इति निषेधात् कथं परिभाषाप्रवृत्तिः ॥ यत्र कार्यविधा[7]वानन्तर्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषाया यथाऽक्षद्यूरिति । तत्र **हीको यणचीति** वचनादि[8]ग्चोराश्रयणम् । अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः ॥

(उद्द्योतः) **यदेति** । **पूर्वं धातुः साधनेनेति** सिद्धान्तपक्षे इत्यर्थः ॥ **यदात्विति** । **पूर्वं धातुरुपसर्गेणेति** पक्षे पूर्वमेव जातस्य निषेधायोगादिति भावः ॥ **वहिरङ्गस्यासिद्धत्वादिति** । [9]द्वितीये बहिरङ्गनिमित्तस्यासिद्धत्वाद् विधिप्रवृत्तिकालेऽनिष्पन्नत्वात् निषेधाप्राप्त्येष्टसिद्धिरित्यर्थः ॥ एतेन जातस्य वहिरङ्गस्यान्तरङ्गे कर्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जातेन्तरङ्गे पश्चात्प्राप्तवहिरङ्गस्यानेनासिद्धत्वप्रतिपादने मानाभावः । फलाभावो ज्ञापकविरोधश्चेत्यपास्तम् ॥ [10]परं त्वयं पक्षः सुद्कात्पूर्वं इत्यादिसूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक् ॥ **नन्विति** । इयं च **षत्वतुकोरिति** [11]सूत्रेण ज्ञापिता । अन्यथा वहिरङ्गासिद्धत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ **अचोरिति** । द्वित्वमविवक्षितम् धर्मिग्राहकमानस्य तथैव सत्त्वात् । **अनुपस्थानमिति** । अस्यात्रेत्यादिः ॥ **तत्रहीति** । ततश्च यण्यूङसिद्धो नेत्यर्थः ॥ ते[12]नासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते । अत एव भाष्ये—**विप्रतिषेधसूत्रभिन्नस्थले न क्वाप्ये**[13]तदुल्लेखो यथाऽसिद्धपरिभाषाज्ञापकं **विप्रतिषेधसूत्रे** उक्तमपि पुनर्वाहऊठ् सूत्रे उक्तमिति विवरणकृतः ॥ **अस्मिन्निति** । निषेधस्य प्राप्तिपूर्वकत्वात्पश्चात्प्रवर्तमाने इत्यर्थः ॥

( लाघवभाष्यम् )

**[14]यद्येवं, नार्थो धातुग्रहणेन ॥**

( आक्षेपभाष्यम् )

**[15]इह कस्मान्न भवति लूञ् लविता लवितुम् ? ।**

( समाधानभाष्यम् )

**[16]आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥**

( द्वितीयपक्षस्वीकारभाष्यम् )

**अथवा[17]—पुनरस्तु गुणवृद्धिविशेषणम् ॥**

( आक्षेपस्मारणभाष्यम् )

**ननुचोक्तम्—क्नोपयतीत्यत्रापि प्राप्नोतीति ॥**

(उद्द्योतः) क्नूय् धातोर्णिचि पुकि लोपो व्योरिति यलोपः ।

( समाधानभाष्यम् )

**नैष दोषः,**

**निपातनात्सिद्धम् ॥**

---

१ प्रथमपक्षोक्तदोषोद्धाराय पृच्छति—कथमिति ॥

२ उक्तदोषोद्धारं सिद्धान्ती दर्शयति—वहिरङ्ग इति ॥

३ तदेति । निषेधस्तु लोलुवादावेकपदाश्रितगुणाभावाय सफल इति भावः ॥ छाया ॥

४ एकदेश्युक्तिमाह—यदात्विति ॥ छाया ॥

५ प्रत्ययोत्पत्ताविति । नलोपे च सति प्रवृत्तियोग्य इति शेषः ॥छाया॥

६ अत्र पक्षे भाष्यविरोधं परिहरति ( एकदेशी )—सर्वथेति ॥ छाया ॥

७ आनन्तर्येणेति । अन्यप्राप्तियोगिकानन्तर्येणेत्यर्थः ॥ छाया ॥

८ इगचोरिति । निमित्तभूताच्प्रतियोगिकानन्तर्यानुयोगिनोऽज्रूपस्येक इत्यर्थः ॥ छाया ॥

९ आद्ये जातस्य समकालप्राप्तस्य वा वहिरङ्गस्य गुणस्यासिद्धत्वेन निषेध्याभावेन निषेधो नेत्यर्थस्य स्पष्टत्वादाह—द्वितीय इति । तत्र त्वित्यर्थः ॥ वहिरङ्गनिमित्तस्येति । वहिरङ्गनिषेधनिमित्तनलोपनिमित्तकस्येत्यर्थः॥छाया॥

१० 'यदातु' इत्यत्र तुना सूचितामरुचिमाह—परंत्विति ॥ छाया ॥

११ सूत्रेणेति । सूत्रस्थतुग्ग्रहणेनेत्यर्थः ॥ छाया ॥

१२ तेनेति । तुग्ग्रहणेनेत्यर्थः ॥ छाया ॥

१३ एतदिति । सज्ञापकनिषेधेत्यर्थः ॥ छाया ॥

१४ लाघवमपि दर्शयति—यद्येवमिति ॥ छाया ॥

१५ [ धातुग्रहणाभावे प्रयोगसिद्धिं पृच्छति]पर आह—इहेति ॥ छाया ॥

१६ सिद्धान्ती समाधत्ते—आर्धेति ॥ छाया ॥

१७ 'यथेच्छसीत्युक्त्यनुरोधेन सिद्धान्त्येव द्वितीयपक्षदूषणोद्धाराय स्वीकरोति—अथवेति ॥ यद्यपि "अथवा पुनरस्तु गुणवृद्धिविशेषणम् ॥ कथं क्नोपयतीति ? ॥ परिगणनं कर्तव्यम्—" भाष्यपाठो विवरणकृन्नारायणादिभिर्व्याख्यातः । तथापि प्रचुरपाठ एवाश्रितः ॥ स एव दूषणमुद्धर्तुमनुवदति—ननु चेति ॥ छाया ॥

छात्रस्य वा प्रश्नग्रन्थः ॥

किं निपातनम्? ॥

"चेले क्नोपेः"[1] इति ॥

( इत्यार्धधातुकपदार्थान्वयविचाराधिकरणम् )

---

( अथ परिगणनाधिकरणम् )

( भाष्यम् )

परिगणनं[2] कर्तव्यम्—

( ११८ परिगणनपूर्वपक्षिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ यङ्यक्क्यवलोपे प्रतिषेधः ॥ * ॥

( भाष्यम् )

यङ्यक्क्यवलोपे प्रतिषेधो वक्तव्यः ॥

यङ्—बेभिदिता मरीमृजः ॥

यक्—कुषुभिता मगधकः ॥

क्य—समिधिता दृषदकः ॥

वलोपे-जीरदानुः[3] ॥

(प्रदीपः) यङ्यक्क्यवलोप इति । व इत्यत्राकारोऽपि विवक्षितः । तेन धातुपाठे योऽकारान्तः पठितस्तस्य[4] ग्रहणम् । अन्यथा स्रिविः कथं निवार्येत ॥ बेभिदितेति । बेभिदशब्दात्तृच्, इट्, यस्य हल इति यलोपः[5] ॥ मरीमृज इति । यङोऽचि चेति यङो लुक्[6] ॥ कुषुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू ताभ्यां यक् । ण्वुल्तृचौ । यस्य हल इति यलोपः ॥ समिद्दृषच्छब्दाभ्यां क्यजन्ताभ्यां प्रत्ययौ ण्वुल्तृचौ । क्यस्य विभाषेति यलोपः ॥

(उद्द्योतः) वाक्यकारः सूत्रेऽव्याप्त्यतिव्याप्तिपरिहाराय परिगणनमाह—भाष्ये परिगणनमिति ॥ अत्र यस्य हल इति लोपः समुदायलोप इति मत्वा यक्क्ययोः परिगणनं बेभिदितेत्युदाहरणं च बोध्यम् ॥

( भाष्यम् )

किं प्रयोजनम् ॥

( ११८ परिगणनसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥)

## ॥ * ॥ नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् )

नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो मा भूदिति ॥

नुम्लोपे—अभाजि, रागः, उपबर्हणम् ॥

स्त्रिवेः—आस्रेमाणम् ॥

अनुबन्धलोपे—लूञ् लविता लवितुम् ॥

(प्रदीपः) नुम्लोप इति । नुमिति नकारस्य पूर्वाचार्यसंज्ञा ॥ उपबर्हणमिति । बृहि वृद्धौ इदित्वान्नुम् । बृंहेरच्यनिटीति वार्तिकेन नलोपः ॥ आस्रेमाणमिति । आस्रेमाणमित्यपि वेदे[7] पठ्यते । तत्र नञ्पूर्वात् स्त्रिवेर्मनिन् प्रत्ययो वकारलोपः ॥ ऊडादेशश्छान्दसत्वाद्वकारस्य न भवति ॥ परिगणने सति धातुग्रहणं न कर्तव्यं भवतीत्यनुबन्धलोपः प्रयोजनत्वेन पठितः ॥

(उद्द्योतः) ननु भञ्जिरञ्ज्योरौपदेशिकनस्यैव 'भञ्जेश्च चिणि' 'रञ्जेश्च' घञि चेत्यादिना लोप इति नुम्लोप इत्यसङ्गतमत आह—नुमितीति ॥ नन्वनिदिद्बृहिणा इदं सिद्धमत आह—बृहि वृद्धाविति । स नास्त्येवेति पूर्वपक्ष्याशयः ॥ ऊडादेश इति । ज्वरत्वरस्रिव्यवीत्यनेन ॥

( आक्षेपभाष्यम् )

यदि[10] परिगणनं क्रियते, 'स्यदः, प्रश्रथः, हिमश्रथः' इत्यत्रापि प्राप्नोति ॥

(उद्द्योतः) भाष्ये इत्यत्रापि प्राप्नोतीति । वृद्धिरिति शेषः ॥ न प्राप्नोतीति पाठे—निषेध इति[11] शेषः ॥

---

१ इतीति । अयं भावः—यलोपार्थं निपातनमावश्यकम् । अन्यथा वर्णमात्राश्रयेऽन्तरङ्गे यलोपे कार्ये बहिरङ्गपुकोऽसिद्धत्वेन यलोपो न स्यात् । एवं च तेनैव गुणोऽपि भविष्यति ॥ तदेवं पक्षद्वयमपि निर्दुष्टमिति सिद्धम् ॥ तत्र त्वाद्यो लघुभूतो धातुग्रहणासत्त्वात् । द्वितीयस्तु गुरुभूतस्तत्र तदावश्यकत्वादिति स्थितम् ॥ छाया ॥

२ परिगणनमिति । लोपप्रतियोगिनामिति शेषः ॥ यङिति । तथा च 'न यङ्यक्क्यवलोप आर्धधातुके' इति सूत्रं कार्यम् । धातुग्रहणं च न कार्यमुभयथापीति भावः ॥ छाया ॥

३ जीरदानुरिति । 'जीवे रदानुः' इति [ हयवरट्सूत्रभाष्योक्तरीत्या ] रदानुः । 'लोपो व्योः' इति वलोपः ॥ छाया ॥

४ पठित इति । 'जीव' इत्यस्यैकदेश इति भावः ॥ छाया ॥

५ यलोप इति । समुदायलोप इति भावः ॥ छाया ॥

६ यङोऽचीति । यङन्तान्मरीमृज्यशब्दात्पचाद्यचीत्यादिः ॥ वस्तुतस्तु मरीमृजक इत्येव पाठः, भाष्ये—'अनारम्भो वा' इत्यग्रे तथैवानुवाददर्शनात् । 'यत्र तर्हि—' इत्यादिना यङ्लुगन्ते बहुषु दोषस्य वक्ष्यमाणत्वाच्च । अत एव पूर्वोत्तरसाहचर्यमपि संगतम् 'यस्य हलः' इति समुदायलोप इति त्वयाऽवश्यं वक्तव्यमेवेति यङन्तान्मरीमृज्यशब्दाण्ण्वुल्यपि न दोष इति कैयटश्चिन्त्य एवेति बोध्यम् ॥ प्रत्ययौ तृच्ण्वुलौ 'ण्वुल्तृचौ' इति सूत्रोल्लेखः । एवं प्रागपि । अन्यथा यथासंख्याभावेनासंगतिः स्पष्टैव । 'तथा च 'ण्वुल्तृचौ' इति सूत्रेण प्रत्ययाविति तत्रापि बोध्यम् ॥ छाया ॥

७ ( ऋ० सं० ३।२९।१३ )

८ ननु परिगणनाभावेऽपि धातुग्रहणादेवानुबन्धलोपे प्रतिषेधाभावः सिद्ध इति कथमेतत्परिगणनप्रयोजनमत आह—परिगणने सतीति ॥ छाया ॥

९ ऊडादेश इतीति ॥ यत्तु 'च्छ्वोः—' इत्यूडिति देवः । तन्न, परत्वाद्विशेषविहितत्वाच्च 'ज्वरत्वर—' इत्यस्यैवौचित्यात् । तेन वस्यैव, अनेन वोपधयोरिति फलभेदादप्यस्यैवौचित्याच्चेति ध्वनयन्नाह—ज्वरेति ॥ छाया ॥ प्रदीपे वकारमात्रोपादानमपि वलोपस्य दुर्लभतावारणाय न तु वकारमात्रस्थानिकोडादेशविधायकसूत्रसूचनार्थेति बोध्यम् ॥ दाधिमथाः ॥

१० तटस्थ आक्षिपति—यदीति ॥

११ शेष इति । परिगणनान्तर्गतत्वादिति भावः ॥ छाया ॥

( समाधानभाष्यम् )

**वक्ष्यत्येतद्[1] * निपातनात्स्यदादिषु * इति ॥**

(उद्द्योतः) निपातनादिति ॥ 'स्यदो जवे' 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति निपातनम् । अस्य नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपातनवैयर्थ्या[2]पत्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि[3] परिगणनं कर्तव्यम् ॥**

( परिगणनप्रत्याख्यानभाष्यम् )

**न[4] कर्तव्यम् ॥**

( आक्षेपभाष्यम् )

**ञुम्लोपे[5] कस्मान्न भवति ? ॥**

( ११९ सिद्धान्तसमाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ इक्प्रकरणाञ्ञुम्लोपे वृद्धिः ॥ * ॥**

( भाष्यम् )

**इग्लक्षणयो[6]र्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः ॥**

(प्रदीपः) इक्प्रकरणादिति । तेन[7] यत्रेक्परिभाषा स्थान्यन्तरनिवृत्तये व्याप्रियते तत्रायं निषेधः ॥

(उद्द्योतः) तेनेति । अन्यथौर्गुण इत्यादावपि परिभाषाप्रवृत्तौ तस्यापीग्लक्षणत्वे लैगवायन इत्यादौ निषेधः स्यादिति भावः ॥ यत्रेक्परिभाषेति । न चेक इत्यनुवर्त्य 'इको न ते' इत्येव व्याख्यानमुचितमिति वाच्यम् । मरीमृजः सरीसृप इत्यादाविकः प्रत्ययाव्यवहितपूर्वत्वाभावान्निषेधानापत्तेः । तदाह भाष्ये इग्लक्षणयोरिति । यथैतदर्थलाभस्तथोक्तम् । इक्परिभाषालक्षणयोरिति तदर्थः ॥

( आक्षेपभाष्यम् )

**यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः 'स्यदः, प्रश्रथः हिमश्रथः' इत्यत्र न प्राप्नोति[8] ।**

**इह च प्राप्नोति-'अवोदः[9], एधः, ओद्मः' इति ॥**

( १२० सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ निपातनात्स्यदादिषु ॥ * ॥**

( भाष्यम् )

**निपातनात्स्यदादिषु प्रतिषेधो भविष्यति, न च[10] भविष्यति ॥**

( आक्षेपभाष्यम् )

**यदी[11]ग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, स्निव्यनुबन्धलोपे कथम् ? ॥**

( १२१ सिद्धान्तसमाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् ॥ * ॥**

( भाष्यम् )

**आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥**

(प्रदीपः) प्रत्ययाश्रयत्वादिति । लोपविशेषणमार्धधातुकग्रहणमित्यर्थः ॥

(उद्द्योतः) लोपेति । प्र[12]त्ययाश्रयत्वादिति भाष्यस्य लोपे आर्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः ॥

( आक्षेपभाष्यम् )

**य[13]द्यार्धधातुकनिमित्ते लोपे प्रतिषेधः, 'जीरऽदानुः' ( ऋ० सं० ५।८३।१ ) अत्र न प्राप्नोति ॥**

---

१ समाधत्ते पूर्वपक्षी—वक्ष्यतीति ॥ अनुपदं वार्तिककृदिति शेषः ॥ छाया ॥

२ ननु निपातनं नलोपमात्रार्थमत आह—अस्येति ॥ छाया ॥ निपातनेति । 'यावता विना यदनुपपन्नं तावदेव तेन ज्ञाप्यते' इति न्यायेन न लोपवृद्ध्यभावयोरुभयोरपि ज्ञापनादिति भावः ॥ दाधिमथाः ॥

३ तटस्थः पृच्छति—तत्तर्हीति ॥

४ सिद्धान्ती समाधत्ते—न कर्तव्यमिति ॥

५ तटस्थः पृच्छति—ञुमिति ॥ प्रतिषेध इति शेषः ॥

६ सिद्धान्ती समाधत्ते—इगिति ॥ उपबर्हणमित्यत्र तु समाधानं वक्ष्यते ॥ छाया ॥

७ नन्विकः प्रकरणात्प्रस्तावादधिकारात्तत्र वृद्धिरित्यर्थोऽस्य वार्तिकस्य वाच्यः । एवं चात्र पक्षद्वयेऽपि इकः इक्स्थानिके गुणवृद्धी न स्त इति सूत्रार्थ इति ञुम्लोपे इष्टसिद्धिः । परंतूत्तरसूत्रे एवमर्थेनानिर्वाहः पौरोहित्यं लैगवायन इत्यादौ दोषापत्तेः, किं चोक्तवार्तिकार्थो बाधितः, नहि षष्ठ्यन्तमिक्पदमर्थपरं प्रकृतं किंतु सान्तं प्रथमान्तं पदपरम् । न च शब्दाधिकारादत्र तथा, अर्थाधिकारे दोषप्रात्यवगत्या शब्दाधिकाराश्रयणेऽप्यर्थाधिकारेऽदोषेण तथा दुर्वचत्वात् । तावतापि तत्र सान्तस्यैव प्रस्तुतत्वेनेकः प्रस्तुतत्वाभावेन बाधितत्वाच्च । नचेक्पदेन सान्तं लक्ष्यते, स्वायत्ते शब्दप्रयोगे निर्मूललक्षणाया अनौचित्यादितिचेत्; उच्यते—इगिति परिभाषाप्रतीकम् । अतएव प्रस्तावार्थकप्रकरणपदं सार्थकम् । अन्यथाऽनुवृत्तेरित्येव वदेत् । तथा च यतः स्थानिनियामिकेक्परिभाषां प्रस्तुत्य निषेध्यारम्भः, अतः परिभाषाविषयकत्वं निषेधमात्रस्येति ञुम्लोपेऽतत्त्वाद्वृद्धिरित्यर्थः । इति तदेतदभिप्रेत्याह—तेनेति । स्थानिनियामिकेक्परिभाषाप्रस्तावेनेत्यर्थः ॥ छाया ॥

८ न प्राप्नोतीति । प्रतिषेध इति शेषः ॥ प्राप्नोतीत्यत्रापि स एव शेषः ॥ तथाचाव्याप्त्यतिव्याप्ती इति भावः ॥ छाया ॥

९ अवोद इति । अत्र नलोपगुणयोः कृतयोः 'एङि पररूपम्' इति पररूपमिति बोध्यम् । केचित्तु निपातनसाहचर्यमात्रेणेदमुदाहृतम् । नलोपमात्रनिपातनेऽप्याद्गुण इति गुणेन सिद्धत्वात् इति । अन्ये त्वेतद्भाष्यप्रामाण्यादेवोपसर्गाविवक्षेति वदन्ति ॥ छाया ॥

१० नचेति । अवोदादिष्वित्यादिः ॥ छाया ॥

११ परिगणनाभावे सर्वदोषानुद्धारेण तदर्थं कर्तव्यान्तरापेक्षायाः परिगणनमेव युक्तमित्याशयेनाह—यदीति ॥ छाया ॥

१२ ननु 'प्रतिषेधस्यार्धधातुकरूपप्रत्ययनिमित्तकत्वात्' इति वार्तिकार्थाङ्गीकारे द्वितीयपक्षलाभेन तत्र धातुग्रहणसत्त्वेन लवितेत्यादौ दोषवारणेऽपि आक्षेमाणमित्यत्र दोष एवेत्यत आह—प्रत्ययाश्रयेति ॥ तथा च स्निवेर्वलोपस्य वल्निमित्तकत्वादन्येनुबन्धलोपस्यानैमित्तिकत्वान्न प्रतिषेधप्रसङ्ग इति भावः ॥ छाया ॥

१३ तदेवं परिगणने द्वयोः साम्येऽपि तदभावे आद्य एव युक्त इति स्थितम् ॥ तत्र शङ्कते—यद्यार्धेति ॥ जीरेति । तर्हीत्यादिः । न प्राप्नोतीति । प्रतिषेध इति शेषः ॥ छाया ॥

(प्रदीपः) **जीरदानुरिति** । वर्णनिमित्तोऽत्र वकारलोपो न प्रत्ययनिमित्तः ॥

(उद्द्योतः) न प्रत्ययेति । प्रत्ययस्याश्रुतत्वादनाक्षिप्तत्वाच्चेति भावः ॥

( १२३ सिद्धान्तसमाधानवार्तिकम् ॥ ६ ॥)

**॥ * ॥ रकि ज्यः संप्रसारणम् ॥ * ॥**

( भाष्यम् )

**नैतज्जीवे रूपम्, रक्येतज्ज्यः संप्रसारणं भवति॥**

(प्रदीपः) **रकि ज्य इति** । एवं च जीरेत्यवग्रहः सिध्यति । बहुव्रीहित्वाच्च जीरदानुशब्दे रेफाकार उदात्तः ॥

(उद्द्योतः) अवश्यं जीरदानुशब्दस्यैवमेव व्युत्पत्तिःकार्येत्याह—**एवं चेति** । अवान्तरपदत्वे सत्येवावग्रह इत्युत्सर्गादिति भावः ॥ ननु रदानुप्रत्यये रेफाकार उदात्तः, समासे त्वन्तोदात्तः स्यादत आह—**बहिति** । जीरस्य प्रत्ययस्वरेणान्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः ॥ जीवेर्विंचि तु गुणनिषेधो भवत्येव ॥ एतेनार्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम् ॥ वार्तिकविरोधात्[1] । यङोऽचि[2] चेत्यत्रापि तत्त्वेनानिमित्तत्वाल्लोलुव इत्याद्यसिद्ध्यापत्तेश्च ॥ धिन्व्यादिभ्यस्तु[3] विजभाव एव ॥

( एकदेशिभाष्यम् )

**यावता[4] चेदानीं रकि, जीवेरपि सिद्धं भवति ॥**

(उद्द्योतः) भाष्ये **यावता चेदानीमिति** । क्त्वेन गुणनिषेधादिति भावः । अत्र वलोपो **लोपो व्योरित्यनेन** ॥ इदं चे[5] यथाश्रुतसूत्रमते । वलोपप्रत्याख्याने तु **रकि ज्य** इत्येव शरणम् ॥

( पूर्वपक्षभाष्यम् )

**कथमुपबर्हणम्[6] ? ॥**

( सिद्धान्तिभाष्यम् )

**बृहिः प्रकृत्यन्तरम् ॥**

(प्रदीपः) **बृहिरिति** । बृह बृहि वृद्धाविति पाठात् ॥

( आक्षेपभाष्यम् )

**कथं[7] ज्ञायते—बृहिः प्रकृत्यन्तरमिति ? ॥**

( सिद्धान्तिभाष्यम् )

**अचीति हि लोप उच्यते[8], अनजादावपि दृश्यते—निबृह्यते ।**

**अनिटीति चोच्यते, इडादावपि दृश्यते—निबर्हिता निबर्हितुमिति ।**

**अजादावपि न दृश्यते—बृंहयति बृंहकः ॥**

( उपसंहारभाष्यम् )

**तस्मान्नार्थः परिगणनेन ॥**

( आक्षेपभाष्यम् )

**यदि[9] परिगणनं न क्रियते 'भेद्यते, छेद्यते' अत्रापि प्राप्नोति ॥**

(प्रदीपः) **भेद्यत इति** । गुणो णिलोपश्चार्धधातुकनिमित्त इति पक्षद्वयेऽपि दोषः । अपवादविषयपरिहाराच्चान्तरङ्गोऽपि गुणोत्र न प्रवर्तत इत्युपन्यासः ॥

(उद्द्योतः) **पक्षद्वयेऽपीति** । तन्त्रेणोभयविशेषणत्वपक्षेऽपीत्यपि[10] बोध्यम् ॥ **गुणो** ण्याश्रयः । **णिलोपो** यगाश्रयः ॥ **अपवादेति** । प्रकल्प्य वापवादविषयमिति[11] परिभाषयेति भावः ॥ एतेन गुणप्रतिषेधौ यत्र समानकालौ, तत्र चरितार्थौ निषेधो नान्तरङ्गं गुणं बाधितुं क्षमत इत्यपास्तम् ॥ न च भेद्यते इत्यत्राचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन तत्राभावातिदेशस्य च सत्त्वेन स्या-

---

१ एतेनेत्यस्यार्थमाह—वार्तिकेति । 'वलोपे प्रतिषेधः' इति वार्तिकेत्यर्थः ॥ छाया ॥

२ ननु वार्तिकं खण्डितमेवेत्यत आह—यङोऽचीति ॥ जीरदानुरिति तदुदाहरणपरभाष्यविरोधाच्चेत्यपि बोध्यम् ॥ छाया ॥

३ नन्वेवमपि धिन्व्यादिभ्यो विचि ( परिगणनसत्त्वे ) सूत्राभावे (वा) गुणः ( परिगणनाभावे ) सूत्रसत्त्वे (वा) गुणनिषेध इति फलभेदापत्तिरत आह—धिव्यादिभ्य इति । ( परिगणनस्य ) सूत्रस्य (च) प्रत्याख्यानपरभाष्यप्रामाण्यादिति भावः ॥ एवं तु जीवेरपि तदभावो बोध्यः ॥ छाया ॥

४ एकदेश्याह—यावतेति । इदानीं परिगणनप्रत्याख्यानकाले । जीवेरपीति । किं जिनातेः संप्रसारणपूर्वरूपदीर्घविधानक्लेशेनेति भावः ॥ छाया ॥

५ एकदेशित्वमेव सूचयति—इदं चेति ॥

६ 'तुम्लोपे कस्मान्न भवति' इति शङ्काग्रन्थेन 'अभाजि, रागः उपबर्हणम्' इति त्रयाणामुपस्थितावपि "इकप्रकरणात्" इति सिद्धान्तवार्तिके वृद्धिग्रहणेन 'नलोपे वृद्धेरेवानुपपत्तिर्दर्शिता परिगणनाभावे । उपबर्हणमित्यत्र तु नलोप एव नेति न निषेधापत्तिर्गुणस्य' इति सूचितं प्रकटीकारयितुं तटस्थः पृच्छति—कथमुपबर्हणमिति ॥

७ उक्तमभिप्रेतं धातुपाठमजानन् शङ्कते—कथमिति ॥ छाया ॥

८ उच्यत इति ॥ 'बृंहेरच्यनिटि' इति वार्तिकेनेति भावः । बृंहक इति ॥ तथा च वार्तिकमव्याप्त्यतिव्याप्तिदर्शनान्नाश्रयणीयम् । किंतु तत्प्रकृत्यन्तरमेवाङ्गीकार्यमिति भावः ॥ छाया ॥

९ तदेवं प्रागुक्तदोषोद्धारेण परिगणने खण्डिते गुरुलघुभूतद्वयादिमूलभूततत्पुरुषपक्ष एवायुक्त इत्याशयेनाशङ्कते—यदीति ॥ प्राप्नोतीति । निषेध इति शेषः ॥ विभज्यान्वाख्याने भिदादेर्ण्यन्तात्कर्मणि लटि तङि यकि भिदइयत इति स्थिते नित्यत्वात्पूर्वं णिलोपे यकमपेक्ष्य प्रवृत्ते प्रत्ययलक्षणेन णिचमपेक्ष्य प्राप्नुवतो लघूपधगुणस्यानेन निषेधो द्वयोरप्यार्धधातुकनिमित्तकत्वात्पक्षद्वये प्राप्नोतीत्यर्थः ॥ छाया ॥

१० पक्षद्वयेपीत्यनेन—भाष्येणोभयविशेषणत्वरूपतृतीयपक्षस्य प्रागनुक्तत्वात्तदुक्त्यनर्हत्वं ध्वन्यते । तथा च तत्पक्षसमुच्चायकोऽपिः । तत्सूचितमर्थमाह—तन्त्रेणेति । तन्त्रादिनेत्यर्थः ॥ तथा च गौरवं स्पष्टम् । एतद्दोषदूष्यत्वं तद्विविक्तदोषाभावश्चेति ध्वनितं तृतीयपक्षे दोषं योजयितुं विभिन्नार्धधातुकनिमित्तकत्वमाह—गुण इति ॥ छाया ॥

११ प्रकल्प्यवेति वाशब्दः 'पूर्वं ह्यपवादा' इत्यपेक्षः तदनुक्तिस्तु लक्ष्यैकचक्षुष्कविषयकादितो लक्षणैकचक्षुष्कविषयकत्वेन दुर्बलत्वात् ॥ दाधि० ॥

निनि णिचि सति अभवतो निषेधस्य लोपेऽव्यभावातिदेशान्न दोष इति वाच्यम्। स्थानिवद्भावाश्रयणे सूत्रप्रत्याख्यानमेवेति, तदनाश्रयणेन सूत्रवत् तदनाश्रयणेनैवायं दोष इत्याशयात्॥

( समाधानभाष्यम् )

**नैष दोषः। धातुलोप इति नैवं विज्ञायते— 'धातोर्लोपो धातुलोपो धातुलोपे' इति॥**

**कथं तर्हि?॥**

**'धातोर्लोपो यस्मिंस्तदिदं[1] धातुलोपं धातुलोपे' इति॥**

(प्रदीपः) **कथं तर्हीति** । बहुव्रीहौ सत्येकार्ध[2]धातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति भेद्यते इत्यादौ भिन्ननिमित्तत्वाद्गुणो न निषिध्यते॥

( उपसंहारभाष्यम् )

**तस्मादिग्लक्षणा वृद्धिः॥**

(उद्योतः) भाष्ये तस्मादिग्[3]लक्षणा वृद्धिरिति । प्रतिषेध्येति शेषः। अत[4] एवाभाजीत्यादिसिद्धिरिति भावः॥

( इति परिगणनाधिकरणम् )

( अथेग्लक्षणत्वे दोषनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**यदि[5] तर्हीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, 'पापचकः, पापठकः, मगधकः, दृषदकः' अत्र न[6] प्राप्नोति॥**

( १२३ सिद्धान्तिसमाधानवार्तिकम्॥ ७॥ )

**॥ * ॥ अल्लोपस्य[7] स्थानिवत्त्वात्॥ * ॥**

( भाष्यम् )

**अकारलोपे कृते तस्य स्थानिवत्त्वाद् गुणवृद्धी न भविष्यतः॥**

(उद्योतः) अकारलोप इति । अतो लोप इत्यनेन। यङ्लुगन्ताण्ण्वुलि तु सूत्रमतेऽपि निषेधो न, आर्धधातुकनिमित्तलोपाभावात्॥

( इतीग्लक्षणत्वे दोषनिराकरणम् )

( अथ सूत्रप्रत्याख्यानाधिकरणम्॥ )

( १२४ सिद्धान्तवार्तिकम्॥ ८॥ )

**॥ * ॥ अनारम्भो वा॥ * ॥**

( भाष्यम् )

**अनारम्भो वा पुनरस्य योगस्य न्याय्यः॥**

( आक्षेपभाष्यम् )

**कथं[8] 'बेभिदिता मरीमृजकः कुसुमिता समिधिता' इति?॥**

( समाधानभाष्यम् )

**अत्राप्य[9]कारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः॥**

(उद्योतः) मरीमृजक इति । अत्राल्लोपस्य स्थानिवत्त्वे क्ङित्यजादौ वेष्यत इति विकल्पो न, व्यवस्थितविभाषाश्रयणात्॥

( आक्षेपभाष्यम् )

**यत्र[10] तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः॥**

**क्व[11] च स्थानिवद्भावो नास्ति?॥**

**यत्र[12] हलचोरादेशः लोलुवः पोपुवः मरीमृजः सरीसृप इति॥**

(प्रदीपः) **यत्र हलचोरादेश इति** । लुका कृत्स्नो यङ् लुप्यत इत्याशयः[13]॥

१ यस्मिन्निति। गमकत्वाज्ज्ञापकाद्वाधिकरणपदो बहुव्रीहिः। तत्र च श्रुतान्यपदार्थपरित्यागेनाश्रुतान्यपदार्थकल्पनायोगादार्धधातुकमेवान्यपदार्थत्वेनाश्रीयते। अतएव भाष्ये नपुंसकमुक्तम्। तथाच धातुलोपविशेष्यार्धधातुकविशेष्यता गुणवृद्ध्योरिति भावः॥ छाया॥

२ सत्येकेति। नचोभयविशेषणत्वरूपतृतीयपक्षेऽपि प्रत्यासत्त्या एकार्धधातुकनिमित्तकत्वमेवेष्टम्, तथासति बहुव्रीहिणैव सिद्धे गुरुभूततत्राद्याश्रयणादैयर्थ्यापत्तेः॥

३ परिगणनखण्डनाय 'इक् प्रकरणात्' इत्यारभ्य प्रसक्तानुप्रसक्तं बहुव्रीहिपर्यवसानेन परिसमाप्य तद्वचनार्थं पूर्वपक्षिणः प्रश्नावकाशदानायोपसंहरति—तस्मादिगित्यादि यस्मात्सर्वे दोषा निरस्तास्तस्मादित्यर्थः॥ छाया॥

४ अत एवेति। इग्लक्षणवृद्धेरेव प्रतिषेधाङ्गीकारादेवेत्यर्थः। अन्यथा बहुव्रीह्यङ्गीकारेऽपि नलोपवृद्ध्योरेकनिमित्तत्वेन प्रतिषेधस्य दुष्परिहरत्वमेवेति भावः॥

५ पूर्वपक्षीग्लक्षणत्वाङ्गीकारेऽव्याप्तिं प्रसजति—यदि तर्हीति॥ पापचक इत्यादि। पचिपठी यङन्तौ द्वित्वं हलादिः शेषः दीर्घोऽकितः। ततो ण्वुल्। अतो लोपः। यस्य हल इति यलोपः॥ गगधात्कण्ड्वादियक्। दृषदः सुप इति क्यच्॥ छाया॥

६ न प्राप्नोतीति। 'अत उपधायाः' इति वृद्धेरनिग्लक्षणत्वान्निषेधो न प्राप्नोतीत्यर्थः॥ छाया॥

७ एतावत्पर्यन्तं सूत्रसमर्थनाय स्थानिवद्भावं विना यथा परिहारः संभावितः स एवोक्तः, इदानीं गत्यन्तराभावात्तेनैवोत्तरमाह सिद्धान्ती—अल्लोपस्येति॥ अकारलोप इति। परत्वाद् 'यस्य हलः' इत्यादियकारलोपोत्तरमित्यादिः॥ छाया॥

८ सूत्रारम्भवादी पूर्वपक्षी पृच्छति—कथमिति॥

९ सिद्धान्ती प्रत्याख्याता समाधत्ते—अत्रापीति॥

१० आरम्भवादी आक्षिपति—यत्र तर्हीति॥ छाया॥

११ तटस्थः पृच्छति—क्वचेति॥

१२ आरम्भवादी तत्स्थलं दर्शयति—यत्रेति॥

१३ इत्याशय इति। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि 'यङोऽचि' इत्यनेन सस्वरस्य यङो लुक् समुदायस्य विवक्षितत्वादिति भावः॥

( समाधानभाष्यम् )

[1] अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यतः ॥

(प्रदीपः) अत्रापीति । कृतेऽप्यकारलोपे एकदेश[2]विकृतमनन्यवद्भवतीति यकारः प्रत्ययसंज्ञो भवत्येवेति भावः ॥

(उद्योतः) नन्वेवं लुक्शास्त्रं व्यर्थं स्यादत आह—कृतेपीति । अवशिष्टे तच्चरितार्थमिति भावः ॥

( समाधानबाधकभाष्यम् )

[3] लुकि कृते न प्राप्नोति ॥

(उद्योतः) भाष्ये लुकि कृते इति । अनवकाशत्वादन्तरङ्गानपीति न्यायाच्च लुकि कृतेऽतोलोपो न प्राप्नोतीत्यर्थः ।

( समाधानसाधकभाष्यम् )

[4] इदमिह संप्रधार्यम्—लुक् क्रियतामल्लोप इति । किमत्र कर्तव्यम्? ॥ परत्वादल्लोपः ॥

(उद्योतः) इतर आशयानभिज्ञ आह—परत्वादिति ॥

( समाधानबाधकभाष्यम् )

[5] नित्यो लुक् । कृतेऽप्यल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति ॥

(प्रदीपः) नित्यो लुगिति । लुक्शास्त्रप्रवृत्तिर्नित्या ।

(उद्योतः) ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह—लुक्शास्त्रेति ॥

( समाधानसाधकभाष्यम् )

[6] लुगप्यनित्यः ॥ कथम्? । अन्यस्य कृतेऽल्लोपे प्राप्नोति, अन्यस्याकृते ॥ "[7] शब्दान्तरस्य च प्राप्नुवन्विधिर्नित्यो भवति" ॥

( समाधानबाधकभाष्यम् )

[8] अनवकाशस्तर्हि लुक् ॥

(प्रदीपः) अनवकाश इति । नाप्राप्ते लोपे लुगारम्भात् ॥

( समाधानसाधकभाष्यम् )

[9] सावकाशो लुक् ॥

कोऽवकाशः? ॥

[10] अवशिष्टः ॥

(प्रदीपः) सावकाश इति । भिन्नविषयौ लुग्लोपौ । अकारस्य लोपो, यकारस्य लुक् । ततश्च नास्ति येन नाप्राप्तिन्यायः ॥

( अभ्युपेत्य समाधानभाष्यम् )

अथापि कथंचिदनवकाशो लुक् स्यादेवमपि न दोषः । [11] अल्लोपे योगविभागः करिष्यते—"अतो लोपः" । ततो "यस्य" यस्य च लोपो भवति । अत इत्येव ॥

किमर्थमिदम्? ॥

लुकं वक्ष्यति तद्बाधनार्थम् ॥

ततो "हलः" हल उत्तरस्य यस्य च लोपो भवतीति ॥

(प्रदीपः) अथापीति । यङोचि चेत्यत्र यकाराकारसमुदायस्य यङ इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्यपदेशस्य गौणत्वादिति भावः ॥

(उद्योतः) गौणत्वादिति । अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम् ॥ किंच[12] भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः यथा व्यथोलिटीति संप्रसारणस्य वकारे चारितार्थ्येऽपि हलादिः शेषबाधकता । भाष्यकारोऽपि मिदचोऽन्त्यादित्यस्य विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति ॥ तस्मात्[13] कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्याऽपवादत्वं भवत्येवेत्याशयः[14] ॥ असंभव एव बाधकत्वमिति वार्तिकानुयायिना सावकाशो लुगित्युक्ते स एव अथापीत्याहेति तदुक्तिः—कथंचिदिति[15] ॥ भाष्ये अत इत्येवेति । अलोन्त्यपरिभाषया अत इत्यनुवृत्तेर्वेति भावः ॥ अयं च लुकोपवादः । एवं चार्थादवशिष्टस्य लुगिति वोध्यम् । अत्र च भ्रस्जो रोपधेति सूत्रादन्यतरस्यां ग्रहणस्य [16] मण्डूकप्लुत्याऽनुवर्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव

---

१ प्रत्याख्याता सिद्धान्ती आह—अत्रापीति योगविभागेनेति भावः ॥ छाया ॥

२ एकदेशेति । शास्त्रीयन्यायः । अतएवार्धाधिकविकारे प्रवृत्तिः ॥ छाया ॥

३ उक्ताशयमजानानः सूत्रारम्भवादी निराचष्टे—लुकीति ॥ छाया ॥

४ प्रत्याख्याताऽकारलोपं समर्थयति—इदमिति ॥

५ सूत्रारम्भवादी निराचष्टे—नित्यो लुगिति ॥

६ प्रत्याख्याता समर्थयति—लुगप्येति ॥ छाया ॥

७ शब्देति । यद्व्यक्तिसंवन्धितया पूर्वं प्राप्तिस्तद्व्यक्तिसंवन्धितयैव पुनः प्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वमिति भावः ॥ एवं च द्वयोरनित्ययोः परत्वादल्लोप इति स्थितम् ॥ छाया ॥

८ सूत्रारम्भवादी नित्यत्वे लुकः खण्डिते सर्वतो बलवन्तमनवकाशत्वमाश्रित्य निराचष्टे—अनवकाश इति ॥

९ प्रत्याख्याता समर्थयति—सावकाश इति ॥

१० अवशिष्ट इति । उक्तरीत्या कृताल्लोपावशिष्टो यकार इत्यर्थः ॥ छाया ॥

११ अल्लोप इति । तत्समीपे यस्य हल इत्यत्रेत्यर्थः । वटे गाव इतिवत्सप्तमी ॥ छाया ॥ वस्तुवस्तु—अल्लोपनिमित्तमित्यर्थः । अन्यथा अल्लोपपदेऽपि तद्विधायकसूत्रे लक्षणाप्याश्रयणीयेति भावः ॥ दाधिमथाः ॥

१२ सावकाश इत्यस्य कैयटीयव्याख्यां खण्डयति—किंचेति । वक्ष्यतीति । प्रमादाविति भावः ॥ छाया ॥

१३ एवं कैयटीयव्याख्यां दूषयित्वा स्वयं भाष्यं योजयति—तस्मादिति । कैयटीयव्याख्याया असंभवादित्यर्थः ॥ छाया ॥

१४ इत्याशय इति । 'अनवकाशस्तर्हि' इति भाष्यस्येति शेषः ॥ सत्यपि संभवे बाधनं भवति । अस्ति च संभवो यदुभयं स्यादिति न्यायेनेति भावः ॥ छाया ॥

१५ कथंचिदितीति । परमतप्रवेश एव क्लेश इति भावः ॥ छाया ॥

१६ अतो लोप इत्यत्रासंबन्धायाह—मण्डूकेति ॥ छाया ॥

पृथगल्लोपो न सर्वत्रेति बोध्यम् ॥ मरीमृज[1] इत्यत्र विकल्पस्तु न। व्यवस्थितविभाषाश्रयणात्। यद्वा[2] तत्र विकल्प इष्ट एव। तदर्थं सूत्रकृतोऽप्येतत्[3]कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः ॥ लोलुवादौ[4] उवङि अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावेऽपि नोपधागुणः, अचः पूर्वत्वेन दृष्टलोल्शब्दात्परस्य गुणे कर्तव्ये पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावसौलभ्यात्। निमित्त[5]त्वेनाश्रितात्पूर्वस्मादित्यर्थे तु न मानम्। अति[6]प्रसङ्गस्य तदनित्यत्वेनैव परिहारात्। भाष्यानुक्तत्वात्तदनित्यत्वाभावेऽपि पूर्वस्मात्परस्याव्यवहितस्यैव ग्रहणेन हेगौरित्यत्रादोषः। अचः[7] पूर्वत्वंशे स्वरग्रहणाद्भाष्यप्रामाण्याच्चाव्यवधानांशबाधेऽप्यत्र तद्बाधे मानाभावात्। अतिदेश[8]प्रवृत्तिप्राक्कालिकं च तदंशेऽव्यवधानं निविष्टम्। किं चाशास्त्रीय[9]स्यापि तस्य तत्स्थानापन्ने तद्धर्मलाभ इति लोकन्यायेनातिदेश इति स्थानिवत्सूत्रे वक्ष्यते। लोलू[10] इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोवित्यादेश इत्याहुः ॥ दरीदृशे[11] इत्यत्राङ्गनिमित्तगुणस्तु न। अस्याङस्तर्कैकगोचरत्वेन लाक्षणिकतया अङ्ग्रहणेनाग्रहणात् ॥ अत एव दरीदृशक इत्यादौ यङन्ताण्ण्वुलि अङ्गनिमित्तगुणाभावः। जंगमक इत्यादौ यङन्ताण्ण्वुलि उपधालोपश्च अनङीति निषेधाप्रवृत्तेः ॥ जङ्गम[12] इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः ॥ निजेगिले[13] इत्यादौ ग्रो यङीति नित्यलत्वमिष्टमेव। सूत्रमतेऽपि न लुमतेति निषेधस्यानित्यत्वाद् यङ्परत्वमस्ति। न वेति विभाषेति सूत्रे भाष्ये चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः ॥ यदि

---

१ इदं सूत्रमावश्यकम्। अन्यथा बहुषु दोषापत्तेरिति प्राञ्चः सर्वे प्राहुः तदयुक्तमिति ध्वनयितुं तदुक्तदोषान्क्रमेण तदुक्तरीतिमङ्गीकृत्य खण्डयति—मरीमृज इत्यादिना ॥ छाया ॥

२ व्यवस्थितविभाषाणां परिगणनादाह—यद्वेति ॥ छाया ॥

३ एतदिति। पृथगल्लोपरूपेत्यर्थः। तथाच गौरवम्। अन्यथा फलभेदापत्तिरिति भावः ॥ छाया ॥

४ ननु लोलुवादावुवङि उपधागुणः स्यात्। नच—'अचः पर' इति स्थानिवत्त्वम्, उवङोऽनादिष्टादचः पूर्वत्वाभावादत आह—लोलुवादाविति ॥ छाया ॥

५ कैयटाद्युक्तिं खण्डयति—निमित्तेति॥ छाया ॥

६ नन्वेवं हे गौरित्यादावतिप्रसङ्गोऽत आह—अतीति। तदिति। पञ्चमीसमासेत्यर्थः ॥ छाया ॥

७ ननु तत्र तस्मिन्नित्यस्य प्रवृत्तिरिति सिद्धान्तभङ्गोऽत आह—अच इति। भाष्येति। चिकीर्षक इत्युदाहरणपरभाष्येत्यर्थः ॥ छाया ॥

८ नन्वतिदेशप्रवृत्त्युत्तरं पूर्वस्मादव्यवहितपरत्वं बाधितमेवात आह—अतीति ॥ छाया ॥

९ ननु पञ्चमीसमासप्रत्याख्याने लोलुवादावनिर्वाहः तत्सत्त्वेऽपि तस्यानित्यत्वेन पक्षेऽनिर्वाहः तस्य लक्ष्यविशेषपरत्वे सुतरामनिर्वाहः। अत एव वैयाकरण इत्यादौ स्वरो न, अन्यथानादिष्टादच इकारात्पूर्वत्वेन दृष्टवकारादेरव्यवहितपरस्यैकारादेरुपस्थित्या आयाद्यादेशापत्तिः स्पष्टैवात आह—किंचेति ॥ तस्य अनादिष्टादचः पूर्वत्वरूपधर्मस्य ॥ वक्ष्यते इति। स्वं रूपमित्यस्याविषये इति भावः ॥ छाया ॥

१० नन्वेवमपि योऽत्रादेश उवङ् सोऽनादिष्टादचः पूर्वत्वं स्थानिद्वारा कथंचिल्लभताम्। ननु तस्येह किंचित्कार्यं विधीयते येनाल्लोपः स्थानिवत्स्यात्। यस्य च कार्यं विधीयते उकारस्य नासावादेशः येन स्थानिद्वारापि पूर्वत्वं लभ्येतात आह—लोलू इत्येति। लोलुवेति। स्थानिवद्भावादचः पूर्व इति भावः ॥ वित्यादेश इति। तथाचास्मिन्कर्तव्येऽल्लोपस्य स्थानिवत्त्वं युक्तमिति नोपधागुणः पञ्चमीसमासाभावेऽपीति सिद्धम् ॥ आहुरित्यनेनारुचिः सूचिता। तद्बीजं तु अशास्त्रीयधर्मातिदेशे मानाभावः। न च स्थानिवत्सूत्रस्थं भाष्यं मानम्, स्वंरूपमित्यस्याविषये लोकन्यायस्य तेन बोध इति तदर्थमावश्यकत्वेन स्थानिवत्सूत्रेणैवान्यत्रापि भवितव्यमिति शास्त्रेण तस्यैव प्रत्यासत्त्याऽतिदेश इत्याशयात्। किं चान्यत्र लोकन्यायप्रवृत्त्याऽल्विधावपि प्रवृत्त्यापत्तिः। न पदान्तसूत्रे ब्राह्मणकण्डूतिरिति भाष्योदाहरणासंगत्यापत्तेश्च। क्वचित्फलसत्त्वेऽपि तस्यान्यथासिद्धेश्च। तासौनित्यानिट्त्वस्याप्यतिदेशापत्तेश्च ॥ तमङ्गीकृत्यानित्यत्वेन दोषपरिहारेऽसाधारणफलाभावाच्च। न च न पदान्तसूत्रे सवर्णग्रहणादशास्त्रीयानादिष्टादचः पूर्वत्वमात्रमतिदिश्यते न धर्ममात्रमिति वाच्यम्। तस्य प्रत्याख्यानात्। एवं च न किंचेत्युक्तप्रकारेण गुणवारणमिति ॥ छाया ॥

११ ननु तर्हि सिद्धान्ते का गतिरिति चेत्। शृणु—पञ्चमीसमासस्य सार्वत्रिकत्वे तूक्तरीत्या तद्वारणम्' तस्य लक्ष्यविशेषपरत्वे तु 'सार्वधातुका'—इत्यग्रे 'जाग्रोऽवि'—इत्यग्रे पठिते 'पुगन्त'—इति सूत्रे 'अविचि'—इत्याद्यनुवृत्त्या स्थानिवद्भावेन ङित्परत्वात्तद्वारणम्। 'अङिति' इत्येकदेशस्यैवानुवृत्तिर्वा। यद्वा तदग्रे पठिते 'नाभ्यस्त' इति सूत्रे 'नाभ्यस्तस्यापि' इति योगं विभज्य तत्सामर्थ्यादचं प्रत्ययं संगृह्य 'लघूपधस्य' इति मात्रमनुवर्त्य 'अभ्यस्तस्याङ्गस्येको लघूपधगुणो नाचि प्रत्यये परतः' इति निषेधेन तद्वारणम्। पूर्वगुणस्य तु लघूपधानिमित्तत्वाभावेन नानेन निषेध इति स्थानिवत्त्वेनैव भाष्योक्तेन वारणमिति न भाष्यासंगतिः। एवं मरीमृज इत्यादौ विकल्पोऽपि भाष्यमते दुर्वचः। पृथगल्लोपेऽपि पूर्वमकारलोपस्ततो यलोप इतिक्रमेणाकारे ङित्त्वप्रत्ययत्वादेरभावेन स्थानिदृष्टधर्मस्यैवातिदेशेन ङित्प्रत्ययपरत्वाभावात्। न चैवमपि लोलुवादावुवङादिसिद्ध्यर्थं वरेग्रहणाज्ज्ञापकात्संभावितधर्मातिदेश आवश्यक इति तदापत्तिरेवेति वाच्यम्, ज्ञापकसिद्धस्येष्टसिद्ध्यर्थमङ्गीकारोऽपि ज्ञापकसिद्धं न सर्वत्रेत्यनिष्टापादनं दुर्वचमिति भाष्याशयात्। किं चोवङाद्यर्थमपि हि न तदतिदेशः 'दीङो युडचि'—इत्यतः स्वरितत्ववतोचीत्यस्य मण्डूकप्लुत्यानुवृत्त्यैव सिद्धे पुनरज्ग्रहणाद् 'एतेषामजादौ प्रत्ययेऽच्प्रत्यये चेयङुवङौ भवतः' इति 'अचिश्नुधातु'—इति सूत्रार्थाङ्गीकारेण स्थानिवत्त्वेन व्यवधानेऽपि विशेषविधिसामर्थ्येन तत्सिद्धेः! न च चयो जय इत्यादौ तदापत्तिः, परेण गुणेन बाधात्। अत्र तु न गुणः, स्थानिवत्त्वात्। न च तत्र तं बाधित्वा सोऽस्तु, अत्र च मास्त्वेवोवङिति वाच्यम्, अबाधेनैवोपपत्तौ बाधकल्पने मानाभावात् ॥ किं चोक्तरीत्या सामर्थ्यादचीति योगं विभज्याभ्यासस्येत्यपकृष्य 'अभ्यासवत् इवर्णोवर्णान्तधातोरियङुवङौ स्तोऽच्प्रत्यये' इति पृथगर्थेनेष्टसिद्धेः ॥ द्वित्वे धातुत्वादिकमुत्तरखण्ड एव, अङ्गत्वं तु समुदाये इत्यन्यत्र स्पष्टम्। एवं चाजन्तेऽन्यत्र क्वापि न दोषः। न च भाष्यानुक्तत्वात्सर्वमप्रमाणमिति वाच्यम्। प्रत्याख्यानपरभाष्येणैवोक्तार्थस्य सर्वस्य ध्वननात्। मरीमृजक इत्यत्र तु विकल्प इष्ट एवेति ध्वनयितुं विवरणकृन्नारायणाद्युक्तरीतिमनुसृत्यैवाह—दरीति। तर्कैकेति। ङस्य समुदायानुबन्धत्वेन प्रायोगिकवदौपदेशिकस्यापि रूपस्याभावादिति... ॥ छाया ॥

१२ प्रकारान्तरेणापि दरीदृशइत्यादौ निर्वाहादुक्तयुक्तिरसंगतैव। दरीदर्शक इत्यादौ तु गुणादेरिष्टत्वमेवेति ध्वनयितुं समाधितत्त्वमाह—जंगम इति ॥ आदिना सनीस्रंस इत्यादिपरिग्रहः। उक्तेति। योगविभागस्येष्टसिद्ध्यर्थत्वेन पृथगल्लोपस्य क्वाचित्कत्वेनेत्यर्थः ॥ न दोषः। उपधालोपः ॥ छाया ॥

१३ नन्वेवं निंजेगिलं इत्यादौ नित्यलत्वापत्तिः, पृथगल्लोपपक्षे हि विकल्प इष्यतेऽत आह—निजेगिल इति ॥ छाया ॥

जरीगृह्यादेः सासर्यंतेश्चाञ्चि संप्रसारणयङ्चेतिगुणाविष्टौ, तर्हि सूत्रमतेऽपि न लुमतेति निषेधानित्यत्वेन साधनीयौ । [1]भाष्यप्रामाण्यादिष्टाविति गम्यते । अत एव पृथगल्लोपे यङो विषयापहाराभावेन [2]अजेर्व्यादेशे यणि वेव्य इति स्यादित्यपास्तम् । योगविभागस्य क्वाचित्कत्वेन तत्र [3]लुक एव प्रवृत्त्याऽक्षतेः ॥ [4]पुर्वादिभ्यो वान्तेभ्यो विज्नास्त्येव । अनभिधानात् । इदं च लोपो व्योरिति सूत्रे भाष्येऽपि ध्वनितम् । एतद्भाष्यविरुद्धप्रयोगाणां [5]भाष्यानुक्तानामनभिधानमित्यन्ये ॥ न चैवं[6] न धातुलुक्यचीत्येव सिद्धे आर्धधातुकग्रहणं व्यर्थमिति वाच्यम् । लोपार्धधातुक इत्येव षष्ठीतत्पुरुषेण लोपनिमित्तार्धधातुक इत्यर्थेन लूञादेर्व्यावृत्तिसिद्धौ [7]धातुग्रहणवत्तस्यापि सत्त्वात् ॥ भाष्ये लुकं वक्ष्यतीति । लुगतोलोपापवादः । अपवादश्च प्रायेण पश्चाद्भावीति भविष्यन्निर्देशः ॥

( आक्षेपभाष्यम् )

[8]इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत—"कृष्णो नोनाव वृषभो यदीदम् (ऋ. सं. १।७९।२ )" नोनूयतेर्नोनाव ॥

( समाधानभाष्यम् )

[9]समानाश्रयो लुग्लोपेन बाध्यते ॥

कश्च समानाश्रयः ? ॥

यः [10]प्रत्ययाश्रयः अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति ॥

(प्रदीपः) समानाश्रय इति । तुल्यकालत्वादिति भावः ॥ नोनावेत्यत्र तु बहुलग्रहणानुवृत्त्याऽनैमित्तिकोऽन्तरङ्गो लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति ॥

(उद्योतः) ननु भिन्नाश्रययोरपि दीर्घवृद्ध्योरियायेत्यादौ बाध्यबाधकभावो दृष्ट इत्यत आह—तुल्यकालेति ॥ बहुलेति । यङोऽचि चेति चकारेण ॥ अन्तरङ्ग इति । प्राक्प्रवृत्तिकत्वमन्तरङ्गत्वम् । न हि तदापवादप्रवृत्तिरिति भावः ॥

( आक्षेपभाष्यम् )

[11]कथम्—स्यदः प्रश्रथः हिमश्रथः 'जीरदानुः ( ऋ. सं. ५।८३।१ )' निकुचित इति ? ॥

( १२५ समाधानवार्तिक(भाष्य)म् ॥ ६ ॥ )

॥ * ॥ उक्तं शेषे ॥ * ॥

किमुक्तम् ? ॥

* निपातनात्स्यदादिषु* ।

[ * [12]प्रत्ययाश्रयत्वादन्यत्र सिद्धम् * । ]

* रकि ज्यः सम्प्रसारणम् * इति ॥

निकुचितेऽप्युक्तम् ।

किम् ? ।

सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥ न धातुलोप० ॥ ४ ॥

(प्रदीपः) निकुचित इति । कित्त्वसंयोगेन नलोपे सत्युदुपधत्वमिति निमित्तमकित्त्वस्य न भवति ॥ यदि तर्ह्यकारलोपः क्रियते, तदा जङ्गम इत्यत्र तस्य स्थानिवद्भावादुपधालोपः प्राप्नोति ॥ नैष दोषः, अनङीति प्रतिषेधात् ॥ अनर्थकोऽयमङिति चेत् । लोपस्यापि तर्ह्यप्राप्तिरजादौ प्रत्यये तस्य विधानात् ॥ ननु लोलुवादिषूवङादयः स्थानिवद्भावेन न सिध्यन्ति तेषां स्थानिन्यदर्शनात् । संभवमात्रेणाप्यतिदेशो भवतीत्यदोषः ॥ ४ ॥

(उद्योतः) अकित्त्वस्येति । उदुपधाद्भावादिकर्मणोरिति

---

१ 'यदीत्यसंदिग्धे संदिग्धवचनम् । ननु तस्यासिद्धान्तत्वप्रतिपादकमिति सूचयितुमाह—भाष्येति ॥ छाया ॥

२ आदेश इति ॥ ततो यङि द्वित्वेऽभ्यासगुणे अचि प्रत्यये अलोपेऽवशिष्टस्य तु लुकीति शेषः ॥ छाया ॥

३ लुकएवेति । तथाच प्रत्ययलक्षणाभावेन विषयापहाराद्यादेशस्याभावेनाहलादित्वाद्यङेव नेति भावः ॥ छाया ॥

४ नन्वेवमपि 'पुर्वपूरणे' इत्यादिवान्तधातोर्विचि लोपो व्योरिति वलोपे सूत्रमते गुणनिषेधेन पूः पुरौ पुर इत्यादि रूपाणि जायमानानि भाष्यमते न स्युरत आह—पुर्वादिभ्य इति ॥ छाया ॥

५ भाष्येति । तथाचैतद्भाष्यविरुद्धानामप्यन्यप्रोक्तानामुक्तप्रकारद्वयान्यतरप्रकारेण साधनम् । अतादृशानां त्वनभिधानमिति बोध्यम् ॥ छाया ॥

६ एवमिति । अन्येषामनभिधाने तथाच फलाभावेनाचि लुक्येव फलस्य पर्यवसितत्वेन सूत्रकृतापि तथैव सूत्रे कर्तव्ये आर्धधातुकग्रहणसामर्थ्यादन्यत्रापि फलमिति पाणिनेरभिमतमिति तदनुरोधेन भगवताप्यनभिधानं दुर्वचमिति भावः ॥ छाया ॥

७ धातुग्रहणेति । तथाच तद्वदृष्टार्थमेव तत्, ननु तदनुरोधेन फलकल्पनाभिनिवेशः कार्य इति भावः ॥ छाया ॥

८ [सूत्रारम्भवाद्याक्षिपति—इहापीति । वक्ष्यमाणोदाहरणेऽपि॥] नोनूयतेरिति । 'णुस्तुतौ' यङ् द्वित्वम् अभ्यासगुणः चादन्यत्रापि यङो लुक् । 'अमन्त्रे' इति निषेधादाम् न । एवं चात्र पृथगल्लोपे तस्य स्थानिवत्त्वाद्वृद्धिर्न स्याद्व्यवधानेन णल्परत्वाभावादिति भावः ॥ छाया ॥

९ प्रत्याख्यातोत्तरमाह—समानेति ॥ छाया ॥

१० प्रत्ययाश्रय इति । अयं भावः—'यङोऽचि, च' इति सूत्रेण यङो लुक् द्वेधा क्रियते—'यङोऽचि' इत्यंशेन अच्प्रत्ययनिमित्तकः । स तु यङन्तात्पचाद्यच्यागते भवतीति तस्मिन्काले अतो लोपोऽपि प्राप्नोति इति समानकालिकत्वं लुग्लोपयोरित्येकः । अपरस्तु 'च' इत्यंशेन विधीयतेऽनैमित्तिकः । स च यङ्प्रत्ययार्थविवक्षायामेव भवति । नहि तदेतरप्रत्ययस्यार्धधातुकस्याविर्भावः । येन तन्निमित्तो लोपः प्राप्नुयात् । तथाच नोनावेत्यादौ त्वनैमित्तिको लोपोऽन्तरङ्गत्वादादौ भवतीति न समानकालिकत्वमिति ॥ दाधि० ॥

११ एवं सूत्राभावे पापचक इत्यादेर्वैभिदितेत्यादेर्लोलुवइत्यादेश्च सिद्धिमभिधायावशिष्टदोषाणामपि सूत्रसत्त्वोक्तप्रकारेणैव सिद्धिरिति वक्तुं [स्यद इत्यादौ सूत्रसत्त्वे धात्वंशलोपस्य जातत्वेन निषेधो गुणवृद्ध्योः स्फुट एव सिध्यति सूत्राभावे तु नात्र तादृशो लोपो यस्य स्थानिवद्भावेनोपधात्वं भज्येतेति कथं गुणवृद्धिनिषेध इति तत्र गुणवृद्धिनिषेधार्थं सूत्रमेवावश्यकम्' इत्याशयेन ] शङ्कते—कथमिति ॥ छाया ॥

१२ अस्य वार्तिकस्योपन्यासः प्रकृतानुपयुक्तोऽप्येकस्मृत्युपारोहेण जातः । अत एव क्वचित्पुस्तके नोपलभ्यते ॥

विहितस्येत्यर्थः ॥ एवंचाकित्त्वाभावे कुङ्क्तिति चेत्येव निषेधः सिद्धो निकुचित इति भावः । सन्निपातः संबन्धः । तद्विघात इति कर्मण्यण् ॥ अजादौ प्रत्यये इति । यायायतेः क्विपि यातिरित्यादौ आलोपानापत्तेर्वरेग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं त्वस्माभिरुक्तमेव ॥ संभवेति । अत एव न पदान्तसूत्रे वरेग्रहणं चरितार्थम् । सत्यकारे यदि स्याच्चकारलोपस्तदा संभव उवङादेरिति भावः ॥ ४ ॥

( ४ परिभाषासूत्रम् ॥ १ । १ । ४ आ. २ ॥ )

## क्क्ङिति च ॥ १ । १ । ५ ॥

( अथ सप्तम्यानिमित्तार्थत्वाधिकरणम् )

( १२५ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् [ उपधारोरवीत्यर्थम् ] ॥ * ॥

( आक्षेपभागव्याख्याभाष्यम् )

**क्क्ङिति[1] प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् ॥**

(प्रदीपः) क्क्ङिति च ॥ ५ ॥ **क्ङिति प्रतिषेध इति[2]** । इक[3] इत्यनुवर्तते, गुणवृद्धी इति च । तत्र यदीक् क्ङितीत्यनेन विशेष्यते क्ङिति परतो य इगिति । तदा तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वाच्चितं स्तुतमित्यादावेव निषेधः स्याद्, न तु भिन्नो भिन्नवानित्यादाविति तन्निमित्तग्रहणं कर्तव्यम् ॥ यदा तु क्ङिद्ग्रहणं गुणवृद्धिविशेषणम्, तदा परसप्तम्या अप्रसङ्ग एव । न हि विहितयोर्निषेधः, अपि त्वनभिनिर्वृत्तयोरेवेति परिभाषानुपस्थानान्निमित्तसप्तम्येव क्ङितीति भवति क्ङिन्निमित्ता हि तयोः प्रवृत्तिः ॥

(उद्द्योतः) क्क्ङिति च ॥ ५ ॥ तत्र यदीति । तस्मिन्निति परिभाषानुग्रहायेत्यर्थः ॥ यदात्विति । निषेध्यत्वेन तयोः प्राधान्यादिति भावः ॥ नहीति । अनभिनिर्वृत्ते पूर्वपरव्यवहारस्य कर्तुमशक्यत्वात्तदनुपस्थानम् । निर्वृत्तनिषेधे तु देवदत्तहन्तृहतन्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः ॥ निमित्तेति । अत्र यस्य च भावेनेति सप्तमी । सा च ज्ञापकत्वार्थिका । ज्ञापकत्वं च संबन्धं विनानुपपन्नं सद् विधिशास्त्रक्ङिन्निमित्तत्वमादाय पर्यवस्यति । एवं च निमित्ततया क्क्ङिद्ज्ञाप्ये गुणवृद्धी नेत्यर्थः । तदाह—क्ङिन्निमित्ता हि तयोः प्रवृत्तिरिति ॥ केचित्तु सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वं फलतीत्याहुः ॥ परे तु—क्ङितीत्येतद् गुणवृद्धिविशेषणमेव । मैवनक्रियातदभावयोरमूर्तत्वेन क्ङित्परत्वासंभवात् । इक इत्यस्याधाप्यनुवृत्त्यनुक्तेः । अनुवृत्तावपि तस्य शब्दपरत्वात् । तस्मान्निमित्तग्रहणाभावे क्ङितीति सप्तम्या निर्दिष्टे पूर्वस्येत्युपस्थित्या क्ङिति अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः । अनुवादे परिभाषा नोपतिष्ठत इति त्विको गुणवृद्धी अचश्चेति सूत्रद्वयविषयमेवेत्युक्तम् । भाष्ये तस्य निषेधस्यानुपलम्भाच्च । वक्ष्यति—भाष्ये—क्ङिदनन्तरो गुणभाव्यस्तीति । निमित्तग्रहणे तु तत्सामर्थ्यात्परिभाषानुपस्थानम्, तत्प्रत्याख्याने तु लिङ्गादिना तदनुपस्थानम् ॥ संभवन्त्यां परसप्तम्यां यस्य चेति सप्तम्या

1 अत्र सूत्रे वार्तिके भाष्ये च 'कूक्ङिति' इति ककारद्वयवानेव पाठः । अतएव चर्त्वेन गकारस्यापि प्रश्लेषाद्गित्यपि गुणनिषेध इति वक्ष्यति ग्लाजिस्थश्चेत्यत्र सिद्धान्तिवार्तिककृता—

'क्स्नोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्त्वशासनात् ।
गुणमावस्त्रिषु स्मार्यं श्र्युकोऽनिट्त्वं गकोरितोः' ॥

इति ॥ 'न धातुलोप आर्धधातुके कूक्ङिति च' इति संहितापाठेऽनचिचेति द्वित्वेन ककारद्वयोच्चारणमिति मत्वा व्यस्तपाठे ककारद्वयोच्चारणं न संभवतीति मन्यमानो वामनस्त्वत्र गकारप्रश्लेषं नाङ्गीकरोति स्थश्चेत्यत्र स्था आ इत्याकारं प्रश्लिष्य क्स्नुप्रत्ययसंनियोगेन स्थाधातोरात्वविधानेनेत्त्वबाधमङ्गीकरोति ॥ अत्रेदमाभाति—आतोऽनाप इति न्यासे आकारलोपनिर्वाहेऽपि यथाश्रुतन्यासे' 'वर्णाश्रयविधौ च (न)' 'नवा ताद्रूपातिदेशात्' इति वार्तिकान्यतरेण कृतैकादेशे आत्वधर्माप्राप्त्याकारलोपानुपपत्त्या चिन्त्येयं वामनकल्पना ॥ किं च 'कृदतिङ्' इति सूत्रभाष्यशेषोक्तरीत्यैकादेशस्य स्थानिवद्भावेन चिणोलुग्न्यायेन पूर्वाकारस्य लोपानुपपत्तेश्च । भाष्योक्तरीत्यैव निर्वाहे भाष्यानुक्तसौत्रत्वाङ्गीकारवैयर्थ्याच्च ॥ किंच तथा प्रश्लेषस्यार्षत्वे च्छन्दसि स्थाधातोरकितं क्नुप्रत्ययं विधाय तस्याविशेषेण विधानेन स्थ ईत्ववारणमुक्त्वा 'सिध्यति, सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु' इत्यभिधाय पुनः स्थ ईत्वाप्रवृत्त्यर्थं गित्त्वाङ्गीकारवैयर्थ्याच्च । भवदुक्तप्रश्लेषस्य प्रामाणिकत्वे तु अत्र गकारप्रश्लेषव्याख्यानस्य श्र्युकः क्ङिति इत्यत्र गकारप्रश्लेषं कृत्वा निर्देशस्य सौत्रत्वेनासंहितया वा साधनस्य वैयर्थ्यापत्तेश्च । किं च क्स्नुप्रत्ययविधौ भाष्योक्तमभिधायं तादृगनार्षकल्पनामसूचयित्वा श्र्युकः क्ङितीत्यत्र तादृगनार्षस्वप्रतिभाप्रकाशनं पूर्वापरविरुद्धं चेति दिक् ॥ यद्यपि यथासंख्यसूत्रे· अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति *" इति वार्तिकोपपत्तये द्वित्वजन्यमेव ककारद्वयोच्चारणमित्येककारवानेव पाठ उचितः, तथापि तस्य वार्तिकस्य पूर्वपक्ष्युक्तित्वेनासिद्धान्तित्वात् सिद्धान्त्युक्तगकारप्रश्लेषानुरोधस्यावश्यमङ्गीकरणीयत्वेन द्वित्वमन्तरापि ककारद्वयं पाणिन्यभिप्रेतमेवेति सिद्धम् ॥ दाधि०

2 क्ङिति प्रतिषेध इति । क्ङिति यः प्रतिषेधस्तत्रेत्यर्थः । क्ङितीति स्वरूपपरं वा ॥ छाया ॥

3 इक इत्येति । इको गुणवृद्धी' इत्यनुवर्तेत इत्येवं वाच्ये एवमुक्तिः वक्ष्यमाणपक्षद्वयोपपादनाय 'एकं शब्दपरम् अपरमर्थपरम्' इति सूचनाय चेति भावः ॥ अनन्तरसूत्रात् 'न' इत्यनुवर्तते इत्यपि बोध्यम् ॥ छाया ॥

4 आनन्तर्यादिति विवरणोक्तमयुक्तम्' यथाश्रुतेऽनुवृत्तावप्यग्र आगमनेन तत्त्वस्य बाधितत्वादत आह—निषेध्येति ॥ छाया ॥

5 षणमेवेति ॥ उक्तहेतोः । अतएव 'क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतः' इति भाष्यं संगच्छते । अन्यथा इक इत्यस्यापि तत्र लेखौचित्येन तदसंगतिः स्पष्टैव ॥ छाया ॥

6 ननु ततोऽपि प्राधान्यात् क्रियायास्तदभावस्य वा विशेषणमुचितमत आह—भवनेति ॥ छाया ॥

7 इदं च तत्सत्त्वमभ्युपेत्य, वस्तुतस्तदेव नेत्याह—भाष्येति ॥ छाया ॥

8 ननु निमित्तग्रहणे कृतेऽप्युक्तरीत्या निर्दिष्टपरिभाषोपस्थित्या दोष एवात आह—निमित्तेति । लिङ्गादिनेति । अनुपदभाष्ये वक्ष्यमाणज्ञापकादिनेत्यर्थः ॥ छाया ॥

असंभवाच्च । उपपदविभक्तेरिति न्यायात् ॥ सिद्धसाध्यसमभिव्याहारन्यायस्यापि तस्मिन्निति शास्त्रेण बाध एव । अत एव निमित्तग्रहणप्रयोजनावसरे—हत इत्युदाहरिष्यति । कैयटोक्तरीत्या इक्पदानुवृत्त्यैव निमित्तग्रहणमिति वार्तिकस्योक्तिसंभवेन तत्प्रयोजनदानानुक्तिसंभवः स्पष्ट एवेत्याहुः ॥

**( भाष्यम् )**

**किं प्रयोजनम् ? ॥**

**( १२५ आक्षेपवार्तिकप्रयोजनखण्डम् ॥ १ ॥ )**

## ॥ * ॥ उपधारोरवीत्यर्थम् ॥ * ॥

**( प्रयोजनखण्डव्याख्याभाष्यम् )**

**उपधार्थं रोरवीत्यर्थं च ॥**

**(प्रदीपः) उपधारोरवीत्यर्थमिति ।** उपधाया अपीकः प्रतिषेधार्थम्, रोरवीतेर्यङ्निमित्तप्रतिषेधनिवृत्त्यर्थम् । अत्र हि[1] तिब्निमित्तो गुणो, न यङ्निमित्तः ॥

**(उद्द्योतः) उपधाया अपीति ।** उपधायां रोरवीतौ चार्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां[2] प्रतिषेधो यस्य तत्तन्निमित्तग्रहणमिति भाष्यार्थ इति भावः ॥ उपधारोरवीतिभ्यामित्युपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्ये ॥

**( प्रथमप्रयोजनसमन्वयभाष्यम् )**

**उपधार्थं तावत्—भिन्नः भिन्नवानिति ॥**

**किं पुनः कारणं न सिध्यति ॥**

**क्ङितीत्युच्यते । यत्र क्ङित्यनन्तरो गुणभावीगस्ति तत्रैव स्याद्—चितम्, स्तुतम् । इह तु न स्याद्—भिन्नः, भिन्नवानिति ? ॥**

**( प्रथमप्रयोजनबाधकभाष्यम् )**

**ननु च—यस्य गुण उच्यते, तं क्ङित्परत्वेन विशेषयिष्यामः । पुगन्तलघूपधस्य चाङ्गस्य गुण उच्यते । तच्चात्र क्ङित्परम् ॥**

**(प्रदीपः) ननु चेति ।** आकाङ्क्षया पुगन्तलघूपधस्येति सन्निधानं मन्यते । तथाहि 'क्ङिति गुणवृद्धी न भवतः' इत्युक्ते कस्येत्याकाङ्क्षायां 'यस्य प्राप्ते' इत्यस्ति पुगन्तलघूपधस्यापेक्षा ॥ अथवा क्ङितीतिप्रत्ययग्रहणात्प्रत्ययेनाङ्गं सन्निधाप्यते । ततश्च क्ङिति भिन्नमित्यादौ लघूपधस्यानन्तर्यात्सिद्धो निषेधः ॥

**(उद्द्योतः)** नन्वसंनिहितं पुगन्ताङ्गादि कथं तत्परत्वेन विशेष्यमत[3] आह—**आकाङ्क्षयेति** ॥ ननु निषेध्ये[4] गुणवृद्धी प्रति क्ङित्परेरूपं निषेधविषयं प्रति चाकाङ्क्षा नाङ्गं प्रतीयत आह—**अथवेति** । निषेध्यगुणादेरप्रत्यये क्क्ङित्प्रसङ्गेन प्रत्ययग्रहणमिति भावः ॥ एवं च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात्तस्यैव तद्विशेषणमिति भावः ॥

**( प्रथमप्रयोजनसाधकभाष्यम् )**

**पुगन्तलघूपधस्येति नैवं विज्ञायते—पुगन्तस्याङ्गस्य लघूपधस्य चेति ॥**

**कथं तर्हि ? ॥**

**पुकि अन्तः पुगन्तः । लघ्वी उपधा लघूपधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधं पुगन्तलघूपधस्येति ॥ अवश्यं[5] चैतदेवं विज्ञेयम् । अङ्गविशेषणे हि सतीहापि प्रसज्येत—भिनत्ति[6], छिनत्तीति ॥**

**(प्रदीपः) लघूपधेति ।** ततश्च समुदायस्यानिर्देशादवयवस्य चेको व्यवधानात्तदवस्थैवाप्राप्तिरित्यर्थः ॥

**(उद्द्योतः)** आद्यव्याख्यायां[7] परिहारभाष्यं योजयति—**ततश्च समुदायस्येति** ॥ द्वितीये[8] त्विदं बोध्यम्—नाक्षिप्तविशेषणत्वं न्याय्यमिति ॥ भाष्ये—**अङ्गविशेषणेहीति । पुगन्तलघूपधस्येत्यस्य** बहुव्रीहिणाऽङ्गविशेषणत्वे इत्यर्थः ॥

**( द्वितीयप्रयोजनसमन्वयभाष्यम् )**

**रोरवीत्यर्थं[9] च । 'त्रिधा बद्धो वृषभो रोरवीति'[10] ॥**

**( आक्षेपभाष्यम् )**

**यदि तन्निमित्तग्रहणं क्रियते, शबन्ते दोषः, रियति पियति धियति प्रादुद्रुवत् प्रासुस्रुवत् । अत्र न प्राप्नोति ॥**

**(प्रदीपः)** तन्निमित्तपक्षस्यापि दुष्टतामाह—**शबन्ते दोष इति ।** सार्वधातुकनिमित्तस्य गुणस्य निषेधेऽपि लघूपधलक्षणस्य निषेधाप्रसङ्ग इत्यर्थः ॥ **रियतिपियतिधियतीति** रि पि गतौ धि धारणे इति तुदादौ पाठः ॥

---

[1] अत्रहीति । रोरवीतौ हीत्यर्थः ॥ छाया ॥

[2] प्रवृत्तीति । तथा चाद्ये—अव्याप्तिपरिहारः, द्वितीयेऽतिव्याप्तिपरिहारस्तत्फलमिति भावः ॥ छाया ॥

[3] विशेष्यमिति । विशेषणीयमित्यर्थः ॥ छाया ॥

[4] निषेध्ये इति । निषेधस्येत्यादिः ॥ प्रतिचाकाङ्क्षेति । तदुभयं श्रुति संनिधानाभ्यां लब्धमेवेति भावः ॥ छाया ॥

[5] वार्तिकोपपत्तय एवैवं, न, किंतु अन्यार्थमपीत्याह—अवश्यमिति ॥ छाया ॥

[6] भिनत्तीति । नकाराकारेणाङ्गस्य लघूपधत्वाद्भकारेकारस्य तिपं मत्वा गुणः स्यादित्यर्थः । निमित्तमप्यङ्गस्यैव विशेषणमिति न येननेतिन्यायेन निर्वाह इति भावः ॥ छाया ॥

[7] ततश्चेत्यादीनामाशयस्य पक्षद्वयासाधारणत्वादाह—आद्येति । चोद्यभाष्यस्याभिप्रेतायां सत्यामिति शेषः ॥ छाया ॥

[8] प्रदीपीयन्यूनतां परिहरति—द्वितीयेत्विति ॥ 'तस्येग्विशेषणत्वान्न तत्त्वम्' इति विवरणोक्तेरसांगत्यादाह—नाक्षिप्तेति । शब्दविशेषणत्वसंभवादाक्षिप्तस्य विशेषणत्वात् आक्षेपस्य द्विविधस्यासंभवाच्चेति भावः ॥ छाया ॥

[9] एवं तस्योपधार्थत्वं व्यवस्थाप्य रोरवीत्यर्थत्वमाह—रोरवीत्यर्थं चेति ॥ छाया ॥

[10] (ऋ.सं. ४।५८।३) ॥

(उद्द्योतः) यदीत्यनेन न [1]स्वपक्षस्योपादेयतोच्यते । किं तूभयोः साम्यमुच्यत इत्याह—तन्निमित्तपक्षस्यापीति ॥ सार्वधातुकनिमित्तस्य । शनिमित्तस्य ॥ लघूपधलक्षणस्य तिब्निमित्तस्य ॥

( १२६ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ शचङन्तस्यान्तरङ्गलक्षणत्वात् [ सिद्धम् ] ॥ * ॥

( भाष्यम् )

**[2]अन्तरङ्गलक्षणत्वादत्रैयङ्कवङोः कृतयोरनुपधात्वाद् गुणो न भविष्यति ॥**

(उद्द्योतः) भाष्ये अन्तरङ्गलक्षणत्वादिति । प्राधान्येनाच एव यत्रानन्तर्याश्रयणं तत्रैव नाजानन्तर्य इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः ॥ नन्वदुद्रुवदित्यत्र सार्वधातुकेति गुणात्पूर्वं नित्यत्वाच्चङि द्विर्वचनेऽचीति निषेधादुवङभावे द्वित्वात्परत्वाच्च लघूपधगुणो दुर्वार इति चेन्न । अन्तरङ्गत्वाद्द्वित्वस्यैव प्रवृत्तेः । ओणेर्ऋदित्करणेनोपधाकार्यस्य द्वित्वात्प्राबल्यबोधनेऽपि न क्षतिः । ज्ञापकस्य सजातीयापेक्षत्वेनोपधाकार्यस्य यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तचङ्निमित्तता वा तत्रैव तत्प्राबल्यबोधनादित्याहुः ॥

( तन्निमित्तग्रहणस्य निर्दोषतोपसंहारभाष्यम् )

**एवं क्रियते चेदं तन्निमित्तग्रहणम् । न च कश्चिद्दोषो भवति ॥**

( फलान्तरप्रदर्शकभाष्यम् )

**इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि—हतो हथः उपोयते औयत लौयमानिः पौयमानिः नेनिक्त इति ॥**

(प्रदीपः) **हतो हथ इति** । यथैवादिप्रभृतिभ्यः शप इति शब्निवर्त्यते एवमकारोऽपि निषेधेन निवर्त्यैतेत्याशयः ॥ नन्विग्लक्षणोयं गुणो न भवतीति निषेधाप्रसङ्गः ॥ सत्यम् । परिहारान्तरसंभवान्नैतदाश्रितम् ॥

(उद्द्योतः) भूयः [4]पुनरर्थे ॥ **एवमकारोऽपीति** । क्क्ङित्परे गुणवृद्धी न प्रयोक्तव्ये इति सूत्रार्थः । [5]तत्र यथा चितमित्यादावसतो गुणादेः प्रागभावः पाल्यते । एवं सतोऽपि निवृत्तिः साध्येत—सतोऽपि निवृत्तेरदिप्रभृतिभ्य इत्यादौ दृष्टत्वादिति भावः ॥ **नन्विति** । तथा चेक इत्यनुवृत्तिसामर्थ्यादसत एवाप्रयोगः प्रतिपाद्यत इति भावः ॥ **नेनिक्ते** इत्यत्र निजां त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः ॥

( फलान्तरप्रत्याख्यानभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । इह तावद्—[6]हतो हथ इति । प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम् । अत्र च धातूपदेशावस्थायामेवाकारः ॥**

(प्रदीपः) **प्रसक्तस्येति** । सामान्यलक्षणेन विशेषलक्षणापरामर्शेन यत्प्राप्तं पुनर्विशेषलक्षणपरामर्शनात्स्वरूपेणानभिनिर्वृत्तं तस्य निवृत्तिः क्रियते । परमार्थतस्तूत्सर्गापवादयोरेक[7]वाक्यतायामप्राप्त्यनुमानं बाध इति सिद्धान्तः ॥ चितमित्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे[8] वचनस्य चरितार्थत्वाद्धतो हथ इति भूताकारनिवृत्तावव्यापारः ॥ **अदिप्रभृतिभ्य** इत्यनेन तु गत्यन्तराभावात्सत्येव प्रक्रियादशायां शब्निवर्त्यते ॥ नन्वेवं भवत इत्यादौ प्रसक्तोऽनभिनिर्वृत्त एव शब्कारः कस्मादनेन न निवर्त्यते, नैष दोषः, शब्भवतीत्यस्यां चोदनायां गुणरूपेणाचोदनान्नायं गुणनिषेधविषयः ॥

(उद्द्योतः) प्रसक्तत्वानभिनिर्वृत्तत्वयोर्विरोधमाशङ्क्याह—**सामान्येति** ॥ **निवृत्तिः** । अनभिनिर्वृत्तिः ॥ विहितप्रतिषिद्धयोर्विकल्पस्तर्हि स्यादत आह—**परमार्थेति** । गुणविध्येकवाक्यतया क्क्ङिद्भिन्नसार्वधातुकादौ गुण इत्यर्थात् क्क्ङिति तयोरप्राप्तिरेवेति भावः[9]॥ सा च [10]पर्युदासविधया । [11]यद्वा प्रसज्यप्रतिषेधेन वाक्या-

1 स्वपक्षस्य तन्निमित्तग्रहणाभावपक्षस्य ॥ उभयोः तन्निमित्तग्रहणाग्रहणपक्षयोः ॥ छाया ॥

२ शचङन्तस्येति अधिकरणस्य संबन्धित्वेन विवक्षायां षष्ठी । अत एवात्र संबद्धशेषपूरणेन तथा व्याचष्टे—अन्तरङ्गेति । पूर्वोपस्थितनिमित्तकत्वेन तयोरन्तरङ्गत्वमिति भावः ॥ छाया ॥

३ नन्तर्येति । अन्यप्रतियोगिकानन्तर्येत्यर्थः । प्रकृते चान्तरङ्गे तस्य न प्राधान्येनाश्रयणम्, बहिरङ्गे च नाच एवाश्रयणमिति भावः । इदं च तत्सत्त्वे, वस्तुतस्तदेव नेत्याह—तस्या इति ॥ असिद्धपरिभाषाया अनित्यत्वेऽपीष्टस्थले प्रवृत्त्या प्रकृते प्रवृत्तिरिति भावः ॥ तत्सत्त्वेऽपि बहिरङ्गप्रवृत्त्युत्तरं यत्रान्तरङ्गप्रवृत्तिस्तत्र तद्विषयत्वेन प्रकृते न विषय इति बोध्यम् ॥ छाया ॥

४ ननु बहूनीत्यर्थे भूयांसीत्युचितमत आह—पुनरिति । तथाचाभ्यस्तदिति भावः ॥ छाया ॥

५ अप्रयोगश्च द्वेधा सतोस्तयोर्निवृत्त्या, असतोश्च प्रागभावपरिपालनेन तत्रान्त्यमाह—तत्रेति । आद्यमाह—एवमिति ॥ छाया ॥

६ हतो हथ इतीति । न प्रयोजनमिति शेषः ॥ छाया ॥

७ वाक्यतायामिति । फलितायामिति शेषः ॥ छाया ॥

८ निषेध इति । सतीति शेषः ॥ छाया ॥

९ विकल्पस्तर्हीति । तर्हि निषेधस्य प्राप्तिपूर्वकत्वात्सामान्यशास्त्रप्राप्तस्यैव गुणादेरवश्यं व्यावर्तनीयत्वे सति षोडशिग्रहणाग्रहणवद्विकल्प इत्यर्थः ॥ छाया ॥

१० ननु तयोर्विधेयभेदात्कथमेकवाक्यताऽत आह—साचेति । पर्युदासेति । अयं भावः—नेत्यनुवृत्तं क्ङितो विशेष्यम् । तच्च गुणादिनिमित्तसार्वधातुकादिविशेषणम् । तथा च तद्भिन्ने सार्वधातुकादौ गुणादीति पर्यवसाने क्ङिति तयोरप्राप्तिः फलितेति कुतो विहितप्रतिषिद्धत्वं कुतस्तरां च विकल्प इति ॥ छाया ॥

११ नन्विदमसंगतम् । असमस्ते प्रयोगे नञोऽत्यन्ताभावार्थकत्वेन पर्युदासस्य दुर्वचत्वात् । प्रधानक्रियाविशेषणत्वे संभवति तद्विशेषणत्वायोगाच्चात आह—यद्वेति । ज्ञानस्येति । नैतावता शास्त्रस्याप्रामाण्यं तस्य विशेषविषयमात्रपरत्वकल्पनात् । अयं भावः—विशेषशास्त्रादर्शने तदालोचने तस्य सर्वविषयत्वं प्रतीतितोऽवगतं नतु वस्तुगत्या तत्सर्वविषयं तद्दर्शने तु नायमस्य विषयः । मया त्वन्यविषयकमेव शास्त्रं तदनालोचनरूपनिजदोषादेव तद्विषयकमिति भ्रान्त्याऽवगतमिति मन्यते तदिह तस्यानेन तदल्पविषयकत्वकल्पनेन संकोचमात्रं नत्वप्रामाण्यमिति ॥ छाया ॥

र्थबोधे तदंशे सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते । एकवाक्यताफलसंपत्तेस्त्वेकवाक्यतायामित्युक्तमिति द्रष्टव्यम् ॥ **भूताकारेति** । सिद्धाभावपरिपालनेनैव सिद्धौ असिद्धाभावविधाने गौरवा[1]दिति भावः ॥ **प्रक्रियायामिति** । वस्तुतस्तत्रापि लुग्द्वारानुत्पत्तिरेवान्वाख्यायते इति बोध्यम् ॥ **नैष इति** । एकान्ता अनुबन्धा इति भावः । **अ[2]यमेव न्याय्य इति** तस्य लोप इति सूत्रे वक्ष्यति ॥

( भाष्यम् )

**इह चोपोयते औयत लौयमानिः पौयमानिरिति । बहिरङ्गे गुणवृद्धी, अन्तरङ्गः प्रतिषेधः । असिद्धं बहिरङ्गमन्तरङ्गे ॥**

**(प्रदीपः) उपोयत इति** । वेञो यकि संप्रसारणे कृते उभयपदाश्रितत्वाद्बहिरङ्गो गुणः । औयतेत्यादौ बहिरङ्गा[3]श्रयत्वाद्वृद्धिर्बहिरङ्गा ॥

( भाष्यम् )

**नेनिक्त इति । परेण रूपेण व्यवहितत्वान्न भविष्यति ॥**

**(प्रदीपः) नेनिक्ते इति** । क्ङित्परत्वेनाङ्गस्य विशेषणादङ्गस्य च कार्यित्वात्पूर्वः पक्षः । उत्तरस्त्वभ्यासस्य कार्यित्वात्तस्य च परेण रूपेण व्यवधानादिति ॥

**(उद्द्योतः) कार्यित्वादिति** । अङ्गस्य गुणो भवति, स च तत्संबन्ध्यभ्यासेक इत्यर्थ इत्यभिमा[4]नः ॥ **उत्तरस्त्विति** । प[5]क्ष इति शेषः ॥ क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः ॥

( अथ तन्निमित्तग्रहणप्रत्याख्यानभाष्यम् )

**[6]उपधार्थेन तावन्नार्थः । धातोरिति वर्तते । धातुं क्ङित्परत्वेन विशेषयिष्यामः ॥**

**(प्रदीपः) धातुं क्ङित्परत्वेनेति** । न धातुलोप इत्यत्रोपसर्जनेऽपि धातौ धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिरित्यर्थः ॥

**(उद्द्योतः)** भाष्ये धातुं क्ङिदिति । पर[7]त्वेन निर्दिष्टं यत् क्ङिदिति तद्धातुं प्रति विहितमिति विशेषयिष्यामः । तथा च धातुविहितं क्ङिद् यतः कुतश्चित्परं तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः ॥ तद् ध्वनयन्न[8]ाह—**मत्वा प्रश्न इति** ॥

( आक्षेपभाष्यम् )

**[9]यदि धातुर्विशेष्यते, विकरणस्य न प्राप्नोति—चिनुतः सुनुतः लुनीतः पुनीत इति ॥**

**(प्रदीपः) यदीति** । क्ङित्यनन्तरस्य धातोर्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा प्रश्नः ॥

( समाधानभाष्यम् )

**नै[10]ष दोषः । विहितविशेषणं धातुग्रहणम्—धातोर्यो विहित इति ॥**

( आक्षेपभाष्यम् )

**धातोरेव तर्हि न प्राप्नोति ॥**

**(प्रदीपः) धातोरेवेति** । धातोर्विहितस्य क्ङित्यनन्तरे नेति मत्वा प्रश्नः ॥

( समाधानभाष्यम् )

**नैवं[11] विज्ञायते—धातोर्विहितस्य क्ङितीति ॥ कथं तर्हि ? । धातोर्विहिते क्ङितीति ॥**

**(प्रदीपः) धातोर्विहित इति** । धातोर्विहिते क्ङित्यनन्तरो यो धातुर्विकरणो वा तस्य प्रतिषेध इत्यर्थः ॥

**(उद्द्योतः) धातुर्विकरणो वेति** । धातुना विहितविशेषणबललब्धमेतदुभयम् ॥

( समाधानान्तरभाष्यम् )

**[12]अथवा—कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम् "पुगन्तलघूपधस्य गुणो भवति" इत्युपस्थितमिदं भवति "क्ङिति न" इति ॥**

**(प्रदीपः) अथवेति** । य[13]त्र गुणवृद्धी विधीयेते, तत्र

---

१ गौरवादिति । शब्दनित्यत्वभङ्गापत्तेश्चेत्यपि बोध्यम् ॥ कालभेदेन विरम्य व्यापारापाताच्चेति केचित् ॥

२ यच्च अनेकान्तत्वेऽपि पूर्वत्राश्रितशब्दव्यापारार्थकगुणवृद्धिपदस्याधिकारानुरोधेनानुवृत्त्या गुण इति गुणो, वृद्धिरिति वृद्धिः क्ङिति न भवतीत्यर्थेनादोषः—इति विवरणकृन्नारायणादयः । तदसदिति ध्वनयन्नाह—अयमेवेति । एकान्ता अनुबन्धा इति पक्ष एवेत्यर्थः ॥ छाया ॥

३ बहिरङ्गाश्रयेति । बहिर्भूतलङ्पेक्षत्वादित्यर्थः ॥ लौयमान्यादौ बहिर्भूतमिदादिनिमित्तकत्वात्तस्यास्तत्त्वं बोध्यम् ॥ छाया ॥

४ अभिमान इति । प्रयोजनदातुरिति शेषः ॥ छाया ॥

५ उत्तरस्त्वित्यसंबद्धं मत्वा—'उत्तरं तु' इति पाठकल्पकविवरणकारोक्त्यसांगत्यायाह—पक्षइतीति ॥ निजामङ्गसंबन्ध्यभ्यासस्य गुण इति तदर्थेन यस्य गुणस्तस्य क्ङितीतिविशेषणमित्यस्यार्थमाह—क्ङिदिति ॥ छाया ॥

६ एवं गौणफलानि संखण्ड्य मुख्यं विखण्डयति—उपधेति । धातोरिति वर्तत इति । पूर्वत्र समासे गुणभूतस्यापि धातुपदस्य लुप्तपष्ठ्यन्तस्य स्वरितत्वेन शब्दाधिकाररीत्याऽनुवृत्तिरित्यर्थः ॥ छाया ॥

७ क्ङित् परत्वेनेति पृथक्पदे इत्याह—परत्वेनेति । क्ङितीतिसप्तम्येत्यादिः ॥ परमिति । तत्रेति शेषः ॥ तदवयवेति । यतः परं तदवयवेत्यर्थः ॥ छाया ॥

८ [आहेति विभक्तिप्रतिरूपकं प्रकृते वक्ष्यतीत्येतदर्थकम् ॥] मत्वाप्रश्न इतीति । उभयोः प्रतीकम् ॥ छाया ॥

९ क्ङित्परत्वेनेति बहुव्रीहिः । एकं पदम् । इत्थंभूतेति तृतीया । धातुत्वेन विशेष्यते इत्याशयेन शङ्कते—यदीति ॥ छाया ॥

१० कंचित्साशयं प्रकाशयति—नैष इति । यत इति शेषः ॥ धातोर्य इति ॥ तत्संबन्धितया विहित इत्यर्थः ॥ छाया ॥

११ उक्तं सर्वं प्रकाशयति—नैवमिति ॥ छाया ॥

१२ ननु धातुग्रहणस्य सूत्रस्य च प्रत्याख्यानान्नायं समधिर्युक्तोऽत आह—अथवेति ॥ छाया ॥

१३ अस्य गुणवृद्धिलिङ्गकत्वेन परिभाषात्वमुपपादयति—यत्रेति॥ छाया॥ तत्र विधीनां मध्ये ॥

'क्ङिति न' इत्युपतिष्ठते इत्येवमियं परिभाषा भवति । तत्र **पुगन्तलघूपधस्ये**त्यत्रास्या उपस्थाने सति **येन नाव्यवधानमि**ति भिन्नमित्यादौ निषेधो भविष्यति ॥

**(उद्द्योतः) येन** नेति । पुगन्तलघूपधेति[1] तत्पुरुष इति भावः ॥ श्रुतत्वात्सार्वधातुकादिकं क्ङितीति च पुगन्तादीनामेव[2] विशेषणमित्यभिमानः ॥

**( समाधानान्तरभाष्यम् )**

**अथवा[3] यदेतस्मिन्योगे क्ङिद्ग्रहणं क्रियते तदनवकाशम् । तस्यानवकाशत्वाद् गुणवृद्धी न भविष्यतः ॥**

**(प्रदीपः) अथवेति** । माभूत्परिभाषा[4], तथापि प्रतिषेधस्य प्रतिषेध्यापेक्षायां यावन्तो यादृशाः प्रतिषेद्धव्यास्तावन्ति प्रतिषेधसूत्राणीति पुगन्तलघूपधगुणे प्रतिषेध्येऽनवकाशः प्रतिषेधो व्यवहितेऽपि प्रवर्तते ॥ अथवा[5] यथोद्देशपक्षाश्रयेण भाष्यम् । तथाहि—प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते इति **यदेतस्मिन्नि**त्युक्तम् ॥

**(उद्द्योतः) प्रतिषेध्यापेक्षायामिति** । गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रविषयकनिषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लव इत्यर्थः ॥ **प्रधानानीति** । अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः[6] ॥

**( समाधानान्तरभाष्यम् )**

**अथ[7] वाचार्यप्रवृत्तिर्ज्ञापयति—'भवत्युपधालक्षणस्य गुणस्य प्रतिषेधः' इति । यदयं "त्रसिगृधिधृषिक्षिपेः क्नुः" "इको झल् हलन्ताच्च" इति क्नुसनौ कितौ करोति ॥**

**कथं[8] कृत्वा ज्ञापकम् ? ॥**

**कित्करण एतत्प्रयोजनम्—गुणः कथं न स्याद् इति । यदि चात्र गुणप्रतिषेधो न स्यात्, कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो—भवत्युपधालक्षणस्यापि गुणस्य प्रतिषेध—इति । ततः क्नुसनौ कितौ करोति ॥**

**(प्रदीपः) अथवेति** । लिङ्गान्निर्दिष्टाङ्गविकला[9] **तस्मिन्नि**ति परिभाषोपतिष्ठत इत्यर्थः ॥ अनेकपरिहारोपन्यासो न्यायव्युत्पादनार्थः ॥

**(उद्द्योतः) अङ्गविकलेति** । पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेरिति भावः ॥ न चैवं नेनिक्ते इत्यत्रापि निषेधः स्यात् । येननेति न्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बोधनात् ॥ **न्यायव्युत्पादनेति** । न्यायव्युत्पत्तिस्तत्प्रतिपत्तिः । श्रोतॄणां तदुत्पादनायेत्यर्थः ॥ **भाष्ये हलन्ताच्चेति** ॥ नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम् । दिदृक्षतीत्यादाव[10]मागमनिषेधेन धिप्सतीत्यादौ नलोपेन च चारितार्थ्यात् । इको झलित्यपि न, तद्विषये इकः क्ङित्परत्वस्यैव संभवादिति चेन्न । **"सृजिदृशोर्झल्यमकिति"** **"इको झल्" "दम्भे"**रिति लघुन्यासेन[11] सिद्धे सामान्यतोऽतिदेशस्य गुणप्रतिषेधार्थत्वेन ज्ञापकसाम्राज्यात् । रुदविदमुषां क्त्वासनोर्मृडमृदगुधकुषक्लिशां क्त्वः कित्त्वविधानं च ज्ञापकं बोध्यम् ॥

**( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )**

**रोरे[12]वीत्यर्थेनापि नार्थः । क्ङितीत्युच्यते, न चात्र क्ङितं पश्यामः ॥**

**( आक्षेपभाष्यम् )**

**प्रत्ययलक्षणेन[13] प्राप्नोति ॥**

**( समाधानभाष्यम् )**

**"न लु[14]मता तस्मिन्" इति प्रत्ययलक्षणप्रतिषेधः ।**

**अथापि[15] "न लुमताङ्गस्य" इत्युच्यते, एवमपि न दोषः ॥**

**कथम् ? ।**

१ बहुव्रीहिपक्षे दोषतादवस्थ्यादाह—पुगन्तेति ॥ छाया ॥

२ एवेनाङ्गव्यवच्छेदः ॥ अभिमान इति । अनेनारुचिः सूचिता । तद्बीजं त्वङ्गांशे तस्योत्थिताकाङ्क्षत्वेन तद्विशेषणत्वौचित्यमिति ॥ छाया ॥

३ इतएवा(उक्ता)रुचेरेवाह—अथवेति ॥ छाया ॥

४ मा भूदिति । पूर्वोत्तरसूत्रानुरोधेन पुरःस्फूर्तिकनिषेधत्वपरित्यागेनापुरःस्फूर्तिकपरिभाषात्वाश्रयणमयुक्तमिति भावः ॥ छाया ॥

५ 'यदेतस्मिन्योगे' इत्येतत्स्वारस्येनाह—अथवेति ॥ प्राधान्येति । यद्यपि संमार्गादिवन्निषेधस्य वाक्यार्थतया प्राधान्यम्, तथापि वस्तुतः संस्कार्यतया ग्रहादिवन्निषेध्यगुणवृद्ध्योः प्राधान्यं निषेधस्य च गुणत्वम् । तथाच 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायसंचार इति भावः ॥ छाया ॥

६ आहुरित्यनेनारुचिः सूचिता । तद्बीजं तु व्यक्तिपक्षयथोद्देशपक्षयोर्दुर्बलत्वम् । किं च क्ङितीत्यादि प्रागुक्तरीत्या पुगन्तादिविशेषणमेव वाच्यम् । तच्चायुक्तमेवेत्युक्तमेव । अङ्गविशेषणत्वं तु पूर्वपक्षोक्तरीत्या दुर्वचमिति ॥ छाया ॥

७ इतएवा(उक्ता)रुचेरेवाह—अथवेति ॥ छाया ॥

८ कथमिति । कथमपीत्यर्थः ॥ छाया ॥

९ ननु लिङ्गेन तत्परिभाषानुपस्थितिद्वारा प्रतिषेधसिद्धिः, उत तत्प्रवृत्तावपि तत्सिद्धिः । नाद्यः, तथासति भवदुक्तरीत्या सतिसप्तम्याऽर्थतो निमित्तत्वलाभे उपधार्थेन तावन्नार्थ इत्युपक्रमबाधापत्तेः । नान्त्यः, लिङ्गे सत्यपि व्यवहित एतदप्राप्तेरत आह—लिङ्गादिति ॥ छाया ॥

१० दिदृक्षतीत्यपपाठः परस्मैपदानुपपत्तेः । तस्माद् 'सिसृक्षतीत्यादौ' इति पाठो भवेत् सृजिदृशोरिति सूत्रे सृजेरेव प्रथमोपादानात् । मत एवच्छायाकृतान्यत्रैवात्र पाठशुद्धिविचारो न कृतः ॥ दाधिमथाः ॥

११ लघ्विति । एकमात्रालाघवस्य एकपदलाघवस्य ज्ञानलाघवस्य च सत्त्वादिति भावः ॥ छाया ॥

१२ द्वितीयमपि तत्फलं खण्डयति—रोरवीत्येति । क्ङितीति । यत इत्यादिः ॥ छाया ॥

१३ एवमुपदेशाप्राप्तावप्यतिदेशेन निषेधः स्यादित्याह—प्रत्ययेति ॥ छाया ॥

१४ वार्तिकमतेनाह—न लुमतेति ॥ लुमता लुप्ते तन्निमित्तकं पूर्वस्य कार्यं नेति तदर्थः ॥ छाया ॥

१५ तस्य खण्डितत्वेनापाणिनीयत्वेन च सूत्रमतेनाह—अथापीति ॥ छाया ॥

न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ॥
किं तर्हि ? ॥
योऽसौ लुमता लुप्यते तस्मिन्यदङ्गं[1] तस्य यत्कार्यं तन्न भवतीति ॥ अथाप्यङ्गाधिकारः[2] प्रतिनिर्दिश्यते । एवमपि न दोषः ॥
कथम् ? ॥
"कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्र द्रष्टव्यम् । "सार्वधातुकार्धधातुकयोर्गुणो भवति" इत्युपस्थितमिदं भवति "क्ङिति न" इति ॥

(उद्योतः) अङ्गाधिकार इति । स्वरितलिङ्गासङ्गेनेति भावः ॥ कार्यकालमिति । तथा च तत्रोपस्थितत्वादिदमप्याङ्गमङ्गाधिकारस्थैकवाक्यतापन्नत्वादिति भावः ॥ स्वरितत्वासङ्गवशात्तदधिकारपठितमिव[3] तदधिकारस्थैकवाक्यतापन्नमपि गृह्यते इति तात्पर्यम् ॥ निषेधेऽपि[4] परिभाषासादृश्यात्परिभाषात्वमुक्तम् । सादृश्यं च निषेध्याकाङ्क्षया[5] तदेकवाक्यतामात्रेणेति बोध्यम् ॥

( समाधानान्तरभाष्यम् )

अथवा[6] छान्दसमेतद् । दृष्टानुविधिश्छन्दसि भवति ॥

(उद्योतः) छान्दसमिति । यङोऽचि चेति चेन बहुलं छन्दसीत्यनुकृष्य यङो लुग्विधानादित्यर्थः । न[7] च हुश्नुवोरिति सूत्रस्थेन हुश्नुवोरित्यस्य भाषायां यङ्लुक्सत्ताज्ञापकपरभाष्येणोवर्णान्तेभ्यो यङ्लुग्भाषायामप्यस्तीति लभ्यते । अन्यथा ज्ञापितेऽप्यचारितार्थ्यं स्पष्टमेवेति वाच्यम् । तत्प्रामाण्येनाजादौ क्ङिति[8] क्वचित्तत्सत्ताङ्गीकारेऽपि सर्वत्र भाषायां तत्सत्त्वे मानाभावात् । तत्रत्यभाष्यस्यैकदेश्युक्तित्वाच्च ॥

( समाधानान्तरभाष्यम् )

अथवा[9]–बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । "असिद्धं बहिरङ्गमन्तरङ्गे" ॥

(प्रदीपः) बहिरङ्ग इति । ततश्चासिद्धत्वादसत्त्वान्निषेधानुपपत्तिरित्यर्थः ॥

(उद्योतः) गुणो बहिरङ्ग इति । गुणस्य बहिरङ्गता, बहिर्भूतसार्वधातुकाश्रयत्वात्[10] ॥ नन्वसिद्धस्यानिष्पन्नस्यैव निषेधः क्रियते तत्राह—असत्त्वादिति । शास्त्रासिद्धत्वादत्रासत्त्वबुद्ध्या प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति भावः ॥

( समाधानान्तरभाष्यम् )

अथवा[11] पूर्वस्मिन्योगे यदार्धधातुकग्रहणं, तदनवकाशम् । तस्यानवकाशत्वाद् गुणो भविष्यति ॥

(प्रदीपः) अथवेति ॥ ननु बहुव्रीह्यर्थमुभयविशेषणायार्धधातुकग्रहणं[12] स्यादिति कथमनवकाशत्वम् ॥ उच्यते—विनाप्यार्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते । यथैकाचो द्वे इत्यत्र । रोरवीतीत्यत्रानैमित्तिकत्वाल्लोपस्य[13] गुणनिषेधः पूर्वेण न प्राप्नोतीत्यार्धधातुकग्रहणसामर्थ्यात्सूत्रान्तरप्राप्तोऽपि[14] निषेधो बाध्यत इत्यर्थः ॥ यङ्निमित्तश्च निषेधोऽन्तरङ्गत्वाद्बाध्यते, न सार्वधातुकनिमित्त इति रोरुत इत्यादौ निषेधो[15] भवत्येव ॥ एतच्च[16] छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम् ॥ भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनान्यार्धधातुकग्रहणस्य संभवन्ति । तोतोर्ति, तोथोर्ति, दोदोर्ति, दोधोर्ति, जोहोर्ति, मोमोर्ति, इत्यादिषु तुर्वीथुर्वीदुर्वीधुर्वीत्यादिभ्यो यङ्लुकि[17] तिपि वकारच्छकारयो राल्लोप इति लोपे कृतेऽसत्यार्धधातुकग्रहणे बहुव्रीहावप्याश्रिते न धातुलोप इति गुणनिषेधः प्राप्नोति[18], स मा भूदित्येवमर्थमार्धधातुकग्रहणं स्याद् । अनेन[19] चात्र व्यवधानान्नास्ति निषेध इति सति[20] प्रयोजने कथमनवकाशं स्यात् ॥

(उद्योतः) उभयविशेषणाय बहुव्रीह्यर्थमित्यन्वयः ॥

---

१ यदङ्गमिति । लब्धाङ्गसंज्ञकं प्रकृतिरित्यर्थः । यत्कार्यम् तन्निमित्तकमाङ्गमनाङ्गं वा ॥ छाया ॥

२ अभ्युपेत्याप्याह—अथाप्यङ्गेति ॥ छाया ॥

३ ननु तत्त्वेऽपि न तत्त्वमतिप्रसङ्गापत्तेरत आह—स्वरितेति । स्वरितेनाधिकं कार्यमिति तदर्थादिति भावः ॥ छाया ॥

४ नन्वस्य निषेधत्वम्, न परिभाषात्वमिति कथमयं परिहारोऽत आह—निषेधेऽपीति ॥ छाया ॥

५ पर्युदासन्यायेनैकवाक्यतायाः खण्डितत्वादाह—निषेध्येति । तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहार इति भावः ॥ छाया ॥

६ नन्विदमप्ययुक्तम् स्वरितत्वे मानाभावात् । तावतापि युगपदर्थद्वयकरणे मानाभावाच्च । अस्य परिभाषात्वेनाप्रसिद्धत्वाच्च न लुमतेत्यस्यानित्यत्वाच्चात आह—अथवेति ॥ एतद् रोरवीतीति यङ्लुगन्तम् ॥ दृष्टेति । दृष्टमनुलक्ष्यविधिरित्यर्थः ॥ छाया ॥

७ नचेति । अन्यथोवर्णान्तानेकाच्त्वस्य तयोरेव सत्त्वात्तदानर्थक्यं स्पष्टमेवेति भावः ॥ छाया ॥

८ क्ङितीति । प्रकृताभिप्रायम्, न तु तत्सूत्रनिविष्टम् । तथाच न तत्प्रयुक्तनिषेध इति भावः ॥ छाया ॥

९ ननु च्छान्दसत्वमगतिकगतिरत आह—अथवेति ॥ छाया ॥

१० बहिरिति । निषेधनिमित्तयङ इत्यादिः ॥ छाया ॥

११ नन्विदमप्ययुक्तम् असिद्धपरिभाषया जातबहिरङ्गस्य मिथोऽनपेक्षयोर्मध्येऽन्तरङ्गसमकालप्राप्तिकस्यैव बहिरङ्गस्य वाऽन्तरङ्गे कर्तव्येऽसिद्धत्वबोधनेऽपि अत्र निषेधस्य विधिप्राप्त्यपेक्षत्वेन पूर्वप्राप्तेरवश्यवाच्यतया जातत्वसमकालप्राप्तिकत्वयोरभावेन तदप्राप्तेः । धर्मिग्राहकमानेन तथैव सिद्धत्वात् । निषेधस्य निषेध्यापेक्षायां निषेध्यस्य बहिरङ्गत्वेन निषेधस्य सुतरां बहिरङ्गत्वाच्च ॥ न धातुलोप इति सूत्रभाष्यं त्वेकदेश्युक्तिरेवात आह—अथवेति ॥ छाया ॥

१२ बहुव्रीह्येति । अन्यथा लोपगुणवृद्धीनामेकनिमित्तकत्वं न लभ्येतेति भावः ॥ छाया ॥

१३ रोरवीतीति । तथाचेत्यादिः ॥ तं विना तल्लाभेचेति तदर्थः ॥ छाया ॥

१४ न प्राप्नोतीतीति । तत्र तद्व्यावृत्त्यर्थं क्रियमाणेति शेषः ॥ छाया ॥

१५ निषेध इति । सार्वधातुकनिमित्त इति भावः ॥ छाया ॥

१६ अत्र समाधाने स्वमतेनारुचिमाह—एतच्चेति । समाधानमित्यर्थः । यङ्लुकश्छान्दसत्वमभ्युपेत्येत्यन्वयः ॥ छाया ॥

१७ यङ् लुकि । अनैमित्तिके ॥ छाया ॥

१८ प्राप्नोतीति । उभयोरेकनिमित्तकत्वादिति भावः ॥ छाया ॥

१९ अनेनेति । क्ङिति चेति सूत्रेणेत्यर्थः ॥ छाया ॥

२० सतीति । उक्तरीत्येति भावः ॥ छाया ॥

यथेति । प्रथमस्ये[1]त्येतत्कर्मधारयेऽपि विशेष्यं शक्यं कर्तुमिति न तद् बहुव्रीहित्वगमकमिति भावः ॥ ननु सूत्रान्तरप्राप्त[2]निवृत्तिः कथं तत्राह—सामर्थ्यादिति । अयमाशयः—[3]आर्धधातुके इति योगो विभज्यते, धातु[4]लोप इति वर्त्तते षष्ठीतत्पुरुषश्च । एवं च धात्वेकदेशलोपे सति प्रत्यासत्त्याऽन्तरङ्गतया च लुप्तधात्वेकदेशनिमित्तो गुणवृद्धिनिषेधश्चेदार्धधातुक एवेति नियमस्तत्सामर्थ्यादिति ॥ तद् ध्वनयन्नाह—यङ्निमित्तश्चेति ॥ भापेति । हुश्नुवोः सार्वधातुक इत्यत्र हुश्नुग्रहणादिति भावः ॥ इत्यादिभ्य इत्यादिना हुर्छा मुर्छा ॥ राल्लोप इति । तत्र हि क्ङितीति नानुवर्त्तते । तदनुवृत्तिपक्षे तोतोर्मीत्याद्युदाहरणम्[5] ॥ नन्वेवमपि क्ङिति चेति निषेधोऽत्र दु[6]र्वार इति तद्वारणं विनाऽस्य चारितार्थ्यं कथमत आह—अनेनेति । बहिर[7]ङ्गराल्लोपस्यान्तरङ्गे यङाश्रये प्रतिषेधे कार्येऽसिद्धत्वाद् द्वाभ्यां व्यवधानात्तदप्राप्तिः[8] । स[9]नः कित्त्वेन तु एकव्यवधानमेवाश्रितमिति भावः ॥ वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोकेऽभाव इत्येवाश्रयणीयम्[10] ॥

( आक्षेपभाष्यम् )

**[11]इह कस्मान्न भवति—लैगवायनः' 'कामयते? ॥**

( १२७ सिद्धान्तसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तद्धितकाम्योरिक्प्रकरणात् ॥ * ॥

( भाष्यम् )

**इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैते इग्लक्षणे ॥**

**(प्रदीपः) इग्लक्षणयोरिति ।** इक इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः ॥

**(उद्द्योतः)** नन्विग्लक्षणयोरित्युक्तावपि लैं[12]गवायने इक्स्थानिकत्वेनेग्लक्षणत्वात्स्यादेव गुणनिषेधोऽतआह—इक इतीति । अर्थाधिकारानुरोधेन पदपरमेवेक इति भावः ॥

इति निमित्तार्थत्वनिराकरणम् ॥



( अथ स्थानिवत्त्वप्राप्तदोषवारणम् )

( १२८ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ [13]लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः ॥ * ॥

( भाष्यम् )

**लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति—अचिनवम् असुनवम् अकरवम् ॥**

**(प्रदीपः) लकारस्येति ।** [14]अनुबन्ध इत्संज्ञकत्वाल्लोपात्स्थानिनि न सन्निधीयत इत्यनल्विधाविति निषेधो न प्रवर्तते । पि[15]द् ङिन्न भवति' 'ङिच्च पिन्न भवतीति भाष्यकारस्य कल्पना, न वार्तिककारस्येति दोषोपन्यासः ॥

**(उद्द्योतः) लोपादिति ।** पादार्थोपस्थितिकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः ॥ पिद्ङिन्नेति । [16]सार्वधातुकमित्यत्रापिदिति योगविभागेन प्रसज्यप्रतिषेधेनायमर्थो लभ्यते । तत्र योगविभागसामर्थ्यात् स्थानिवत्त्वप्राप्ता अन्या वा ङित्वप्राप्तिः सर्वा प्रतिषिध्यत इत्याशयः ॥ भाष्ये स्थानिवद्भावः प्राप्नोतीति । तथा चाचिनवमित्यादौ गुणनिषेधप्रसङ्ग इति भावः ॥

---

१ प्रथमस्येत्येकाचो विशेषणमिति नासावन्यपदार्थ इति विवरणोक्तमयुक्तं तयोः कामचारादत आह—प्रथमस्येत्येतदिति ॥ छाया ॥

२ प्राप्तेति । सूत्रान्तरप्राप्तस्य निषेधस्य निवृत्तिरित्यर्थः ॥ कथमिति । असंबद्धत्वात्सूत्रगतविशेषणानां तदीयाव्याप्त्यतिव्याप्तिवारकत्वस्य सुप्रसिद्धत्वादिति भावः ॥ छाया ॥

३ आर्धधात्विति । 'धातुलोप' इति बहुव्रीहिणार्धधातुकस्यैवान्यपदार्थत्वेन लाभः धात्वंशलोपनिमित्तस्यार्धधातुकस्यैव लोलुव इत्यादौ संभवादित्यार्धधातुकग्रहणमधिकमिति इत्यादिः ॥ छाया ॥

४ धात्विति । तत्रेत्यादिः ॥ तत्पुरुषश्चेति । आश्रीयत इति शेषः । शब्दाधिकाररीत्येति भावः ॥ छाया ॥

५ हरणमिति । अनुनासिकादिप्रत्ययपरत्वसत्त्वेन तत्र तत्प्रवृत्तेरिति भावः ॥ छाया ॥

६ दुर्वार इति । 'तेन तद्वारणं मुधा स्यादिति' इति शेषः ॥ छाया ॥

७ बहिरङ्गेति । तिवाश्रयत्वादिति भावः ॥ छाया ॥

८ तदिति । क्ङितीतिनिषेधेत्यर्थः ॥ छाया ॥

९ नमूक्तज्ञापकादनेकव्यवायेऽपि प्रवृत्तिरत आह—सन इति । एवं प्रकारेण पूर्वनिषेधवारणं तु न तुल्यनिमित्तकत्वेन राल्लोपस्यासिद्धत्वाभावादिति भावः ॥ छाया ॥

१० श्रयणीयमिति ॥ तस्मादत्र यङ्लुकश्छान्दसत्वादाद्यपक्षाद्वा रोरवीतीत्यादौ न दोष इति तदर्थमपि तन्निमित्तग्रहणं मास्त्विति परसप्तम्येव क्ङितीति, वाक्यार्थस्तु प्रागुक्त एवेति स्थितम् ॥ छाया ॥

११ अथ वार्तिकमवतारयति—इहेति । निषेध इति शेषः ॥ लिगोर्नडादित्वात्फकि कितिचेति । वृद्धावोर्गुणेऽवादेशः ॥ कमेर्णिङि उपधावृद्ध्यादि ॥ उभयत्र उभयथापि क्ङित्प्रयुक्तो गुणादिनिषेधः स्यात् । णिङो णित्त्वं णिश्रीति चङर्थं स्यादिति भावः ॥ छाया ॥

१२ कामयत इत्यत्रादोषादाह—लैगेति । स्थानिकत्वेनेगिति । प्रकृत्यादित्वादभेदे तृतीया ॥ छाया ॥

१३ अथ वार्तिकमतं वक्तुं वार्तिकान्तरमाह—लकारस्येति ॥ छाया ॥

१४ नन्वनल्विधाविति निषेधेनास्थानिवत्त्वात्कथं ङित्त्वमतआह—अनुबन्ध इति ॥ न प्रवर्तत इति । नत्यपीति लिङ्गात् ॥ ङित्त्वादेरशास्त्रीयस्याप्यतिदेश इवानुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तिरिति केचित् ॥ छाया ॥

१५ ननु पित् ङिन्नेति निषेधेन कथं लादेशेषु स्थानिवत्त्वेन ङित्त्वमत आह—पिदिति ॥ छाया ॥

१६ लङो ङित्त्वस्य नित्यं ङित इत्यादौ साफल्येन मिपः पित्त्वस्य टिल्लकारादेशत्वे साफल्येन लङादेशे मिपि आतिदेशिकं ङित्त्वं स्यादेव, यत्र तु तयोरन्यतरदनवकाशं तत्रैव ङिच्चपिन्नेत्यादिप्रवृत्तिरिति रत्नप्रकाशोक्तिं खण्डयितुमाह—सार्वेति ॥ अनवकाशत्वेनैव बाधे सिद्धे योगविभागानर्थक्यापत्तेरिति भावः ॥ छाया ॥

( १२९ एकदेशिसमाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् ॥ * ॥

( भाष्यम् )

**यदयं[2] यासुटोङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यो—न ङिदादेशा ङितो भवन्तीति ॥**

( आक्षेपभाष्यम् )

**यद्येतज्ज्ञाप्यते,[3] कथं—"नित्यं ङितः" "इतश्च" इति ?॥**

(प्रदीपः) **कथं नित्यं ङित इति** ॥ ननु ङितो लकारस्येति तत्रार्थः स्थितो, न तु ङित आदेशस्येति । अन्यथा पचावः पचन्तीति लोपः स्यात्[4] ॥ एवं मन्यते—यासुटो ङित्त्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते । ङकारोच्चारणं[5] तु **लुङ्लङ्लृङ्क्ष्वित्यादौ** विशेषणार्थं स्यात् ॥

(उद्द्योतः) **ननु ङित इति** । तथा च न स्थानिवत्त्वेन ङित्त्वं प्रार्थ्यमिति भावः ॥ **ङिद्व्यपदेश इति** । स्थानिलसंबन्धिङस्येत्संज्ञाभाव एव ज्ञाप्यते । लस्येत्यस्य लघटितस्येति व्याख्या कार्येत्यर्थः ॥

( समाधानभाष्यम् )

**ङितो[6] यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवतीति ॥**

(प्रदीपः) **ङितो यदिति** । स्थानिवद्भावेन लादेशे ङिति यत्कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते, न तु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते । अन्यथा **नित्यं ङित** इत्येतन्निर्विषयं[7] स्यात् ॥

(उद्द्योतः) **यत्कार्यं पूर्वस्येति** । प्राप्तमिति शेषः ॥ **नन्विति** । प्रथमोपस्थितेत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः ॥ युक्त्यन्तरमप्याह—**अन्यथेति** । लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः । ङित[8] आदेशस्येत्यर्थस्तु नेत्युक्तमेव ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ?।**

( समाधानभाष्यम् )

**न हि ।**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ?।**

( समाधानभाष्यम् )

**यासुट एव ङिद्वचनात् । अपर्याप्तश्चैव हि यासुट्[9] समुदायस्य ङित्त्वे, ङितं चैनं करोति । तस्यैतत्प्रयोजनम् ङितो यत्कार्यं तद्यथा स्याद्, ङिति यत्कार्यं तन्माभूदिति[10] ॥ क्ङिति च ॥ ५ ॥**

(प्रदीपः) **यासुट एवेति** । ङितो यत्कार्यं तद्यासुटो न किंचिदतिदेष्टव्यमस्ति, किंतु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते । तच्चेत्स्थानिवद्भावेन स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत्कार्यं तदभावस्यैव ज्ञापकः ॥ **अपर्याप्तश्चेति** । समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थः । यासुट[11] एव ह्यनेन ङित्त्वं क्रियते, न समुदायस्य । **क्ङिति**[12] चेत्यत्र तन्निमित्तग्रहणस्य प्रत्याख्यातत्वादगुण[13]निमित्तेऽपि यासुटि ङिति गुणनिषेधः सिध्यति । यदि समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद्, यासुटो ङित्त्वं न व्यधास्यद् । विहितं तज् ज्ञापयति—ङिति यत्कार्यं तल्लादेशे न भवतीति ॥ केषांचित्पाठः—**सुपर्याप्तश्चैव हीति** । तत्रावयवङित्त्वद्वारेण समुदाये ङित्त्वं विधीयत इति व्याख्येयम् ॥ एवं हि क्ङितीति निमित्तसप्तमीपक्षेऽपि गुणनिषेधः सिद्ध्यति । अस्मिन्पक्षे **ङितं चैनं करोतीति** समुदायः परामृश्यते ॥ ५ ॥

---

१ एकदेशी उत्तरमाह—लकारस्येति ॥ छाया ॥

२ यदयमिति । यासुटि ङिति कार्याभावेनावयवेऽचरितार्थमिति समुदायस्यैव तन्ङित्त्वमिति तस्य तद्विधानं व्यर्थं सज्ज्ञापकम् । नचातिदिष्टादुपदिष्टं बलीयः किंच तस्य विशेषरूपत्वमतिदिष्टस्य सामान्यरूपत्वमिति वाच्यम् । वाचनिकातिदेशस्य प्रत्यक्षोपदेशतुल्यत्वात् । पित्त्ववन्ङित्त्वस्यापि विशेषरूपत्वाच्चेति भावः ॥ ङिदादेशा इति । अतिदिष्टङकारेत्कादेशा[1] इत्यर्थः । तेन तसाद्यादेशा ङितो भवन्त्येवेति भावः ॥ छाया ॥

३ सामान्यापेक्षं ज्ञापकमित्याशयेनाह—यद्येतदिति ॥ तथाच भवेत् भवेमेत्यादाविसलोपौ न स्याताम् । आदेशस्य स्थानिवत्वेनातत्त्वादिति भावः ॥ इतश्चेत्युपलक्षणं तस्थस्थमिपामित्यस्यापि ॥ छाया ॥

४ स्यादिति । सकारेकारयोरिति शेषः ॥ सार्वधातुकमपिदिति ॥ ङित्त्वादिति भावः ॥ छाया ॥

५ नन्वेवं ङकारोच्चारणं व्यर्थमत आह—ङकेति ॥ न च तदनुबन्धकेति न्यायेनैव चङादेरग्रहणे विशेषणार्थत्वमपि किमर्थमिति वाच्यम् । लघटितस्येत्यर्थावश्यकत्वेनोकारादेरपीत्त्वे फलाभावेन तदनुबन्धकत्वस्यैवाभावात् ॥ नचैवमपि निरनुबन्धकेति न्यायेन निर्वाह एव, तथा सति लुङादौ दोषात् स्यतासी इत्यत्र दोषाच्चेति शङ्काशयः । अतएव स्यादित्युक्तं मन्यते इति च ॥ छाया ॥

६ विशेषापेक्षं ज्ञापकमित्याशयेनाह—ङित इति ॥ छाया ॥

७ निर्विषयमिति । तथाच निर्विषयस्य नित्यं ङित इत्यादेर्बाधापेक्षया सविषयस्थानिवद्भावबाध एवोचित इति भावः ॥ छाया ॥

८ ननु ङित आदेशस्येत्यर्थेन तस्यापि न निर्विषयत्वमत आह—क्ङित इति ॥ छाया ॥

९ तस्यैतदिति । प्रागुक्तरीत्या स्थानिनो ङिद्व्यपदेशोच्छेदनादावसामर्थ्यादिति भावः ॥ छाया ॥

१० तन्माभूदितीति । स्थानिवत्त्वेनेति शेषः ॥ छाया ॥

११ एतदेवोपपादयति—यासुट एवेति ॥ छाया ॥

१२ नन्वेवं फलाभावोऽत आह—क्ङितीति ॥ छाया ॥

१३ अगुणेति । तन्मात्रस्य सार्वधातुकत्वादेरभावादिति भावः ॥ छाया ॥

---

१ अतिदिष्टेति । स्थानिवत्त्वमात्रेत्यादिः । अत एव तामादौ गुणादिनिषेधः सिद्धः ॥ दाधिमथाः ॥

**(उद्द्योतः) तदभावस्यैवेति।** [1]ज्ञापकस्य सजातीयापेक्षत्वादिति भावः। भाष्ये **यासुट एवे**त्यस्य 'न समुदायस्य' इत्यर्थः। एवस्यावधारणार्थत्वात्। [2]यदि समुदायस्य ङित्त्वं स्यात्तदा ङितो यत्कार्यं तदपि तत्र प्राप्तियोग्यमिति तदभावमपि ज्ञापयेत्। तथा हि **नित्यं ङित** इत्यादेर्ङित आदेशस्येत्येवार्थः। पचावः पचन्तीत्यादौ तु न दोषः। **सार्वधातुकमपिदि**त्यत्रानुवृत्तङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्यस्यैवातिदेशादिति भावः॥ न च यासुटि ङिति किंचित् कार्यं प्राप्नोति। तन्निमित्तग्रहणेन निषेधाप्राप्तेरिति वाच्यम्। संप्रसारणप्राप्तेः। न हि तत्र प्रत्यय इत्यस्तीत्याहुः॥ [3]नन्ववयवे कृतस्य लिङ्गस्य समुदायविशेषकत्वाद्यासुड् ङिदित्युक्तावपि समुदायस्य ङित्त्वं भवत्येव। अत एव तन्निमित्तग्रहणेऽपि निषेधः सिध्यति। तच्च स्थानिवत्त्वेन सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेऽपि ज्ञापकं स्यात्। ङितो यत्कार्यं तदभावस्यापि वा ज्ञापकं स्यादत आह—भाष्ये **अपर्याप्तश्चैवेति।** [4]अस्य ङित्त्वस्य केवले आगमे संप्रसारणविधानेन चरितार्थत्वात्। [5]अवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वम्। अत एव पठिता विधेत्यादौ ङीब् नेति भावः॥ **ङित्तं चैनमि**त्यवयवमित्यर्थः॥ **यासुट एव हीति।** यासुड् ङिदिति सामानाधिकरण्यात्। [6]यासुट्पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसंबन्धे तदादिलक्षणायां मानाभाव इति भावः॥ **प्रत्याख्यातत्वादिति।** [7]स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये॥ **यदि समुदाये इति॥**

ननु स्थानिवत्त्वेन समुदायस्य ङित्त्वे यासुटः कथं ङित्त्वमिति चेत्। न। [8]तन्ङित्त्वसाध्यफलस्य तावतापि सिद्धेरिति भावः॥ **केषांचिदिति।** अत्र पाठे—**यासुट एवे**त्येवकारः प्रसिद्ध्यर्थकः। केवलयासुटो ङित्त्वं व्यर्थं गुणनिषेधे तन्निमित्तग्रहणात्। संप्रसारणमपि धात्वाक्षिप्ते प्रत्यये एव। एवं च सामर्थ्यात्समुदायविशेषकं तदिति भावः॥ **ङित्तं चैनमिति।** स्थानिवत्त्वेन ङित्त्वे सिद्धेऽपीति शेषः॥ **ङितो यत्कार्यमित्यादि।** ज्ञापकस्य सजातीयापेक्षत्वादिति भावः॥ नहि यासुड्विशिष्टस्य ङित्त्वप्रयुक्तं किंचिदनेन ङित्त्वेन प्राप्नोति। **नित्यं ङित** इत्यस्य च ङितो लस्येत्येवार्थात्। आदेशस्य ङित इत्यर्थे तु दोष उक्त एव। **सार्वधातुकमि**त्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन [9]सप्तम्यन्तताया अन्याय्यत्वादिति भावः॥ [10]नन्विदं ङित्त्वं स्तुयादित्यादावनिग्लक्षणवृद्धिबाधनार्थं चिनुयुरित्यादौ जुसि चेति निषेधार्थं च चरितार्थमिति चेत्। न, [11]**ङिच्च पिन्नेति** भाष्योक्तकल्पनयैव सिद्धेः। [12]एतदर्थमेव हि भाष्ये तत्स्वीकारः॥ [13]यत्तु—संज्ञापूर्वकविधेरनित्यत्वे वृद्धिवारणमत एवोत औदिति नासूत्रीति॥ तन्न। अस्यार्थस्य भाष्यास्पृष्टत्वात्। [14]ज्ञाजनोर्जेत्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च। अनयैवान्यथासिद्धेः। [15]जुसि चेत्यत्र क्सस्याचीत्यतोऽचीत्यनुवर्त्याजादौ जुसि गुणविधानान्न चिनुयुरित्यत्र दोषः॥ [16]एवं च अत्रत्यपूर्वपक्षसिद्धान्तावेकदेशिन एवेति बोध्यम्॥ ५॥

---

१ यादृशकार्यप्राप्त्येतिदेशस्तादृशकार्यमेव स्थानिवद्भावेन न भवतीति ज्ञाप्यते इत्याह—ज्ञापकस्येति॥ छाया॥

२ एवकारव्यवच्छेद्यमेवोपपादयति—यदीत्यादि। स्यादिति। ङिच्चेति चेनानुकृष्टयासुटस्तदादिलक्षणयेति भावः॥ तत्र यासुड्विशिष्टे॥ छाया॥

३ आहुरित्यनेनारुचिः सूचिता। तद्बीजं तु पचेते इत्यादावातो ङित इतीयादेशो न स्यात्। न हि ङित्परत्वेनायं विधीयते तस्य सिद्धये ङिता तुल्यं ङिद्वदित्याश्रयणात्पचाव इत्यादौ दोष एव। किं च धात्वाक्षिप्ते प्रत्यये एव संप्रसारणम्। एवं च समुदायङित्त्वे न कोपि दोष इति। तद्ध्वनयन्शङ्कते—नन्ववयवेति॥ यासुड्ङिदिति। सामानाधिकरण्येनान्वयादिति भावः॥ छाया॥

४ समुदायस्येत्यादिना प्रदीपोक्तस्य शब्दार्थस्य तात्पर्यं वक्तुं तत्र हेतुमाह—अस्येति। यासुट इत्यर्थः॥ छाया॥

५ तत्र हेतुमाह—अवयवेति॥ अत एवेति। अचरितार्थस्यैव तद्विशेषकत्वाङ्गीकारादेवेत्यर्थः॥ पठितेति। अन्यथेटष्टित्त्वस्यावयवत्वसंपादकस्यापि समुदायविशेषकत्वाट्टिड्ढेति ङीप् स्यादिति भावः॥ छाया॥

६ ननु प्रागुक्तरीत्या लक्षणया तदादेर्ङित्त्वमत आह—यासुडिति॥ छाया॥

७ ननु तस्य प्रत्याख्यानेऽपि तदर्थस्याभिमतत्वमेवात आह—स्वरितेति॥ स्वरितेनाधिकं कार्यमित्यर्थादिति भावः॥ छाया॥

८ तन्ङित्त्वेति॥ यासुड्ङित्त्वेत्यर्थः। फलस्य गुणनिषेधादेः। तावतापि समुदायङित्त्वेनापि॥ छाया॥

९ सप्तेति। लुप्तेत्यादिः॥ उपमानोपमेययोः समानविभक्तिकत्वनियमादिति भावः॥ छाया॥

१० वस्तुत इदं ङित्त्वं न ज्ञापकमिति ध्वनयितुं शङ्कते—नन्विदमिति॥ ग्लक्षणवृद्धीति। उतो वृद्धिरितीत्यर्थः॥ उत इति स्थानिनिर्देशेन परिभाषानुपस्थित्या तस्या अनिग्लक्षणत्वादिति भावः॥ ननु विनिगमनाविरहः। किं च—उत औहुकि हलीति वाच्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपि परिभाषोपस्थित्या तस्या अपीग्लक्षणत्वमत आह—चिन्विति। जुसि चेतिगुणस्य निषेधबाधकस्य निषेधार्थं चेत्यर्थः। पुनर्ङित्त्वादिति भावः॥ छाया॥

११ प्रकारान्तरेणानिर्वाहादाह—ङिच्चेति॥ छाया॥

१२ ननु सैव फलाभावान्मास्त्वत आह—एतदिति। यतः स्तुयादित्याद्यर्थमेव कल्पनास्वीकार इत्यर्थः। अतएव यासुटो ङित्त्वस्यापि तदर्थतया साफल्येन न ज्ञापकतेति भावः॥ छाया॥

१३ कौस्तुभाद्युक्तिं खण्डयति—यत्त्विति॥ छाया॥

१४ नन्वस्पृष्टत्वेऽप्यप्रतिषिद्धन्यायेनाभिमतः स्यादत आह—ज्ञाजनोरिति। इति घटकादेशसंबन्धिदीर्घोच्चारणस्येत्यर्थः॥ अनयैवेति। संज्ञापूर्वको विधिरनित्य इति परिभाषयैवेत्यर्थः॥ प्रकारान्तरेण तज्ज्ञापनं विनैव तस्य साफल्यमिति भावः॥ छाया॥

१५ द्वितीयदोषमुद्धरति—जुसीति॥ छाया॥

१६ उपसंहरति—एवंचेति। भाष्योक्तप्रकारं विनाऽनिर्वाहे चेत्यर्थः॥ तथा च कोऽपि पाठोस्तु न तत्र निर्भरः॥ छाया॥

( ५ परिभाषासूत्रम् ॥ १ । १ । ४ । ३ ॥ )

## दीधीवेवीटाम् ॥ १ । १ । ६ ॥

( आक्षेपभाष्यम् )

कि[२]मर्थमिदमुच्यते ? ॥

( समाधानभाष्यम् )

गु[३]णवृद्धी मा भूतामिति । आदीध्यनम् आदीध्य[४]कः । आवेव्यनम् आवेव्यकः ॥

( दीधीवेवीप्रत्याख्यानभाष्यम् )

अ[५]यं योगः शक्योऽकर्तुम् ॥

कथम् ? ॥

( १३० सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छन्दसश्छन्दस्यदीधेद्दीधयुरिति च गुणदर्शनादप्रतिषेधः ॥*॥**

( भाष्यम् )

दीधीवेव्योश्छन्दोविषयत्वात् । दीधीवेव्यौ छन्दोविषयौ । दृष्टानुविधित्वाच्छन्दसः । दृष्टानुविधिश्च छन्दसि भवति । अ[६]दीधेददीधयुरिति च गुणस्य दर्शनादप्रतिषेधः अनर्थकः प्रतिषेधः अप्रतिषेधः । "प्रजापतिर्वै यत्किंचन मनसादीधेत्," "होत्रा॒यं वृ॒तः कृ॒पय॒न्नदी॑धेत् (ऋ. सं. १०।९८।७)" "अदी॑धयुर्दाशरा॒ज्ञे वृ॒तास॑: (ऋ. सं. ७।३३।५)" ॥

( प्रदीपः ) दीधीवेवी ॥ ६ ॥ छन्दोविषयत्वादिति । भाषायामेतयोः प्रयोगाभावात् ॥ दृष्टानुविधित्वाच्चेति । यद्यपि भाषायामपि दृष्टमेवानुविधीयते सिद्धे शब्दार्थसंबन्ध इति न्यायात् । तथाप्यादीध्यनमित्यादिप्रयोगश्छन्दसि नास्ति दृष्टस्यैव छन्दस्यनुविधानमित्यर्थो, न तु च्छन्दस्येव दृष्टानुविधानमिति । अ[७]थवा दृष्टानुविधिरित्यस्यायमर्थः—गुणश्छन्दसि दृश्यते न तु सर्वत्र गुणनिषेध इति ॥ अदीधेदिति । लङ् । व्यत्ययेन तिप् ॥ अदीधयुरिति । जक्षित्यादयः षडित्यभ्यस्तत्वाज्जुसादेशो झेः ॥

( उद्योतः ) दीधी ॥ ६ ॥ भाषायामिति । अ[८]नन्यभावो हि विषयशब्दार्थ इति भावः ॥ दृष्टस्यैवेति । भा[९]षायां तु संप्रति प्रयोगेऽदृष्टस्यापि व्याकरणान्तरानुसारेण शिष्टप्रयोगादिना वाऽवग-

---

१ अत्रेड् आगमः, नतु धातुः प्रसिद्धतरत्वात् । न च प्रसिद्धेः साहचर्यं बाधकम् यथा गुरुभार्गवशब्दौ व्यस्तावुपदेष्टृपरशुरामबोधकौ, समस्तौ पुनर्देवगुरुदैत्यगुरुबोधकौ एवं च धातोरेव ग्रहणं युक्तमिति वाच्यम् । द्वन्द्वेऽल्पाच्तरत्वेनेटः पूर्वनिपाते कार्ये परनिपातकरणस्य साहचर्यनियमस्यानित्यताज्ञापनार्थत्वादिति बोध्यम् ॥ इति छाया ॥ वस्तुतस्तु—पूर्वनिपातप्रकरणस्यानित्यताया 'लक्षणहेत्वोः' 'ध्येकयोः' अजाद्यत्त' इत्यादाविवाङ्गीकारेण साहचर्यनियमस्यानित्यताज्ञापने प्रमाणाभावेन दीधीवेव्योर्धातुत्वस्यासंदिग्धतयाऽऽगमापेक्षया प्रकृतेरभ्यर्हितत्वेन पूर्वनिपातस्यापि योग्यत्वेन च साहचर्यबाधकस्यान्यस्यानुपलम्भेन च चिन्त्यैव । तस्मात् कृत्वोर्थग्रहणेन सहचरितपरिभाषाया अनित्यबोधनेन व्याख्यानेन वा धातोर्न ग्रहणमिति निश्चेयम् ॥ दाधिमथाः ॥

अथ 'दीङ् क्षये' 'धीङ् अनादरे' 'वेञ् तन्तुसंताने' 'वी गत्यादिषु' एतेषां चतुर्णामिह ग्रहणं कुतो नेति चेत् ॥ न । अवयवप्रसिद्ध्यपेक्षया समुदायप्रसिद्धेर्बलवत्त्वात् । किं च चतुर्णां ग्रहणेऽभिप्रेतेऽसंदेहार्थं 'दीवेधीवीटाम्' इत्येव ब्रूयात् ॥ इति श॰ कौ॰ ॥

दीधीवेव्योरिति वार्तिके द्विवचनदर्शनेन भाष्ये आदीध्यनम् आवेव्यनमित्याद्युदाहरणप्रदर्शनेन न चतुर्णां ग्रहणम् । संदेहनिवृत्तये व्याख्यानातिरिक्तनिमित्तानपेक्षणादिति दिक् ॥ दाधिमथाः ॥

२ वक्ष्यमाणरीत्या सूत्रमनारम्भणीयमित्याशयेनाचार्यैकदेशी सूत्रमाक्षिपति—किमर्थमिति ॥ छाया ॥

३ एकदेश्याह—गुणेति । आदीध्यनमित्यादि । गुणादौ निषिद्ध एरनेकाच इति यण् ॥ छाया ॥

४ आदीध्यक आवेव्यक इति ॥ शुद्धाभ्यामेव ण्वुलि रूपं नतु ण्यन्ताभ्यामपि ॥ यत्तु—यीवर्णयोरिति सूत्रे हरदत्तेनोक्तम्—वर्णशब्दः पचाद्यजन्तः । श्रूयमाण एवेवर्णे यथा स्यात्, लुप्ते मा भूत्—इत्येवमर्थः । तेन ण्यन्ताभ्यां ण्वुलि णिलोपस्य पूर्वविधौ स्थानिवत्त्वेपि श्रूयमाणत्वाभावाल्लोपाभावे यणि कृते दीध्यको वेव्यक इत्येव शुद्धेन समानाकारं रूपं भवति—इति ॥ तदेतद् नाग्लोपिशास्वृदितामित्येतस्मिन्सूत्रे भाष्यकारैरेव आदीधयतेरादीधकः आवेवयतेरावेवकः इति वदद्भिर्ण्यन्तस्यादीधकः शुद्धस्य त्वादीध्यक इति व्युत्पादितत्वात्सिद्धान्तविरोधाच्चोपेक्ष्यम् ॥ श॰ कौ॰

५ एकदेश्युक्तं दीधीवेव्योरेव फलं श्रुत्वाऽसहमानः सिद्धान्ती वैपस्यादिटः फलमश्रुत्वैवाह—अयं योग इति । कर्मणि घञ् । दीधीवेवीरूपयुग्ममित्यर्थः । अत एव—'इटश्चापि'—इति भाष्येण पौनरुक्त्यं न, योगशब्दस्य सूत्रपरत्वे तु पौनरुक्त्यं स्पष्टमेव । एतेन—सूत्राभिप्रायेण नारायणोक्तमवतरणमपास्तम् । अतएव कथमिति प्रश्ने वार्तिककृदाह तयोरेव—दीधीति ॥ छाया ॥ केचित्तु सूत्रपरस्यैव योगशब्दस्य प्रसिद्धत्वाद्युग्मपरस्याप्रसिद्धत्वाच्चिन्त्येयं कल्पना ॥ वार्तिकेन द्वयोरेव प्रत्याख्याततत्वेन शिष्टांशप्रत्याख्यानपूरणस्य भाष्यकृता कृतस्यैव संग्रहेण वार्तिकभाष्ययोरुभयोरेव कथमिति प्रश्नस्योत्तरत्वात्पौनरुक्त्यानापत्तेरित्याहुः ॥ दाधिमथास्तु—युग्मपरमेव पूर्वपदभूतधातुपदलोपेन योगपदमत्र वक्ष्यमाणस्येट्प्रत्याख्यानभाष्यस्यैकदेश्युक्तित्वेन सिद्धान्तिमते इट्प्रतिषेधस्यावश्यकतया सकलसूत्रप्रत्याख्यानाभावादिति वदन्ति ॥

६ एवं 'नि वे॑वेति पलि॒तो दू॒तः' (ऋ. ३।५५।९) 'नि वे॑वेति॒ श्रेणि॑भी॒ रथा॑नाम्' (ऋ. ४।३८।६) हो॒त्रा॒यं वृ॒तः कृ॒पय॒न्नदी॑धेत् (ऋ. १०।९८।७) अदी॑धयुर्दाशरा॒ज्ञे वृ॒तास॑: (ऋ. ७।३३।५) इत्यादौ वेवीङोऽपि गुणो दृश्यते । तथापि तस्य यङ्लुगन्तवेतिनापि निर्वाहसंभवात्तस्यासाधारणत्वाभावात्तन्नोदाहृतं भगवतेति बोध्यम् ॥ दाधिमथाः ॥

७ असंभवमुक्त्वाऽव्याप्तिमाह वार्तिककृत्—छन्दस्यदीधेदिति । अत एव चद्वयसंगतिः ॥ भाष्यकारस्तु 'दृष्टानुविधित्वाद् इति हेतुं चं विना व्याख्यातवान् । तथाच तन्मते चो वाक्यालंकारे इति दृष्टानुविधीत्यारभ्यैक एव हेतुः, तन्मतेनाह—अथवेति ॥ स्यायमिति । इत्यस्यैव 'छन्दस्यदीधेत्'—इत्यर्थो न तु हेत्वन्तरमित्यर्थः ॥ तदाह—गुण इति । क्वचिदिति शेषः ॥ छाया ॥

८ प्रदीपोक्तहेतौ हेतुमाह—अनन्येति । हि यतः । धातुपाठे साधारणतया पाठेऽपि भाष्याद्युक्तेस्तत्त्वम् । यथोत्तरं मुनीनां प्रामाण्यम् ॥ छाया ॥

९ प्रदीपे अपिना वेदसमुच्चयः । अत्र 'तथापि' इत्यग्रे 'पाठक्रमाद्' इति न्यायेन 'दृष्टस्यैव' इत्यादि 'विधानमिति' इत्यग्रे 'आदीध्यनम्' इत्यादि 'नास्ति' इत्यन्तग्रन्थो बोध्यः ॥ तदेतद्ध्वनयन्नाह—भाषायां त्विति ॥ लक्षणैकचक्षुष्कमतेनाह—व्याकरणेति । लक्ष्यैकचक्षुष्कमतेनाह—शिष्टेति ॥ आदिना तदीयानुमानादिपरिग्रहः ॥ छाया ॥

तस्माशुत्वस्याप्यनुविधानमित्यर्थः ॥ [1]एवं च वेदे आदीध्यनमित्यादिलक्ष्याभावादसंभवदुक्तिकं सूत्रमिति भावः ॥ अथवेति । एवं च लक्षणस्याव्याप्तिप्रतिपादकं भाष्यमिति भावः ॥ व्यत्ययेनेति । दीधीङो ङित्त्वात् ॥ परस्मैपदोपलक्षणं तिबिति ॥

( आक्षेपभाष्यम् )

**[2]भवेदिदं युक्तमुदाहरणम्—अदीधेदिति । इदं त्वयुक्तम्—अदीधयुरिति । अयं जुसि गुणः प्रतिषेधविषय आरभ्यते, स यथैव "क्ङिति न" इत्येतं प्रतिषेधं बाधते, एवमिममपि बाधेत ॥**

( समाधानभाष्यम् )

**[3]नैष दोषः जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्य[4]जातीयं प्रतिषेधं बाधते ॥**

**कश्च तुल्यजातीयः प्रतीषेधः ? ॥**

**यः प्रत्ययाश्रयः । प्रकृत्याश्रयश्चायम् ॥**

(प्रदीपः) प्रकृत्याश्रयश्चायमिति । [5]ततश्चान्तरङ्गत्वादनेनैव भाव्यमित्यर्थः ॥

(उद्द्योतः) अन्तरङ्गत्वादिति ॥ नन्वेवं बहिरङ्गस्य जुसि गुणस्य कथमनेन निषे[6]ध इति चेत् । न । सर्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयान्तरङ्गनिषेध्याभावादिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ[7]वा-येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'क्ङिति' नेत्येतस्मिन्प्रतिषेधे जुसि गुण आरभ्यते । अस्मिन्पुनः प्राप्ते चाप्राप्ते च ॥**

(प्रदीपः) येन नाप्राप्त इति । कार्यविशेषचिन्तापेक्षायामयं न्यायो, न तु कार्यसामान्यं बाध्यमित्यस्यापेक्षायामेतन्न्यायावतारः ॥

(उद्द्योतः) सर्वत्रैतन्न्यायानाश्रयणे हेतुमाह—कार्यविशेषेति । यच्छब्देन तत्तद्रूपेण कार्याणां परामर्शादिति भावः ॥ केचित्तु—सामान्यचिन्ताविषयेऽप्येतं न्यायं योजयन्ति । तदा येनेत्यस्य स्वेतरेणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**[8]यदि तर्ह्ययं योगो नारभ्यते । कथं—दीध्यदिति? ॥**

(प्रदीपः) कथंदीध्यदिति । लेट् तिप् [9]। इतश्च लोपः परस्मैपदेष्विती कारलोपः । लेटोऽडाटावित्यडागमः ॥

( १३१ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ दीध्य[10]दिति च श्यन्व्यत्ययेन ॥ * ॥**

( भाष्यम् )

**दीध्य[11]दिति च श्यन् व्यत्ययेन भविष्यति ॥**

(प्रदीपः) श्यन्व्यत्ययेनेति । श्यनो ङित्त्वाद्गुणाभावः । यीवर्णयोर्दीधीवेव्योरितीकारलोपः ॥ क्वचित्तु शव्यत्ययेनेति पाठः । तत्र शस्य ङित्त्वाद्गुणाभावः । एरनेकाच इति यणादेशः ॥

(उद्द्योतः) [[12]क्वचित्तु शो व्यत्येति पाठः ॥]

( एकदेशिप्रत्याख्यानभाष्यम् )

**[13]इटश्चापि ग्रहणं शक्यमकर्तुम् ॥**

( आक्षेपभाष्यम् )

**[14]कथम्—अकणिषम्, अरणिषम्, कणिता श्वः, रणिता श्व इति ? ॥**

(उद्द्योतः) भाष्ये अकणिषमिति । सिजन्तस्याङ्गस्य सिपोऽमि लघूपधगुणः प्राप्नोति ॥ श्वःप्रयोगो लुडर्थः । तत्र हि तिपो डादेशे टिलोपे च तास्प्रत्ययान्तमङ्गं भवति । तृचि त्व[15]नङ्गत्वान्न गुणप्राप्तिरिति भावः ॥

( समाधानभाष्यम् )

**"[16]आर्धधातुकस्येड्वलादेः" इत्यत्र इडित्यनुवर्त-**

---

१ एवं च उक्तभाष्यस्य तथार्थकत्वेच । सूत्रमिति । सूत्रैकदेश इत्यर्थः ॥ छाया ॥

२ [तटस्थो द्वितीयोदाहरणे नाव्याप्तिरित्याह—भवेदिति ॥ दाहरणमिति प्रकृतनिषेधे सत्यपि गुणो दृश्यते इत्यस्येति शेषः ॥ एवमग्रेऽपि ॥ एवमिममपीति । प्रकृतमपीत्यर्थः । ततश्च नायमस्याव्याप्तिविषय इति भावः ॥ छाया ॥

३ उदाहरणदाता समाधत्ते—नैष इति ॥

४ तुल्यजातीयमिति । गुणस्य जुसूनिमित्तकत्वात्तन्निमित्तकमेव निषेधमित्यर्थः ॥ छाया ॥

५ नन्वेवं जुसि गुणोऽपवादत्वाद्बाधको मा भूदस्य निषेधस्य, परत्वात्तु बाधकः किं न स्यादत आह—ततश्चेति ॥ तुल्यजातीयबाधकत्वे चेत्यर्थः ॥ क्ङितीतिप्रतिषेधस्यायं गुणो बाधकोऽस्तु जुसि गुणविषये, एतद्विषये त्वयमेवान्तरङ्गत्वाद्गुणबाधकः । तथाच तदप्राप्तौ तद्विषये आरभ्यमाणः सोऽप्यत्र न स्यादिति भावः ॥ छाया ॥

६ निषेध इति ॥ निषेधप्रसङ्ग इत्यर्थः ॥ निषेध्येति । अन्तरङ्गस्य निषेध्यस्याभावादित्यर्थः ॥ छाया ॥

७ ननु तुल्यजातीयस्य नियामकता न सार्वत्रिकी । अतः पक्षान्तरमाह—अथवेति ॥ नाप्राप्त इति । आद्यो नञा द्वितीयो नशब्देन नैकमेत्यादाविव समासः । यत्कर्तृकावश्यं प्राप्ताविति तदर्थः । द्वौ नञाविति न्यायात् ॥ छाया ॥

८ [सूत्रारम्भवादी शङ्कते–यदीति ॥] योग इति । युग्ममित्यर्थः ॥ छाया ॥

९ तिबिति । शपो लुगित्यपि बोध्यम् ॥ अनेन गुणनिषेधे एरनेकाच इति यणि रूपसिद्धिः । अन्यथा दीधयदिति स्यादिति भावः ॥ छाया ॥

१० यद्यपि सर्वे विधयश्छन्दसि विकल्पन्ते इति गुणाभावे यणि दीध्यदिति सिद्धम् । तथापि यक्षानुरूपबलिन्यायेनाह—दीध्यदिति चेति ॥ दिध्यदित्यत्र चेत्यर्थः ॥ छाया ॥

११ श्यन्निति भिन्नं कर्तृपदम् चो वाक्यालंकार इत्याह—दीध्यदिति श्यन्नेष इति ॥ छाया ॥

१२ अयं कोष्ठकान्तर्गतः पाठः Bengal Asiatic Society मुद्रितपुस्तकशोधकेन कथं न मुद्रित इति न जानीमः ॥ छाया ॥

१३ एवं सिद्धान्तिना धातुयुग्मग्रहणे प्रत्याख्याते तदङ्गीकृत्याहमहमिकान्यायेनैकदेश्याह—इटश्चापीति ॥ छाया ॥

१४ पूर्वं तत्प्रयोजनानामनुक्तत्वादत्रैव प्रश्नद्वारेण तानि सर्वाण्याह सिद्धान्ती—कथमकणिषमिति ॥ छाया ॥

१५ अनङ्गत्वादिति । तान्तस्येति भावः ॥

१६ एकदेशी समाधत्ते—आर्धधातुकेति ॥ छाया ॥

**माने पुनरिड्ग्रहणस्य प्रयोजनम्—इड् इडेव यथा स्याद्, यदन्यत्प्राप्नोति तन्मा भूदिति ॥**

**किं चान्यत्प्राप्नोति? ॥**

**गुणः ॥**

**(प्रदीपः) इडित्यनुवर्तमाने इति।नेड्वशि कृतीत्यतः॥**

**(उद्द्योतः)** भाष्ये **पुनरिड्ग्रहणस्येति** ॥ न[1] च नेत्यस्य निवृत्त्यर्थं तत्; स्पष्टं चेदं नेड्वशीत्यत्र भाष्ये इति वाच्यम्। क्वचिदेकदेशोऽप्यनुवर्तत इति न्यायेन नेड्वशीत्यत्रत्यनञो निवृत्तिसिद्धेरिति भाव[2]ः ॥ व[3]स्तुतस्त्वत्रत्यमिदं भाष्यमेकदेश्युक्तिः। आर्धधातुकस्येति सूत्रस्थेड्ग्रहणस्य नेड् वशीतिसूत्रे भाष्ये प्रत्याख्यानात्। त[4]त्करणेन नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ अ[5]ङ्गस्येत्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्यादयाऽलाभाच्च। अ[6]न्त्येऽपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम् ॥

**( आक्षेपभाष्यम् )**

**य[7]दि नियमः क्रियते, 'पिपठिषतेरप्रत्ययः पिपठीः' दी[8]र्घत्वं न प्राप्नोति ॥**

**(प्रदीपः) पिपठीरिति।** पिपठिषतेः क्विप्। **अतो लोप** इत्यकारलोपः। षत्वस्यासिद्ध[9]त्वात्ससजुषो रुरिति रुत्वम्। **पूर्वत्रासिद्धे न स्थानिवदि**त्यल्लोपस्य रु[10]त्वे स्थानिवद्भावाभावः ॥

**(उद्द्योतः) क्विविति।** अप्रत्यय इत्यस्याश्रूयमाणः प्रत्यय इत्यर्थः। कृदन्तत्वात्प्रातिपदिकत्वे स्वादयः ॥

**( समाधानभाष्यम् )**

**नै[11]ष दोषः। आङ्गं यत्कार्यं तन्नियम्यते। न चैतदाङ्गम् ॥**

**(प्रदीपः) आङ्गमिति। अ[12]ङ्गस्ये**त्यनुवर्तनादङ्गाधिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते—**इडेव यथा स्या**दिति नियमेनेत्यर्थः ॥ **वोरुपधाया** इति च दीर्घत्वं नाङ्ग[13]म्। य[14]त्तु **ग्रहो लिटि दीर्घ** इति दीर्घत्वं तद्वचनाद्भवति ॥ पिपठिषि ब्राह्मणकुलानीत्यत्र त्वकारलोपस्य स्थानिवद्भावाद् झलन्तत्वाभावान्नुमभावस्तेन पिपठींषीति कथं **सान्तमाहतः संयोगस्येति** दीर्घत्वमिति न चोदनीयम्। **क्वौ विधिं प्रति न स्थानिवदि**त्यर्थो व्य[15]वस्थापयिष्यते, न तु **क्वौ लुप्तं न स्थानिवदिति ॥**

**(उद्द्योतः) झलन्तत्वाभावादिति।** स्व[16]विधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम् ॥ ननु क्वौ लुप्तस्य स्थानिवत्त्वनिषेधा[17]दल्लोपस्य स्थानिवत्त्वं दुर्लभमत आह—**क्वाविति ॥**

**( समाधानान्तरभाष्यम् )**

**अ[18]थवा असिद्धं दीर्घत्वं तस्यासिद्धत्वान्नियमो न भविष्यति ॥ दीधीवेवीटाम् ॥ ६ ॥**

**(प्रदीपः) अथवेति।** इडेवेत्यस्मिन्नियमे दीर्घत्व[19]स्यासिद्धत्वान्नास्ति नियमेन व्यावृत्तिः। ततश्च शास्त्रदृष्ट्याविकृतरूप एवेट्, प्रयोग एव तु विकृतः। अ[20]लावीदित्यत्र तु **सिज्लोप एकादेशे सिद्ध** इत्यसिद्धत्वनिषेधवचनात्सवर्णदीर्घत्वं भवति६

**(उद्द्योतः) अलावीदित्यत्रेति ॥** नच[21]ै समार्त्तेत्यत्र **ह्रस्वादङ्गा**दिति सिज्लोपाय सिद्धत्ववचनं चरितार्थं, सिद्धत्वे हि परत्वात्सिज्लोपे ततो वृद्धिः। अन्यथा पूर्वं वृद्धौ स न स्यादिति वाच्यम्। **लावस्थायामडि**ति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेऽपि सिज्लोपाभावस्यैवौचित्येन समार्ष्टेत्येव रूपस्यौचित्यात्सत्यभिधाने ॥ **सि[22]ज्लोप एकादेशे** इति तु सिज्लोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति

१ भाष्यान्तरविरोधमुद्धर्तुं शङ्कते—नचेति ॥ छाया ॥

२ भाव इति। तथाच तत्रत्यपूर्वपक्षभाष्यमेकदेश्युक्तिरिति तात्पर्यम् ॥ छाया ॥

३ सिद्धान्तमाह—वस्तुत इति। इदम् इटश्चापीत्यादि ॥ छाया ॥

४ ननु विनिगमनाविरहो आह—तत्करणेनेति ॥ छाया ॥

५ एवं सामान्येन तत्र दोषमभिधायाद्ये (आङ्गं यदिति समाधाने) दोषान्तरमाह—अङ्गस्येत्येति ॥ छाया ॥

६ द्वितीय आह—अन्त्येऽपीति। अथवेति पक्षेऽपीत्यर्थः ॥ सिद्धत्वेति। सिज्लोप एकादेश इतीत्यर्थः ॥ छाया ॥

७ सिद्धान्ती आक्षिपति—यदीति ॥

८ दीर्घत्वं वोरुपधाया इत्यनेन ॥ छाया ॥

९ अपदान्तस्येत्युक्त्या पदान्तत्वेऽप्राप्तत्वात् ॥ दाधिमथाः ॥

१० रुत्वे इति। पदान्तत्वनिबन्धन इति भावः ॥ छाया ॥

११ एकदेशी समाधत्ते—नैष इति ॥

१२ अङ्गसंबद्धत्वसत्त्वेन यथाश्रुतभाष्यासंगतेराह—अङ्गेति ॥ तदेवेति। सजातीयत्वादिति भावः ॥ छाया ॥

१३ नाङ्गं नाङ्गाधिकारविहितम् ॥ छाया ॥

१४ नन्वेवमप्यग्रहीदित्यत्र ग्रहोऽलिटीत्याङ्गो दीर्घो न स्यादेवात आह—यत्त्विति ॥ तेनेति। नुमभावेनेत्यर्थः ॥ छाया ॥

१५ व्यवस्थेति। न पदान्तेत्यत्र सार्वत्रिकत्वेनेति शेषः ॥ ततश्च क्विनिमित्तककार्ये निषेधः, नुम् तु न तथेति सिद्धमस्थानिवत्त्वमिति भावः ॥ छाया ॥

१६ ननु तथापि स्थानिवत्वेनाजन्तलक्षणो नुम् स्यादेवात आह—स्वविधाविति ॥ छाया ॥

१७ निषेधादिति। क्विलुगुपधेति वचनेनेत्यर्थः ॥ एवं चोक्तदोषस्तदवस्थ इति तात्पर्यम् ॥ छाया ॥

१८ तदेवं नियमेन निवृत्तिप्राप्तिमभ्युपेत्योक्तं वस्तुतः सैव नेत्याह—अथवेति ॥ छाया ॥

१९ दीर्घत्वस्येति। त्रिपादीस्थस्य वोरित्यस्येत्यर्थः ॥ छाया ॥

२० नन्वेवमप्यलावीदित्यत्र सवर्णदीर्घव्यावृत्तिः स्यादेवात आह—अलावीदिति ॥ पूर्वमतेऽनाङ्गत्वाददोषेऽप्यत्र दोषाभावायाह—सिजिति वचनात्। वचनसामर्थ्यात् ॥ छाया ॥

२१ वचनसामर्थ्यं विघटयति नचेति। अन्यथा तस्यासिद्धत्वे ॥ स नेति। ह्रस्वात्परत्वाभावादिति भावः ॥ छाया ॥

२२ नन्वेवं तस्य का गतिरत आह—सिजिति। विषयमिति ॥ प्रत्यासत्त्या सिज्लोपाभावाभावितया तन्निमित्तकैकादेशे इति वार्तिकार्था-

बोध्यम् । वस्तुतो[1] नियमस्यैकदेशयुक्तित्वादिफलोयं विचार इति तत्त्वम् ॥ ६ ॥

---

( ६ संयोगसंज्ञासूत्रम् ॥ १ । १ । ४ आ. ४ ॥ )

## हलोऽनन्तराः संयोगः ॥ १ । १ । ७ ॥

( अनन्तरपदार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**अनन्तरा[2] इति । कथमिदं विज्ञायते—अविद्यमानमन्तरं येषामिति, आहोस्विदविद्यमाना अन्तरैषामिति ? ॥**

( प्रदीपः ) **हलोऽनन्तराः ॥ ७ ॥ कथमिति ।** किमन्तर[3]शब्दस्य नञा बहुव्रीहिः, अथ अन्तराशब्दस्येति प्रश्नः । **अन्तरं** विवरं[4] वर्णशून्यकाल इत्यर्थः ॥ **अविद्यमाना इति ।** मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधो न त्वाधारस्य ॥

(उद्द्योतः) हलोऽनन्तराः ॥ ७ ॥ अन्तरा[5]शब्दो मध्ये इत्यर्थे ॥ नत्वाधारस्येति । काल[6]मात्रस्येत्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**किं चातः[7] ? ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**यदि[8] विज्ञायते-अविद्यमानमन्तरं येषामिति, । अवग्रहे संयोगसंज्ञा न प्राप्नोति—'अप्स्वित्यप्ऽसु' (ऋ०सं०पद०१।२३।१९) इति । विद्यते ह्यत्रान्तरम् ॥**

**अथ विज्ञायते—अविद्यमाना अन्तरैषामिति, न[9] दोषो भवति ॥**

( प्रदीपः ) **अवग्रह इति ।** अर्धमात्राकालोऽवग्रह इष्यते । अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते तत्र[10] **गुरोरनृत** इति प्लुतो न भवेत् ॥

(उद्द्योतः) अर्धेति । वर्णाद्वर्णोच्चारणेऽर्धमात्राकालस्य नियतत्वात्तदधिकोऽर्धमात्राकाल इत्यर्थः । अत एव मात्राकालोऽवग्रह इति प्रातिशाख्यान्तरैरविरोधः ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**यथा[11] न दोषस्तथास्तु ।**

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अथवा पुनरस्तु-अविद्यमानमन्तरं येषामिति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु[12] चोक्तम्-अवग्रहे संयोगसंज्ञा न प्राप्नोति— 'अप्स्वित्यप्ऽसु' इति । विद्यते ह्यत्रान्तरमिति ॥**

( आक्षेपबाधकभाष्यम् )

**नैव[13] दोषो न प्रयोजनम् ॥**

( प्रदीपः ) **नैव दोष इति ।** दोषनिवृत्तये संज्ञा क्रियते, प्रयोजनाभिनिर्वृत्तये वा, इह[14] चोभयाभावः । अधिकरणवृत्तेर्दूराद्धूते संबन्धाभावात् । **विचार्यमाणानामित्यादौ तु** वाक्यस्य[15] **टेरित्यनुवर्तते, न गुरोरनृत इति ।** अप्सव्यशब्दे दोष इति चेद्, नैवंविधे विषये प्रकृत्यवयवस्यावग्रहं पदकाराः कुर्वन्ति ॥ अप्सुयोनिरित्यादावपि समासघटकपदानामन्तोऽवगृह्यते इति सुशब्दात्पूर्वस्य[16] नास्त्यवग्रहः ॥

---

ङ्गीकारात् । नचैकादेशपदसामर्थ्यात्तथा, सवर्णदीर्घपदापेक्षया मात्रातो लघुत्वादिति भावः ॥ छाया ॥

१ अयं सर्वोऽप्यभ्युपेत्यवादो न तत्त्वमुक्तयुक्तेरित्याह—वस्तुत इति ॥ छाया ॥ एवं च धातुद्वयोपादानखण्डनमेव सिद्धान्तिसंमतं नत्विड्ग्रहणप्रत्याख्यानमितीटो गुणप्रतिषेधाय ग्रहणमेव करणीयमिति पर्यवसितम् ॥ दा०

२ वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादाह पूर्वपक्षी—अनन्तरा इति । इदं सौत्रमनन्तरा इति पदं कथं किमर्थकमित्यर्थः ॥ छाया ॥

३ नात्रैकवचनबहुवचनमात्रकृतसंदेहोऽभिमतः अर्थाभेदे तन्मात्रकृतभेदस्याकिंचित्करत्वात् । वृत्तौ संख्यासामान्य[ा]प्रतीतेश्च । एतेन नपुंसकेन क्रियारूपवाचिना नञो बहुव्रीहिरुत वर्णरूपव्यवधायकवाचिना पुंलिङ्गेनेति प्रश्न इति रत्नप्रकाशोक्तमपास्तम् । अर्थाभेदे लिङ्गकृतभेदस्याकिंचित्करत्वात् । तस्य लौकिकत्वात्समासोत्तरमविशेषात् । 'कोशे' क्रियावर्णरूपार्थकत्वानुक्तेश्च । किं चाद्ये क्रिययैव व्यवधानं तत्कर्त्रा वा । नाद्यः, तया व्यवधानाभावात् सत्वेनाप्रतीतेः । द्वितीयोऽपि न, तयैव व्यवधानसंभवात् पक्षान्तरोक्तेरसांगत्यापत्तेश्च । एतेन द्वितीयोऽपि निरस्तं इति दिक् । तदेतद्व्नयन्नाह—किमन्तरेति । तथाच किमाधारकालनिषेध उताधेयवर्णनिषेध इति तात्पर्यम् ॥ छाया ॥

४ अन्तरशब्दस्यानेकार्थत्वेऽप्यन्यार्थासंभवादाह—विवरमिति । तथाच च्छिद्रवाच्ययमिति भावः । विवरं न मूर्तद्रव्याभावो विवक्षितः हल्मध्ये मूर्तद्रव्याप्रसङ्गादित्याह—वर्णेति ॥ छाया ॥

५ अन्तराशब्दोऽत्राव्ययमित्याह—अन्तरेति । तथाचाधिकरणशक्तिप्रधानोऽयमिति भावः ॥ छाया ॥

६ नन्वाधेयनिषेधे आधारनिषेधः संपन्न एव तं विना तदभावात् । एवं च नत्वाधारस्येत्ययुक्तमत आह—कालमात्रेति । मात्रपदेन वर्णव्यावृत्तिः । तथा चाधारपदं तन्मात्रपरम्, आधेयपदं तन्मात्रपरमिति भावः ॥

७ तटस्थः पृच्छति—किं चात इति ॥

८ पूर्वपक्षी स्वाशयं प्रकाशयति—यदीति ॥

९ न दोष इति । आधेयवर्णस्यैव निषेधात्कालरूपाधारस्यानिषेधात्संयोगादिसंज्ञासिद्धिरित्यर्थः ॥ छाया ॥

१० तत्र अवग्रहे संयोगसंज्ञाया अभावेन गुरुसंज्ञाया अभावे ॥ छाया ॥

११ सिद्धान्ती समाधत्ते—यथेति ॥

१२ पूर्वपक्षी सिद्धान्तिनमाक्षिपति—ननु चोक्तमिति ॥

१३ [सिद्धान्त्याह—]नैव दोष इति ॥

१४ इह च अप्ऽसु—इत्यत्र च । वृत्तेरिति । अप्स्वित्यस्येत्यर्थः ॥ छाया ॥

१५ वाक्यस्य टेरिति । तथाचागुरुत्वेऽपि वाक्यस्य टेः प्लुत इत्यत्रावाक्यत्वात्तदप्रवृत्तिरेवेति तदपि न प्रयोजनमिति भावः ॥ छाया ॥

१६ पूर्वस्येति । अप्शब्दस्येत्यर्थः ॥ गुरोरनृत इत्यत्र दूराद्धूते चेत्यनुवृत्तावपि यथा दूराद्धूतत्वमविवक्षितं तथा संबोधनविभक्तिविषयसंबोधनमपि नोपलक्ष्यत्वेन विवक्षितं किं तु बोधनमात्रमित्यप्सव्यशब्दादौ प्रसंग इति भावः ॥ छाया ॥

(उद्द्योतः) नैव दोष इत्यादेः संज्ञाभावे न दोषः। संज्ञायां च न प्रयोजनमित्यर्थं इत्याह—दोषनिवृत्तये इत्यादि ॥ अप्सव्यशब्दे इति । अप्सुशब्दा[1]द्दिगादियति अपो योनि[2]र्यन्मतुष्विवत्यलुक्[3] ॥ प्रकृत्यवयवस्य तद्धित[4]प्रकृत्यवयवस्य । अत्र[5] च वैदिकसंप्रदाय एव शरणम् ॥ अन्तोऽवेति । समासे समस्यमानपदान्ते एवावग्रहः । अयमपि वैदिकसंप्रदाय एव ॥

( अथ प्रत्येकं संयोगसंज्ञानिराकरणाधिकरणम् )

( १३२ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ संयोगसंज्ञायां सहवचनं यथान्यत्र ॥ * ॥

( भाष्यम् )

**संयोगसंज्ञायां सहग्रहणं कर्तव्यम् । "हलोनन्तराः संयोगः सह" इति वक्तव्यम् ॥ किं प्रयोजनम्? । सहभूतानां संयोगसंज्ञा यथा स्यादेकैकस्य मा भूदिति ॥ यथान्यत्र । तद्यथा अन्यत्रापि यत्रे[6]च्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणम् । तद्यथा "सह सुपा" "उभे अभ्यस्तं सह" इति ॥**

( प्रदीपः ) **संयोगसंज्ञायामिति** । वृ[7]द्धिसंज्ञावदानन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति ॥

(उद्द्योतः) नन्वनन्तरग्रहणादेकैकस्य संज्ञा दुर्लभेत्यत आह—आनन्तर्येति । एवं[8]च तदुपलक्षणमिति भावः ॥

( दूषणप्रश्नभाष्यम् )

**कि[9]ं च स्याद् यद्येकस्य संयोगसंज्ञा स्यात्? ।**

(प्रदीपः) किं च स्यादिति । द्वयोरानन्तर्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबद्धका[10]र्यसिद्धिरिति प्रश्नः ॥

(उद्द्योतः) संज्ञाप्रतिबन्धेति पाठे कर्मणि घञ् बोध्यः । संज्ञाप्रतिबद्धेति पाठः सुगम एव ॥

( दोषप्रदर्शनभाष्यम् )

**इ[11]ह निर्यायात्, निर्वायात्, "वान्यस्य संयोगादेः" इत्येत्वं प्रसज्येत ॥**

**इह च संहृ[12]षीष्टेति, "ऋतश्च संयोगादेः" इतीट् प्रसज्येत ॥**

**इह च संह्रि[13]येत इति, "गुणोऽर्तिसंयोगाद्योः" इति गुणः प्रसज्येत ॥**

**इह च दृ[14]षत्करोति, समित्करोतीति, "संयोगान्तस्य" इति लोपः प्रसज्येत ॥**

**इह च शक्ता वस्तेति, "स्कोः संयोगाद्योरन्ते च" इति लोपः प्रसज्येत ॥**

**इह च निर्यातो निर्वातः "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येत ॥**

(प्रदीपः) **निर्यायादिति** । सति रेफे यकारः संयोग इत्येत्वप्राप्तिः ॥ ननु समुदायस्यापि संज्ञित्वेऽ**चो रहाभ्यां द्वे** इति यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति यथा निर्ग्लेयादिति । एत्वे कर्तव्ये **पूर्वत्रासिद्ध**मिति द्विर्वचनस्यासिद्धत्वान्नायं दोषः ॥

**शक्तेति** । तकारे झलि परतः ककारः संयोगो भवत्यादिश्चेति लोपप्रसङ्गः ॥

---

1 शङ्काशयमाह—अप्स्विति । भवार्थे इति शेषः ॥ छाया ॥

2 अप्सुमन्तावित्यत्रानुकरणत्वादस्यवामीयादिवल्लुग् न भविष्यति किं मतुग्रहणेनेति ॥ अन्ये तु मतिशब्दं पठन्ति । उदाहरन्ति चात्र—सोमो वाप्सुमतिरिति, तत्तु भाष्ये न दृष्टम् । इति पदमञ्जरी तु समुपलभ्यमानभाष्यविरुद्धेति बोध्यम् ॥ दाधिमथाः ॥

3 त्वलुगिति । ओर्गुणो वान्तोयीत्यवादेशश्चेत्यपि बोध्यम् । संभवत्यस्य दूराद्धूतसंबन्ध इत्यसत्यां गुरुसंज्ञायां प्लुतो न स्यादिति भावः ॥ छाया ॥

4 तद्धितेति । तद्धितप्रत्ययप्रकृतिभूताप्सुशब्दावयवभूताप्शब्दस्येत्यर्थः ॥ छाया ॥

5 अवान्तरपदत्वे सत्यवग्रह इत्यस्य व्यभिचारादाह—अत्रचेति ॥ छाया ॥ युक्तं चैतत्—'गोभ्यो॑ गा॒तुं' (ऋ. ८।४५।३०) 'गोभि॑र्मदा॑य' (ऋ. ९।४३।१) 'चित्र॒ इद्राजा॑ राज॒का इद॒न्य॒के' (ऋ. ८।२१।१८) इत्यादौ गोभ्यो गोभिः राजका इत्यादीनां सत्यपि पदत्वेऽवग्रहाकरणात् । 'ई॒यि॒वांस॒मति॒ स्रिधः॑' (ऋ. सं. ३।१०।४) इत्यादौ ईयिऽवांसमिति विनापि पदसंज्ञां क्वसोः पूर्वमिडागमान्तेऽवग्रहकरणाच्च । इति श. कौ. ॥

6 च्छतीति । पाणिन्यादिरिति शेषः ॥ वर्तमानसामीप्ये लट् । एवं करोतीत्यत्रापि बोध्यम् । अत्र यद्यपि वार्तिककृतः 'सह सुपा' इत्येक एव दृष्टान्तत्वेनाभिमतः इदानीं तत्र तस्य सिद्धत्वात्, तथापि 'उभे अभ्यस्तम्' इत्यत्र करिष्यमाणसहग्रहणकत्वेऽप्यवश्यकार्यत्वेन बुद्ध्यारूढत्वात्तदपि दृष्टान्ततया भगवतोक्तम् । एककर्तृकत्वेऽपि स्थलभेदान्न तदनुपपत्तिः ॥ वस्तुतस्तु वर्तमानसामीप्ये लट् । आद्ये भूतप्रतिपत्तिरन्त्ये भावित्वस्येति न काप्यनुपपत्तिरिति बोध्यम् ॥ छाया ॥

7 सह ग्रहणेन सूत्रं पूरणीयम् । अन्यथा दोषापत्तिरित्याह—वृद्धीति छाया ॥

8 एवं चेति । आनन्तर्येण व्यवस्थितानां निश्चितत्वेन विद्यमानानां न तु तद्विशिष्टानामित्यर्थकानन्तर्यैत्याद्युक्तौ चेत्यर्थः ॥ तत् आनन्तर्यम् ॥ छाया ॥

9 तटस्थः पृच्छति—किं चेति ॥

10 कार्येति । शिक्षेत्यादौ गुरोश्च हल इत्यप्रत्ययसिद्धिरित्यर्थः ॥ तथा च किमापद्येतान्यदनिष्टमिति भाष्यार्थ इति भावः ॥ छाया ॥

11 आक्षेप्तातिव्याप्तीर्दर्शयति—इहेत्यादिभिः ॥

12 संहृषीष्टेति । संपूर्वाद्धरतेराशीर्लिङि तङि रूपम् । 'लिङ्सिचा—' इति कित्त्वाद्गुणो न ॥ इट्प्रेति । अझलादित्वेनाकित्त्वाद्गुणे संहरिषीष्टेति स्यादिति भावः ॥ छाया ॥

13 संह्रियत इति । अत्र सामान्यशिष्टरिङः संयोगादित्वेन विशेषविहितो गुणो बाधकः स्यादिति संहर्यत इति स्यादिति भावः ॥ छाया ॥

14 दृषत्केति । कसंनिधौ दस्य संयोगत्वात् । संयोगान्तस्येति बहुव्रीहिः । पदं चान्यपदार्थः । तथाच 'अलोन्त्यस्य' इति अन्त्यदस्य लोपः स्यादिति भावः ॥ छाया ॥

---

1 'ह्रस्वव्यञ्जनाभ्यां मकारादौ विभक्तिप्रत्यये' (५।१३) इति शुक्लयजुःप्रातिशाख्ये कात्यायनेन ह्रस्वव्यञ्जनातिरिक्तादवग्रहानङ्गीकरणबोधनात् ॥

2 'वांसौ च भूतकाले स्वरेण ह्रस्वादनुपि' (५।११) इति शुक्लयजुःप्रातिशाख्येऽवग्रहकरणसूचनात् ॥

(उद्द्योतः) कस्मादिति । बहूनां संनिधानेऽविशेषेण द्वयोर्बहूनां च संज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः ॥ परिहरति—एत्वे इति । पूर्वत्रा[1]सिद्धीयमद्विर्वचने इति तु द्विर्वचने कार्येऽन्यस्यासिद्धत्वं नेत्यर्थकम्, नतु द्विर्वचनस्य तदभावप्रतिपादकमिति भावः

संयोगो भवत्यादिश्चेति । प्रत्येकं[2] संज्ञापक्षे स्कोः संयोगावयवत्वासंभवेन षष्ठीसमासासंभवाल्लाघवाच्च कर्मधारय एवेति भावः ॥ आदिशब्दश्च पूर्वं [भूत[3]] समीपवाची । आदित्वं च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् ॥ अन्यथा ह्यर्कयतेरप्रत्ययेऽर्ग् इत्यादावन्तकस्यापि लोपः स्यात्[4] ॥

( दोषबाधकभाष्यम् )

नैष[5] दोषः । यत्तावदुच्यते—इह तावन्निर्यायात् निर्वायात् "वान्यस्य संयोगादेः" इत्येत्वं प्रसज्येतेति ॥ नैवं[6] विज्ञायते-संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति ॥

कथं तर्हि ? ।

संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् ॥

(प्रदीपः) संयोगाविति । कथं वृत्तावुपसर्जनार्थस्य द्वित्वावगतिरिति चेद् । आदिग्रहणसामर्थ्यात् । अन्यथा संयोगादिति वक्तव्यं स्यात् । संयोगात्परो य आकारस्तदन्तस्याङ्गस्यैत्वमित्यर्थलाभात् ॥

(उद्द्योतः) कथं वृत्ताविति । अयं पूर्वपक्षोऽयुक्तः[7], संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेवाभावात् । संयोगत्वेनैवानेकसंयोगप्रतीतेः । न हि वृत्तावनेकबोध उपसर्जनान्नेति भाष्यसंमतम् । संख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात् । नत्वनेकानवगम इति तेनोक्तमिति विभाव्यताम् ॥ संयोगात्पर इति । न[8] चाङ्गावयवसंयोगग्रहणायादिग्रहणम् । तत्र यद्यपि दरिद्रातौ न फलम् । आर्धधातुकविवक्षायां तस्याल्लोपविधानात्, तथापि खट्वादिभ्य आचारक्विबन्तेभ्यो लिङि खट्वायादित्यादौ एत्ववारणं फलमिति वाच्यम् । स्यसिच्सूत्रादुपदेशपदानुवृत्त्या घुमास्थाद्यन्यस्यौपदेशिकस्यैव ग्रहणेन नामधातु[9]ष्वेत्वाप्रवृत्तेरिति भावः ॥ खट्वादिभ्य[10] आतो धातोरिति सूत्रस्थभाष्यप्रामाण्येनाचारक्विपोऽभावाच्च । सिद्धान्ते[11] तु निर्यायादित्यादिवारणायाङ्गाद्यवयवसंयोगग्रहणाय तदिति बोध्यम् ॥

( द्वितीयदूषणोद्धारभाष्यम् )

यदप्युच्यते—इह च दृषत्करोति समित्करोति "संयोगान्तस्य"-इति लोपः प्रसज्येतेति ॥ नैवं विज्ञायते—संयोगोऽन्तो यस्य तदिदं संयोगान्तं संयोगान्तस्येति ॥

कथं तर्हि ? ।

संयोगावन्तौ यस्य तदिदं संयोगान्तं संयोगान्तस्येति ॥

(प्रदीपः) संयोगावन्ताविति । अत्रापि संयोगस्य लोप इत्येव संयोगेन पदस्य विशेषणात्तदन्तविधौ लब्धेऽन्तग्रहणमाश्रितसंख्याभेदः संयोगो यथा गृह्यतेत्येवमर्थं विज्ञायते ॥

( तृतीयदूषणोद्धारभाष्यम् )

यदप्युच्यते—इह च शक्ता वस्तेति "स्कोः संयोगाद्योः"-इति लोपः प्रसज्येतेति ॥ नैवं विज्ञायते—संयोगावादी संयोगादी संयोगाद्योरिति ॥ कथं तर्हि ? ॥

संयोगयोरादी संयोगादी संयोगाद्योरिति ॥

( प्रदीपः ) संयोगयोरिति । षष्ठीसमास आश्रीयत इ-

---

१ पूर्वत्रेति । अत्र द्वित्ववदेत्वस्याप्युपसर्गनिमित्तकत्वेन समत्वात्तत्वाभावेन न पक्षद्वयेऽपि 'असिद्धं वहिरङ्गमन्तरङ्गे' इत्यस्याः प्रवृत्तिरिति भावः ॥ छाया ॥

२ ननु शक्तेत्यादौ तृचस्तकारे झलिपरे यौ कसौ नच तयोराद्यावन्त्यौ ताविति कथं लोपप्राप्तिः । न चाद्यन्तवद्भावेनादित्वम् । अत्र पक्षे हि नादिशब्दोवयववाची वर्णस्यान्यवर्णं प्रति तत्त्वासंभवात् । किं तु व्यवस्थावाची । तथा च झल्परो यः संयोगस्ततः पूर्वयोस्तयोर्लोप इत्यर्थ इत्यत आह—प्रत्येकेति ॥ छाया ॥

३ भूतपदोपादानं चिन्त्यप्रयोजनम् । अत एव 'आदित्वं च पूर्वसमीपत्वं च' इत्येवं छायायां भूतपदमन्तरा व्याख्यातम् ॥

'परव्यावृत्तय आह—भूतपूर्वेति ॥ पूर्वभूतेत्यपपाठः' इति च्छाया तु 'भूतपूर्वे चरट्' इत्यार्षनिर्देशस्य कालवाचित्वे पूर्वशब्दस्य चारितार्थ्येन देशवाचित्वे पूर्वशब्दस्य प्रवृत्तौ मानाभावाच्चिन्त्यैव ॥ दाधिमथाः ॥

४ लोपः स्यादिति । रात्सस्येति नियमादत्र संयोगान्तलोपाप्राप्तिः । स चोर्गित्यादौ सावकाशः । एवंचादिग्रहणाभावेऽपि रात्सस्येति नियमसामर्थ्यादत्र लोपो नेति निरस्तं वेदितव्यम् ॥ छाया ॥

५ [तटस्थो दूषणानि प्रत्येकसंज्ञापक्षेऽपि परिहरति—] नैष दोष इति । जातावेकवचनम् ॥ अन्यथासिद्धेरिति शेषः ॥ तमेवानुवादपूर्वं प्रत्येकमाह—यत्तावदिति ॥ छाया ॥

६ नैवमिति । तत्रेत्यादिः । एकवचनान्तेन समासादेकसंयोग आदिर्यस्येत्येवं न विज्ञायत इत्यर्थः ॥ संयोगावादी यस्येति फलितार्थकथनमिदम् । विग्रहस्त्वेकवचनान्तेनैव । परंतु आदिग्रहणसामर्थ्यात्संयोगत्वेनानेकसंयोगस्यैवात्र ग्रहणं नैकस्येति तात्पर्यम् ॥ अतएव स्त्यायात् स्त्येयादित्यादौ नाव्याप्तिः ॥ यद्वा—आदिग्रहणसामर्थ्याद्विवचनान्तेन समासे द्वित्ववत्त्वेन संयोगप्रतीतिरत्रेष्टा बहूनां समवधानेऽपि द्वयोरेव संयोगसंज्ञाङ्गीकारान्न तत्राव्याप्तिः ॥ छाया ॥

७ पूर्वपक्षोऽयुक्त इति । सिद्धान्तस्तु युक्त एवेति भावः ॥ तत्राद्यपक्षाभिप्रायेणाह—संयोगेति ॥ वानेकेति । एकसंयोगवत् ॥ तत्र बीजमाह—नहीति ॥ विशेषेति । तथाचैकत्वस्याप्यनवगम इति भावः ॥ छाया ॥

८ सिद्धान्तं द्रढयितुं शङ्कते—नचाङ्गेति ॥ तस्य प्रथमावयवेत्यर्थः ॥ छाया ॥

९ नामधास्विति । तेषामुपदेशाभावादिति भावः ॥ छाया ॥

१० एवं विवरणाद्युक्तयुक्तिमुक्त्वा स्वयुक्तिं भेदेनाह—खट्वेति ॥ भाष्येति । 'आतोऽनापः' इति वार्तिकप्रत्याख्यानपरभाष्येत्यर्थः ॥ छाया ॥

११ ननु सिद्धान्तेप्यादिग्रहणानर्थक्यमत आह—सिद्धान्ते त्विति । समूहे संयोगसंज्ञायां त्वित्यर्थः ॥ दित्यादीति । दित्यादावेत्ववारणायेत्यर्थः ॥ छाया ॥

त्यर्थः । संयोगयोरिति द्विवचननिर्देशः स्कोर्द्वित्वात्तत्समीपयोर[1]पि हलोर्द्वित्वात्कृतः । तेन[2]ायमर्थः—झलि परतो यः संयोगः पदान्ते च यः संयोगस्तस्यादिः समीपो यः ककारः सकारश्च तयोर्लोप इति । न चैवं सति शक्ता वस्तेत्यत्र लोपः प्राप्नोति ॥

(उद्द्योतः) भाष्ये आदी इति । यद्यपि मुख्यादित्वमुभयोर्व्याहतं, तथाप्येक आदिशब्दो गौण इति भावः ॥ पूर्ववद्द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थः । उ[3]भयत्रापि द्विवचनोपादानादत आह—ष[4]ष्ठीति । एवं च झलं[5]शेऽपि संयोगादिविशेषणमर्थवद्भवतीति भावः ॥ आदिशब्दश्च ना(च)वयववाची असंभवादित्याह—समीप इति । झ[6]लादिविशेष्यस्य संयोगस्योपसर्जनत्वेऽपि सौत्रत्वाद्वृत्तिः । न च शक्तेत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः । आदिग्रहणसामर्थ्याद् व्यपदेशिवद्भावाप्रवृत्तेः ॥

( चतुर्थदूषणोद्धारभाष्यम् )

**यदप्युच्यते—इह च निर्यातो निर्वात इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येतेति ॥ नैवं विज्ञायते—संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति ॥**

**कथं तर्हि ? ॥**

**संयोगावादी यस्य सोयं संयोगादिः संयोगादेरिति ।**

(प्रदीपः) संयोगादेरात इति । अत्रापि संयोगादात इत्येव संयोगात्परो य आकारस्तदन्ताद्धातोर्नत्वमिति सिद्धे आदिग्रहणं द्वित्वसंख्याश्रयणार्थम् ॥

( आक्षेपभाष्यम् )

**क[7]थं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) कथं कृत्वेति । संयोगसंज्ञाया अन्वर्थत्वात्संयुज्यन्तेऽस्मिन्वर्णा इति समुदायः संयोग इत्यर्थस्याश्रयणात्सहग्रहणं न कर्तव्यमित्यर्थः ॥

(उद्द्योतः) व[8]स्तुतस्तु प्रत्येकं संज्ञेति पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुं गूढाशयः पृच्छति—भाष्ये कथं कृत्वेति । तमेवालाभं व्याचष्टे—संयोगेति । ए[9]वंचान्वर्थसंज्ञाविरोधात्प्रत्येकं वाक्यपरिसमाप्तिन्यायो नात्राश्रयितुं शक्यत इति व्यर्थं सहेतीति भावः ॥ किं च[10] श्रुतमानन्तर्यं प्रत्येकसंज्ञावादिनोपलक्षणमाश्रयितव्यम् । विशेषणत्वमेवोचितं, तत्त्वे संभवति उपलक्षणत्वस्यान्याय्यत्वात् । किं चा[11]धन्तग्रहणसामर्थ्याद्द्विवचनान्तेनैव विग्रह इत्यर्थस्य नियमेनालाभः । बहुवचनान्तेनापि संभवादित्याहुः॥ व[12]स्तुतोऽन्वर्थसंज्ञा चिन्त्या, तदाश्रयणे घटपटौ संयुज्येते यत्रेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः । तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव ज्यायः ॥ अ[13]त एव भगवता गर्गदण्डनन्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं, न तु महासंज्ञयेत्यलम् ॥

( समाधानभाष्यम् )

**'[14]प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा' इति । तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः ॥**

( समाधानबाधकप्रतिबन्दीसिद्धान्तिभाष्यम् )

**[15]ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्तिः' इति । तद्यथा—गर्गाः शतं दण्ड्यन्ताम् । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति ॥**

( सहग्रहणप्रत्याख्यानभाष्यम् )

**[16]सत्येतस्मिन्दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते,**

---

१ तत्समीपयोरिति । ततश्च नोपसर्जनद्वित्वप्रतिपादनपरं भाष्यमिति भावः ॥ छाया ॥

२ ननु झलीत्यस्य संयोगादिविशेषणत्वे षष्ठीसमासस्य कर्मधारयाद्विरोधोऽत आह—तेनेति ॥ यद्यप्युपसर्जनं संयोगस्तथापि संयोगादिग्रहणसामर्थ्यात्संयोगो झलीत्यनेन विशेष्यते । एवं पदान्त इत्यनेनापि । अन्यथा तत्राप्यादिग्रहणवैयर्थ्यादिति भावः ॥ छाया ॥

३ उभयत्रापीति । हेयोपादेययोरित्यर्थः ॥

४ षष्ठीतीति । न च लाघवात्कर्मधारय इत्युक्तम्, लक्ष्यानुरोधेन दुर्बलस्याप्यङ्गीकारादिति भावः ॥ छाया ॥

५ झलंशेऽपीति । अपिना पदान्तांशसमुच्चयः ॥ छाया ॥

६ ननु सविशेषणानामिति निषेधात्कथं वृत्तिरत आह—झलादीति । आदिना पदान्तपरिग्रहः ॥ छाया ॥

७ सिद्धान्ती पृच्छति—कथमिति ॥

८ एवमभ्युपेत्य प्रत्येकं संयोगसंज्ञां दोषपरिहारेण सहग्रहणस्याफलत्वं प्रतिपादितम् ॥ इदानीं तदसंभवादेव तदफलत्वमित्याह—वस्तुत इति ॥ ॥ छाया ॥

९ अथेत्यादि [ वक्ष्यमाण ] भाष्याशयमाह—एवंचेति ॥ छाया ॥

१० अस्य दूष्यत्वेनायुक्तत्वात्साधकान्तरमथेत्यादिवक्ष्यमाणभाष्याभिमतमाह—किंचेति ॥ मेवोचितमिति । मेव तूचितमित्यर्थः ॥ छाया ॥

११ परिहारासंगतिमप्याह—किंचाद्यन्तेति ॥ बाह्विति । तथा च पक्षिकवक्ष्यमाणदोषापत्तिरितिभावः ॥ छाया ॥

१२ आहुरित्यरुचिबीजं प्रकटयति—वस्तुत इति ॥ छाया ॥

१३ उक्तार्थं द्रढयति—अत एवेति । किं चानन्तरा इति विशेषणबलाद्प्रसङ्ग इति तद्यर्थम् । इदमेवाथेत्यादिभाष्याभिमतं यदि तदास्तु तथैव । सर्वथा महासंज्ञानुक्तत्वान्नाभिमता । अन्यथा सर्वनामादिसंज्ञास्विवात्रापि तथोच्येतैवेतिभावः । यत्तु—बहुवचननिर्देशाद्धल इत्येकशेषावगतसाहित्यस्य विवक्षितत्वात्समुदायस्य संज्ञेति कृष्णः । तन्न, तथासति द्वयोस्तदभावापत्तेः । बहूनामेकत्र सत्त्व एवापत्तेश्चेति दिक् । तदाह अलमिति ॥ छाया ॥

१४ आक्षेप्ता स्वाभिमताक्षेपसाधकन्यायं दर्शयति—प्रत्येकमिति ॥

१५ सिद्धान्ती प्रतिदृष्टान्तमाह—ननुचेति ॥

१६ सिद्धान्ती प्रतिदृष्टान्तेनाक्षेप्तृदृष्टान्ते प्रतिबन्द्या दूषिते निर्णेतुकाम आह—सत्येतस्मिन्निति । सत्येऽपि तस्मिन् ब्राह्मणभोजनदृष्टान्ते स्पष्टार्थं वृद्धिसंज्ञायां प्रत्येकमित्युच्यते इत्याद्यर्थः । वार्तिककृतेति शेषः ॥ इहापीति । तर्हीति शेषः । सत्यपि एतस्मिन् गर्गदण्डनन्याये इत्यनुकृष्यते । तत्तन्न्यायप्रवृत्तिसूचनाय स्पष्टार्थमिति भावः ॥ कर्तव्यमिति । वार्तिककृतेति भावः ॥ छाया ॥

इहापि सहग्रहणं कर्त्तव्यम् । अथ[1] तत्रान्तरेण प्रत्येकमितिवचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन ॥

( आक्षेपभाष्यम् )

अथ[2] यत्र बहूनामानन्तर्यं, किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति, आहोस्विदविशेषेण ॥

(प्रदीपः) आहोस्विदिति । द्वयोरित्यस्य विशेषस्यानाश्रयणाद्बहूनामेवेत्यर्थः । यथा पपाचेत्यत्र समुदायस्यैकाचो द्विर्वचनं नावयवस्यैकाचः । यदा[3] तु द्वयोरेव हलोरानन्तर्यं तदा द्वयोर्भवत्येव । हल इति जातौ बहुवचननिर्देशात् ॥

(उद्द्योतः) नन्वविशेषेणेत्यस्य द्वयोर्बहूनां चेति नार्थः । अस्याविशेषस्याग्रे वक्ष्यमाणत्वात् । मस्जौ[4] दोषदानासङ्गतेश्चात आह—द्वयोरित्यस्येति । अत एव भाष्ये—समुदाये संयोगादिलोप इति वक्ष्यति ॥ तत्र[5] युक्तिमाह—यथेति ॥ हल इति जाताविति । वस्तुतो[6] हलौ च हलश्चेत्येकशेषः । स्वरितादिति सूत्रेऽनुदात्तानामित्यत्र भाष्ये तथैव वक्ष्यमाणत्वात् ॥

( भाष्यम् )

कश्चात्र विशेषः ? ।

( १३३ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ समुदाये संयोगादिलोपो मस्जेः ॥ * ॥**

( भाष्यम् )

समुदाये[7] संयोगादिलोपो मस्जेर्न सिद्ध्यति । मङ्क्ता मङ्क्तुम् ॥

इह[8] च निर्ग्लैयात् निर्ग्लायात् निर्म्लैयात् निर्म्लायादिति, "वान्यस्य संयोगादेः" इत्येत्वं न प्राप्नोति ॥

इह च संस्वरिषीष्टेति, "ऋतश्च संयोगादेः" इतीट् न प्राप्नोति ॥

इह च संस्वर्यते इति, "गुणोऽर्तिसंयोगाद्योः" इति गुणो न प्राप्नोति ॥

इह च गोमान्करोति यवमान्करोतीति, "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति ॥

इह च निर्ग्लानो निर्म्लान इति, "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति ॥

(प्रदीपः) मङ्क्तेति । मस्जिनशोर्झलीति नुमि कृते नसजानां संयोगसंज्ञा, न तु सजयोरिति सलोपाप्रसङ्गः ॥ निर्ग्लैयादिति । यः[9] संयोगो नासावङ्गादिः, यश्चाङ्गादिर्गकारलकारसमुदायो नासौ संयोगः ॥

(उद्द्योतः) [भाष्ये[10] 'पूर्वं धातुरुपसर्गेण' इत्याश्रित्य क्वचित्, क्वचिच्च वाक्यसंस्कारपक्षाश्रयेण दोषोपन्यासः[11] ॥]

( प्रथमपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि-द्वयोर्द्वयोः संयोगः[12] ॥

( १३४ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ द्वयोर्हलोः संयोग इति चेद्-द्विर्वचनम् ॥ * ॥**

( भाष्यम् )

द्वयोर्हलोः संयोगः इति चेद्द्विर्वचनं न सिद्ध्यति । इन्द्रमिच्छति इन्द्रीयति । इन्द्रीयतेः सन् इन्दिद्रीयिषति । "न न्द्राः संयोगादयः" इति द्विर्वचनं न[13] प्राप्नोति ॥

(प्रदीपः) इन्दिद्रीयिषतीति । अत्र द्वौ संयोगौ नदौ दरौ च, तत्र दकारस्य संयोगादित्वाद् द्विर्वचननिषेधप्रसङ्गः ॥

( १३५ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वाज्विधेः ॥ * ॥**

( भाष्यम् )

न वा एष दोषः ॥

---

१ अथेति । यथा ब्राह्मणभोजनन्यायस्य प्रसिद्धतरत्वमाश्रित्य प्रत्येकमिति नोच्यते गुणवृद्धिसंज्ञायां सूत्रकृता, तथैव गर्गदण्डनन्यायस्यापि प्रसिद्धतरत्वात्सहग्रहणेनापि सूत्रकृन्मते नार्थ इति भावः ॥ छाया ॥

२ इदानीं संयोगस्य लोके यत्किंचित्प्रतियोग्यनुयोगिकत्वेन प्रसिद्धत्वात्तत्संज्ञास्वारस्येन वर्णव्यवधानानाश्रयणस्वारस्येन च द्वयोरेव समुदायस्य संज्ञेति प्रतिपादयितुमुपक्रमते—अथेति ॥ द्वयोर्द्वयोरित्यत्रावधारणं ज्ञेयम् ॥ छाया ॥

३ अयं पक्षो बहूनां संनिधावेवेत्याशयेनाह—यदात्विति ॥ हल इति । वर्णग्रहणे जातिग्रहणादिति भावः ॥ छाया ॥

४ नन्विदमेवाग्रे विशदीक्रियतेऽत आह—मस्जाविति । तत्रापि द्वयोस्तत्त्वेन सिद्धे स न सिध्यतीत्यस्यासंगतेरित्यर्थः ॥ छाया ॥

५ तत्र द्वितीयपक्षे ॥ यथेतीति । पूर्वपक्षादेव न शङ्कावसरः सिद्धान्ते दूष्यत्वात् ॥ छाया ॥

६ वस्तुत इति । यद्यपि तत्रैकवचनान्तमप्युक्तम् । तथाप्यनन्तरा इति विशेषणात्तदसंभवादाह—हलौ चेति ॥ छाया ॥

७ शेषपूरणेन वार्तिकं व्याचष्टे—समुदाय इति ॥ तत्रैव संज्ञाङ्गीकार इत्यर्थः ॥ छाया ॥

८ अत्र दोषाभावस्य वक्ष्यमाणत्वात्तुल्यकक्ष्यं दोषत्रयमाह—इह चेति ॥ ॥ छाया ॥

९ यः संयोग इति । रगलसमुदाय इति भावः ॥ छाया ॥

१० ननु पूर्वं धातुः साधनेनेति सिद्धान्तपक्षे नेदं दोषचतुष्टयम्, तथा पदसंस्कारपक्षे गोमानित्यत्रापि न दोषोऽत आह—भाष्ये पूर्वं धातुरिति । क्वचित् स्थलचतुष्टये । क्वचिच्च गोमान् करोतीत्यत्र । तथा चेयमप्यरुचिस्तत्र बोध्या ॥ छाया ॥

११ अयं कोष्ठकान्तर्गतपाठो यद्यपि Bengal Asiatic Society मुद्रितपुस्तकेऽपि "यथेति" इत्युत्तरमुपलभ्यते तथाप्यस्माभिश्छायानुरोधात्संदर्भानुरोधाद्यथास्थानं स्थापित इति बोध्यम् ॥ दाधिमथाः ॥

१२ संयोग इति । संयोगसंज्ञेत्यर्थः ॥ छाया ॥

१३ न प्राप्नोतीति । दकारसहितस्येति भावः ॥ छाया ॥

**किं कारणम् ? ।**

**अज्विधेः । न्द्राः संयोगादयो न द्विरुच्यन्ते । अजादेरिति वर्तते ॥**

(प्रदीपः) **न वाज्विधेरिति** । अजाश्रयः[1] प्रतिषेधविधिः । **अजादेरिति** कर्मधारयः । तेनाच आदेः परेऽनन्तरा न्द्रा न द्विरुच्यन्ते । इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वाद् द्विरुच्यत एव ॥

(उद्द्योतः) **परेऽनन्तरा इति** । तस्मादित्युत्तरस्येत्यस्योपस्थितेरिति भावः । चन्द्रीयतेः सनोऽभिधाने **यथेष्टं नामधातुष्विति** द्वितीयैकाचो द्वित्वं नकारसहितस्यैव । आद्यवयवाचः परत्वाभावेनैतन्निषेधाप्रवृत्तेरिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**अथ[2] यद्येवं बहूनां संयोगसंज्ञा, अथापि द्वयोर्द्वयोः, किं गतमेतदियता सूत्रेण । आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? ॥**

( समाधानभाष्यम् )

**गतमित्याह[3] ॥**

**कथम् ? ॥**

**यदा तावद्बहूनां संयोगसंज्ञा, तदैवं विग्रहः करिष्यते–'अविद्यमानमन्तरमेषाम्' इति ॥**

(प्रदीपः) **अविद्यमानमिति** । बहूनां चाविवरत्वे समुदायद्विर्वचनवद्बहूनामेव संयोगसंज्ञा, न द्वयोर्द्वयोः ॥

(उद्द्योतः) **बहूनां चाविवरत्वे** इति । **बहूनां चानन्तरत्वे** इति क्वचित्पाठः ॥ नन्वत्र विग्रहे कमित्यादौ कमयोः संयोगसंज्ञा स्यात्तयोर्मध्ये वर्णशून्य[4]च्छिद्राभावादिति चेन्न । वर्णशून्यकालव्यवायमात्रवारणे फलाभावात्सामर्थ्येन वर्णकालव्यवायोऽपि व्यावर्त्यत इत्यदोषः ॥ **द्विर्वचनवदिति** । एषामिति[5] बहुवचनादिति न भ्रमितव्यम् । तस्य सूत्रे हल इतिवत्सत्त्वात् । अन्तराशब्देन विग्रहेऽपि तत्सत्त्वाच्च । अन्यथा[6] द्वयोर्न स्यात् । किं त्वन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भावः ॥

( समाधानशेषभाष्यम् )

**यदा द्वयोर्द्वयोः संयोगसंज्ञा, तदैवं विग्रहः करिष्यते—'अविद्यमाना अन्तरैषाम्' इति द्वयोश्चैवान्तरा कश्चिद्विद्यते वा न वा ॥**

(प्रदीपः) **अविद्यमाना इति** । मध्ये[7] य आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद्बहुषु द्वयोर्द्वयोः[8] संयोगसंज्ञा भवतीति पक्षः ॥ **द्वयोश्चैवान्तरेति । अन्तरान्तरेण युक्ते** इति द्वितीया कस्मादत्र न भवति । उच्यते—यदा[9] मध्यापेक्षया नियतावधिरूपत्वं विवक्ष्यते 'त्वां च मां चान्तरा कमण्डलुः' अग्नी अन्तरा धवखदिरावन्तरेति, तदा द्वितीया ॥ यदा तु नियतावधित्वं न विवक्ष्यतेऽपि तु संबन्धमात्रं तदा षष्ठ्येव भवति । तदा हि न ज्ञायते—किं तयोरेवावधित्वमुतान्यसहितयोरित्यवधिनियमाभावाद् द्वितीयाया युक्तग्रहणान्नियतावधिविवक्षाविषयाया अभावः ॥

(उद्द्योतः) संसर्गविप्रयोगावेव भाष्ये दर्शयति—**द्वयोश्चैवेति** । विद्यत[10] इत्यन्तं दृष्टान्तार्थम् । **अवत्साधेनुरित्यादौ** विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः । अन्तरा[11] विद्यत इति न विद्यत इति वा यत्तद् द्वयोरेवेत्यर्थः ॥ **नियतावधिरूपतेति** । अवधित्वं[12] हि अन्यासहितत्वे एव तयोर्नियमेन भवति, । अन्यसाहित्ये तु न तत्रावधित्वस्य नियमेन प्रतीतिः, अवधित्वविवक्षायामेव च द्वितीयेति भावः ॥ यस्य[13] च नियमेनावधित्वं तस्यैवावधित्वविवक्षा शब्देनेति तात्पर्यम् । नियतत्व[14]मन्यासहितत्वं तद्वैशिष्ट्येन यावधिरूपता

---

१ अज्विधेरित्यस्यार्थान्तरनिरासाय समासमर्थं चाह—अजाश्रय इति ॥ छाया ॥

२ एवमाद्यं पक्षं संदूष्य द्वितीयं समर्थ्य सूत्रे बहुवचनोक्तेरक्षरमर्यादया सूत्रतस्तस्यालाभ एवेति मूलाशुद्धिदोषनिरासद्वारा तं युक्तपक्षं सिद्धान्तयितुं शङ्कते—अथेति ॥ गतं स्यादिति शेषः ॥ भूयो विपुलम् । द्विविधोऽप्यर्थो यथाश्रुतसूत्रादेव लभ्यते उतैकः । तथापरः क्रियमाणपदान्तरयुक्तादिति भावः ॥ छाया ॥

३ प्रागुक्तविग्रहद्वयवशादेव द्वयमपि तत एवावगतमित्याह—गतमिति । तत्प्रतिपादयति—यदेत्यादिना । अवधारणमुभयत्रापि ज्ञेयम् ॥ छाया ॥

४ वर्णेति । विशेषणाभावप्रयुक्तविशेषणा(शिष्टा)भावादिति भावः ॥ वर्णेति । यत इत्यादिः ॥ छाया ॥

५ यत्तु—अविद्यमानमिति । बहूनां द्वयोर्द्वयोश्चाव्यवधानस्याविशेषेण हल इति बहुवचननिर्देशेन बहूनामेवेति भावः । कैयटोक्तं तु न युक्तम् । तद्वदत्रावयवानुग्रहेण तयोर्वैषम्यादिति रत्नकृत् । तन्न, पूर्वपक्षयुक्तित्वेन प्राग्वदत्रापि वैषम्याज्ञानात् । तदेतद्ध्वनयंस्तदुक्ताशयं खण्डयति—एषामितीति ॥ छाया ॥

६ विपक्षे बाधकमाह—अन्यथेति तत्स्वाङ्गीकार इत्यर्थः । द्वयोरिति यत्र द्वावेव तत्रेति भावः ॥ छाया ॥

७ अन्तराशब्दस्यार्थमाह—मध्ये इति । तदाक्षिप्तमाह—य आधेय इति ॥ वर्ण इत्यर्थः ॥ अत एव कश्चिदिति वक्ष्यति भाष्ये ॥ छाया ॥

८ द्वयोर्द्वयोरिति । सावधारणम् ॥ छाया ॥

९ प्रकृताशयेनाह—यदा मध्येति । तद्रूपाधिकरणेत्यर्थः ॥ ननु मध्ये इत्यस्यावधिमद्वाचकत्वस्य पूर्वादिवद्भावेन तस्य न तदाकाङ्क्षा । नहि मध्ये तिष्ठतीत्यादौ तथा दृश्यते किंतु निरूपकाकाङ्क्षैव कयोरिति दृश्यतेऽत आह—विवक्ष्यत इति । निरूपकयोरिति भावः ॥ छाया ॥

१० विद्यत इत्यन्तस्य प्रकृतानुपयोगादाह—विद्यत इत्यन्तमिति । एतेन प्रथमवाशब्द इवार्थे द्वितीयोऽप्यर्थ इति सूचितम् ॥ छाया ॥

११ प्रतिज्ञातार्थं प्रकटयन् चस्य यदित्यर्थकत्वेन समुदितवाक्यार्थं मध्य इत्यादिकैयटसूचितयोजनाक्रममाह—अन्तरा इति । अत्र वाशब्दस्तन्त्रेणोभयार्थः । तथा च यथा अन्तरा विद्यते इति यत् तद्द्वयोरेव, एवं 'न' इत्यपि द्वयोरेवेत्यर्थ इति बोध्यम् ॥ छाया ॥

१२ द्वयोरिति षष्ठीद्विवचननिर्देशाद् यानिति द्वितीयाबहुवचननिर्देशाच्च लब्धवक्ष्यमाणार्थसूचकं नियतपदम् । तदर्थं प्रतिपादयितुमस्याशयमाह—अवधीति ॥ हि यतः । तयोर्निरूपकयोः ॥ छाया ॥

१३ ननु विवक्षाऽन्यस्यान्यरूपेणापि स्थाल्या पच्यत इत्यादौ दृष्टाऽत आह—यस्य चेति ॥ छाया ॥

१४ नन्वेवमपि मूलतः कथमुक्तार्थलाभोऽत आह—नियतत्वमिति ॥ तत्र स भावप्रधानः । लक्षणे च प्रकृत्यादित्वात्तृतीया सुप्सुपेति समास इति भावः ॥ छाया ॥

सा विवक्षिता यदा भवतीत्यक्षरार्थः । अन्यथा अवधित्वविवक्षायां द्वितीया, तत्त्वाविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन नियतेति कथनमधिकं स्यादिति बोध्यम् ॥ युक्तग्रहणादिति । न च तदभावेऽन्तरान्तरेणशब्दाभ्यां द्वितीयापत्तिः । त[1]योरव्ययत्वेन विशेषाभावात् । न च प्रथमाबाधनेन सपूर्वायाः प्रथमाया इत्यस्याप्रवृ[2]त्त्यर्थम् । व्यवस्थितविभाषया त[3]स्य सुपरिहरत्वात् । त[4]स्माद्युक्तग्रहणं संबन्धविशेषस्य प्रतिपादनाय अवधित्वस्य प्रतियोगित्वस्य वा । तेन प्रयोगमन्तरेणेत्यपि सिद्धम् । एवं च संबन्धमात्रविवक्षायां षष्ठ्येवेति भावः ॥

### ( आक्षेपभाष्यम् )

**ए[5]वमपि बहूनामेव प्राप्नोति । यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति, एतेषामन्येन व्यवायेन भवितव्यम् ॥**

**(प्रदीपः) यान् हीति ।** ए[6]षामिति बहुवचननिर्देशादिति न बोद्धव्यम्, बहुत्वस्याविवक्षणाद् । अन्यथा शिक्षेत्यादौ द्वयोर्न स्यात् । त[7]स्माद्योऽसावन्तरा स द्वयोर्भवति न वेति यदुक्तं तत्रोच्यते—यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा इति तेषामेव प्राप्नोति । यदा हि बहूनां मध्ये भिन्नजातीयोऽज् भवति तदा मा भूत् । तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया समुदायद्विर्वचनवदित्यर्थः ॥

**(उद्द्योतः)** ननु भाष्ये द्वयोरिति षष्ठीद्विवचननिर्दिष्टस्य द्वित्वाद्—यान्हि—इति बहुव[8]चननिर्देशोऽनुपपन्न इति चेन्न । प्रकृते द्वयोरित्यनेन न केवलौ वर्णौ निर्दिष्टौ । तथा सति तयोरेवावधित्वे द्वितीयापत्तिः । किं त्वन्यसहितावपि । अत एव षष्ठी । एवं च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्त्तिहलां बहुत्वात्तदुपपत्तिः । अ[9]नन्तरा इत्यनेन च न विद्यतेऽन्तरा यौ व[10]र्णौ तौ, यौ च समुदायावन्तरा न विद्यते तौ च गृह्यन्ते एकशेषादिति न दोषः । तत्सर्वमभिप्रेत्याह—यदा द्वयोर्द्वयोरिति । द्व्यवयवकसमुदाययोरित्यर्थः । या[11]न् वर्णान् द्वयोः समुदाययोरित्यर्थकषष्ठ्या प्रतिनिर्दिशतीति भाष्यार्थ इति भावः ॥ अनन्तरा इत्यस्यात्र पक्षे व्या[12]वर्त्यं दर्शयन् पूर्वोक्तमेवार्थं दृष्टान्तेनोपपादयितुमाह—यदा हि बहूनामिति । न च स्त्रष्टेत्यादौ रेफषकारयोर्वर्णयोरन्तरा कस्यचित्सत्त्वेऽपि सरौ रषौ चेति समुदायौ तयोश्चान्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम् । वर्णयोरन्तरा विद्यमानत्वेनान्तरत्वाभावात् । सर्वविधानन्तरत्वस्यैव निमित्तत्वादित्याहुः ॥

### ( समुदायसंज्ञाभ्युपगमभाष्यम् )

**अस्तु[13] तर्हि समुदाये संज्ञा ॥**

### ( समुदायसंज्ञादूषणस्मारणभाष्यम् )

**न[14]नु चोक्तं—*समुदाये संयोगादिलोपो मस्जेः* इति ॥**

### ( समुदायसंज्ञादूषणनिराकरणसिद्धान्तिभाष्यम् )

**नैष[15] दोषः । वक्ष्यत्येतत्—"*अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम्*" इति ।**

**(प्रदीपः) अन्त्यात्पूर्व इति ।** तथानुषङ्गलोपार्थमवश्यं वक्तव्यम् । अन्त्यादचः परे नुमि सत्यनुपधात्वान्मग्न इत्यत्र नलोपो न स्यात् । कृतेऽपि संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य ॥

**(उद्द्योतः )** अनुषङ्गो नकारः । तल्लोपोऽनिदितामित्यनेन ॥

---

१ तयोरिति । 'अटावन्तसाहचर्याट्टावन्तस्यातृतीयान्तसाहचर्यान्तृतीयान्तस्याग्रहणम् । अत एव 'किमनयोरन्तरेण ज्ञातेन' इति सिद्धम् । अन्तरेण विशेषेण । यद्वा—अन्तराशब्दस्य प्रथमैकवचनान्तस्यानभिधानादन्तरा इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्तरेणेत्यप्यव्ययमेव । तदुक्तं भाष्ये—अन्तराशब्दोयमदृष्टापचारो निपात एवेतीति भावः ॥ तथा च श्रवणनिवृत्त्यर्थं न तदिति तात्पर्यम् ॥ छाया ॥

२ त्त्यर्थमिति ॥ युक्तग्रहणमिति भावः ॥ छाया ॥

३ तस्य सूत्रस्य । वस्तुतस्तु तृतीयोच्चारणकरणात्पूर्वोत्तरसाहचर्येण तस्य प्रथमाबाधकत्वं दुर्वचम् । तस्या अन्तरङ्गत्वाच्च । अव्ययपाठात्कल्प्यमानविभक्तेर्बाधाङ्गीकारे पाठवैयर्थ्यापत्तेस्तच्छ्रवणस्यैव सर्वत्रापत्तेश्च । किं च तत्र प्रथमापदोल्लेखेन पूर्वसाहचर्येण च सार्थकविभक्तेरेव ग्रहणमिति तस्य प्रवृत्तिरेव नेति बोध्यम् ॥ छाया ॥

४ उपसंहरति—तस्मादिति ॥ द्वितीयसंग्रहस्य कैयटोक्तिरुपलक्षणमित्याह—प्रतीति ॥ छाया ॥

५ अथ प्रागनुक्तत्वेनैवावगतनिष्फलत्वकां तृतीयकोटिं प्रसङ्गाद्गूढाशयेन खण्डयितुं बहूनां समवाये बहूनामेव द्वयोः समवाये द्वयोरेवेति सिद्धान्तयितुं च शङ्कते—एवमपीति ॥ संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेऽपीत्यर्थः ॥ तत्र हेतुमाह—यान्हीति ॥ हि यतः । व्यवाये इति सत्सप्तम्यन्तम् ॥ छाया ॥

६ अत्र केचिद्व्याचक्षते—यानिति भाष्यं न द्वयोरितिषष्ठ्यभिप्रायं तत्र द्वित्वात् किंतु 'अविद्यमाना अन्तरा एषाम्' इत्यभिप्रायकम् । सूत्रे च हल इति बहुत्वं विवक्षितम्—इति । तत् खण्डयति—एषामिति ॥ बहुत्वस्येति । तथा बहुत्वस्यैवाविवक्षणादित्यर्थः ॥ किंतु वस्तुत इत्युक्तरीतिरेव विवक्षितेति भावः ॥ अन्यथा तथैवाङ्गीकारे । तथा च तत्प्रयुक्तगुरुत्वप्रयुक्ताप्रत्ययो न स्यादिति भावः ॥ छाया ॥

७ ननु तर्हि किमभिप्रायकं भाष्यमत आह—तस्मादिति । द्वयोरिति भाष्यमर्थतोऽनुक्तमनुवदति—योसाविति ॥ छाया ॥

८ बहुवचनेति । बहुवचनान्तेन प्रतिनिर्देश इत्यर्थः । प्रकृते इति । यत इत्यादिः । तदुपपत्तिरित्यत्रान्वयः ॥ केवलौ तावेव ॥ अपिना केवलपरामर्शः ॥ त्रयाणामिति । तन्निर्देशे चेत्यर्थः ॥ छाया ॥

९ हल इतिवदनन्तरा इत्यत्राप्येकशेष इत्याह—अनन्तरा इति । उक्तरीत्या युक्तितश्च तथा लाभादिति भावः ॥ छाया ॥

१० यौ वर्णाविति । केवलावित्यर्थः । अवधित्वविवक्षया द्वितीया । एवमग्रेऽपि ॥ छाया ॥

११ एवं सति भाष्याक्षरार्थमाह—यानिति ॥ छाया ॥

१२ व्यावर्त्यम् । एतेषामिति भाष्येणैवोक्तम् ॥ छाया ॥

१३ बहूनां संनिधाने तथैव लाभे तमेव स्वीकरोति सिद्धान्ती—अस्तु तर्हि समुदाये इति ॥ तत्रैवेत्यर्थः ॥ दोषाणां सुपरिहरत्वादिति भावः ॥

१४ समुदायपक्षे दत्तं दूषणं स्मारयति तटस्थः—ननु चोक्तमिति ॥

१५ [सिद्धान्ती स्मारितं दूषणं परिहरति—नैष इति॥] वक्ष्यत्येतदिति । यत इत्यादिः । मिदचोन्त्यात्पर इति सूत्रे वार्तिककृदिति शेषः ॥ छाया ॥

( समुदायसंज्ञादूषणनिराकरणैकदेशिभाष्यम् )

**[1]अथवाऽविशेषेण संयोगसंज्ञा विज्ञास्यते–द्वयोरपि, बहूनामपि । त[2]त्र द्वयोर्या संयोगसंज्ञा, तदाश्रयो लोपो भविष्यति ॥**

**(प्रदीपः) अविशेषेणेति** । ब[3]हुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः । का[4]र्यार्थत्वात्संयोगसंज्ञाया विरोधाभावा[5]देकया संज्ञया सर्वेषामनुग्रहासिद्ध्या द्विर्वचनेन वैषम्यादविशेषेणेत्युक्तम् ॥

**(उद्द्योतः) बहूनामपीति** । न्यायतः सूत्रात्सम्भवमात्रेणेदमुक्तम् । न तु फलोदाहरणमस्य न्याय्यमस्ति । ध्वनितं चेदमङ्गेन संयोगादिमिति ग्रन्थेन भाष्ये ॥ न[6]नु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्पक्षोत्थानमत आह—**कार्येति** । द्विर्वचनं हि श्रवणार्थमेव न शास्त्रीयकार्यार्थम् । एकस्याचो बह्ववयवत्वं युगपद्विरुद्धं च । एकेन द्वित्वेन सर्वानुग्रहश्चेति वैषम्यम् ॥

(समुदायसंज्ञापक्षोक्तदूषणान्तरनिराकरणसिद्धान्तिभाष्यम्)

**यदप्युच्यते—'इह च निर्ग्लेयात् निर्ग्लायात् निर्म्लेयात् निर्म्लायादिति "वान्यस्य संयोगादेः" इत्येत्वं न[7] प्राप्नोति' इति ॥ अङ्गेन संयोगादिं विशेषयिष्यामः—अङ्गस्य संयोगादेरिति ॥ एवं तावत्सर्वमाङ्गं परिहृतम् ॥**

**यदप्युच्यते—इह च गोमान्करोति यवमान्करोतीति "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति' इति ॥ पदेन संयोगान्तं विशेषयिष्यामः—पदस्य संयोगान्तस्येति ॥**

**यदप्युच्यते—'इह च निर्ग्लानो निर्म्लान इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति' इति ॥ धातुना संयोगादिं विशेषयिष्यामः—धातोः संयोगादेरिति ॥**

(प्रदीपः) बहूनां संनिधौ बहूनामेव संयोगसंज्ञेत्यस्मिन्पक्षे आश्रीयमाणे मस्जेर्दोषोऽ**न्त्यात्पूर्व** इति परिहृतः । शेषान्दोषान्परिहर्तुमाह—**यदप्युच्यत इति । पाठक्रमादर्थक्रमो बलीयानिति–मस्जेरन्त्यात्पूर्व** इत्यस्यानन्तरमिदं द्रष्टव्यम् ॥ निर्ग्लेयादित्यादिषु यद्यपि त्रयो हलः सन्निहितास्तथापि कार्यार्थत्वात्संज्ञायास्त्रिषु कार्याभावादङ्गपदधात्ववयवस्य संयोगस्य तेषु तेषु लक्षणेष्वाश्रितत्वात्समुदाये कार्याभावे चावयवानां स्वकार्यारम्भाद् द्वयोरेव संज्ञा प्रवर्तेत इति भाष्यार्थः ॥ व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम् ।

**(उद्द्योतः)** न[9]नु पक्षान्तरेण व्यवधानादासत्त्यभाव इत्यत आह—**पाठेति** । श[10]ब्दस्यार्थप्रत्यायनाङ्गत्वेन गुणत्वात्तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः ॥ **अङ्गपदधात्ववयेति । संयोगादे**रित्यादावाद्यन्तशब्दयोरवयववाचितयेति भावः ॥ अयमाशयः—अङ्गादेरादावन्ते वा व्यञ्जनत्रयाभावात् त्र[11]याणां फलाभावात्संज्ञाऽप्राप्तौ कथं द्वयोर्न स्यादिति ॥ यद्यपि सामानाधिकरण्यान्वयेऽपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं नान्यस्येति **अङ्गेन संयोगादिं विशेषयिष्याम** इत्यनुपपन्नं तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामोऽङ्गाद्यवयवसंयोगस्यैव बहुव्रीहिणाश्रयणमित्यर्थ इति न दोषः । एवंच **बहूनामपी**त्याश्रयणे फलाभाव इति स्पष्टमेवोक्तम् । क्लिष्टकल्पनया तादृशसंयोगानयनं तु नानभिधानादित्याशयः ॥ अदादिषु **षस स्वप्ने** इत्येव पाठो न तु **षस सस्ति स्वप्न** इति एतद्भाष्यप्रामाण्याज्जक्षित्यादिसूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम् ॥ **व्याख्यानान्तरमिति** । पाठक्रमावाधायैवं व्याचक्षते—**न प्राप्नोतीती**त्यत्रेतिशब्दो यस्मादर्थ उत्तरान्वयी यस्मादङ्गेन संयोगादिर्विशेष्यतेऽङ्गावयवः संयोगो गृह्यते इत्यर्थः । एवंच बहूनामेव

---

१ अथैकदेशी प्रागनुक्तां कोटिं संभवाद्वार्तिकाकरणजलाघवादत्राह—अथवेति ॥ छाया ॥

२ तत्रेति । तयोर्मध्य इत्यर्थः ॥ लोप इति । संयोगादिलोप इत्यर्थः ॥ छाया ॥ तथाच तद्वार्तिकं न करणीयमिति भावः । अनुषङ्गलोपार्थमावश्यकमिति त्वेकदेशित्वान्न जानाति ॥ दाधिमथाः ॥

३ बहुष्वेति । तथाच द्वयोरेव बहूनामेवेति विशेषाश्रयणं नेति भाष्यार्थो बोध्यः । विनिगमकाभावादिति भावः ॥ छाया ॥

४ कार्यार्थत्वादित्यनेन—बहुषु यदि न तत्कार्यं, द्वयोस्तु भवति तदा तयोः संज्ञेति द्वयोरपि भवतीत्युक्तम् ॥ छाया ॥

५ विरोधाभावादित्यनेन—यथैको बहूनां नावयवो विरोधात्, नैवमिह—इति सूचितम् ॥ एकयेत्यादिना यथा समुदाये द्विरुक्तेऽवयवा अपि तदन्तःपातितया तथा भवन्ति नैवमत्र तया तत्कार्यसिद्धिरिति सूचितम् ॥ छाया ॥

६ ननु विनिगमकस्य सत्त्वेन कथं तदभाव इत्याशङ्कते—नन्विति ॥ ॥ छाया ॥

७ न प्राप्नोतीति । तदपि न, यत इति शेषः ॥ छाया ॥

८ त्रिष्विव द्वयोरपि कार्याभावश्चेन्न स्यादेव सा नैवमत्रेत्यनुवादपूर्वमाह—समुदाय इति ॥ एवेन बहूनामेवेत्यस्य बहूनामपीत्यस्य व्यावृत्तिः ॥ छाया ॥

९ नन्विदमयुक्तम्, अत्र पक्षे वार्तिकस्याभावेनादौ द्वयोः संयोगसंज्ञासत्त्वेऽपि संयोगादिलोपस्यासिद्धत्वादन्त्याचः परे नुमि तदानीमनुपधात्वेन तल्लोपाप्राप्तिवद्द्वयोः संयोगसंज्ञया संयोगादिलोपे कृतेऽपि तस्यासिद्धत्वेनानुपधात्वेन तत्र लोपानापत्तेः । तदर्थं वार्तिकस्य तत्र कार्ये तत्सिद्धत्वज्ञापकस्य वाश्रयणे गौरवं स्फुटमेव । तस्मात्तत्र बहूनामित्येव पक्षो युक्तः । तस्य वार्तिकेन सिद्धेः । अत एवैकाज्द्विर्वचनन्यायावतारः । नचोक्तं वैषम्यम् । यत्रावयवे तथा कार्यासिद्धिस्तत्रावयवेष्वपि सा प्रसनौ(?)तु वार्तिकेन तत्कार्यस्यान्यथासिद्धिरिति तदुपबृंहितन्यायेन समुदायस्यैव सेति तत्र पक्षे प्रागुक्तशेषदोषपरिहाराय प्रवृत्तस्य यदपीत्यादिभाष्यस्य तेन संगतिप्रदर्शनाय प्रवृत्तं कैयटमवतारयति—नन्विति ॥ छाया ॥

१० शब्देति । तथाचैवमुक्त्या संदंशपतितस्याथवेत्यस्यानभिमतत्वसूचनद्वारा तत्र पक्षे फलसत्त्वेन तत्र प्रवृत्तया तदुद्धारेऽप्यन्यत्रानुद्धारेण तत्र तदुक्तरीत्या वक्ष्यमाणरीत्या वा फलाभावात् स पक्षोऽयुक्तः । किं त्वाद्य एवेति सूचितमित्यनुपदमेव स्फुटीभविष्यति ॥ छाया ॥

११ ननु मस्जौ तदस्तीत्यत आह—त्रयाणामिति ॥ द्वयोरेव संज्ञया कार्यसिद्धेरिति भावः ॥ संज्ञाऽप्राप्ताविति । नञः प्रश्लेषः ॥ कथमिति । फलसत्त्वादन्यथा शास्त्रानर्थक्यप्रसङ्गात् ॥ छाया ॥

संयोगत्वे यः संयोगो नासावङ्गावयवो यश्चाङ्गावयवो नासौ संयोगस्तस्मादेत्वं न प्राप्नोतीति [1]यदपि—तदप्यसत्। यतोऽविशेषेण संज्ञोच्यते इति शेष इति॥ तत् क्लिष्टम्। शेषपूरणात्। [2]इतेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च। एवं तावत्सर्वमाङ्गं परिहृतमित्यस्यास्वारस्याच्च॥

( इति समुदायसंज्ञापक्षस्थापनम् )

—⁂—

( अथानन्तरशब्दार्थनिरूपणम् )

( १३६ आक्षेपवार्तिकम्॥ ५॥ )

॥ * ॥ [3]स्वरानन्तर्हितवचनम्॥ * ॥

( भाष्यम् )

स्वरैरनन्तर्हिता [4]हलः सयोगसंज्ञा भवन्तीति वक्तव्यम्॥

किं प्रयोजनम्?॥

व्यवहितानां मा भूत्। पचति पनसम्॥

( प्रदीपः ) पचति पनसमिति। हल इति वचनादचा सह सकारमकारयोर्मा भूत्संज्ञा [5]तयोरेव तु प्राप्नोति। ततश्च सलोपप्रसङ्गः॥

(उद्द्योतः) हल इतीति। [6]तद्धि असावित्यादौ स्कोरिति सलोपवारणायावश्यकमिति भावः॥

( आक्षेपबाधकभाष्यम् )

[7]ननु चानन्तरा इत्युच्यते। तेन व्यवहितानां न भविष्यति॥

( १३६ आक्षेपसाधकवार्तिकस्यखण्डम्॥ ६॥ )

॥ * ॥ [8]इष्टमानन्तर्यं व्यवहितेऽपि॥ * ॥

( भाष्यम् )

व्यवहितेऽप्यनन्तरशब्दो दृश्यते। तद्यथा—'अनन्तराविमौ ग्रामौ' इत्युच्यते, तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्तीति॥

( आक्षेपबाधकभाष्यम् )

[9]यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति। आनन्तर्यवचनमिदानीं किमर्थं स्यात्?॥

( १३७ आक्षेपसाधकवार्तिकम्॥ ७॥ )

॥ * ॥ [10]आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम्॥ * ॥

( भाष्यम् )

एकस्य हलः संयोगसंज्ञा मा भूदिति॥

[11]किं च स्यात् यद्येकस्य हलः संयोगसंज्ञा स्याद्?।

इयेष उवोष, "इजादेश्च गुरुमतोनृच्छः" इत्याम् प्रसज्येत॥

( प्रदीपः ) एकप्रतिषेधार्थमिति। [12]अनन्तरा इत्यनेन संज्ञाया विषयो निर्दिश्यते। यत्रानन्तरव्यवहारस्तत्र संज्ञा। नचैकाकिन्यनन्तरव्यवहार इति भावः॥ एकप्रतिषेधस्य च प्रयोजनम् इयेषेत्यादाविजादेरित्यामो निवृत्तिः। गुरुमद्वचनमियायेत्यादिनिवृत्त्यर्थं स्यात्॥

( उद्द्योतः ) नचेति। आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः॥ [13]प्रकृते चान्यस्य प्रतियोगिनोऽनुपादानादुपस्थितहलेव प्रतियोगित्वेनाश्रीयत इति बोध्यम्॥ भाष्ये उवोषेति प्रसङ्गोच्चारितम्। [14]तस्य विकल्पिताम्कत्वात्। [15]उवोखेति कवर्गद्वितीयान्तो वा पाठः॥ इयायेति। इण् ल् इत्यस्यामवस्थायां व्यपदेशिवद्भावादिजादित्वमस्ति, गुरुमत्त्वं तु न। न चेयङि कृते गुरुमदिजादित्वादाम् स्यादिति वाच्यम्। लिङ्धातुसंनियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः॥

---

१ यदपीति। उच्यत इति शेषः॥ छाया॥

२ ननु शेषपूरणं सिद्धान्तेऽप्यत आह—इतेरिति॥ ननु निपातानामनेकार्थत्वान्नायं दोषोऽत आह—एवमिति॥ तेन तत्कृतस्त्वग्रैव परिहार इति लभ्यते। तथा व्याख्याने तु सर्वत्रैव परिहारलाभ इति तदसंगतिः स्पष्टैवेति भावः॥ छाया॥

३ अथानन्तरा इत्यस्य वक्ष्यमाणरीत्या साफल्यं हृदि निधाय (पूर्वपक्ष्याक्षेपकवार्तिकम्) आह—स्वरेति॥ छाया॥

४ हल इति। अनन्तरा इत्यादिः। तस्य च तद्व्यवहारविषया इत्यर्थः। अत एवानुल्लेखो भाष्ये। बहुवचनादपि एकव्यावृत्तेरिति केचित्। वस्तुतस्तद्वदत्रैकशेष एकवचनान्तस्याप्युल्लेखापत्त्या तस्यापि स्याद् बहुवचनस्य संग्राहकत्वादिति तदावश्यकमिति बोध्यम्॥ छाया॥

५ तयोरेवेति। तयोस्तु प्राप्नोत्येवेत्यर्थः॥ छाया॥

६ नन्वचा सह संयोगसंज्ञायामपि न दोष इति हल इति व्यर्थमेवात आह—तद्धीति। सावित्यस्य संयोगत्व इति भावः॥ छाया॥

७ [शङ्कक] अन्य आह—ननु चेति॥ छाया॥

८ वार्तिककृत्परिहरति—इष्टमिति॥ छाया॥

९ शङ्ककः पूर्वपक्षिण आक्षेपं निरस्यति—यदीति॥ छाया॥

१० पूर्वपक्षी स्वकीयाक्षेपसमर्थनाय शङ्ककोक्तिं समाधत्ते वार्तिकेन—आनन्तर्येति। एकस्येति। उक्तरीत्यैकशेषेणेति भावः॥ छाया॥

११ इष्टापत्तिं निराचष्टे—किंच स्यादिति॥ चस्त्वर्थे। व्युत्क्रमेणान्वयः॥ प्रसज्येतेति। तथा च तन्निवृत्तिस्तस्य फलमिति भावः॥ छाया॥

१२ नन्वशाब्दत्वात्कथं तेन तन्निषेधोऽत आह—अनन्तरा इति॥ छाया॥

१३ नन्वेवमप्यन्यनिरूपितमेव तद्गृहीत्वैकस्य कुतो नात आह—प्रकृते चेति। नत्वेकैकस्यैतत्संभवतीत्यनेकहल्लामवश्यं ग्रहणमिति नैकाकिनि तद्व्यवहार इति भावः॥ छाया॥

१४ तस्येति। उपविदेत्यनेन॥ छाया॥

१५ एवं दण्ड्यादिमतेनोक्त्वा तदज्ञाननिरासाय सिद्धान्तमाह—उवोखेतीति॥ छाया॥

( १३८ समाधानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ न[1] वाऽतज्जातीयव्यवायात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ? ।**

**अ[2]तज्जातीयस्य व्यवायात् । अतज्जातीयकं हि लोके व्यवधायकं भवति ॥**

( अनुयोगभाष्यम् )

**क[3]थं पुनर्ज्ञायते—ऽतज्जातीयकं लोके व्यवधायकं भवतीति ? ॥**

( उत्तरभाष्यम् )

**ए[4]वं हि कंचित् कश्चित्पृच्छति—'अनन्तरे एते ब्राह्मणकुले' इति । स आह—'नानन्तरे, वृषलकुलमनयोरन्तरा' इति ॥**

(प्रदीपः) **वृषलकुलमिति** । यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजातीयकमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते ॥

(उद्योतः) कुलमत्र गृहम् ॥ **ब्राह्मणकुलमपीति** । तत्तद्रू[5]पेण ग्रहणे तस्यापि विजातीयत्वादिति भावः ॥ भाष्ये **अनयोरन्तरेति** षष्ठ्युपादानादन्यसहितयोरवधित्वसूचनात्तत्तद्रूपेणाग्रहणबोधनात् ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये ॥ **भिन्नजातीयेति** । **तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्तीति** भाष्येणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**किं[6] पुनः कारणं क्वचिदतज्जातीयकं व्यवधायकं भवति, क्वचिन्न ? ॥**

( समाधानभाष्यम् )

**स[7]र्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥**

१ सिद्धान्ती अनन्तरा इत्यनेनेवानंतिप्रसङ्गात्तत्र कार्यमित्याह—नवेति ॥ ॥ छाया ॥

२ वार्तिके कृद्योगषष्ठया समास इत्याह—अतज्जातीयस्येति ॥ छाया ॥

३ ननु प्रागुक्तव्यवहारेणातज्जातीयस्य लोकेऽव्यवधायकत्वमेव दृष्टमिति कथमिदमित्याशयेनाह—कथमिति ॥ केन व्यवहारेणेत्यर्थः ॥ छाया ॥

४ तं व्यवहारमेव दर्शयति—एवं हीति ॥ छाया ॥

५ तत्तद्रूपेणेति । विशेषेणैवात्र प्रश्न इति सजातीयमपि व्यवधायकमिति भावः ॥ णाग्रहणेति । सामान्येनैवात्र प्रश्न इति विजातीयमेवोत्तरं युक्तमिति तदेवोक्तमिति तत्र भिन्नजातीयस्यैव व्यवधायकत्वं न सजातीयस्येति भावः ॥ छाया ॥

६ प्राग्वत्पूर्वपक्षी पृच्छति—किं पुनरिति ॥ वृषलकुलस्य व्यवधायकत्वम्, न नद्यादेरित्यत्र किं विनिगमकमिति भावः ॥ छाया ॥

७ सिद्धान्ती समाधत्ते—सर्वत्रैवेति । तज्जातीयकस्य तु व्यवधायकत्वं प्रागुक्तरीत्या काचित्कं विशेषप्रश्नोत्तरविषयकम् । अतएव—एतौ घटावनेन घटेन व्यवहितावित्यादिव्यवहारोपपत्तिरिति भावः ॥ छाया ॥

( आक्षेपभाष्यम् )

**क[8]थम्—अनन्तराविमौ ग्रामाविति ? ॥**

( समाधानभाष्यम् )

**ग्रा[9]मशब्दोयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते, तद्यथा—ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते, तद्यथा ग्रामं प्रविष्ट इति । अस्ति मनुष्येषु वर्तते, तद्यथा—ग्रामो गतो ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते, तद्यथा-ग्रामो लब्ध इति ॥ तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते-अनन्तराविमौ ग्रामाविति । स[10]र्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥ हलोनन्तराः ॥ ७॥**

(प्रदीपः) **ग्रामशब्दोऽयमिति** । केचिदर्थभेदेन शब्दभेदमिच्छन्ति । प्र[11]त्यभिज्ञानं तु सामान्यनिबन्धनम् ॥ अन्ये तु ए[12]कशब्दत्वं तत्र चानेकशक्तियोग एकशक्तित्वं वेति दर्शनविकल्पः ॥ त[13]त्र यदा एकशब्दत्वपक्षस्तदा **तद्यः सारण्यके** इतिभाष्यं शक्तिभेदादुपचरितभेदाश्रयम् ॥ भेदपक्षे तु **ग्रामशब्दोयं बह्वर्थ** इति भाष्यम् अभिन्नसामान्यनिमित्तैकत्वाध्यवसायाश्रयम् ॥ **तद्यः सारण्यक इति** । ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामयोरुच्यते । **ग्रामे नाध्येयमि**त्यत्र तु ग्रामशब्दो वाटपरिक्षेपवृत्तिः । शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात् । ततश्च सीमन्यधीयत एव ॥ ७ ॥

(उद्योतः) ग्रामशब्दोऽयमित्यस्य **तद्यः सारण्यक** इत्यस्य चा[14]विरोधायाह—**केचिदिति** । अन्यान्यश्चानेकार्थत्वमिति तदाशयः । सामान्यं च ग्रामशब्दत्वादि ॥ **अन्येत्विति** । व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः ॥ **तत्रचेति** । निरू[15]पकभेदाच्छक्तिभेद इति भावः ॥ **एकेति** । समवायैकत्वनये रसो रूपवानि-

८ तमजानन् [नद्यादीनामतज्जातीयकानामपि व्यवधायकत्वं कुतो नेति] पृच्छति—कथमनेनेति ॥ छाया ॥

९ [सिद्धान्ती] स्वाशयमुद्घाटयति—ग्रामशब्दोऽयमिति ॥ छाया ॥

१० उपसंहरति—सर्वत्रैवेति । एवं च व्यवहिते तदप्रयोगेण तेनैवानतिप्रसङ्गे वार्तिकं न कार्यमिति भावः ॥ छाया ॥

११ नन्वेवं प्रत्यभिज्ञानस्य का गतिरत आह—प्रत्यभिज्ञेति ॥ ग्रामशब्दत्वाद्यभिन्नसामान्यनिमित्तैकत्वाभिप्रायमित्यर्थः ॥ छाया ॥

१२ शब्दत्वमिति । इच्छन्तीत्यस्यानुषङ्गः । अर्थभेदेऽपीति भावः ॥ तत्र च पक्षे । विकल्प इत्यत्रान्वयः ॥ छाया ॥

१३ तयोर्मिथो विरोधं परिहरति—तत्रेति । तयोर्मध्ये इत्यर्थः ॥ अनेकशक्तियोग आह—शक्तिभेदादिति ॥ छाया ॥

१४ चाविरोधेति । अन्यथोपक्रमे एकत्वस्य, उपसंहारे भेदस्य ग्रामशब्दस्य प्रतीतेर्विरोधः स्पष्ट एव ॥ छाया ॥

१५ आद्यस्याशयमाह—निरूपकेति ॥ अन्यायश्चेति न्यायविरोधस्तु न, अक्षादिवदगत्या तत्स्वीकारादिति भावः ॥ छाया ॥

त्यादिप्रयोगवदन्यार्थबोधकालेऽन्यार्थबोधो वारणीयः । तदर्थसंबन्धेन शक्त्यग्रहात् । तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः ॥ तत्र यदेति । एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयमिति बोध्यम् ॥ ग्रामशब्दोऽयं बह्वर्थ इति तु मुख्यार्थमेव । अत्र सर्वार्थनिरूपितवृत्तीनां वर्तते इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्त्तनक्रियाऽस्तिक्रियायाः कर्त्री । शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः । वाटपरिक्षेपो नाम शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते ॥ सारण्यकससीमकवृत्तिस्त्वत्र न गृह्यते इत्याह—शुचाविति । सीमनीतिच ॥ ७ ॥

( ७ अनुनासिकसंज्ञासूत्रम् ॥ १ । १ । ४ आ. ५ ॥ )

## मुखनासिकावचनोऽनुनासिकः ॥ १ । १ । ८ ॥

( मुखनासिकावचनशब्दार्थनिरूपणम् )

( आक्षेपभाष्यम् )

**किमिदं 'मुखनासिकावचनः' इति ? ॥**

(प्रदीपः) **मुखनासिकावचनोनुनासिकः** ॥ ८ ॥ प्राण्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम्, अवचनमिति नञ्समासाश्रयणेऽर्थो न संगच्छते इति प्रश्नः—**किमिदमिति** ॥

(उद्द्योतः) **मुखना०** ॥ ८ ॥ प्राण्यङ्गत्वादिति । एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् ॥ अर्थ इति । अभिमतोऽर्थ इत्यर्थः ॥

( समाधानभाष्यम् )

**मुखं च नासिका च मुखनासिकम् । मुखनासिकं वचनमस्य सोयं मुखनासिकावचनः ॥**

( आक्षेपभाष्यम् )

**यद्येवं मुखनासिकवचन इति प्राप्नोति ॥**

( समाधानभाष्यम् )

**निपातनाद्दीर्घत्वं भविष्यति ॥**

(प्रदीपः) **निपातनादिति** । प्रसङ्गेनास्य लौकिकशब्दस्य साधुत्वं क्रियते । निपातनानां च बाधकत्वान्मुखनासिकवचन इति न भाव्यम् । अबाधकत्वपक्षे तु भाव्यमेव ॥

(उद्द्योतः) सौत्रत्वादिति कुतो नोक्तमित्यत आह—प्रसङ्गेनेति ॥ अबाधकत्वेति । पक्षेत्विति नेनाबाधकत्वस्वीकर्तृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसंमतरूपापत्तेः । बाधकान्येव निपातनानीति सर्वादिसूत्रे भाष्ये उक्तेः ॥

( समासान्तरभाष्यम् )

**अथ वा-मुखनासिकमावचनमस्य सोयं मुखनासिकावचनः ॥**

( आक्षेपभाष्यम् )

**अथ किमिदमावचनमिति ? ॥**

( समाधानभाष्यम् )

**ईषद्वचनमावचनमिति, किंचिन्मुखवचनं किंचिन्नासिकावचनम् ।**

(प्रदीपः) **ईषद्वचनमिति** । भागस्य मुखेनोच्चारणाद्भागस्य नासिकया । अस्मिन्पक्षे मुखनासिकवचन इत्यपि भवति । यो ह्यीषदुच्यते स उच्यते एव । यथा ईषच्छुक्लोऽपि शुक्ल एव ॥

(उद्द्योतः) **अस्मिन् पक्ष इति** । आङ्रहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्रहितैतत्पदाभ्यां समासस्यानभिधानमेवेत्याहुः ॥ ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकावचन इति प्रयोगस्तत्रासक्तोऽत आह—योहीति ॥

१ प्रयोगवत् । प्रयोगो यथा वारणीयः ॥ वारणे हेतुमाह—तदर्थेति ॥ तथा चात्र पक्षे सर्वप्रतीतिः स्यादिति दोषो नेति भावः ॥ छाया ॥

२ नन्वेवमनेकार्थत्वोच्छेदापत्तिरत आह—तत्तदिति ॥ अत्र पक्षे प्रत्यभिज्ञानं न जातिविषयकम्, व्यक्तिविषयकत्वे बाधकाभावात् ॥ छाया ॥

३ न्यूनतां निराचष्टे—एकेति ॥ छाया ॥

४ यद्येकशक्तियोग एकं शक्यतावच्छेदकं तर्ह्यर्थभेद इति व्याहतम्, एकशक्यतावच्छेदकावच्छिन्नस्यैकार्थत्वनियमात् । अथ नाना शक्यतावच्छेदकं तर्ह्येकशक्तियोग इति व्याहतम्, शक्यतावच्छेदकभेदे शक्तिभेदावश्यंभावात् । अन्यथा घटादिशब्दानामप्येकशक्तियोगे नानार्थता स्यादिति कृष्णः । तन्न, अर्थभेदेनोपचरितभेदाङ्गीकारेणादोषात् नानार्थत्वस्योक्तरीत्या स्वीकारेणानतिप्रसङ्गाचेति ध्वनयंस्तमेव पक्षं समर्थयते—अत्रेति । एषु वाक्येष्वित्यर्थः ॥ छाया ॥

५ अनन्वयं परिहरति-तत्रेति । तयोर्मध्ये । सर्वेति भावः ॥ छाया ॥

६ अर्थमेव सर्वमाह—शालेति । आदिना वाटपरिक्षेपादिपरिग्रहः ॥ छाया ॥

७ पूर्वपक्षी पृच्छति—किमिदमिति ॥

८ रूपेति । एतेन दैर्घ्यमलाक्षणिकमिति शब्दानुपपत्तिरेव प्रश्नतात्पर्यम् । नार्थानुपपत्तिः, तस्याद्वन्द्वेऽप्यसत्त्वादिति सूचितम् ॥ छाया ॥

९ यथाकथंचिदर्थसंगतेराह—अभीति ॥ ताभ्यामुच्चार्यमाणस्यानुनासिकसंज्ञालक्षण इत्यर्थः ॥ छाया ॥

१० सिद्धान्ती समाधत्ते—मुखं चेति ॥ छाया ॥

११ पूर्वपक्षी आक्षिपति—यद्येवमिति ॥

१२ प्रसङ्गेनेतीति । अस्य लौकिकत्वात्तथा दुर्वचमिति भावः ॥ छाया ॥

१३ नन्वेवं कथं पक्षान्तरोक्तिरत आह—पक्षेत्वीति । एवं चासंमतिप्रदर्शनाय परमतमुक्तम् । नत्वयं सिद्धान्त इति भावः ॥ छाया ॥

१४ अन्यथा तदुपपत्तौ निपातनकल्पनमयुक्तमित्यस्वरसादाह—अथवेति ॥ छाया ॥

१५ ईषद्वचनमित्युक्तावविशिष्टस्यावचनमेवेत्यर्थनिरासायाह—किंचिदिति । भागरूपं मुखवचनकं न भवतीत्यर्थः । एवं च करणे स्फुटा आङ ईषदर्थत्वेन तयोरेकदेशं प्रत्येव व्यापारेण तदुभयमपीषद्भागतः प्रकाश्यसाधनमस्येत्यर्थ इति भावः ॥ छाया ॥

१६ तैतत्पदाभ्यामिति । मुखनासिकवचनपदाभ्याम् । समासस्य बहुव्रीहेरित्यर्थः ॥ एवेन तृतीयचतुर्थपक्षद्वयोरेनास्यावश्याभवणीयत्वं ध्वनयति ॥ छाया ॥

( समासान्तरभाष्यम् )

**मुखद्वितीया[1] वा नासिका वचनमस्य सोयं मुखनासिकावचनः ॥**

(प्रदीपः) **मुखद्वितीयेति** । मुखसहायेत्यर्थः[2] । तत्र नासिका मुखसाहचर्यान्मुखशब्देनोच्यते । मुखं च तन्नासिका च मुखनासिका । सा वचनमस्येति ॥

(उद्योतः ) सहायेति । अभ्युत्पन्नो[3] द्वितीयशब्दः सहायवाचीत्यर्थः ॥ शाकपार्थिवादित्वादुत्तरपदलोपे शब्दानित्यत्वापत्तिरत आह—तत्रेति ॥ परन्त्विदं चिन्त्यं भाष्यकृतैवंरीत्या तदप्रत्याख्यानात् ॥

( समाधानान्तरभाष्यम् )

**मुखोपसंहिता[4] वा नासिका वचनमस्य सोयं मुखनासिकावचनः ॥**

(प्रदीपः) **मुखोपसंहितेति** । मुखस्य[5] च नासिकायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्य दर्शयति । तत्र[6] सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते । पदसंस्कारपक्षे तु मुखानासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते । पश्चात्स्त्रीत्वस्य पदान्तरसंबन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वान्ङीप्प्रत्ययो न भवति। यदा[7] तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इत्येव भवति ॥ अत्र[8] चानेकदर्शनम् । अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते भागो नासिकया, तत्र नासिकावचनभागानुरागवशाद् मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते । यथा सँय्यन्तेत्यत्रानुनासिकयकारानुरागाद् अकारोनुनासिक इव प्रतिभाति ॥ अत्र च प्रासादवासिन्यायो नास्ति, भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य ॥ अन्येषां[9] तु दर्शनं मुखनासिकान्तरालं स्थानान्तरमेवास्येति । अत्रापि नास्ति प्रासादवासिन्यायः ॥ यदा सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे । यथा भ्राष्ट्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते ॥

(उद्योतः) मुखस्यचेति । उपशब्दसामर्थ्यादिति भावः ॥ यद्यपि[10] वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनो मुखनासिकया वचन, इति वा तत्पुरुषोऽपि वक्तुं शक्यः तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये ॥ तत्रान्त्ययोर्नासिकाशब्दसामानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि नद्यृतश्चेति कबापत्तिरित[11] आह—पदसंस्कारेति ॥ भागस्य मुखेनोच्चारणाननुभवादाह—अत्रेति ॥ तस्यादित[12] इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः ॥ ये तु[13] तत्तद्देशावच्छिन्नवाय्वभिघातस्य तत्तद्वर्णजनकत्वात्स्थानानां करणत्वमेव । स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य । अत एवोत्तरसूत्रे भाष्ये अस्यन्त्यनेन वर्णानित्यास्यमिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति ॥ तन्मते प्रासादवासिदृष्टान्तासङ्गतेराह[14]—भ्राष्ट्रेण चेति ॥ एतेन[15] कण्ठादिकं तु स्थानं, नासिका तु करणमिति नव्योक्तमपास्तम् । अत[16] एवात्र सूत्रे हरिणा—"स हि वर्णो न मुखेनैव, नापि नासिकयैव चात्मवृत्तिं लभते, किं तु वायुनानुपरतशक्तिनाऽन्यतरकरणमभिहत्यान्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते" इत्युक्तम् ॥

( पदकृत्यनिर्वचनायाक्षेपभाष्यम् )

**अथ मुखग्रहणं किमर्थम् ? ॥**

( समाधानभाष्यम् )

**'नासिकावचनोऽनुनासिकः' इतीयत्युच्यमाने य-**

१ ननु संपूर्णस्य मुखादिवचनत्वस्य 'अकुह—'इत्यादिभिरुक्तत्वेनाद्यपक्षस्य युक्तत्वेऽपि द्वितीयपक्षस्यासंगतिरेवात आह—मुखद्वितीति ॥ छाया ॥

२ नन्वत्र मुखं द्वितीयं यस्या, इति समासे द्वितीयशब्दस्य पूरणप्रत्ययान्तत्वे उभयवचनस्येत्यस्य कथं लाभोऽत आह—मुखसहायेति॥ छाया ॥

३ अभ्युत्पन्न इति । न तथा, किंतु 'असिद्वितीयोऽनुससार पाण्डवम्' इति वदिति भावः ॥ छाया ॥

४ स्थानभेदेन पक्षान्तरमाह—मुखोपेति ॥ छाया ॥

५ स्थानभेदकृतमेव तृतीयपक्षतो भेदमाह—मुखस्यचेति । अन्तरालमिति । तत्रत्यं चर्मपुटकमित्यर्थः । अत एवाह—स्थानान्तरमिति ॥ छाया ॥

६ नन्वेवं कथं मुखनासिकेत्युक्तिरत आह—तत्रेति । सूत्र इत्यर्थः । एवं चात्र पक्षे गौण्या वृत्त्या कर्मधारय एवेत्ययमपि पूर्वतो विशेष इति भावः ॥ छाया ॥

७ वाक्यसंस्कारपक्ष आह—यदात्विति ॥ छाया ॥

८ नन्वनेकप्रदर्शनं भाष्ये निष्फलमत आह—अत्र चेति ॥ अनुनासिकविषये इत्यर्थः ॥ तत्रादौ द्वितीयपक्षेणाह—अनुनेति । परो वेति । विनिगमनाविरहादिति भावः ॥ भाग इति । अर्थादपर इति भावः ॥ तत्र तयोर्मध्ये ॥ छाया ॥

९ तुरीयपक्षेणाह—अन्येषां त्विति । प्रथमतृतीयपक्षाभ्यामाह—यदा सर्व इति ॥ अनेन वक्ष्यमाणभाष्यविरोधः परिहृतः ॥

१० यदेत्यादिप्रदीपमवतारयति—यद्यपीति । द्वितीयपक्षे आह—नावचन इति । इदमुपलक्षणमाद्यपक्षस्यापि ॥ तृतीयतुरीयपक्षयोराह—कया वचन इति ॥ तत्पुरुष इति । अन्तरङ्गत्वादिति भावः ॥ छाया ॥

११ वापत्तिरिति ॥ तथा च मुखनासिकावचनीक इति स्यात् ॥ छाया ॥

१२ ननु वर्णानामखण्डत्वस्य प्राक्प्रतिपादितत्वात्कथमिदमत आह—तस्यादित इति ॥ छाया ॥

१३ ननु भ्राष्ट्रेणोखयेति कैयटोऽधिकोऽनुपयुक्तश्चेत्यत आह—येत्विति ॥ तत्तद्देशेति । आस्यीयतत्तत्प्रदेशेत्यर्थः ॥ स्थानानां कण्ठादीनां वर्णाभिव्यक्तिजनकानाम् ॥ छाया ॥

१४ दृष्टान्तासंगेति । तस्य वास्तवाधारविषयत्वादिति भावः ॥ छाया ॥

१५ खण्डनकृदुक्तिं खण्डयति—एतेनेति । कण्ठादीनामपि करणत्वस्यैवोक्तभाष्यात्प्रतीयमानत्वेनेत्यर्थः ॥ कण्ठादिकं स्थानमिति ।

'अनुस्वारयमानां च नासिका स्थानमुच्यते'

इति शिक्षोक्तेर्ङादीनां नासिका करणम् ॥ किंच स्थानत्वे कङयोः सावर्ण्यानुपपत्तिर्यावत्स्थानैक्याभावात् । यत्किंचित्स्थानैक्येन तत्त्वे तु ङमामपि सावर्ण्यापत्तिरिति तद्भावः ॥ छाया ॥

१६ तद्भाष्यस्य सिद्धान्तत्वमाह—अत एवेति ॥ सहीति । ङादिरित्यर्थः ॥ नुपरतेति । अनेन पुनरभिघातयोग्यता सूचिता ॥ विनिगमनाविरहादाह—अन्यतरेति । तेषां स्थानत्वे तु करणपदासंगतिः स्पष्टैव छाया ॥

मानुस्वाराणामेव प्रसज्ज्येत । मुखग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

**(प्रदीपः) यमानुस्वाराणामेवेति ।** प्रासादवासिन्यायानवतारपक्षे इति भावः । तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः । **विड्वनोरनुनासिकस्या**दित्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात् ॥

**(उद्योतः)** यमो नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः ॥ **आदितश्चत्वारो**[1] **वर्णा** इति विवरणेऽपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या । अत एवायोगवाहत्वप्रतिपादकहयवरट्सूत्रस्थभाष्याविरोधः[2] ॥ **न्यायानवतारेति**[3] । कचटतपानामेवेत्येवकारोऽप्यत्रैवं पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः ॥ **अप्रतिपत्तिरिति ।** अत्र **विड्वनोर्न्म** इति वक्तुं शक्यम् । यरोऽनुनासिक इत्यत्र त्वप्रतिपत्तिः । तत्र ञमि ञम्वेत्युक्ते सकलेष्टासिद्धिः[4] ॥

## (आक्षेपभाष्यम्)

**अथ नासिकाग्रहणं किमर्थम् ? ॥**

## (समाधानभाष्यम्)

**'मुखवचनोऽनुनासिकः' इतीयत्युच्यमाने कचटतपानामेव प्रसज्ज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

**(प्रदीपः) कचटतपानामिति ।** पक्तमिति चकारलोपप्रसङ्गः, ओदनपगित्यत्रानुनासिकस्य क्किझलोः क्ङितीति दीर्घप्रसङ्गः ॥

**(उद्योतः) चकारलोपेति ।** निष्ठावत्वकुत्वयोरसिद्धत्वात् पचेरनुदात्तोपदेशवनतीत्यनेनेति भावः ॥

## (मुखग्रहणप्रत्याख्यानभाष्यम्)

**मुखग्रहणं[5] शक्यमकर्तुम् ॥**

## (आक्षेपभाष्यम्)

**केनेदानीमुभयवचनानां[6] भविष्यति ? ॥**

## (समाधानभाष्यम्)

**प्रासादवासिन्यायेन[7] । तद्यथा-केचित्प्रासादवासिनः, केचिद् भूमिवासिनः, केचिदुभयवासिनः । [तत्र] ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनः, गृह्यन्त एव ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च ॥ एवमिहापि[9] केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन । ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचना गृह्यन्त एव ते मुखग्रहणेन नासिकाग्रहणेन च ॥**

**(प्रदीपः) प्रासादवासिन्यायेनेति ।** अयं न्यायः क्रियाशब्देष्वेव, न रूढिशब्देषु ॥

**(उद्योतः)** ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत्सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह—**अयमिति**[10] । योगेन ह्युभयग्रहणं स रूढिषु नास्तीत्यर्थः । अनुनासिक[11]शब्दस्य च रूढिशब्दत्वम् । तस्य[12] क्रियाशब्दत्वं तु वक्तुमशक्यमनु पश्चा-

---

१ 'कुँ खुँ गुँ घुँ इति यमाः' इति कात्यायनप्रातिशाख्यानुसारेण "चत्वारस्ते यमाः कुँ खुँ गुँ घुँ इति" गौतमोक्त्यनुसारेण 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः' इत्युपक्रम्य गणनाविभागप्रदर्शने 'चत्वारश्च यमाः स्मृताः' इति पाणिनीयशिक्षानुसारणे च कवर्गीयाद्यवर्णचतुष्टयसदृशा एव चत्वारो यमसंज्ञकाः । ननु प्रतिवर्गीयचतुर्वर्णसदृशाः, त्रिषष्टिसंख्यागणनायाश्चतुःसंख्यागणनायाश्चानुपपत्तेः । अत एव हस्तलिखितप्राचीनपुस्तकेषु 'सूर्य आत्क्मा' 'लक्ष्मीश्च परक्थ्या' 'पारक्नीवतश्चमे' इत्यादौ तकारोत्तरमपि मध्ये ककारसदृश एवोपलभ्यते । अत एव यज्ञशब्दादौ गकारश्रुतिः । 'अनुपसर्गाज्ज्ञः' इत्यादौ श्रुत्वमपि संयोगाद्यजकारमाश्रित्योपपद्यते ॥ यज्ञ इत्यादौ द्वौ जकारौ इति तु वैदिकव्यत्ययेनापि यमाकरणे द्वित्वेनापि वा संगच्छत इति न विरोधः॥दा.

२ ष्याविरोध इति । अन्यथा तेषां स्वत एवाक्षरसमाम्नायिकत्वेन तदर्थं तत्त्वप्रतिपादनासंगतिः स्पष्टैवेति भावः ॥ छाया ॥

३ अत्रैव तदनवतारपक्ष एवेत्यर्थः ॥ एवेन तदवतारप्रथमतृतीयपक्षव्यावृत्तिरित्येतद्ध्वनयन्पूर्वत्रासंभवेऽप्यत्र संभवादाह–नासिकाया इति॥ छाया ॥

४ ष्टासिद्धेरिति । यदेतनूं इत्यब्रवीदित्यादावनुनासिकानुपपत्तिरिति भावः ॥ छाया ॥

५ अथ वर्णानामुत्सर्गतो निरवयवत्वेनाखण्डत्वस्य सिद्धान्तित्वाद्वितीयपक्षोऽयुक्त इति ध्वनयन्नाह—मुखेति ॥ तद्विनापि सर्वेष्टसिद्धेरिति शेषः ॥ ॥ छाया ॥

६ शङ्कते—केनेदानीमिति । [मुखग्रहणाभाव इत्यर्थः ॥] छाया ॥

७ उत्तरयति—प्रासादेति ॥ छाया ॥

८ एवेनाग्रहणव्यवच्छेदः । यथा प्रत्येकवासिनां तत्तच्छब्देन ग्रहणम् । एवमुभयवासिनामप्यविनाभावादित्यर्थः ॥ छाया ॥

९ प्रकृते योजयति—एवमिति । उक्तरीतिरत्राप्यस्तीत्यर्थः । तामेव रीतिमाह—केचिदिति । एकपुत्र इत्यादौ संख्याशब्दस्य न्यूनाधिकव्यवच्छेदकत्वनियमात्तथासत्त्वेऽप्यत्र तादृशावधारकाभावात्सर्वं वाक्यमित्यस्य प्रासादवासिन्यायेन बाध इति भावः ॥ छाया ॥

१० अयमित्यादिकैयटग्रन्थस्तत्त्वकथने न प्रकृतोपयोगीति दण्डी, ननु लोके तद्वदश्वकर्णादिपदवाच्यस्याप्यन्यतरग्रहणेन ग्रहणं कुतो नेति चेत्, शृणु—यत्रावयवयोगेनार्थधीस्तत्रान्यतरग्रहणेन तद्ग्रहणम्, अश्वकर्णादौ तु न तथेत्यदोषादित्येवंपर इति कृष्णः ॥ तदुभयमप्यसंगतमिति ध्वनयन्नाह—नन्विति ॥ अनुनासिकपदस्यान्वर्थत्वादिति भावः ॥ छाया ॥

११ ननु तस्य यौगिकत्वमेव महासंज्ञाकरणादत आह—अनुनासिकेति । महासंज्ञाकरणं लोकानुरोधेनेति भावः ॥ छाया ॥

१२ ननु तस्य तत्त्वमेव कुतो नात आह—तस्येति । योगस्य क्रियान्तर्भावेणैव वाच्यत्वादाह—क्रियेति ॥ तादृशाकारादिषु तदभिव्यक्तौ सत्यां नासावच्छिन्नवायुसंयोगेन तद्गुणाभिव्यक्त्यङ्गीकारेण संभवादाह—अमेति ॥ तत्रातद्गुणस्वरूपानुपलब्ध्योभयावच्छेदेन वायुसंयोगोत्तरमेव तादृशस्वरूपाभिव्यक्त्याऽविनिगमकेनोभयोः स्थानत्वेन युगपदेवोभयसंबन्ध इत्याह—विनीति ॥ यमानुस्वारयोरप्युपलक्षणमिदम् । 'अनुस्वारयमानां च' इति शिक्षोक्त्या नासिकामात्रस्थानत्वेन तस्या एव तत्र संबन्धात् । तेषां मुखनासिक्यत्वपक्षे पूर्वरीतिरप्यनुसंधेया ॥ छाया ॥

न्नासिका व्याप्रियते यस्मिन्निति योगस्य ञमङणनेषु निरूपयितुमशक्यत्वात् । विनिगमनाविरहेण युगपदुभयोर्व्यावृत्तेः ॥ एतेनानु पश्चान्नासिकां गत इत्यर्थको नासिकामनुगत इति योगोपि परास्तः । यथाकथंचिद्योगोपपादने तु रूढिरेव फलितेति दिक् ॥ ८ ॥

( आक्षेपभाष्यम् )

**भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति ॥**

( समाधानभाष्यम् )

**नैवं दोषो न प्रयोजनम् ॥**

(प्रदीपः) **नैव दोष इति** । अनुवादे तावद् यमानुस्वाराणामसंभव एव । विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति न तु केवलो नासिकावचनः ॥ ८ ॥

( १३९ अन्योन्याश्रयपरिहारायाक्षेपवार्तिकम् ॥ १ ॥ )

**[ ॥ * ॥ इतरेतराश्रयं तु ॥ * ॥ ]**

( भाष्यम् )

**इतरेतराश्रयं तु भवति ॥**

**का इतरेतराश्रयता ? ।**

**सतोनुनासिकस्य संज्ञया भवितव्यम् । संज्ञया च नामानुनासिको भाव्यते । तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते ॥**

( सिद्धान्तसमाधानभाष्यम् )

**॥ * ॥ अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ॥ * ॥**

( प्रश्नभाष्यम् )

**किमुक्तम् ? ॥**

( समाधानभाष्ये ९८ सिद्धान्तवार्तिकम् । )

***सिद्धं तु नित्यशब्दत्वात्* इति ।**

( प्रकृतोपयुक्तव्याख्याभाष्यम् )

**नित्याः शब्दाः । नित्येषु शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते । न संज्ञयाऽनुनासिको भाव्यते ॥**

( आक्षेपभाष्यम् )

**यदि तर्हि नित्याः शब्दाः । किमर्थं शास्त्रम् ? ॥**

( ९९ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् )

**निवर्तकं शास्त्रम् ॥**

**कथम् ? ॥**

**आङ्साय विशेषेणोपदिष्टोऽननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते—छन्दस्यचि परत आङोऽननुनासिकस्य प्रसङ्गेनुनासिकः साधुर्भवतीति ॥ मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥**

---

( आश्रमसवर्णसंज्ञाप्रकरणम् )

( ८ सवर्णसंज्ञासूत्रम् ॥ १ । १ । ४ आ. ६ सू. ॥ )

## तुल्यास्यप्रयत्नं सवर्णम् ॥ १ । १ । ९ ॥

( तुल्यास्यप्रयत्नपदार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**[किंमिदं तुल्यास्यप्रयत्नमिति ? ॥]**

---

१ नन्वनोरभिहत्येति गत इत्यस्याभिव्यञ्जित इत्यर्थेन द्वितीययोगसंभवः । किं च नासिकादिशब्देन प्रागुक्तस्तद्व्यापारस्तमनु पश्चाद्गतो जात इत्यर्थेन प्रथमयोगस्यापि सर्वत्र संभवोऽत आह—यथेति । साधुत्वार्थमसताप्यवयवार्थेन रथंतरादिवद्व्युत्पत्तिरिति भावः ॥ नन्वेवं भवेदित्यादि—प्रयोजनमित्यन्तवक्ष्यमाणभाष्यासंगतिः । तत्र हि तद्व्यवहारे सति दोषफलाभावोक्तिर्युक्ता नत्वन्यथेति सूत्रमते प्रागुक्तयोगाश्रयणमावश्यकम् ॥ शिक्षाप्रातिशाख्यादौ लोके च तद्व्यवहारस्य तथैवोपपत्तिरिति प्रागुक्तं सर्वं कैयटयोजनादिकमयुक्तम् । अत एव पूर्वं 'पूर्वः परो वा' इति कैयटेनोक्तम् 'अन्यतर—' इत्यादि हर्युक्तं च संगच्छते—इति चेत् ॥ न, आशयानवबोधात् । तथाहि अस्तु तथा योगः, तथापि न तस्य क्रियाशब्दत्वम् । क्रियाप्रवृत्तिनिमित्तकत्वेन प्रसिद्धशब्दघटितत्वं ह्यत्र तत्त्वम् । तत्र तथैव सत्त्वात् । एवं च तत्सामान्यादन्यत्रापि तथैव प्रवृत्तिर्नतु यथाकथंचिद्यौगिके । अत एव क्रियाशब्देष्विवेत्येवोक्तं कैयटेन नतु यौगिकेष्विवेति, उद्द्योते च तस्य क्रियाशब्दत्वमित्येवोक्तं न तु यौगिकशब्दत्वमिति । किंचोक्तार्थानिष्टत्वे प्रासादवासिशब्दादेरपि समस्तत्वेनैकार्थाभावसत्त्वेन परमार्थतो रूढेरेव सत्त्वेनासंगतिः स्पष्टैव । तस्मादत्र वचनशब्दस्य तादृशस्य तद्वत्सत्त्वान्मुखग्रहणप्रत्याख्यानस्य सुवचत्वेऽपि न सूत्रप्रत्याख्यानं तेन सुवचम् । तस्य तदर्थमुक्तयोगस्यावश्यकत्वेऽप्यतादृशत्वात् । अन्यथा दध्योदनादिशब्दानामपि क्रियान्तर्भावसत्त्वात्क्रियाशब्दत्वापत्तेः । किंच तैत्तिरीयप्रातिशाख्योक्त (२।५०) मुखनासिक्यत्वपक्षेण सूत्रमते निर्वाहेण भाष्यासंगतेरभावादितिदिक् ॥ छाया ॥

२ एवं सर्वेष्टसिद्धावपि प्रागुक्तातिप्रसङ्गं शङ्कते—भवेदिति ॥ छाया ॥

३ इष्टापत्त्या परिहरति—नैवेत्यादिना ॥

४ केवल इति । तं मनुत इत्यादावनुनासिकोऽनुस्वार एव न तु अम् 'यरोऽनुनासिके' इत्यादावनुस्वारस्येत्यतः सवर्णपदापकर्षादित्यन्यत्र विस्तरः ॥ छाया ॥

५ इदं वार्तिकं यद्यपि क्वापि पुस्तके नोपलभ्यते तथापि 'विप्रतिषिद्धं तु" "विप्रतिषिद्धं तु भवति" इति विभाषासंज्ञासूत्रे 'स्वरितेनाधिकारः' इति सूत्रेऽपि "अधिकारपरिमाणाज्ञानं तु" अधिकारपरिमाणाज्ञानं तु भवति" इति वार्तिकोत्तरमेव व्याख्यानभाष्यस्योपलम्भेनात्रापि व्याख्यानभाष्यदर्शनेन वार्तिकं लेखकप्रमादतो नष्टचरमित्यनुमाय कोष्टकमध्ये दर्शितम् ॥ दा॰

६ इतः प्रभृति सर्वमपि भाष्यं प्रकृतोपयोगिपदमात्रपरिवर्तनव्यतिरिक्तं वृद्धिसंज्ञासूत्रोक्तमेवानूदितं भगवतेति बोध्यम् ॥ दाधिमथाः ॥

७ अयं कोष्टकान्तर्गतः पाठो नैव सर्वत्रोपलभ्यते । तथापि सर्वत्र भाष्यकारस्याक्षेपोत्तरमेव समाधानवचनस्यानुनासिकसंज्ञासूत्रादावुपलभ्यमानत्वेनात्रापि तथैवौचित्येन लेखकप्रमादेन तादृशपाठस्योच्छेदसंभवेनास्माभिः कोष्टकमध्ये स्थापितः ॥ दाधिमथाः ॥

( समाधानभाष्यम् )

**तुलया संमितं तुल्यम् । आस्यं च प्रयत्नश्च आ[1]स्यप्रयत्नम् । तु[2]ल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवति ॥**

(प्रदीपः) **तुल्यास्यप्रयत्नम्** ॥ ९ ॥ चत्वारोऽत्र पक्षाः संभवन्ति—द्वन्द्वगर्भो बहुव्रीहिः, त्रि[3]पदो बहुव्रीहिः, तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, आस्यप्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वा[4]र्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति—**तुलया संमितमिति** । व्युत्पत्त्यर्थमेव तुलोपादीयते । रूढिशब्दस्त्वयं स[5]दृशपर्यायः । यथा प्रवीणः कुशलः प्रतिलोमोऽनुलोम इत्यवयवार्थाभावः, एवं तुल्यशब्देऽपि ॥

( उद्द्योतः ) **तुल्यास्यप्र०** ॥ ९ ॥ **तत्पुरुष इति** । तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च साधनं कृतेत्यनेन समासः ॥ ननु स्थानादिकं न तुलया संमीयतेऽत आह—**व्युत्पत्त्यर्थमेवेति** ॥

( आक्षेपभाष्यम् )

**किं पुनरास्यम् ? ।**

(प्रदीपः) **किं पुनरास्यमिति** । किं मुखम्, अथ तत्र भवं ताल्वादिकं स्थानमिति प्रश्नः ॥

(उद्द्योतः) **किं मुखमिति** । अतद्धितान्ततद्धितान्तास्यशब्दविषये सन्देह इत्याशयः ॥

( समाधानभाष्यम् )

**लौकिकमास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् ॥**

(प्रदीपः) **लौकिकमिति** । पशुरपत्यं देवतेत्यादिवत् प्रसिद्धमित्यर्थः ॥ यद्यपि ताल्वादिकमपि लौकिकमास्यम्, तथापि तत्र योगवशादास्यशब्दो वर्तत इति झटिति न तत्प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमुक्तम् । तस्यैव च प्राथम्याद् ग्रहणं युक्तमित्यर्थः ॥ **ओष्ठादिति** । **काकलकं** हि नाम ग्रीवायामुन्नतप्रदेशः ॥

(उद्द्योतः) तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह—**पशुरिति** ॥ **झटिति** । पदश्रवणमात्रेणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**कथं पुनरास्यम् ? ।**

(प्रदीपः) **कथं पुनरिति** । य[6]दि निमित्तवशात्प्रवर्तते ततस्ताल्वादिष्वपि प्रवर्तिष्यत इति प्रश्नः ॥

(उद्द्योतः) **निमित्तवशात्** अवयवार्थवशात् ॥

( समाधानभाष्यम् )

**अस्यन्त्यनेन वर्णानिति आस्यम् ॥ अ[7]न्नमेतदास्यन्दत इति वास्यम् ॥**

(प्रदीपः) **अस्यन्त्यनेनेति** । स[8]त्यपि निमित्ते रूढिवशान्मुख एव तत्प्रवर्तते न ताल्वादिष्वित्यर्थः । **कृत्यल्युट** इति करणे ण्यत् । असनमत्र जातिस्फोटपक्षेऽभिव्यक्तिः, व्यक्तिस्फोटपक्षे तूत्पत्तिः ॥ **अन्नमेतदिति** । आङ्पूर्वात्स्यन्दतेरन्येष्वपि **दृश्यते** इति डः । ए[9]तदास्यं कर्मान्नं कर्तृ आस्यन्दते द्रवीकरोत्यन्नप्रक्षेपणेन मुखस्य द्रवत्वोत्पादनात् ।

(उद्द्योतः) **जातिस्फोटेति** । व[10]र्णानिति वर्णपदं बोधकपरम् । तत्र जातेर्बोधकत्वे तस्यानित्यत्वादभिव्यक्तिरसनं तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भावः ॥ अतएव **वर्णानिति** बहुवचनं सङ्गच्छते । एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसङ्गतिः स्पष्टैव ॥ क्वचित्तु **व्यक्तिस्फोटपक्षेऽभिव्यक्तिः । जातिस्फोटपक्षे तूत्पत्तिरिति** पाठः ॥ अयमेव सांप्रदायिकः ॥ पाठः ॥ **'एकैव व्यक्तिर्वाचिका कत्वादिकं तु ध्वनिनिष्ठं ध्वनिविशेषव्यङ्ग्यं वा । सा च नित्या'** इति व्यक्तिस्फोटवादः तदाभिव्यक्तिः स्पष्टैव । बहुवचनं त्वेकस्यैव बहुरूपत्वादारोपितबहुत्वमादाय नेयम् ॥ **'व्यक्तयोऽनन्ता जन्याश्च । तत्र जातिरेव शक्ता'** इति जातिस्फोटवादः तदोत्पत्तिरित्यर्थः । **अन्येष्वपीति** दृशिग्रहणाद्धात्वन्तरादपि स इति भावः ॥

( आक्षेपभाष्यम् )

**अथ कः [ पुनः ] प्रयत्नः ? ॥**

---

१ आस्यप्रयत्नमिति । 'जातिरप्राणिनाम्' इत्येकवद्भावः ॥ छाया ॥

२ द्वन्द्वगर्भबहुव्रीहिं सूचयन्नाह—तुल्यास्यमिति ॥ द्वन्द्वान्वितपदार्थस्य प्रत्येकं द्वन्द्वघटकसर्वपदार्थान्वय इति भावः ॥ छाया ॥ एतेन 'द्वन्द्वान्ते–' इत्यभियुक्तोक्तौ तदर्थान्वितपरमन्तपदमिति सूचितम् ॥ छायाशयः ॥

३ त्रिपद इति । तुल्य आस्ये प्रयत्नो यस्येति व्यधिकरणपद इत्यर्थः ॥ ॥ छाया ॥

४ वार्तिकेति । 'सवर्णसंज्ञायां भिन्न–' इति वार्तिकेत्यर्थः ॥ आस्यंशब्दो मुखपरः प्रयत्नशब्दो यत्नमात्रपरः तथैवोक्तत्वात् ॥ छाया ॥

५ सदृशेति । सदृशमात्रेत्यर्थः । 'नौवयोधर्म–' इत्यादिना व्युत्पादनं त्वसताऽप्यवयवार्थेन साधुत्वायेति भावः ॥ तदेतद्ध्वनयन्नाह–यथेति । तत्परिच्छिन्नसुवर्णादेरप्यन्यपरिच्छेदकत्वेन तद्रूपसमानधर्मसंबन्धादन्यत्रापि तत्प्रयोग इति नरसिंहादौ तथा बुद्ध्युदयेऽपि तुल्यशब्देऽन्यत्र प्रयुक्ते तदभावात् । तथा च प्रकृष्टो वीणायाम्, कुशाल्लाँति, लोमान्यनुगतः प्रतिगतश्चेतिवदत्रैतदर्थमेव 'रूढिशब्दस्तु' इत्युक्तमिति भावः ॥ छाया ॥

६ नन्वास्यशब्दस्य मुखे रूढत्वे साधुत्वं न स्यादतोऽवयवार्थस्तत्रावश्यमाश्रयणीयस्तथासत्यावश्यकत्वात्स एवास्तु इत्याशयेनाह—यदीति ॥ वस्तुतस्तु रूढेऽपि साधुत्वार्थे का व्युत्पत्तिरिति प्रश्न इति भाष्यव्याख्यानमुचितम् ॥ छाया ॥

७ अन्नमेतदिति । अन्नं प्राप्यैदतास्यमास्यन्दते द्रवीभवतीत्यर्थः ॥ तथा च डः कर्तरि ॥ छाया ॥

८ सत्यपीति । तस्य व्युत्पत्तिनिमित्तत्वेऽपि न शब्दप्रवृत्तिनिमित्तत्वमिति भावः ॥ छाया ॥

९ उभयोर्ल्लेखस्वारस्यात्पक्षान्तरमाह—एतदिति ॥ भाष्यस्थवर्णपदानामर्थकथनमात्रमनेन क्रियते । तथाच भाष्यमपि फलितार्थकथनपरं नतु विग्रहपरम् । स त्वास्यद्यते द्रवीक्रियत इति बोध्यः । तथाचान्तर्भावितण्यर्थात्कर्मणि डः । तत्रापिना कारकान्तरस्यापि परिग्रहः ॥ छाया ॥

१० जातिस्फोटपक्षे वर्णानित्यस्यासंगतिं परिहरति—वर्णानित्यतीति ॥ छाया ॥

(प्रदीपः) कः प्रयत्न इति । किं प्रयतनं प्रयत्नः, [1]अथ प्रारम्भो यत्नस्येति प्रश्नः ॥

( समाधानभाष्यम् )

**[2]प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो नङ् प्रत्ययः ।**

(प्रदीपः) भावसाधन इति । भावेऽभिधेये नङ्प्रत्ययः क्रियते । [3]तेन नङ्शब्दस्य भावः साधनं भवति ॥

(उद्द्योतः) ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधनत्वमनुपपन्नमत आह—भावे इति ॥ नङ् । यजयाचेत्यनेन ॥

( आक्षेपभाष्यम् )

**[4]यदि लौकिकमास्यम् । किमास्योपादाने प्रयोजनम् । सर्वेषां हि तत्तुल्यम् ? ॥**

(प्रदीपः) किमास्योपादान इति । आस्य एव सर्ववर्णानां निष्पादादिति भावः ॥ नासिकापि न वाह्या वर्णोत्पत्तिनिमित्तम् । किं तर्ह्यास्यान्तश्चर्मे विततमस्ति तत्संवद्धा रेखा नासिका तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः विसर्जनीयस्यैकीयमते-नोरस्यत्वात्सावर्ण्याभावेऽपि न दोषः ॥

(उद्द्योतः) ननु [5]तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानञमङादिनिवृत्त्यर्थमास्योपादानं स्यादत आह—नासिकापीति । एवं चास्यग्रहणे कृतेऽपि तद्व्यावृत्तिर्दुरुपपादेति भावः ॥ वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादिभिर्ह्रस्वाकारादीनां सावर्ण्यानापत्तिः । तज्जनकवायुसंयोगा[दी]नामपि तुल्यत्वात् । अवधारणागर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः ॥ एवंच नासिकाया वाह्यत्वेऽपि न क्षतिः । अतएव मुखनासिकेति सूत्रे मुखं च नासिका चेति, मुखद्वितीया नासिकेति च विग्रहप्रदर्शनं भाष्ये । नह्यवयवावयविविषये एवं [6]प्रयोगः सचेतसाम् । सहस्तो देवदत्त इत्यादौ विद्यमानवाची सहशब्दः । अत एव मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेवं प्रसज्येतेति भाष्ये 'एव'शब्दः सङ्गच्छते । अन्यथा यमादीनां ङादीनां च मुखवचनत्वात्तदसङ्गतिः स्पष्टैव । आस्यानन्तर्गतत्वे तु न दोषः । मुखमात्रवचनत्वाभावात् । [7]प्रासादवासिन्यायप्रदर्शकभाष्येणापि ध्वनितमेतत् । कैयटोक्तास्यानन्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरम् । ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम् । एवकारश्चाप्यर्थः । दृष्टान्तोऽप्येकांशेन बोध्य इति ॥ नन्वे[8]वमपि विसर्जनीयव्यावृत्तये तत्स्यादत आह—विसर्जनीयस्येति । ततश्चान्येषां कण्ठादि[9]स्थान एवेति भावः ॥ उरस्यमतेऽप्याह—सावर्ण्याभावेऽपीति ॥

( समाधानभाष्यम् )

**[10]वक्ष्यत्येतत्—प्रयत्नविशेषणमास्योपादानमिति ।**

(प्रदीपः) वक्ष्यतीति । नास्य परीक्षावसर इति भावः ॥

(उद्द्योतः) ननु इदानीमेव किं नोच्यतेऽत आह—[11]नास्येति ॥

(१४० आक्षेपवार्तिकम् ॥ १ ॥)

**॥ * ॥ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् ॥ * ॥**

( भाष्यम् )

**सवर्णसं[12]ज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति । [13]जबगडदशाम् ॥**

**किं कारणम् ? ॥**

**प्रयत्नसामान्यात् । एतेषां हि समानः प्रयत्नः ॥**

(प्रदीपः) सवर्णसंज्ञायामिति । द्वन्द्वे प्रयत्नस्यास्येनाविशेषणान्[14]मुखप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः । [15]भाष्ये शकारः प्रत्याहारपाठवशात्पठितः । अत्र प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः । शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव । ततश्च ऊर्ज्ज इत्यादौ झरोझरीति लोपप्रसङ्गः ॥

---

१ अथेति । पक्षान्तरे ॥ छाया ॥

२ आद्यपक्षमेव लोके तयोः पर्यायतया प्रसिद्धेराह—प्रयतनमिति । यत्नमात्रमित्यर्थः ॥ छाया ॥

३ तेनेति । तस्यार्थप्रयुक्तत्वेन तत्र तस्य प्रयोजकत्वेनेत्यर्थः ॥ छाया ॥

४ सिंहावलोकनन्यायेनाह—यदीति ॥ तथाच द्वन्द्वगर्भवहुव्रीहिपक्षो युक्त इति भावः ॥ छाया ॥

५ जातिप्राधान्य एव तेनैकवद्भावादाह—तुल्याविति ॥ सर्वं वाक्यमिति न्यायेनाह—मात्राविति । जनकत्वं षष्ठ्यर्थ इत्याह—जनकाविति ॥ ञमादीति पाठः । ञमङादीति पाठो वा ॥ आदिना यमानुस्वारयोः, अन्तस्थापञ्चमयुक्तहकारस्य च संग्रहः । अन्त्यस्योरःस्थानकत्वात्तद्भिन्नानां नासिकास्थानकत्वादिति भावः ॥ छाया ॥

६ प्रयोग इति । अतएव 'सामान्यविशेषयोर्द्वन्द्वो न' इत्यादि भाष्योक्तं संगच्छेत् ॥ व्यभिचाराभासमुद्धरति—सहस्त इति ॥ छाया ॥

७ प्रासादेति । तस्य व्याप्यव्यापकभावानापन्नविषयकत्वस्य प्रतिपादितत्वात् ॥ छाया ॥

८ एवमपि । यमाद्यव्यावर्तकत्वेऽपि । तत् आस्यपदम् ॥ छाया ॥

९ 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षानुरोधेनाह—कण्ठादीति ॥ छाया ॥

१० वक्ष्यत्येतदिति । एकस्यैवौपाधिकभेदेन प्रथमपुरुषप्रयोगः अन्यथोभयत्र भगवत एव कर्तृत्वेनोत्तमपुरुषौचित्यम् ॥ तथा च गोनर्दीय आहेतिवत्प्रयोगः ॥ द्वन्द्वगर्भवहुव्रीहौ तस्य तद्विशेषणत्वासंभवादेवमुक्तम् ॥ छाया ॥

११ नास्येतीति । इदानीमेतद्विचारे उदासीनता । अन्यथा वार्तिकोत्थितिर्विलम्बिता स्यादिति वार्तिकमुत्थाप्याक्षिप्य तत्समाध्यवसरे तथा वक्ष्यतीति तत्रैव विचारयिष्याम इत्यर्थः ॥ छाया ॥

१२ संवन्धिनो वैषयिकाधिकरणत्वविवक्षया सप्तमी ॥ भिन्नदेशेषु भिन्नस्थानेषु वर्ग्येषु स्वस्ववर्ग्याणामाभ्यन्तरप्रयत्नसाम्याद् ॥ अव्याप्तेरभावादाह—अतिप्रसङ्ग इति ॥

१३ उक्तमेव विवृणोति—जबगडदेति । मिथः सावर्ण्यं प्राप्नोतीति शेषः ॥ छाया ॥

१४ उपक्रमानुरोधेनाह—मुखेति । प्रयत्नेति । आभ्यन्तरेत्यर्थः ॥ छाया ॥

१५ उपक्रमभाष्ययोजनेऽपि जशामित्युचितम् । अथ सर्वेषां तदापत्तिसूचनाय तथोक्तिरिति चेदेवमपि शकाराधिक्यमत आह—भाष्ये शकार इति ॥ ॥ छाया ॥

(उद्द्योतः) द्वन्द्वे[1] प्रयत्नस्यास्येनाविशेषणादित्यस्योपयोगश्चिन्त्यः । अत्रेति । एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः । ऊर्ग् अन्नं तस्माज्जात ऊर्ग्जः ॥

( १४१ न्यासान्तरेण समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं[2] त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ।**

**कथम् ? ।**

**आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**एवमपि[3] किमास्योपादाने प्रयोजनम् । सर्वेषां हि तत्तुल्यम् ? ॥**

(प्रदीपः) **एवमपीति** । आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते । तत्र[4] व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः ॥

(उद्द्योतः) **आस्ये इति** । देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः । न च नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम् । अनुनासिकाकारादौ[5] कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्ममुत्पद्यते इत्यनुभवेन वृद्धिरादैच्सूत्रस्थाद् भेदकत्वाद् गुणस्येति वाच्यम् । [[6]आनुनासिक्यसङ्ग्रहार्थं] तद्यथैकोऽयमात्मेत्यादिभाष्यकैयटात् तथैव लाभेन च तेषु[7] नासिकाया देशत्वाभावस्य क्लृप्तत्वाज् जादिष्वपि तथैवेत्यभिमानात् । देश[8]पदेन ताल्वादिस्थानमेवोच्यते इति जवगडादिषु न दोषः ॥

( समाधानभाष्यम् )

**प्रयत्नविशेषणमास्योपादानम् । सन्ति[9] ह्यास्याद्बाह्याः प्रयत्नाः । ते हापिता भवन्ति । तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति ॥**

**के पुनस्ते ? ॥**

**विवारसंवारौ, श्वासनादौ, घोषवदघोषवता, अल्पप्राणता महाप्राणतेति[10] ॥**

**तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः, श्वासानुप्रदाना अघोषाश्च । एकेऽल्पप्राणाः, अपरे महाप्राणाः ॥**

**तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः । एकेऽल्पप्राणाः, अपरे महाप्राणाः ॥**

**यथा तृतीयास्तथा पञ्चमा आनुनासिक्यवर्जम् । आनुनासिक्यमेषामधिको गुणः ॥**

(प्रदीपः) **प्रयत्नविशेषणमिति** ॥ तस्य[11] संभवव्यभिचारसद्भावादित्यर्थः । बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते । स्पृष्टतेषत्स्पृष्टताविवृततासंवृतताख्याः ॥

(उद्द्योतः) भाष्ये प्रयत्नविशेषणमिति ॥ देश[12]प्रयत्नमिति द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः ॥ स्पृष्टतेत्यादि । आस्या[13]न्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते । तेषां[14] चास्यवृत्तित्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेति बोध्यम् । आस्ये[15] इत्यस्य 'यत्कार्यं, तज्जनक' इति शेषो वा ॥ भाष्ये ते हापिता इति । सवर्णसंज्ञा स्वनिमित्तत्वेन बाह्यप्रयत्नाञ्जहातीति तया ते स्वनिमित्तत्वं हापिता इत्यर्थः ॥ **विवारसंवारौ** कण्ठबिलस्य विकाससङ्कोचौ । विवृत[16]: कण्ठो यैः । श्वासोऽनु प्रदीयते यैरित्यर्थः ॥ **नादो** वर्णोत्पत्त्यनन्तर-

---

१ 'सवर्णसंज्ञायामितिप्रतीकस्थकैयटैकदेशं दूपयति—द्वन्द्व इति ॥ छाया ॥

२ वार्तिककृन्न्यासान्तरेण समाधत्ते—सिद्धंत्विति ॥ आस्ये प्रागुक्ते । न्यासे आर्षमेकवचनमिति सूचयन्नाह—येषामिति ॥ छाया ॥

३ एवमपि तादृशन्यासेपि ॥ सर्वेषामिति । नासिकास्यान्तर्गतेति मते । उरस्यत्वमते तु न दोष इत्युक्तं प्राक् ॥ छाया ॥

४ तत्र तदंशे ॥

५ काकारादौ । तद्विषये । अनुभवेऽन्वयः ॥ छाया ॥

६ अयं कोष्ठकान्तर्गतः पाठः 'सूत्रस्थात्' इत्यत्रैव योग्यश्छायायामप्यत्रैव व्याख्यात इत्यत्रैव रक्षित इति बोध्यम् ॥ दाधिमथाः ॥

७ तेषु अनुनासिकाकारादिषु ॥ छाया ॥

८ ननु देशशब्देन प्रदेशग्रहणे प्रागुक्तदोष एवात आह—देशेति ॥ छाया ॥

९ व्यभिचारस्थलमाह—सन्तीति ॥ छाया ॥

१० एतेतीति । यद्यप्यत्र भाष्येऽष्टावेवोक्तास्तथापीतिनाऽन्येषामप्युदात्तादीनां सप्तानां संग्रहो बोध्यः । नचोदात्तादीनां तत्त्वे न मानम्, एकस्थानकवर्णनिष्ठानां तेषां प्रयत्नभेदेनैव भेदस्य व्यवस्थापनीयत्वात् । अन्यथा तद्भेदस्य निर्मूलत्वापत्तेः । अइउण्सूत्रस्थं भाष्यं ह्रस्वत्वादीनां तत्त्वे मानमित्यन्यत्र स्पष्टम् ॥ यद्यपि घोषाघोषाल्पप्राणमहाप्राणेति प्रयत्नचतुष्टयेनैव प्रक्रियांशनिर्वाहः सुकरस्तथापि शिक्षानुरोधेनान्येषामुक्तिः ॥ छाया ॥

११ तस्येति । तत्रेत्यर्थः ॥ चत्वार इति । सूत्रमते नाज्झलावितिसूत्रेण विवृतत्वव्याख्यानां सवर्णसंज्ञानुपयुक्तत्वबोधनेन तद्रीत्येदम् ॥ संवृततेति स्वरूपकथनपरम् ॥ एदैतोरोदौतोश्च न मिथः सावर्ण्यम् गुणवृद्धिसंज्ञादौ प्रत्याहारद्वयग्रहणवैयर्थ्यापत्तेः ॥ भाष्यमते तु सप्त प्रयत्नाः ॥ छाया ॥

१२ ननु तत्पक्षे तुल्यस्थानम् आस्ये तुल्यप्रयत्नं चेत्यर्थस्य लाभेन कथं द्वन्द्वोऽत आह—देशेति ॥ छाया ॥

१३ नन्वेषामाभ्यन्तरत्वं स्पृष्टत्वादि च कथमत आह—आस्यान्तरिति ॥ ॥ छाया ॥

१४ तेषां मुख्यतत्त्वाभावादाह—तेषां चेति ॥ छाया ॥

१५ व्यस्तत्वेनात्र पक्षे संभवात्पक्षान्तरमाह—आस्य इति ॥ छाया ॥

१६ विवृत इति । विवाराख्यबाह्यप्रयत्नयोगादिति भावः ॥ श्वास इति । वर्णनिष्पत्तेरनु पश्चात् प्रदीयते यैरित्यर्थः । विवृते च तस्मिन्यदोपरिवर्तमानाः श्वासा भवन्ति तदनुप्रदानमनुस्वननं घण्टानिर्ह्रादवत् । यथा निर्ह्रादोऽनुस्वनमनुभवति तथेहापीत्याहुः ॥ इदमुभयमग्रेपि बोध्यम् । संवृते तस्मिन्निति तु विशेषस्तत्र बोध्यः ॥ छाया ॥

भावी [1]अनुरणनरूपः शब्दः ॥ [[2]एके उक्तवाक्ययोः प्रथमोपात्ताः] यथा तृतीया इत्यनेन तेषामल्पप्राणत्वं बोधितम् । देशविशेषणम[3]प्यास्यग्रहणमावश्यकमिति गूढाशयेनाह—भाष्ये **आनुनासिक्यमेषामधिको गुण इति** । अयं भावः—[4]अत्र देशपदेन ताल्वादिस्थानमुच्यते । स्थानशब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते । [5]तत्र यद्यपि अकारादीनां गुणमात्रजनिका नासिका, स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धेः । तथापि ञादीनां स्वरूपस्य न केवलताल्वादिना नापि के[6]वलनासिकयाऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां नासिकापि स्थानम् । न चैवं त्वङ्करोषीत्यादौ चरितार्थं परसवर्णशास्त्रं संयन्तेत्यादौ न प्रवर्त्तेत । उक्तरीत्या यादीनां नासिकास्थानत्वाभावेन स्थानत आन्तर्याभावादिति वाच्यम् । **स्थानेऽन्तरतमे** इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या युक्तेर्गर्भस्रावात् ॥ [7]अनुनासिकाकारादीनामपि सा स्थानमिति त्वयुक्तमेव । एवं हि उत्पादकसामग्रीभेदात्कङ्योरिव स्वरूपभेदस्यैवापत्तौ अभेदकगुणपक्षेऽपि निरनुनासिकैः सानुनासिकग्रहणानापत्तिः । एवं [8]च यावत्स्थानसाम्ये सवर्णसंज्ञेति सिद्धान्ते नासिकारूपदेशभेदात्कङादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम् । [9]नासिकाया आस्यान्तर्गतत्वेऽपि **मुखनासिके**तिसूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम् । अन्यथाऽत्र स्थाने एतत्कथनवैयर्थ्यापत्तिः । आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रक्रान्तम् ॥ [10]न चेदं प्रयत्नविशेषणास्यग्रहणव्यावर्त्यमेवास्तु । अनुनासिकयकारादीनां ञादिभिः सावर्ण्यं च व्यावर्त्यम्, तत्फलं च तञ्जुङ्क्ते तन्नमतीत्यादौ **अनुस्वारस्य ययी**त्यनेन यकारलकारयोरनुनासिकयोरभाव इति वाच्यम् । अनुस्वारस्य नासिकास्थानत्वेन स्थानतोऽन्तरतमयो[11]रनयोरेव प्रवृत्तेः । अनुनासिकयादीनां तु उक्तरीत्या न नासिका स्थानमित्यदोषात् । इदमेव ध्वनयितुं गुण इत्युक्तम् । [12]गुणपदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते । [13]एवंच तत्सादृश्यादत्रापि गुणशब्दप्रयोगः । [14]अत एव बाह्यप्रयत्नानुपक्रम्याऽभोनुनासिका न ह्वाविति शिक्षायामुक्तम् । [15]अत **एवोदात्तादिभिः सहैकादश बाह्यप्रयत्ना** इति कैयटो वक्ष्यति । उदात्तादीनामपि वृद्धिसंज्ञासूत्रशेषे गुणत्वेन व्यवहारात् । [16]अत एव **'एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति । बाह्यं ह्यास्यात्स्थानमवर्णस्य' '[17]एवमपि व्यपदेशो न प्रकल्पते आस्ये येषां तुल्यो देशः'** इति भाष्यं स्वरसतः सङ्गच्छते । [18]अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव । [19]आस्येन देशविशेषणाभावान्न दोष इत्येव वक्तव्ये **सर्वमुखे**त्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च ॥ [20]एके इत्यनेन सर्वमतं तु कण्ठस्थानमिति ध्वनयति ॥

---

१ अनुरणनं घण्टानिर्ह्रादादिषु स्फुटमेवोपलभ्यते ॥ एतदजानानां Bengal Asiatic Society मुद्रितपुस्तके 'नादः' (भा) वर्णोत्पत्त्यनन्तरभावी ॥ 'अनुः भणनरूपः' इति पाठकल्पकानां शोधकानां प्रतिभात्वविकृतबुद्धित्वद्योतनमन्तरा किं सूचयतीति ध्येयम् ॥ दाधिमथाः ॥

२ अयं कोष्ठकान्तर्गतपाठो यद्यपि Bengal Asiatic Society मुद्रितपुस्तकेऽपि 'नादः' इत्यतः प्रागेवोपलभ्यते तथापि छायानुरोधादस्माभिर्यथोचितस्थाने स्थापितः ॥ दाधिमथाः ॥

उक्तेति । वर्गाणां प्रथमतृतीया इत्यर्थः ॥ तथाच अपरे तेषां द्वितीयचतुर्था बोध्याः ॥ छाया ॥

३ अपिना प्रयत्नविशेषणसमुच्चयः ॥ कण्ठतस्तथोक्तत्वादाह—गूढेति ॥ छाया ॥

४ अत्र न्यासान्तरे ॥ अनतिप्रसङ्गायाह—रूढ्येति ॥ छाया ॥

५ तत्र अनुनासिकानां मध्ये विषये ॥ मात्रपदेन धर्मिव्यावृत्तिः ॥ अत एव तस्यानित्यत्वादाह—जनिकेति ॥ छाया ॥

६ केवलेति । गुणविभक्तस्वरूपानुपलम्भादिति भावः ॥ अपिना कण्ठादिसमुच्चयः ॥ छाया ॥

७ प्राचोक्तं खण्डयति—अनुनेति ॥ अपिना ञादिसमुच्चयः ॥ सा नासिका ॥ उत्पादकेति । एकस्थान—स्थानद्वयरूपसामग्रीभेदादित्यर्थः ॥ स्वरूपेति । अनुनासिकाननुनासिकयोरित्यर्थः । अपिना भेदपक्षसमुच्चयः ॥ ॥ छाया ॥

८ प्रकृतमाह—एवंचेति । ञादीनामुभयस्थानकत्वे चेत्यर्थः ॥ सिद्धान्ते इति । वक्ष्यमाणे इति भावः ॥ छाया ॥

९ नन्वेवमपि नेष्टसिद्धिर्नासिकाया आस्यान्तर्गतत्वेन तत्तुल्यत्वाभावादत आह—नासिकाया इति ॥ अपिना सिद्धान्तभूततद्बाह्यत्वसमुच्चयः ॥ ग्रहणेनेति । मुखपदेनेति भावः ॥ तत्पक्षे तदावश्यकत्वात् ॥ अन्यथा । तद्विशेषणत्वानावश्यकत्वे ॥ अत्र स्थाने इति । बाह्यप्रयत्नप्रतिपादनावसरे इत्यर्थः ॥ एतदिति । अनुनासिक्यमित्येतदित्यर्थः ॥ छाया ॥

१० अन्यथा योजनं खण्डयति—न चेदमिति ॥ एवेन देशविशेषणव्यवच्छेदः ॥ ञादिभिरिति । अन्यथा स्थानबाह्यबाह्यप्रयत्नतौल्यात्स्यादिति भावः ॥ अनुस्वारस्य ययीत्यनेनेति । तदनुवर्तमाने वा पदान्तस्येत्यनेनेत्यर्थः ॥ छाया ॥

११ तत्प्राबल्यादाह—अनयोरेवेति । ननु तत्स्थानं तयोरपीति फलमेवात आह—अनुनेति ॥ क्तरीत्येति । तस्यास्तत्र गुणजनकत्वादित्यर्थः ॥ छाया ॥

१२ ननु न तत्र लोकप्रसिद्धगुणत्वमत आह—गुणेति । अस्याप्यतिप्रसक्तत्वादाह—आन्तरेति ॥ छाया ॥

१३ ननु विवाराद्यष्टस्वलोऽन्तर्भूतत्वाद्दोषस्तदवस्थ एवात आह—एवंचेति । तेषां तत्त्वे चेत्यर्थः ॥ छाया ॥

१४ अत्र शिक्षासंमतिमप्याह—अत एवेति ॥ तथा गुणत्वादेवेत्यर्थः ॥ न ह्वाविति भिन्नपदे । अन्यथा तदुपक्रमेण तत्समभिव्याहारेण च तदसंगतिः स्पष्टैव ॥

१५ कैयटसंमतिमप्याह—अत एवोदात्तेति ॥ कैयट इत्युक्त्वा न्यूनता तस्यापि ध्वनिता ॥ अत्र मूलमाह—उदात्तेति ॥ छाया ॥

१६ एवमुक्तभाष्येण तस्य देशविशेषणत्वे साधिते भाष्यान्तरमप्यत्र साधकमित्याह—अत एवेति । तस्य तद्विशेषणत्वस्याभिमतत्वादेवेत्यर्थः ॥ छाया ॥

१७ वर्णस्येत्याद्यग्रे यद्यपि समाधानग्रन्थोऽप्यस्ति तथापि तस्य प्रकृतासाधकत्वादाह—एवमपीति ॥ छाया ॥

१८ अन्यथा तथाभिमतत्वे ॥ मात्रव्यवच्छेद्यमेवाह—देशेति ॥ छाया ॥

१९ युक्त्यन्तरमाह—आस्येनेति । देशस्य व्यवच्छेद्यत्वाभावादित्यर्थः ॥ उभयत्राप्येकमेव समाधानमिति सूचनायैवकारः । अपिना व्यपदेशिवदिति समाधानसमुच्चयः ॥

२० एके इत्यनेनेति । भाष्यकैयटोभयस्थेनेत्यर्थः ॥ तथाच पूर्वपक्षसमाध्योस्तयोरेकदेश्युक्तित्वम् । अत एवाग्रिमभाष्यस्य संमतित्वेनोल्लेखेऽपि शब्दसंगतिश्चेति बोध्यम् ॥ छाया ॥

( आक्षेपभाष्यम् )

**[1]एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति, बाह्यं ह्यास्यात्स्थानमवर्णस्य ॥**

(प्रदीपः) **बाह्यं ह्यास्यादिति** । काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्यैक इच्छन्ति । सति च बाह्यदेशसंभवे तदन्यवच्छेदायास्येन देशो विशेष्यत इति प्रश्नः ॥

( समाधानभाष्यम् )

**[2]सर्वमुखस्थानमवर्णम् एक इच्छन्ति ॥**

(प्रदीपः) **सर्वमुखेति** । [3]अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियत इति नास्य बाह्यस्थानता ॥

( आक्षेपभाष्यम् )

**[4]एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति ॥**

(प्रदीपः) **एवमपीति** । अवर्णस्यास्यमेव देशो न त्वास्ये देशः ॥

( समाधानभाष्यम् )

**[5]व्यपदेशिवद्भावेन व्यपदेशो भविष्यति ॥**

(प्रदीपः) **व्यपदेशिवद्भावेनेति** । [6]सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते, देशशब्देन तु विशिष्टैवावस्था वर्णोत्पादनहेतुः । तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः ॥

( आक्षेपभाष्यम् )

**[7]सिध्यति । सूत्रं तर्हि भिद्यते ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**[8]यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**[9]ननु चोक्तम् * सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्याद् * इति ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**[10]नैष दोषः ॥ न हि लौकिकमास्यम् ॥**

**किं तर्हि ? ।**

**तद्धितान्तमास्यम् । आस्ये भवमास्यम् । "शरीरावयवाद्यत्" ॥**

**किं पुनरास्ये भवम् ? ॥**

**स्थानं करणं च ॥**

(प्रदीपः) **नहीति** । [11]प्राथमकल्पिकमित्यर्थः । यौगिकस्य तु व्यवहितस्य ग्रहणम् ॥ **स्थानमिति** । [12]ताल्वादि ॥ **करणमिति** । स्पृष्टतादि, जिह्वाया अग्रोपाग्रमध्यमूलानि वा ॥ यद्येवं प्रयत्नग्रहणं न कर्तव्यं तस्याप्यास्ये भवत्वाद् आस्यग्रहणेन ग्रहणात् ॥ सत्यमेतत्, प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानम् तेन द्वयोस्तु[13]ल्यत्वे सवर्णसंज्ञा भवति ॥

(उद्द्योतः) **व्यवहितस्येति** । यद्यपि रूढिर्योगापहारिणी, तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः ॥ **ताल्वादीति** । शिक्षायां तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः॥ एतेन ताल्वादिषूर्ध्वाधरभागभेदादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोति इत्यपास्तम् ॥ आस्यभवशब्देन [14]तद्रूपावच्छिन्नस्यैव ग्रहणेनादोषात् ॥ ननु प्रयत्नपदेनैव तद्ग्रहणसिद्धिरत आह—**जिह्वाया अग्रेत्यादि** ॥ **प्रत्येकं त्विति** । प्रत्येकनिरूपितसादृश्यग्रहणनिरासार्थमित्यर्थः । [15]यद्यपि ज्ञापकेनापि प्रत्येकव्यापारनिरासः सुकरः तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः ॥ तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थान[16]मात्रग्रहणा-

---

१ एवमप्यवर्णेति । बाह्यप्रयत्नवारणायास्यग्रहणस्य प्रयत्नविशेषणत्वेपि अष्टादशभेदभिन्नस्यावर्णस्य मिथ इत्यर्थः ॥ छाया ॥

२ यक्षानुरूपबलिन्यायेन मतान्तरमाश्रित्य समाधत्ते—सर्वमुखेति ॥ ॥ छाया ॥

३ यत्तु-सर्वाणि मुखान्तर्गतानि स्थानान्यवर्णस्येत्यर्थः । तन्न, तथासति दध्यग्नेत्यादौ सवर्णदीर्घापत्तेः। पित्रर्थमित्यादावीपत्स्पृष्टापत्तेः। चक्री अत्रेत्यादौ शाकलानापत्तेश्च । यणस्तु दध्युदकादिरवकाशस्तदेतद्ध्वनयन्नाह—अवर्णेति । भाष्ये बहुव्रीहिरिति भावः ॥ छाया ॥

४ एवमपीति । अवर्णस्य सर्वमुखस्थानकत्वेपीत्यर्थः ॥ व्यपेति । भेदेन मुख्यो व्यवहार इत्यर्थः ॥ तमभिनयति—आस्ये येषामिति । आधाराधेयभावस्य सत्येव भेदे उपपत्तेरिति भावः ॥ छाया ॥

५ आद्यन्तवत्सूत्राविषयत्वादाह—व्यपेति । व्यपदेशिवदेकस्मिन्निति परिभाषयेत्यर्थः ॥ छाया ॥

६ व्यवहारस्य गौणत्वे बीजमाह—सर्वावस्थेति ॥ ता अध्यारोपिता एवेति भावः ॥ छाया ॥

७ एवं न्यासान्तरेऽन्यदोषशून्ये सूत्रभेदमेव दोषमाह पूर्वपक्षी—सिध्यतीति । यद्यपि सिध्यति तर्हि तथापि सूत्रभेदो भवतीत्यर्थः ॥ छाया ॥

८ सिद्धान्ती समाधत्ते—यथान्यासमिति ॥

९ तटस्थः पूर्वपक्षी वा पूर्वोक्तं दोषं स्मारयति—ननु चोक्तमिति ॥

१० [सिद्धान्ती समाधत्ते—नैष दोष इति ॥] अदोषे हेतुमाह—नहीति ॥ ॥ छाया ॥

११ प्राथमेति । तत्प्रतीतिविषय इत्यर्थः ॥ छाया ॥

१२ ताल्वादीति । कण्ठादीत्युचितम् ॥ छाया ॥

१३ तुल्यत्वे । तत्रैव ॥ छाया ॥

१४ तदिति । स्पृष्टतादीत्यर्थः ॥ छाया ॥

१५ कैयटोक्तं दूषयति—यद्यपीति । 'यजुष्येकेषाम्' इति ज्ञापकेनेत्यर्थः ॥ अपिना युक्त्यन्तरसमुच्चयः । तस्य यौगिकत्वेपि तन्त्रादिकं विना न युगपदुभयोपस्थितिः 'सकृदुच्चरितः' इति न्यायात् । तत्रे च न मानम्, द्विवचनादिगमकाभावादेकशेषोपि न । स्थानं करणं चेति वस्तुकथनं नतु युगपदुभयाभिनयः इति ॥ छाया ॥

१६ मात्रपदेनेतरनिरासः । भाष्ये तु तद्द्वयं सर्वं प्रदर्श्यते, नत्वत्र तस्य ग्रहणं प्रतिपाद्यते । इति न तद्विरोध इति ध्वनयन्नाह—स्थानमिति ॥ अपिना जिह्वाग्रादि ॥ छाया ॥

र्थम्। स्थानं करणंचेति भाष्ये करणपदेन वायुसंयोगोऽपि । प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्यम् । [1]अत एव यावत्स्थानैक्यपरेण 'नैतौ तुल्यस्थानाविति' भाष्येण न विरोध इति दिक् ॥

( आक्षेपभाष्यम् )

**[2]एवमपि प्रयत्नोऽविशेषितो भवति ॥**

(प्रदीपः) **अविशेषित इति** । आस्येनेत्यर्थः । [3]द्वन्द्वपक्ष एवात्र स्थित इति प्रश्नः । ततश्च वाह्याः प्रयत्ना न त्यक्ताः स्युः॥

( समाधानभाष्यम् )

**प्रयत्नश्च[4] विशेषितः ॥**

**कथम् ? ॥**

**न हि प्रयतनं प्रयत्नः ॥**

**किं तर्हि ? ॥**

**प्रारम्भो यत्नस्य प्रयत्नः ॥**

(प्रदीपः) **प्रारम्भो यत्नस्येति** । तत्र[5] पूर्वं स्पृष्टतादयश्चत्वारः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो वाह्या एकादश प्रयत्ना उत्पद्यन्ते ॥

(उद्द्योतः) भाष्ये **प्रारम्भो यत्नस्येति** । अत्र यत्नस्येति निर्धारणे षष्ठी । जातौ चैकवचनम् । **आरम्भ इति** [6]कर्मणि घञ् । यत्नानां मध्ये [7]प्रथमं वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः ॥ [8]अत्रापि नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम्—शब्दप्रयोगेच्छयोत्पन्नयत्नान्[9]नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन्करोति । [10]तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वाद् 'आस्ये प्रयत्नाः' इत्युच्यन्ते-, 'आभ्यन्तरा' इति, 'प्रारम्भ' इति च । गलविवरादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्वाह्या इति॥ [11]एवं मात्राकालिकत्वादिकमपि वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणारूपं कार्यमास्यवाह्य[12]देशमिति तस्यापि व्यावृत्तिरास्यपदेनोक्ताऽइउण्सूत्रे भाष्ये ॥ [13]मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः, पश्चान्निवृत्ते प्राणाख्ये इत्यन्वयः कैयटे । [14]अत एव—

"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते"

इति शिक्षया न विरोध इति दिक् ॥

( आक्षेपभाष्यम् )

**[15]यदि प्रारम्भो यत्नस्य प्रयत्नः, एवमप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति ॥**

(प्रदीपः) **एवमपीति** । संध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात्सवर्णसंज्ञाप्राप्तिरिति प्रश्नः ॥

(उद्द्योतः) भाष्ये **यदि प्रारम्भ** इत्यत्र यदीत्यस्य यद्यपी[16]त्यर्थः ॥ **अकारेणेति** । ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्द्वारा तुल्यस्थानत्वेनावर्णैङोः सावर्ण्ये गव्यमित्यत्र **यस्येति** लोपप्रसङ्ग इत्यभिमानः ॥

( समाधानभाष्यम् )

**प्रश्लिष्टावर्णावेतौ ॥**

(प्रदीपः) **प्रश्लिष्टावर्णाविति** । नात्र भागविवेकोऽस्ति पांसू[17]दकवदित्यर्थः ॥

(उद्द्योतः) **पांसूदकेति** । प्रश्लिष्टावित्यस्य प्रकर्षेण श्लिष्टौ

---

१ अत्र मानमाह—अतएवेति । तेन स्थानमात्रग्रहणादेवेत्यर्थः । अन्यथा क्वापि तद्भावेन तद्संगतिः स्पष्टैव । अत एव वलयोर्न सावर्ण्यम् । अन्यथा तद्वानित्यादौ दोषापत्तिरिति छाया तु वकारस्य दन्त्यत्वमाश्रित्यैव ॥ दाधि०॥

२ एवमपीति । तद्धितान्तास्यशब्दाश्रयणेपीत्यर्थः ॥ छाया ॥

३ द्वन्द्वेति । द्वन्द्वगर्भबहुव्रीहिपक्ष एवेत्यर्थः ॥ ततश्चेति । एवं च शादिभिश्छादीनां सावर्ण्यमग्रे वक्ष्यमाणं स्यादिति भावः ॥ छाया ॥

४ चोप्यर्थे । प्रशब्देनेति भावः ॥ तदेव तदनभिज्ञाशङ्कापूर्वमाह—कथमिति ॥ छाया ॥

५ तत्र वर्णाभिव्यक्तिविषये ॥ चत्वार इति । विवृतत्वव्याप्यानामीपद्विवृतत्वविवृततरत्वविवृततमत्वानां नाज्झलाविति सूत्रेण सवर्णसंज्ञानुपयुक्तत्वबोधनमित्याशयः ॥ भाष्यमते तु सप्त प्रयत्नाः ॥ छाया ॥

६ कर्मणीति । अकर्त्तरीत्यनेनेति भावः ॥ छाया ॥

७ प्रशब्दार्थमाह—प्रथममिति ॥ तद्व्याचष्टे—वर्णोत्पत्तेरिति ॥ आरम्भपदार्थमाह—रभ्येति ॥ छाया ॥

८ अत्रापि तद्धितान्तास्यशब्दग्रहणेपि ॥ छाया ॥

९ यत्नादिति । तदिच्छावन्मनोभिहतकायाग्निनेति शेषः ॥ तत इति । अग्रे मार्गाभावात् ॥ निवृत्त इति । वक्त्रं प्राप्येति शेषः ॥ यत्नविशेषेति । उक्तयत्नेत्यर्थः ॥ छाया ॥

१० तत्र तयोर्मध्ये । स्वतस्तयोस्तत्त्वस्य दुरुपपादत्वादाह–ये इति । उच्यन्ते इत्यस्य स्थलत्रयेपि संबन्धः ॥ छाया ॥

११ वाह्यानामेकादशोक्तिरुपलक्षणम्—तेन ह्रस्वत्वादेरानुनासिकस्यापि च संग्रह इति ध्वनयन्नाह—एवमिति ॥ छाया ॥

१२ वाह्यदेशमितीति । तदपि वाह्यमिति शेषः ॥ इदं समूलयति—तस्यापीति ॥ ह्रस्वत्वादिजनकयत्नस्यापीत्यर्थः ॥ व्यावृत्तिरिति ॥ आस्यविशेषणेन सवर्णसंज्ञासूत्रेऽग्रहणमित्यर्थः ॥ छाया ॥

१३ यथाश्रुतग्रन्थस्य शिक्षाविरुद्धत्वादाह–मूर्ध्नीति । शेषपूरणमावश्यकमाह—वर्णोत्पत्तेरिति ॥ छाया ॥

१४ यदर्थमन्वयः कृतस्तदेवाह—अत एवेति ॥ यद्यप्येक एव प्रयत्नः सर्वकार्यजनको वर्णनाशकश्चेति 'परःसंनिकर्षः' इत्यत्र भाष्ये उक्तम् तथापि तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा तथा व्यवहारः द्रुतादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेप्युदात्तादिशब्दैर्विना बोधितानां तेषाम् अनङ्गुदात्त इत्यनेनाविवक्षाबोधनात्सवर्णसंज्ञानुपयुक्तान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन वाह्येषु गणनमिति बोध्यम् । तदाह—दिगिति ॥

१५ यथाश्रुतेऽनुपपत्तेराह—यदीति ॥ एङोश्चेति । मिथ इति भावः ॥ ॥ छाया ॥

१६ त्यर्थइति । एतेन एवमपीत्यस्य तथापीत्यर्थः सूचितः ॥ भिमान इति । अनेन—एचां सभागत्वं पूर्वपक्ष्यभिमत······पुनस्तत्त्वस्य खण्डितत्वेना—खण्डित(ण्ड)त्वस्य प्रतिपादितत्वान्न दोष इत्यरुचिः सूचिता ॥ छाया ॥

१७ ननु प्रश्लिष्टनिर्दिष्टानामपि वर्णानां स्वप्रयुक्तकार्यदर्शनात्स्यादेव संज्ञाऽत आह—पांसूदकवदिति ॥ छाया ॥

मिलिताविल्यर्थः। ततश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च न तयोः सावर्ण्यप्राप्तिरिति भावः॥

( आक्षेपभाष्यम् )

**अवर्णस्य तर्हिं चोश्च सवर्णसंज्ञा प्राप्नोति॥—**

(प्रदीपः) **अवर्णस्येति**। विभागोत्र सुलक्ष्य इति प्रश्नः॥ ततश्च नाव्यमित्यत्र[1] **यस्येति**लोपप्रसङ्गः॥

(उद्योतः) **विभागोत्रेति**। एवं च पूर्ववत्तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः॥

( समाधानभाष्यम् )

**विवृततरावर्णावेतौ॥**

(उद्योतः) भाष्ये एतदुत्तरं **विवृततरावर्णाविति**। एवं च तद्द्वारा तयोरपि विवृततरत्वेन प्रयत्नभेदाङ्गत्वेन न सावर्ण्यम्। आकारस्य[2] ततोऽपि विवृततरत्वात्तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः॥

( आक्षेपभाष्यम् )

**एतयोरेव[3] तर्हिं मिथः सवर्णसंज्ञा प्राप्नोति॥**

(प्रदीपः) **एतयोरिति**। ततश्च एत ऐ इत्यौकारोपि स्याद् भाव्यमानेनापि क्वचित्सवर्णग्रहणदर्शनात्॥

(उद्योतः) **एतयोरेवेति**। यत्किंचित्[4]स्थानसाम्ये सवर्णसंज्ञेत्यभिमानः॥ क्वचित्। अदसोऽसेर्दादु दो म इत्यादौ॥

( समाधानभाष्यम् )

**नैतौ तुल्यस्थानौ॥**

(उद्योतः) भाष्ये **नैतौ तुल्यस्थानाविति**। तोलीति परसवर्णरहिततद्वानासामितिनिर्देशाद् यावत्स्थानसाम्यमत्र विवक्षितमिति भावः॥ यत्त्वेषां समुदितं स्थानमिति। तन्न। "दन्त्योष्ठ्यो वः स्मृतो बुधैः॥ ए ऐ तु कण्ठ्यतालव्यः" इति शिक्षायां प्रत्येकं तत्र भव इत्यधिकारस्थयदनापत्तेः। दन्तोष्ठ्य इति पाठस्त्वसङ्गतः[5]। शरीरावयवसमुदायस्य शरीरावयवत्वाभावात्। स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत्। स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः॥ शरीरे मे वेदनेत्यप्येवमेवेति दिक्॥

( आक्षेपभाष्यम् )

**उदात्तादीनां[6] तर्हिं सवर्णसंज्ञा न प्राप्नोति॥**

(उद्योतः) भाष्ये उदात्तादीनां तर्हीति। यावत्स्थानैक्यवद् यावत्प्रयत्नैक्य[7]विवक्षणादिति भावः॥

( समाधानभाष्यम् )

**अभेदका[8] उदात्तादयः॥**

(प्रदीपः) **अभेदका इति**। लिङ्गेनैतत्[9]प्रतिपादितम्—**न शास्त्रे एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्त इति**, तेन प्रारम्भभेदेऽप्युदात्तादीनां मिथः सवर्णसंज्ञा भविष्यति॥

(उद्योतः) स्वशब्दा उदात्तादिशब्दाः। एवं चात्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः॥

( एकदेशिभाष्यम् )

**अथवा किं न एतेन—प्रारम्भो यत्नस्य प्रयत्न इति॥ प्रयतनमेव प्रयत्नः। तदेव च तद्धितान्तमास्यम्। यत्समानं तदाश्रयिष्यामः॥**

**किं[10] सति?॥**

**भेदे सतीत्याह। सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम्॥**

**कुत एतत्?॥**

**भेदाधिष्ठाना हि सवर्णसंज्ञा, यदि हि यत्र सर्वं समानं तत्र स्यात्सवर्णसंज्ञावचनमनर्थकं स्यात्॥**

(प्रदीपः) **यत्समानमिति**। स्पृष्टत्वस्य समानत्वाद्वर्णानां बाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा भविष्यति॥ **किं सतीति**। स्पृष्टताद्यभेदाद्विवारादिभेदेऽपि यथा भवति तथा स्पृष्टतादिभेदेऽपि विवाराद्यभेदात्प्राप्नोतीति प्रश्नः॥ **सत्येवेति**। झरो झरीत्येवान्यथा ब्रूयात्। यथासंख्यनिरासार्थं हि तत्र सवर्णग्रहणं कृतं शिण्ढीत्यत्र डकारस्य ढकारे परतो लोपार्थम्। यदि

१ नाव्यमिति। अत्र पूर्वभागस्यैव तत्सदृशत्वं पूर्वपक्ष्यभिमतम्। उभयत्र तथोक्तिस्वारस्यात्। अत एव पूर्वं प्रथमभागस्येति कैयटेनोक्तम्। एवंच यस्येति लोप औकारस्योचितः॥ छाया॥

२ वर्णपदस्वारस्येन भाष्याभिप्रायमाह—आकारस्येति॥

३ एतयोरेवेति। एङैचोश्चेत्यर्थः॥ एवकारेणावर्णव्यवच्छेदः॥

४ यत्किंचिदिति। आभ्यन्तरप्रयत्ने सतीत्यादि॥ अत एव स्थानेन्तरेत्यनेनेदानीमनिर्वाहः॥ छाया॥

५ अस्य संगतिर्नपदान्तसूत्रे सप्रपञ्चं निरूपयिष्यतेऽस्माभिः॥ दाधि०॥

६ उदात्तादीनामिति। आदिनाऽनुदात्तस्वरितह्रस्वदीर्घप्लुतचतुर्मात्रानुनासिकपरिग्रहः॥ छाया॥

७ प्रयत्नैक्येति। आभ्यन्तरप्रयत्नैक्येत्यर्थः। उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेन तेषामाभ्यन्तरत्वादिति भावः॥ छाया॥

८ तत्त्वेऽप्यत्र प्रयत्नशब्देनाग्रहणप्रतिपादनायाह—अभेदका इति॥ अन्यथा गुणत्वोक्तिरसंगता स्यादिति भावः॥ छाया॥

९ लिङ्गेनैतदिति। अनङ्कुदात्त इत्यादि ज्ञापकेनेत्यर्थः॥ तेनेति। उदात्तादिशब्दैर्विना बोधितानां तेषामनङ्कुदात्त इत्यनेन तदनुवादस्यात्रोदात्तादिषु गुणशब्देन कृतत्वेनात्राग्रहणेन विवक्षा तया सवर्णसंज्ञानुपयुक्तत्वान्तरतमपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणितत्वेनेत्यर्थः॥ प्रारम्भेति। वस्तुतस्तत्त्वादाभ्यन्तरप्रयत्नभेदेपीत्यर्थः॥ छाया॥

१० विभक्तिप्रतिरूपकत्वेन सप्तम्यर्थप्रधानोऽयं प्रश्नः। अत एवोत्तरे 'भेदे' इति सप्तमी। एषैव भाष्यकर्तुः शैली 'किं तर्हि' इति प्रश्ने 'अन्येष्वपि कारकेषु' इति पस्पशाह्निकेऽप्युपलभ्यते। प्राचीनास्तु भाष्यशोधकाः 'किं सति भेदे' इति प्रश्नस्य 'सतीत्याह' इत्युत्तरं मत्वेहान्यथा रेखादिकं कृतवन्तः॥ किमोऽन्यतरकोटिनिश्चये प्रयोगाभावात्तत्सूचिते 'किं सति भेदे' इति प्रथमकोट्युच्चारणान्तरमेव 'उतासति' इति द्वितीयकोटौ मनसि धृत एवोत्तरमाह—सतीत्याहेतीति तेषामभिप्रायः। एवं च प्रश्नोत्तरभाष्यविभागः सुधीभिरूहनीयः॥ दाधिमथाः॥

च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्याद्, डकारढकारयोर्भेदात्सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात् ॥

(उद्योतः) भाष्ये [1]उदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यस्य **आस्येन प्रयत्नोऽविशेषित** इत्यस्य च समाध्यन्तरमाहैकदेशी—**अथवा किं न एतेनेति**। नोऽस्माकमेतेन प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन किमित्यर्थः। क्लिष्टत्वादिति भावः ॥ **बाह्यप्रयत्नभेदेऽपीति**। एवमुदात्तादिभेदेऽपि भविष्यतीत्यपि बोध्यम् ॥ यद्यपि सवर्णसंज्ञाया न प्रयत्नभेदगर्भत्वं, तथापि ज्ञापकादेतदर्थसिद्धिरित्याह—**झरोझरीति** ॥ भाष्ये **सत्येव हि भेदे इति** यत्किंचित्प्रयत्नभेदे सत्येवेत्यर्थः ॥ **कुत एतदिति**। सूत्राक्षरैस्तदलाभ इति प्रश्नः । समाधत्ते—**भेदाधिष्ठाना हीति** । यत्किंचित्प्रयत्नभेदेत्यर्थः ॥ तत्र ज्ञापकमाह—**यदि हीति** । **सवर्णसंज्ञावचनमि**त्यस्य सवर्णपदोच्चारणमित्यर्थः । संज्ञा[2]तु—**अणुदित्सवर्णस्ये**त्याद्यर्थमावश्यिकेति बोध्यम् ॥ **भेदादिति**। वाह्यप्रयत्नभेदादित्यर्थः ॥ नन्वेवं [3]यत्किञ्चित्स्थानैक्यादेकारौकारयोः सावर्ण्यापत्तिरिति चेन्न । ज्ञापकात्प्रयत्नांशे यावत्प्रयत्नसमानत्वत्यागेऽपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात् [4]यजुष्येकेषामित्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च ॥ [5]यत्तु तुल्यत्वस्य भेदघटितत्वात्सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थं इति । तन्न । ते[6]न सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परभेदलाभेऽपि वर्णानां यत्किञ्चित्प्रयत्नभेदस्य ततोऽलाभात् स्था[7]नानामन्ततस्तत्तत्कालरूपोपाधिभेदेन भेदो बोध्यः ॥

( सिद्धान्तिन आक्षेपभाष्यम् )

**यदि तर्हि 'सति भेदे किंचित्समानम्' इति कृत्वा सवर्णसंज्ञा भविष्यति। शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति। एतेषां हि सर्वमन्यत्समानं करणवर्जम् ॥**

(प्रदीपः) **सर्वमिति** ॥ [8]**वर्गाणां प्रथमद्वितीया** इत्यस्यां शिक्षायां पठितमघोषत्वादि । करणं तु भिन्नं वर्ग्याणां स्पृष्टत्वादूष्मणां च विवृतत्वात् । सति च सवर्णत्वे निश्श्छद्म निष्ष्ठुरं निस्स्थानं मधुलिट्स्थानमित्यत्र **झरोझरीति** लोपः प्राप्नोतीति । छद्मनो निष्क्रान्तमिति[9] प्रादिसमासः । **अनचि चेति** शकारस्य द्विर्वचनम् ॥

(उद्योतः) भाष्ये **यदि तर्हि सतिभेदे** इत्यादि सिद्धान्तिवचः । **शकारच्छकारयोरिति** । त[10]स्मात्प्रारम्भो यत्नस्येति आवश्यकमिति भावः ॥ ननु निश्छद्मेत्यत्र हलः परत्वाभावात्कथं लोपप्राप्तिरत आह—**अनचिचेति** ॥

( एकदेशिसमाधानभाष्यम् )

**एवं तर्हि—प्रयतनमेव प्रयत्नः। तदेव हि तद्धितान्तमास्यम्। न त्वयं द्वन्द्वः—आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति।**

**किं तर्हि?**

**त्रिपदोयं बहुव्रीहिः—तुल्य आस्ये प्रयत्न एषामिति।**

(प्रदीपः) **तुल्य आस्य इति**। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेत्य**मूर्द्धमस्तकादि**त्यलुङ् भवति । तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेवास्य इत्येकत्वं विवक्ष्यते । तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्याश्रीयते ॥

(उद्योतः) [11]तत्रैकदेशी प्रौढ्या समाधानमाह—**एवंतर्हीत्यादि** । **स्वाङ्गवाच्येवेति** । अमूर्धेत्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनःश्रुतिरवधारणार्थेति भावः ॥ **सं[12]ज्ञायामि**त्यनुवृत्तेर्न दोष इत्यन्ये ॥ [13]नन्वेवं भिन्नस्थानानामपि स्यादत आह—**तद्धितान्तास्येति**। [14]आस्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः ॥ **एकत्वं विवक्ष्यत इति** । तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभवत्वृत्तित्वलाभ इत्यन्ये ॥

( भाष्यम् )

**अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः—तुल्य आस्ये तुल्यास्यस्तुल्यास्यः प्रयत्न एषामिति ॥**

(प्रदीपः) **अथवेति। मयूरव्यंसका**दित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः ॥

---

१ कैयटादेरज्ञानाय पूर्वमनु(मु)क्ताभेदकाइति समाध्यनन्तरम् 'अथवा—' इति भाष्योक्तिस्वारस्येनाह—उदात्तेति ॥ 'अथवा यत्समानम्' इत्येवं सति वाच्ये 'किं न' इत्यादिमध्यग्रन्थस्वारस्येन 'यदि तर्हि—'इत्यादि वक्ष्यमाणसिद्धान्तिग्रन्थस्वारस्येन च कैयटाभिमतमाह—आस्येनेति ॥ दोपस्य स्फुटत्वादस्यैकदेश्युक्तित्वम् । तद्व्याचष्टे—नोऽस्माकमिति। अस्यापि निर्दिष्टत्वादाह—क्लिष्टेति ॥ एतेन—'अथवा यत्समानं तदाश्रयिष्यामः । एवं सति नोऽस्माकं प्रारम्भो यत्नस्य प्रयत्न इत्यनेनापि किम् । किं तर्हि प्रयतनमेव प्रयत्नः तदेव च तद्धितान्तमास्यमित्येवास्तु' इति भाष्ययोजना सूचिता । एवंच भाष्यीयाद्यशङ्कोत्तराशयोऽयम् । अतएवैतन्न्यूनतानिरासाय तद्दृष्टान्तेन द्वितीयशङ्कोत्तराशयमाह—एवमिति ॥ छाया ॥

२ यथाश्रुतभाष्यार्थस्तु नेत्याह—संज्ञात्विति ॥ छाया ॥

३ एवं यत्किंचित्प्रयत्नैक्याङ्गीकारेण तदङ्गीकारे ॥ छाया ॥

४ तत्र ज्ञापकमप्याह—यजुष्येकेषामिति ॥ छाया ॥

५ दृष्ट्याद्युक्तिं निराचष्टे—यत्त्विति ॥ छाया ॥

६ यक्षानुरूपो बलिरिति न्यायेनाह—तेनेति ॥ छाया ॥

७ ननु स्थानानां न स्वतो भेदोऽत आह—स्थानानामिति ॥ तत्तत्कार्यगतभेदारोपस्य संभवादाह—अन्तत इति ॥ छाया ॥

८ अन्यत्पदसमभिव्याहारेण सर्वपदस्य संकोच इति तमाह—वर्गाणामिति ॥ छाया ॥

९ इति इत्यत्र ॥

१० वक्ष्यमाणस्यासिद्धान्तत्वादाह—तस्मादिति ॥ छाया ॥

११ तत्र उक्तपूर्वपक्षे ॥

१२ आवश्यकयुक्त्या लघुतया निर्वाहमाह—संज्ञायामिति । 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यत इति भावः ॥

१३ एवं तुल्यत्वस्य स्थानविशेषणत्वाभावे ॥ छाया ॥

१४ ननु तत्रैव किं मानमत आह—आस्येति । अन्यथोक्तरीत्या तदानर्थक्यं स्पष्टमेव ॥ तद्ग्रहः तद्धितान्तत्वग्रहः ॥ छाया ॥

( भाष्यम् )

**अथवा परस्तत्पुरुषस्ततो बहुव्रीहिः—आस्ये प्रयत्न आस्यप्रयत्नः तुल्य आस्यप्रयत्न एषामिति ॥**

(उद्द्योतः) त्रिपदबहुव्रीहौ[1] सप्तम्यन्तस्य पूर्वनिपातापत्तेः पूर्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद्भाष्ये तृतीय आश्रितः ॥

( इति तुल्यास्यप्रयत्नशब्दार्थनिरूपणम् ॥)

( अथानिष्टसावर्ण्यनिराकरणाधिकरणम् )

( १४२ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तस्य ॥ * ॥

( भाष्यम् )

**तस्येति तु वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्याद् । अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत् ।**

(प्रदीपः) **तस्येति** । यत्तदोर्नित्याभिसंवन्धादाह—**यो यस्येति** । अन्यथा[2] वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति । सूत्रारम्भस्तु रेफोष्मणां निवृत्त्यर्थः स्यात् ॥

(उद्द्योतः) रेफोष्मेति । रेफोष्मणां सवर्णा न सन्तीत्युक्तेरिति भावः ॥

( १४३ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तस्यावचनं वचनप्रामाण्यात् ॥ * ॥

( भाष्यम् )

**तस्येति न वक्तव्यम् ॥**

**अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति ? ॥**

**वचनप्रामाण्यात् । सवर्णसंज्ञावचनसामर्थ्यात् । यदि हि अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात् । सवर्णसंज्ञावचनमनर्थकं स्यात् ॥**

(प्रदीपः) **तस्यावचनमिति** । तस्येत्ययमनुकरणशब्दस्तस्येत्यस्यावचनमित्यर्थः ॥ **सवर्णसंज्ञावचनमिति** । न च रेफोष्मणां निवृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव । एवमूष्मस्तु द्रष्टव्यम् ॥

(उद्द्योतः) तस्यावचनमिति वार्तिके तच्छब्देन कस्य परामर्शोत आह—तस्येत्ययमिति । तस्यावचनमित्यत्र षष्ठीतत्पुरुष[3] इति भावः । एवंच स्यो न विभक्तिरिति लुगभावः ॥ वस्तुतस्तच्छब्देन[4] पूर्वोक्तस्य तस्यशब्दस्य परामर्श इति वक्तुं युक्तम् ॥ रेफस्यापीति । रेफोष्मणामित्येतद्विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः[5] । तत्र रेफांशे तुल्यास्यप्रयत्नासंभव एव, ऊष्मसु तु नाज्झलाविति निषेधादिति बोध्यम् । एवंच व्यावर्त्याभावेन सवर्णसंज्ञावचनसामर्थ्याद् यस्य तस्येति लप्स्यत इति भावः ॥

( १४४ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ संबन्धिशब्दैर्वा तुल्यम् ॥ * ॥

( भाष्यम् )

**संबन्धिशब्दैर्वा पुनस्तुल्यमेतत् । तद्यथा—संबन्धिशब्दाः "मातरि वर्तितव्यम्" "पितरि शुश्रूषितव्यम्" इति । न चोच्यते—'स्वस्यां मातरि' 'स्वस्मिन्पितरि' इति । संबन्धाच्चैतद्गम्यते—या यस्य माता, यश्च यस्य पितेति ॥ एवमिहापि "तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्र संबन्धिशब्दावेतौ तत्र संबन्धादेतद्गन्तव्यम्—यत्प्रति यत्तुल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवतीति ॥**

(प्रदीपः) एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह—**संबन्धिशब्दैरिति । संबन्धिशब्दाविति ।** तुल्यास्यप्रयत्नशब्दस्य संबन्धिशब्दत्वात्तत्समानार्थोऽपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः संबन्धिशब्दः यथा **तुल्याय कन्या दातव्येत्युक्ते** न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददात्यपि त्वात्मना । तथेहापीत्यर्थः ॥

(उद्द्योतः) ननु सवर्ण इति संज्ञाशब्दस्य कथं संबन्धिशब्दत्वमत आह—तुल्यास्येत्यादि । स्वार्थभिन्नप्रतियोगिकसंबन्धनिमित्तशब्दः संबन्धिशब्द इति भावः ॥

परे[6] तु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दावित्यर्थो भाष्यस्य । सवर्णशब्दो[7] हि प्रदेशेऽपि सवर्णपदवत्परो, न तु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य संबन्धिशब्दत्वं दुरुपपादम् । उपक्रमोपसंहाराभ्यां चैवमेवोचितम् ॥ उपक्रमे हि तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवतीत्युक्तमित्याहुः ॥

( ऋऌवर्णयोः सावर्ण्याधिकरणम् )

१ द्वयोः क्रमेणारुची आह—त्रिपदेति ॥ पूर्वपदार्थेति । मयूरेत्यादि कैयटोक्तेत्यर्थः ॥ तृतीय इति । अथवा पर इतीत्यर्थः ॥ छाया ॥

२ अन्यथा तस्येत्यस्याभावे ॥ छाया ॥

३ षष्ठीति । तस्यस्यावचनमितीत्यर्थः ॥ एवं च अनुकरणत्वे च ॥ स्यो न विभक्तिरिति ॥ अस्यवामीयमितिवदिति भावः ॥ छाया ॥

४ प्रतिपत्तिलाघवादाह—वस्तुतस्त्विति ॥ छाया ॥

५ भाष्यविरोधं परिहरति—रेफोष्मेति ॥ स च द्वेधेत्याह—तत्रेति । तयोर्मध्य इत्यर्थः ॥ एवंच तेषां सजातीयसवर्णत्वे च ॥ छाया ॥

६ अन्यथा भाष्यं योजयन् कैयटं दूषयति—परेस्त्विति ॥ छाया ॥ अत्र सूत्रे सवर्णसंज्ञासूत्रे ॥

७ अत्र हेतुमाह—सवर्णेति । हि यतः । एवममेपि ॥ तस्य संज्ञाशब्दत्वादाह—सवर्णपदेति । अपिनैतत्परिग्रहः ॥ युक्तत्वमस्याह—उपेति ॥ छाया ॥

( १४५ आक्षेपवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ ऋकारऌकारयोः सवर्णविधिः ॥ * ॥**

( भाष्यम् )

**ऋकारऌकारयोः सवर्णसंज्ञा विधेया । होतृ ऌकारः होतॄकार इति ॥**

**किं प्रयोजनम् ? ।**

**"अकः सवर्णे दीर्घः" इति दीर्घत्वं यथा स्यात् ॥**

**(प्रदीपः) ऋकारऌकारयोरिति** । स्थानभेदान्न प्राप्नोतीत्यारम्भः ॥ अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते, न त्वेतयोरन्येन सहेति बोध्यम् ॥

**(उद्द्योतः)** ऋकारऌकारयोरित्यत्र ऋत्यक इति प्रकृतिभावः । वार्तिकेऽप्येवमेव पाठ इति प्रामाणिकाः[1] सावर्ण्यप्रतियोग्यनिर्देशादाह—अत्रचेति ॥ भाष्ये **होतृऌकारः होतॄकार इति।** ऌकारशब्दो देवतावाचीत्येके ॥ विवृतस्य ऌकारस्य दीर्घस्याभावादॄकारो दीर्घ उदाहृत इति बोध्यम् ॥

( सावर्ण्यखण्डनभाष्यम् )

**नैतदस्ति प्रयोजनम्[2] । वक्ष्यत्येतत्—"*सवर्णदीर्घत्वे ऋति ऋ वा वचनम्*" "*ऌति ऌ वा वचनम्*" इति ॥**

**(प्रदीपः) वक्ष्यत्येतदिति** । तत्र **ऌवावचनमि**त्यत्र दीर्घ इत्यनुवर्तते । तत्र[3] ऌति ऌशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति । स च भवन् ऌवर्णस्य दीर्घाभावादृवर्णस्यान्तरतम्याद्दीर्घ ऋकारो भविष्यति ॥

**(उद्द्योतः) नैतदस्तीति** । सवर्णसंज्ञाया इति शेषः ॥ नन्वीषत्स्पृष्टेन मुक्तेऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभोऽत आह—तत्रेति[4] ॥

( सावर्ण्यमण्डनभाष्यम् )

**तत्सवर्णे[5] यथा स्यात् । इह मा भूद्-दध्यृऌकारः मधॄऌकार इति ॥**

**(प्रदीपः) तत्सवर्ण इति** । यद्यविधाय सवर्णसंज्ञां तद्[6]उच्यतेऽग्मात्रस्य ऌति तत्कार्यं स्याद् **दध्यृऌकारेति** । तस्माद्विधेया सवर्णसंज्ञा ॥

**(उद्द्योतः)** भाष्ये तद्वचनद्वयारम्भेऽपि सवर्णसंज्ञावश्यकीत्याह—तत्सवर्ण इति । अग्मात्रस्येति । अनग्व्यावृत्त्यर्थमक इति वर्तते सवर्णसंज्ञाऽभावात्सवर्ण इति नानुवर्तेत इति भावः[7] ॥

( सावर्ण्यखण्डनभाष्यम् )

**यदेतत्सवर्णदीर्घत्वे[8] ऋतीति, एतदृत इति वक्ष्यामि ॥ ततः—"ऌति" । ऌकारे परत ऌकारो वा भवतीति । ऋत इत्येव ॥**

**(प्रदीपः) ऋत इति वक्ष्यामीति** । ऋकारस्य ऋकार एव सवर्ण इति ऋत्येव भविष्यति । ततः **"ऌति"** । **ऋत** इत्येव । इदं चासवर्णार्थम् । तेन ऌति रूपद्वयं सिद्धम् । तत्रासंहितायामृकारे होतृ ऋकार इति रूपम् । संहितायामपि **ऋत्यक** इति शाकलप्रकृतिभाव एतदेव रूपम् । शाकलाभावे होतॄकारः होतॄकार इति रूपद्वयम् । ऌकारेऽसंहितायां संहितायां च शाकले होतृऌकार इति । शाकलाभावे होतॄकारो होतॢकार इति रूपद्वयम् ॥

**(उद्द्योतः)** खण्डयति—यदेतदिति भाष्ये ॥ **सवर्ण इतीति** । आद्यवार्तिके सवर्णग्रहणमनुवर्तते इति भावः ॥ **तेन ऌतीति** । सिद्धान्तेऽपि[9] व्यवस्थितविभाषया अनभिधानेन वा होतृऌकारे पूर्ववार्तिकं गम्ऌलकारे चोत्तरवार्तिकं न प्रवर्तते ।[10] एवं कॄ इति दीर्घस्य ऋकारे परे पूर्वस्य तस्यैव ऌकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः ॥ **रूपद्वयमिति** । ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः ॥ **तत्रासंहितायामिति** । समासे[11] संहिता

---

१ इत्यत्र व्याख्यानग्रन्थे ॥ अतएवाह—वार्तिकेप्येवमिति ॥ छाया ॥

२ सवर्णसंज्ञावार्तिकं खण्डयति—नैतदस्तीति ॥ सवर्णदीर्घत्व इति । सवर्णदीर्घविधावित्यर्थः । 'अकः सवर्णे दीर्घः' इत्यत्र 'ऋति ऋ वा वचनम्' 'ऌति ऌवा वचनम्' इति वक्ष्यते । तस्यायमर्थः—ऋति परे पूर्वपरयोः स्थाने वा ऋ इत्ययमादेशो भवति । द्विमात्रोयम् । मध्ये द्वौ रेफौ तयोरेका मात्रा अभितोऽभक्तेरपरा । ईषत्स्पृष्टश्चायम् । तत्र प्रयत्नभेदादृकारेणाग्रहणादनच्त्वाद्दीर्घसंज्ञाया अभावादप्राप्तोऽयं विधीयते । ऌति ऌ वेति । अयमपि द्विमात्र ईषत्स्पृष्टश्च । मध्ये द्वौ लकारौ तयोरेका मात्राऽभितोऽभक्तेरपरा । पूर्ववदप्राप्तो विधीयते । तत्र वावचनमिति वाशब्दो दीर्घसमुच्चयार्थो भविष्यति । 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इत्यभिधानात् । तेनाप्राप्त एव दीर्घो भविष्यति । तत्किं सवर्णसंज्ञया ॥ शब्दकौ० ॥

३ तत्र तस्मिन् सति ॥ छाया ॥

४ तत्रेतीति । तयोर्मध्य इत्यर्थः ॥ छाया ॥

५ सवर्णसंज्ञावार्तिकं स्थापयितुं तत्र पाठ्यवार्तिकद्वये सवर्णपदसंबन्धं दर्शयति—तत् सवर्ण इति ॥ अयं भावः—ऌति ऌवेत्यत्र सवर्णपदमनुवर्तते, न वा । आद्ये होतृ ऌकार इत्यत्र सवर्णसंज्ञाविधानं विना नेष्टसिद्धिः । अन्त्ये दध्यृऌकार इत्यादावतिप्रसङ्ग इति ॥ शब्दकौ० ॥

६ तद् वचनद्वयम् ॥ छाया ॥

७ संज्ञाभावादित्यत्राकारप्रश्लेषः ॥ सवर्ण इतीति । एतत्सूचनायैव भाष्ये 'सवर्णदीर्घत्वऋतीत्युक्तम् । सवर्णनिमित्तकदीर्घविधायकसूत्रस्थवार्तिक इतिं तदर्थः ॥ छाया ॥

८ सवर्णसंज्ञावार्तिकं खण्डयितुमुक्तातिप्रसङ्गवारणाय पाठ्यवार्तिके न्यासान्तरं करोति—यदेतदिति ॥ प्रथमवार्तिके पाठे 'ऋति' इत्यपनीय 'ऋतः' इति पञ्चम्यन्तपाठेनैव सर्वसामञ्जस्यम् । पूर्ववार्तिके 'सवर्णे' इति चानुवर्तते । तेन धात्रंश इत्यादौ नातिप्रसङ्गः । द्वितीयवार्तिके तु सवर्ण इति निवृत्तम् । ऋत इत्यनुवर्तते । तेन दध्यृऌकार इत्यादौ नातिप्रसङ्गः ॥ तस्मादकः सवर्ण इत्यत्रावश्यकर्तव्येन वचनद्वयेनैव सकलनिर्वाहादृकारऌकारयोः सवर्णविधिरितीहत्यं वार्तिकं व्यर्थमिति भावः ॥ शब्दकौ० ॥

९ सिद्धान्तेपीति । यथास्थितवार्तिकपाठेपीत्यर्थः ॥ तासां परिगणितत्वादाह—अनभीति ॥ छाया ॥

१० एवं तद्वत् ॥ तस्यैव कॄ इति दीर्घस्यैव ॥ ततएव अनभिधानादेव ॥ ॥ छाया ॥

११ कैयटं दूषयति—समास इत्यादिना ॥ क्लिष्टमिति तस्य पुंस्त्वादितिभावः ॥ छाया ॥

नित्या, असमासे त्वीदृशं रूपं दुर्लभं होतृशब्दे विभक्तिश्रवणापत्तेः ॥ होतृशब्दस्य नपुंसके संबुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम् ॥ [1]भाष्ये तु होतृलृकार इति दीर्घप्रवृत्तियोग्यदशोच्चारणम् ॥ इति स्थिते इति शेषः । [2]एवं शाकले होतृलृकार इत्यपि चिन्त्यं, सवर्णत्वविधायकवचनाभावे एतद्विचारसत्त्वेन तत्र ऋत्यक इत्यस्याप्राप्तेः । इकोसवर्ण इत्यपि न समास इति निषिद्धम् । नित्य[3]ग्रहणं तु तत्र भाष्ये प्रत्याख्यातमित्याहुः ॥

( सावर्ण्यमण्डनभाष्यम् )

[4]तत्र वक्तव्यं भवति ॥

(प्रदीपः) तत्र वक्तव्यमिति । द्वावप्येतौ दीर्घौ ॠ ॡ इति तत्र ऋकारे कदाचिद् ॠ इति दीर्घः कदाचिद् ॡ इति । लृकारेपि ॠ ॡ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः ॥

(उद्द्योतः) सवर्णसंज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्यमित्याह—भाष्ये तत्र वक्तव्यमिति ॥

( सावर्ण्यखण्डनभाष्यम् )

[5]अवश्यं तद्वक्तव्यम् । ऊकालोज्झ्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते । न च ऋकार लृकारो वाऽस्ति ॥

(प्रदीपः) न चेति । अर्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये तु ईषत्स्पृष्टकरणत्वादनयोर्ऋकारलृकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः ॥

(उद्द्योतः) इतर आह—अवश्यमिति । अर्धतृतीयेति । [6]तावतापि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह—ईषत्स्पृष्टेति ॥ [7]विवृतत्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मानाभावादिति भावः ॥ ताभ्यामिति । असावर्ण्यादिति भावः ॥

( सावर्ण्यमण्डनभाष्यम् )

[8]ऋकारस्य लृकारस्य चाच्त्वं वक्ष्यामि ॥ तच्चावश्यं वक्तव्यम् । प्लुतो यथा स्यात् । होतृ ऋकारः होतॄकारः । होतृ३कार इति । होतृ लृकारः होतॢकारः होतॢ३कार इति ॥

(प्रदीपः) अच्त्वं वक्ष्यामीति । सत्यच्त्वे दीर्घसंज्ञानयोर्भविष्यति । येषां तु मतमर्धतृतीयमात्रावेताविति, तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति । तस्माद्विमात्रावेतावभ्युपगन्तव्यौ ॥ तच्चावश्यमिति । त्वयापि ऋवावचनम्लृवावचनमिति ब्रुवताऽच्त्वमनयोर्वक्तव्यम् । अन्यथा विधानमात्रमनयोः स्याद्, नाच्कार्यं प्लुतः । सति अच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद् ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः ॥

(उद्द्योतः) भाष्ये वचनद्वयप्रत्याख्यानवाद्याह—ऋकारस्येत्यादि । सत्यच्त्वे इति । [9]अयोगवाहेषु पाठादिति भावः ॥ नाच्कार्यमिति । [10]तस्य प्लुतसंज्ञा तत्स्थाने प्लुतश्चेति भावः ॥

( आक्षेपभाष्यम् )

किं[11] पुनरत्र ज्यायः ? ॥

(प्रदीपः) किं पुनरिति । एकैकस्मिन्संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम् । तच्चोभयथापि सिध्यति । [12]तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम् । इह तु यथा सिध्यति तथोच्यते—[ अकः सवर्णे दीर्घ इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैकासंभवाद्विकल्पः । यश्चान्तरतमो नासौ दीर्घो यश्च दीर्घो नासावन्तरतम इति ] द्वयोर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ॠ भवति कदाचिद्विवृत ऋकारः । लृकारेपि कदाचिदृकारान्तरतम ॠकारः कदाचिद् लृकारान्तरतम ॡकार इति साम्यमुभयोः पक्षयोः ॥

(उद्द्योतः) अत्र पक्षेऽपि [13]उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिक-

१ भाष्यासंगतिं परिहरति—भाष्येस्विति ॥ छाया ॥

२ अग्रिमं दूषयति—एवमिति ॥ सवर्णत्वेति । सवर्णसंज्ञेत्यर्थः ॥ छाया ॥

३ ननु तन्नित्यसमासे इत्यत आह—नित्येति ॥ छाया ॥

४ सवर्णसंज्ञावार्तिकं स्थापयितुं पाठवार्तिकद्वयाकरणलाघवं सूचयति—तत्रेति ॥ शब्दकौ० ॥

५ सवर्णसंज्ञावार्तिकं खण्डयितुमुक्तलाघवं परिहरति—अवश्यमिति ॥ ईषत्स्पृष्टयोस्तयोर्द्विमात्रत्वेऽपि दीर्घत्वं तु न तस्याज्झुद्देश्यकत्वात् । तथाच सूत्रेण प्राप्त्यभावात्पाठं वार्तिकमारम्भणीयमेवेति सवर्णसंज्ञावार्तिकं व्यर्थमेवेत्याकृतम् ॥ शब्दकौ० ॥

६ तावतापि । अर्धतृतीयमात्रत्वेऽपि ॥ ताभ्यां 'तयोः' इति शेषः ॥ छाया ॥

७ ईषत्स्पृष्टत्वे बीजमाह—विवृतत्वेति ॥ छाया ॥

८ सवर्णसंज्ञावार्तिकं स्थापयितुमीषत्स्पृष्टयोरपि तयोरप्यच्त्वं स्वीकरोति—ऋकारस्येति । तथाच दीर्घसंज्ञासिद्धौ तयोः सिद्धिरेवेति पाठवार्तिकद्वयं नारम्भणीयमिति भावः ॥ 'तद्वचनद्वयं कुर्वतापि रेफद्वयलकारद्वयगर्भयोस्तद्विधेययोरच्त्वं तावदेष्टव्यम् । तन्निर्वाहार्थं वर्णसमाम्नाये तौ पठनीयौ । अन्यथा हि विधानमात्रमनयोः स्यात्, न त्वच्कार्यं प्लुतः । तद्विधाने हि 'अचश्च' इति परिभाषयाऽच इत्युपतिष्ठते ॥ ननु ईषत्स्पृष्ट-स्यानच्त्वान्माभूत्प्लुतः, विवृतस्य तु ऋकारस्याच्त्वेन प्लुतः सिद्ध एवेति चेत् । सत्यम्, विवृतः प्लुतः सिद्ध ईषत्स्पृष्टौ तु प्लुतौ रेफद्वयलकारद्वयगर्भौ न सिध्यतः । अत एवाच्संज्ञामात्रेणापि न निस्तारः ग्रहणकशास्त्रप्रवृत्तेस्तावन्मात्रेणानिर्वाहात् । किंत्वण्सु पाठ एव कर्तव्य इत्युक्ते सति अण्सु पाठे ताभ्यां त्रिमात्रयोरपि ग्रहणात्प्लुतसंज्ञायां सत्यां पक्षे ईषत्स्पृष्टौ प्लुतौ भवतः । एवं स्थिते पाठवचनद्वयं मास्तु तद्विधेययोरपि दीर्घतया अकः सवर्णे इत्यनेनैव सिद्धेः ॥ शब्दकौ० ॥

९ न वाचनिकमच्त्वमित्याह—अयोगेति । अनेन तयोरच्त्वं संपादयितुमयोगवाहेषु पाठं करिष्यामीति भाष्यार्थः सूचितः ॥ छाया ॥

१० प्लुत इत्यस्यार्थद्वयमाह—तस्येति । जातावेकवचनम् । तयोरित्यर्थः ॥ एवं च भाष्यस्थप्लुतशब्दस्याप्यर्थद्वयं बोध्यमिति सूचितम् ॥ छाया ॥

११ उभयथाप्यभीष्टरूपनिर्वाहे किमङ्गीकरणीयमिति तटस्थः पृच्छति—किमिति ॥

१२ तत्र तयोर्मध्ये ॥ इहतु सवर्णसंज्ञापक्षे तु ॥ छाया ॥

१३ उक्तयुक्त्येति । व्यवस्थितविभाषयाऽनभिधानेन वेत्यर्थः ॥ 'व्यवस्थितेति । अनभिधानेनेत्यपि बोध्यम् ॥' इतिच्छायायां दर्शनाद् व्यवस्थितविभाषया इत्येवात्र पाठो भवेदित्यनुमीयते ॥

दीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारलृकारद्वयस्थानिक-दीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः पक्षयोस्तुल्यफलता चेति बोध्यम् । तदेव ध्वनयन् पृच्छति–भाष्ये किं पुनरत्रेति ॥ ऋकार इति । विवृत इत्यर्थः ॥ लृकार इति । ईषत्स्पृष्ट इत्यर्थः ॥

( समाधानभाष्यम् )

**सवर्णसंज्ञावचनमेव ज्यायः । दीर्घत्वं चैव हि सिद्धं भवति । अपि च ऋकारग्रहणेन लृकारग्रहणं संनिहितं भवति । "ऋत्यकः" खट्वऋश्यः मालऋश्यः । इदमपि सिद्धं भवति—खट्वलृकारो माललृकार इति ॥ "वा सुप्यापिशलेः" उपकारीयति उपार्कारीयति । इदमपि सिद्धं भवति—उपल्कारीयति उपाल्कारीयति ॥**

(उद्योतः) भाष्ये दीर्घत्वं चैवहीति । ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः ॥ चं व्याचष्टे—अपि चेत्यादिना । खट्वलृकार इति । होतॢकार इत्यस्याप्युपलक्षणम् ॥

( एकदेशिन आक्षेपभाष्यम् )

**यदि तर्हि ऋकारग्रहणेन लृकारग्रहणं संनिहितं भवति,—"उरण्रपरः" लृकारस्यापि रपरत्वं प्राप्नोति ॥**

( समाधानभाष्यम् )

**लृकारस्य लपरत्वं वक्ष्यामि । तच्चावश्यं वक्तव्यम् । असत्यां सवर्णसंज्ञायां विध्यर्थम् । तदेव सत्यां रेफबाधनार्थं भविष्यति ॥**

(प्रदीपः) लपरत्वमिति । व्याख्यास्यामीत्यर्थः ॥ रपर इत्यत्र र इति लणिति सकाराकारेण प्रत्याहार आश्रीयते । तत्रान्तरतम्याद्दकारस्याण् रपरः लृकारस्य लपरः ॥ असत्यामिति । असत्यां सवर्णसंज्ञायामुरण् रपर इत्यत्र लृकारग्रहणं कर्तव्यं भवति ॥

(उद्योतः) वचनस्य क्वाप्यदर्शनादाह–व्याख्यास्यामीति । अन्ये तु लण्सूत्रस्थाकारस्यानुनासिकत्वेऽतो लृान्तस्येत्यत्र भगवान्पाणिनिर्लृकारं नोच्चारयेद्, प्रत्याहारेणैव निर्वाहात् । तस्मादपूर्वं वचनं कार्यमित्येव भाष्याशय उचित इत्याहुः ॥ आन्तरेति । रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः ॥ सवर्णसंज्ञावादी तदभाववादिनं प्रति तवाप्यावश्यकं तदित्याह—तच्चावश्यमिति । लृकारस्याण् लपर इत्येतत् ॥

---

१ सिद्धान्ती समाधत्ते—सवर्णसंज्ञेति ॥ वचनद्वयारम्भे गौरवस्य स्पष्टत्वात् ॥ फलान्तरमपि सवर्णसंज्ञाया अस्तीत्याह—अपिचेति ॥

२ दीर्घत्वमिति । हि यतो वचनद्वयं तत्र दीर्घानुवृत्तिं विना दीर्घत्वं सिद्धमेव भवतीत्यर्थः ॥ छाया ॥

३ खट्वऋश्य इत्यादि । ङ्यापोरिति ह्रस्वः ॥ छाया ॥

४ तत्र तयोर्मध्ये ॥ छाया ॥

५ ननु स्थानिन एवासत्त्वात्कथं तस्य तत्त्वमत आह—असत्यामिति ॥ ॥ छाया ॥

६ इदं दूषयति—अन्येत्विति ॥ छाया ॥

७ पाणिनिरिति । भाष्यकारस्य रप्रत्याहारे संमतौ लृकारस्य रपरत्वे इष्टे 'लृकारस्य रपरत्वं प्राप्नोति' इत्यत्रानिष्टतासूचकं 'प्राप्नोति' इति भगवान् भाष्यकारोऽपि नोच्चारयेत् । किं च लपरत्वे सिद्धे 'सिद्धमेव' इत्यनुक्त्वा 'वक्ष्यामि' इति साधनीयतासूचकं लृटं नो प्रयुञ्जीत ॥ इति सिद्धान्तकौमुदीव्याख्यायां दाधिमथ्यां विस्तृतम् ॥

८ अस्ति रप्रत्याहार इत्यत्र नैव भाष्यकृतः सम्मतिः । अत एव "लृकारस्यापि रपरत्वं प्राप्नोति" इति पूर्वपक्षिशङ्कापनोदनाय "लृकारस्य लपरत्वं वक्ष्यामि" इति सिद्धान्तिना समाहिते "अपूर्ववचनं करिष्यामि" इत्यर्थके लृट्प्रयोगः संगच्छते ॥ रप्रत्याहारसत्त्वे तु "लृकारस्य लपरत्वं भविष्यति" इत्येव "भात्रच इत्येवं भविष्यति" इतिवद् भूधातोरेव प्रयोगं कुर्यात् ॥ किं च—"लृकारस्यापि रपरत्वं प्राप्नोति" इत्याक्षेपमिव "ऋकारस्य लपरत्वमपि प्राप्नोति" इत्याक्षेपमपि कुर्यात् ॥ तथाऽकरणेन रपदस्य रेफमात्रपरत्वमेव भाष्यसम्मतमिति स्पष्टं प्रतीयते ॥ किं च—द्वयोरुद्देश्ययोर्द्वयोर्विधेययोश्च सत्त्वे यथासंख्येन, "स्थानेऽन्तरतम" सूत्रेण च, निर्वाहे "रपरत्वं प्राप्नोति" इति शङ्काया एवोत्थानं न संभवति ॥ यदि च रप्रत्याहाराज्ञानेन पूर्वपक्षयुक्तिः संगच्छत इत्युच्यते, तदा "रप्रत्याहारस्याज्ञानं किं रप्रत्याहारासत्त्वेन, उत वा "आदिरन्त्येन"—इत्येतद्वाक्यार्थानुपपत्त्या । तत्र "आदिरन्त्येन"—इत्येतद्वाक्यार्थज्ञानम् "अणू" प्रत्याहारज्ञानाय जातमेवेति रप्रत्याहारज्ञानाय कुतो न प्रभवति, इति रप्रत्याहारस्यासत्त्वमेव तद्बीजम् ॥ "रपरत्वं प्राप्नोति" "रेफबाधनार्थं भविष्यति" इति द्वयोर्भाष्ययोरेकवाक्यतासमवलोकने सूत्रे "र" पदं रेफपरमेवेति प्रतीयते ॥ किं च—"र" इत्यस्य प्रत्याहारत्वे लृकारस्य स्थानेऽपि रपरत्वस्येष्टत्वेन "प्राप्नोति" इत्यनिष्टतासूचकपदप्रयोगोऽनुपपन्नः ॥ लण्सूत्रस्थाकारस्यानुनासिकत्वे "तुल्यजातीयांस्तुल्यजातीयेपूपदिशते" इति भाष्यं विरुध्येत ॥

अत एव पूर्वपक्षिणः प्रत्याहारज्ञानाभावेऽपि "भात्रच्—इति नेदं प्रत्ययग्रहणम् । किं तर्हि? प्रत्याहारग्रहणम्" "अनुमः इति नेदमागमग्रहणम् । किं तर्हि? प्रत्याहारग्रहणम्" "तृन् इति नेदं प्रत्ययग्रहणम् । किं तर्हि? प्रत्याहारग्रहणम्" "कुञ् इति नेदं धातुग्रहणम् । किं तर्हि? प्रत्याहारग्रहणम्" इत्येवंरीत्यैव सर्वत्र प्रत्याहारग्रहणस्य सिद्धान्तितत्वेन प्रकृतविषये स्वप्रकृतिसिद्धशैलीत्यागेन 'रेफबाधनार्थं भविष्यति' इत्यत्र वर्णाधिकारविहितस्य इफप्रत्ययस्य दर्शितत्वेन 'रपरः' इत्यत्र वर्णपरतैव दर्शिता ॥ किंच प्रत्याहारपरत्वेन रेफलकारोभयपरकत्वविधाने प्रकृतसूत्रे ऋशब्देन लृकारग्रहणाभावेन केवलस्य ऋवर्णस्य स्थाने प्रसज्यमानस्य अणो रेफलकारान्यतरपरकत्वापत्तिर्निर्बाधा स्यादिति मनायी मनावीत्यत्रेव कदाचित्कृष्णलर्धिः' इत्येवमपि रूपापत्तिः स्यात् ॥ न च 'ऋलृवर्णयोः सावर्ण्यम्' इति वार्तिकेन सवर्णसंज्ञायाम् 'अणुदित्सवर्णस्य' इत्यनेन सवर्णग्रहणेन ऋपदस्य ऋकारलृकारोभयपरत्वेन यथासंख्येन सर्वदोषपरिहारः इति वाच्यम् । अवात्तामित्यादिसिद्धये अत्यावश्यके वर्णसमाम्नाये जातिपरत्वे "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति वार्तिकभाष्यसंमते "उदित्सवर्णस्य" इत्येवमेव सूत्रे जातेऽण्ग्रहणाभावे ऋकारेण लृकारग्रहणस्यासंभवात् । अत एव भाष्यकृता ऋकारेण लृकारग्रहणस्योदाहरणं तपरसूत्रप्रवृत्त्यैव दर्शितम् । अत एव 'उरण्' सूत्रे ऋकारग्रहणेन लृकारग्रहणस्यासिद्धान्तभूतव्यक्तिपक्षे 'अणुदित्—'इत्येवसूत्रन्यासे संभवेनैवारुच्या 'यदितर्हि' इति भङ्ग्या आक्षेपे कृते समाधानं सिद्धान्तिना 'यक्षानुरूपो बलिः' इति न्यायेनैवामाणीति "उपलकारीयति" इत्यादिसिद्ध्यर्थम् "लृकारस्य स्थाने प्रसज्यमानोऽण् लपरः" इत्यपूर्वं वचनमेव करणीयमिति भाष्यसिद्धान्त इति संक्षेपः । उपावर्णि चैतद्विस्तरतो दाधि-

( एकदेशिन आक्षेपभाष्यम् )

इह तर्हि—"रषाभ्यां नो णः समानपदे" इत्यृकारग्रहणं चोदितं मातॄणां पितॄणामित्येतदर्थम् । तदिहापि प्राप्नोति—क्लृप्यमानं पश्येति ।

( प्रतिबन्दीभाष्यम् )

अथासत्यामपि सवर्णसंज्ञायाम् इह कस्मान्न भवति—प्रक्लृप्यमानं पश्येति ॥

(प्रदीपः) प्रक्लृप्यमानमिति । कृत्यच इति णत्वप्रसङ्गः ॥

( प्रतिबन्दीसमाधानेनाक्षेपनिरासभाष्यम् )

"*चुड्डुतुलशर्व्यवाये न*" इति वक्ष्यामि । अपर आह—"त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये न" इति वक्ष्यामीति । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योसौ लृकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति ॥

(प्रदीपः) त्रिभिश्चेति । पूर्वस्मादयं विशेषः—पूर्वत्र शरन्तर्भूतोपि षकारः साक्षाण्णत्वनिमित्तत्वाद् व्यवधायकत्वेन नाश्रीयते । इह तु तस्यानुपादानमेवं ॥ वर्णैकदेशा इति । अवयवस्य स्वव्यापारानिवर्तनात् । अग्रहणपक्षे तु क्षुभ्नादेराकृतिगणत्वाण्णत्वाभावः ।

(उद्द्योतः) साक्षादिति । रषाभ्यामिति वचनादित्यर्थः ॥ नन्वत्र लकाराभाव इत्यत आह—भाष्ये वर्णैकदेशा इत्यादि । अग्रहणपक्षेत्विति । प्रक्लृप्यमानमित्यत्र क्लृप्यमानमित्यत्र चेति भावः । आद्ये कृत्यच इति, द्वितीये ऋवर्णान्नस्येति प्राप्तिः ॥

( सिद्धान्तोपसंहारभाष्यम् )

यद्येवं, नार्थो रषाभ्यां णत्वे ऋकारग्रहणेन । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योसौ ऋकारे रेफः तदाश्रयं णत्वं भविष्यति ॥ तुल्यास्य० ॥ ९ ॥

(प्रदीपः) ऋदितांम् लृदितां च भेदेनानुबन्धनिर्देशाद् भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावाद्व्यतिकराभावः ॥ ९

(उद्द्योतः) भेदेनेति । ओणृ गम्लृ इति भेदेनानुबन्धनिर्देशाः । 'नाग्लोपिशास्वृदितां' 'पुषादिद्युताद्यॢदित' इति च भेदेनोपादानमित्यर्थः ॥ ९ ॥

—∞—

(९ संज्ञानिषेधसूत्रं ॥ परिभाषासूत्रं वा १।१।४ आ. ७)॥

## नाज्झलौ १ । १ । १० ॥

( शकारसावर्ण्यनिषेधनिराकरणम् )

( १४६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् [ तत्र सवर्णलोपे दोषः ] ॥ * ॥

( आक्षेपवार्तिकाद्यभागव्याख्याभाष्यम् )

अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ॥

किं कारणम् ? ॥

अज्झल्त्वात् । अच्चैव हि शकारो हल्च ॥

कथं तावदच्त्वम् ? ॥

इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् । हल्षु चोपदेशाद्धल्त्वम् ॥

(प्रदीपः) नाज्झलौ ॥ १० ॥ अकारहकारयोरिकारशकारयोश्च[11] तुल्यस्थानप्रयत्नत्वात्सवर्णसंज्ञा प्राप्ता निषिध्यते । अत एव निर्देशादचामज्भिर्हलां हल्भिः सवर्णत्वानिषेधः ॥ अज्झलोरिति । प्रकृ[12]तत्वात्सवर्णसंज्ञाया इति बोध्यम् ॥ शकारप्रतिषेध इति । द्विवचनान्तस्य समासो भेदाधिष्ठानत्वात्सवर्णसंज्ञायाः ॥ इकार इति । अत्र हि सूत्रे अजितीकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति । स्वात्मनि क्रियाविरोधादस्मिन्नेव सूत्र इदं न व्याप्रियत इति सवर्णत्वनिषेध इकारशकारयोर्नास्ति । यस्येति चेत्यादौ तु शकार इकारेण न गृह्यतेऽनेन सवर्णत्वनिषेधात् । इह तु स्वात्मनि व्यापारो नास्ति, अस्ति च पूर्वेण सवर्णत्वमिकारश-

मध्यां सिद्धान्तकौमुदीव्याख्यायामस्माभिरिति तत्रैव विलोकयन्तु मात्सर्यमुत्सार्य भाष्यतत्त्वविदो विचारशालिनो विद्वांस इति विरम्यते पुनरुक्तभियाधिकशब्दाडम्बरप्रपञ्चतोऽस्माभिरिति दाधिमथाः ॥

१ सवर्णसंज्ञावादिमते तदभाववादो दोषमाह—इह तर्हीति ॥ इति इत्यत्र ॥ तत् तस्मात् ॥ छाया ॥

२ संज्ञावादी आह—अथेति ॥ छाया ॥

३ संज्ञाभाववादी समाधत्ते चुड्डुस्विति ॥

४ च उक्तसमुच्चये ॥ तदिदं चोभयं वक्तव्यमिति भावः ॥ छाया ॥

५ मेवेति । इतीति शेषः ॥ छाया ॥

६ ग्रहणे बीजमाह—अवयवेति ॥ अवयवान्तर्भूतस्याप्यवयवस्य स्वव्यापारकरणसामर्थ्याल्लीकारादित्यर्थः ॥ छाया ॥

७ नन्वत्रेति । तथाचोक्तवचनेनापि नेष्टसिद्धिरितिभावः ॥ छाया ॥

८ संज्ञावादी लाघवमन्यदप्याह—यद्येवमिति ॥ ग्रहणपक्षाङ्गीकारे इत्यर्थः ॥ रषाभ्यामिति । णत्वविधायके रषाभ्यामित्यत्रेत्यर्थः ॥ एवं सवर्णसंज्ञापक्षः समर्थितो भगवता ॥ छाया ॥

९ सवर्णसंज्ञायामतिप्रसक्तं संकरदोषमुद्धरति—ऋदितामिति ॥ छाया ॥

१० नाग्लोपीति । घटकलशादिवत्पर्यायवचनत्वं तु न एकेनैवेष्टसिद्ध्या प्रक्रियायां तथा करणानौचित्यात् । नहि संदेहाच्छास्त्रप्रवृत्तिरुचितेति भावः ॥ ॥ छाया ॥

११ चेन ऋकारषकारादिग्रहणम् ॥ अस्य निषेधस्य विशेषप्रवृत्तस्य संकोचे मानाभावात् । अन्यथाऽन्यत्रानिष्टापत्तेः । 'ऋष्यन्धक' इत्यादिगमकमप्यविशेषप्रवृत्तौ । ज्ञापकादेव तत्र सिद्धिरिति तु न तथासति ऋदुशनस्पुरुदंसित्यादिनिर्देशेन ज्ञापकेनाकारहकारादिष्वपि निर्वाहे सूत्रस्यैव वानारम्भतापत्तेः ॥ छाया ॥

१२ उभयत्र यथाश्रुते बाधादाह—प्रकृतत्वादिति ॥

कारयोरिति भावः । '**प्रकल्प्य चापवादविषय**मिति न्यायोऽत्र नास्त्यपवादस्यैवासंपत्त्या ॥

**(उद्द्योतः) नाज्झलौ ॥ १० ॥ अकारेत्यादि** । एवंच हरिरित्यादौ[1] दीर्घः शयनमित्यादौ यणापत्तिरिति भावः ॥ **अत एवेति** । पूर्वसवर्णदीर्घनिर्देशादित्यर्थः[2] । किं[3] चैवं सति अकः **सवर्णे इति झरो झरि सवर्णे,** इत्यस्यासङ्गतिरित्यपि बोध्यम् ॥ **भेदाधिष्ठानत्वादिति** । व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वासंभव इति भावः ॥ **सवर्णग्रहणेनेति** भाष्ये । सवर्णग्राहकेणाणुदित्सूत्रेणेत्यर्थः ॥ **अत्रहि सूत्रे इति** । उ[4]च्चारितस्यैव प्रत्यायकतामत्रत्यपूर्वपक्षी न जानाति प्रत्याहारेषु जातिग्रहणमिति च न जानाति ॥ ननु सति सवर्णत्वे इकारः शकारं गृह्णीयात् । तदेव च न नाज्झलाविति निषेधादत आह—**स्वात्मनीति** । यद्यपि **स्वाध्यायोऽध्येतव्य** इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेऽपि स्ववाक्यार्थबोधात्प्राक् स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावान्नात्रेकारशकारयोस्तदभावबोधनमिति भावः ॥ **अपवादस्यैवासंपत्त्येति** । **अपवादस्य नाज्झलावित्यस्यासंपत्त्या** प्राग्[5]बोधाभावेन स्वविषयेऽप्राप्त्यैतद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः ॥

( परिशिष्टवार्तिकांशावतरणभाष्यम् )

**तत्र को दोषः ? ॥**

( १४६ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ * ॥ तत्र सवर्णलोपे दोषः ॥ * ॥

( आक्षेपसाधकवार्तिकभागव्याख्याभाष्यम् )

**तत्र सवर्णलोपे दोषो भवति—परश्शतानि कार्याणि[6]—"झरो झरि सवर्णे" इति लोपो न प्राप्नोति ॥**

**(प्रदीपः) परश्शतानीति** । शतात्पराणि शताधिकानीत्यर्थः । **कर्तृकरणे कृता बहुल**मिति बहुलवचनात्समासः । **पा[7]रस्करादित्वात्सुडागमः** सकारस्य श्चुत्वम् **अनचि चेति** द्विर्वचनम् । **झरो झरीति** लोपाप्रसङ्गात् त्रिशकारश्रवणप्रसङ्गः । **शरोऽच्यनचि**चेत्यत्र त्विकारेण शकारो न गृह्यतेऽनेन सवर्णत्वनिषेधादित्यस्ति शकारस्य द्विर्वचनम् ॥

**( उद्द्योतः ) बहुलेति** । म[8]यूरव्यंसकादित्वात्सुप्सुपेति वा समास इत्युचितम् ॥ ननु कथं शस्य द्वित्वम् **अचि** नेति **शरोचीति**[9] वा निषेधापत्तेरत आह—**शरोचीति** ॥

( १४७ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धमनच्त्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ? ॥**

**कथम् ? ।**

**अनच्त्वात् ॥**

**कथमनच्त्वम् ॥**

**"स्पृष्टं[10] करणं स्पर्शानाम्" । "ईषत्स्पृष्टमन्तस्थानाम्" । "विवृतमूष्मणाम्" ईषदित्येवानुवर्तते ॥ "स्वराणां च" विवृतम् । ईषदिति निवृत्तम् ॥**

**(प्रदीपः) सिद्धमनच्त्वादिति** । सूत्रप्रत्याख्यानसा-

---

१ आद्यादिना दधि शीतलमित्यादिपरिग्रहः । द्वितीयादिना दधि षष्ठमित्यादिपरिग्रहः ॥ छाया ॥

२ सवर्णदीर्घपूर्वसवर्णेति पाठः । क्वचित् सवर्णदीर्घनिर्देशादित्येव पाठः । तत्र झल एव निर्दिष्टत्वेन पूर्वसवर्णस्यैवासंभवेन तस्य तत्त्वासंभवात्तथोक्तमिति बोध्यम् ॥ पूर्वसवर्णदीर्घनिर्देशादिति पाठेऽपीमामेवारुचिं पूर्वत्र बोधयन्पूर्वनिपातवैपरीत्यं कृतवानिति न कोपि दोष इति बोध्यम् ॥ छाया ॥

३ निर्देशस्य सौत्रत्वादेवोपपत्तौ कैयटस्थचसंग्राह्यमाह—किं चैवमिति ॥ उक्तवाक्याङ्गीकार इत्यर्थः ॥ क्रमेणोभयत्र ज्ञापकमाह—अक इत्यादि ॥ इति इत्यस्य ॥ इत्यस्य इत्यस्य च ॥ अणुदित्सूत्रं तु न ज्ञापकं हल्ग्रहणेनैव साफल्यात् । तन्निषेधरूपैककार्यान्वयसत्त्वेन द्वन्द्वोपपत्त्या तस्यापि न गमकत्वम् ॥ छाया ॥ यत्तु नाण्शलावित्येव कुतो न सूत्रितमिति ॥ तन्न । कर्तृपदकं दधिसान्द्रमित्याद्यसिद्ध्यापत्तेः । ऋकारऌकारयोरनण्त्वात् । ग्रहणकशास्त्रसूत्रातिरिक्ते पूर्वं एवाणित्युक्तत्वात् ॥ अस्तु वा परोऽण् तथापि अजपेक्षया व्यक्तिगौरवमेव स्यादिति अज्ग्रहणमपनीयाण्ग्रहणं क्रियतामिति शङ्काया गर्भस्रावेणैव गतत्वात् ॥ शलंशे तु व्यक्तिलाघवे सत्यपि वर्णोच्चारणे विशेषो नास्तीत्युत्तरम् ॥ शब्दकौस्तुभः ॥ नाकूशलाविति तु न सूत्रितम् । अविशेषात् । एवमप्युकारवैयर्थ्यात् । तेन तस्य तदप्राप्तेः ॥ छाया ॥

४ अत्रत्यपूर्वपक्षस्यैकदेश्युक्तित्वमाह—उच्चारितेति ॥ स्पष्टत्वाय न जानातीत्यस्य पुनरुक्तिः ॥ छाया ॥

५ प्राग् पदार्थोपस्थितिवेलायम् ॥ तात्पर्यार्थमाह—एतदिति ॥ छाया ॥

६ पारेति ॥ संज्ञेयम् । अतएव 'कार्याणि' इति संज्ञिन उल्लेखो भाष्ये ॥ असंज्ञात्वे तु पृषोदरादित्वात्सुड्बोध्यः ॥ त्रिशकारकेति । सर्वदेत्यादिः । रूपेत्यन्तः ॥ छाया ॥

७ एवंच 'परस्कोटीनि परस्लक्षाणि परसयुतानि' इत्येवमेव रूपाणि बोध्यानि ॥ न च 'परोरजसे' इत्यार्षप्रयोगे 'परोरजांसि' इति कविप्रयोगे रुत्वोत्वयोः सिद्ध्ये सुगागम एव किं न कल्प्यते । 'परश्शतानि' इति तु "वा शरि" इत्यस्य वैकल्पिकत्वेन विसर्गाभावे सत्वे श्चुत्वे च सिद्धमिति परोयुतानि परोलक्षाणि परःकोटीनि इत्येवं रूपाण्येव भवन्तीति वाच्यम् । उपस्कृतादौ विसर्गापत्तिपरिहारायावश्यकटित्वस्य "सुट्कात्पूर्वः" इति सुट एव प्रकृतत्वेन सुकः कल्पनायां निर्मूलत्वापातात् । अत एव "परोक्षे लिट्" इति सूत्रभाष्ये परोक्षपदसिद्धये

"परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।
उत्वं वादेः परादक्ष्णः सिद्धं वाक्षान्निपातनात् ॥"

इति प्रकारत्रयाङ्गीकारक्लेशोऽङ्गीकृतः ॥ वैकल्पिकेषु भावानुष्ठानस्यैवाङ्गीकृतत्वेन सत्वानुपपत्तेः । वैदिके प्रयोगे तु वर्णव्यत्ययेन सकलेष्टसिद्धिः । वैदिकप्रयोगमनुसृत्य प्रयुञ्जानाः कवयस्तु प्रत्यवयन्त्येव । तथाचोक्तम् 'छन्दोवत्कवयः कुर्वन्ति नैपेष्टिः' इति केचित् ॥ दाधिमथाः ॥

८ बाहुलकस्य सर्वथागतित्वादाह—मयूरेति ॥ असमानाधिकरणे तदप्रवृत्तेराह—सुप्सुपेतीति ॥ राजदन्तादित्वात्परनिपात इति बोध्यम् ॥छा०॥

९ तस्य पर्युदासत्वे आह—शरोचीति । अनिष्टत्वादाह—आपत्तेरिति ॥ प्रसज्यप्रतिषेधस्यैव सिद्धान्तत्वमन्यत्र स्फुटमिति न तथावतरणं किंतु प्रतिपदोक्तत्वादाह—शरोचीत्येवमिति सर्वथा कैयटासंगतिरेवेति बोध्यम् ॥ छाया ॥

१० स्पृष्टमित्यादीनि चत्वारि शौनकप्रातिशाख्यसूत्राणि बोध्यानि ॥ दा० ॥

धारणमुक्तम् । प्रयत्न[1]भेदादजझलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः ॥

(उद्योतः) ननु प्रयत्नभेदेनानच्त्वे [2]सूत्रमेव व्यर्थं स्यादत आह—सूत्रेति । भाष्ये ईषदित्येवेति । एङैचोः परस्परसावर्ण्याभावाय विवृततत्वव्याप्त्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमतेऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान् ॥ किं[3]च दीर्घप्लुताकारहकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः ॥

( १४८ समाधानान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ वाक्यापरिसमाप्तेर्वा ॥ * ॥

( भाष्यम् )

**वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत् ॥**

**किमिदं वाक्यापरिसमाप्तेरिति ? ।**

**वर्णानामुपदेशस्तावद् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल "आदिरन्त्येन सहेता" इतिप्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालम् "अणुदित्सवर्णस्य चाप्रत्ययः" इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । न चात्रेकारः शकारं गृह्णाति ॥**

(प्रदीपः) वाक्येति । [4]भवतु वा तुल्यास्यप्रयत्नत्वं तथापीहेकारेण शकारो न गृह्यते सवर्णसंज्ञाया अस्मिन्सूत्रेऽनिष्पादात् । अस्मिन् हि सूत्रे निष्पन्ने सत्यपवादविषयपरिहारेणेष्टे विषये सवर्णसंज्ञा प्रवर्तते । न त्वेतत्सूत्रनिष्पत्त्यवस्थायाम् । ततश्चाङ्गेषूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेष्वणुदित्सवर्णस्येत्येतदस्य च्वावित्यादौ प्रवर्तते न त्वङ्गेषूपदेशादिषु, नापि स्वात्मनि । [5]ततश्चात्र सूत्रेऽङ्गानिष्पत्त्याणुदित्सूत्रस्याप्रवर्तनादिकारेण शकारस्याग्रहणात्सवर्णत्वं शकारयोः सिद्धम् । एवमीकारोप्यत्रेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति कुमारी शेते इत्यत्र सवर्णदीर्घत्वं प्राप्तमचीत्यनुवृत्त्या निवार्यते ॥

(उद्योतः) वाक्यापरिसमाप्तेर्वेति । [6]अन्यथा नाज्झलाविलस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तव पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः ॥ अनिष्पादमुपपादयति—अस्मिन्हीति ॥ सूत्रे निष्पन्ने इति । [7]जनितवाक्यार्थबोधे इत्यर्थः ॥ प्रवर्तते इति । [8]एते परस्परं सवर्णसंज्ञा इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः । तदेव च लक्ष्यसंस्कारकमिति भावः ॥ निष्पत्त्यवस्थायाम् वाक्यार्थबोधावस्थायाम् ॥ सवर्णत्वेषु निष्पन्नेषु । [9]तत्र सवर्णत्वनिष्पत्तिरिष्टविषये सवर्णपदवाच्यत्वग्रहः ॥ नापि स्वात्मनीति । अनिष्पत्तेरिति भावः ॥ अङ्गानिष्पत्त्या अङ्गस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या ॥ भाष्ये तावत् प्रथमम् ॥ उपदेशोत्तरकालेति । ज्ञातस्य संज्ञाविधानादिति भावः ॥ प्रत्याहारोत्तरकाला सवर्णसंज्ञेत्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणम्, तदुत्तरकालमणुदिदित्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयतीत्यर्थः ॥ अपरिसमाप्तिश्च सवर्णनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसंभावनोहिताप्रामाण्यसंभावनासत्त्वादिति तात्पर्यम् ॥ [10]यत्तु नाज्झलावित्यतः प्राकुल्यास्येत्यस्य बोधाभावेन सवर्णपदार्थज्ञानाभावादणुदिदित्यस्य वाक्यार्थबोध इत्यर्थ इति ॥ तन्न । अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया तुल्यास्येत्यतः प्राङ् निषेधवाक्यार्थाभावो, न तु विपरीतमित्यदोषादिति दिक् ॥ सिद्धमिति । अत्रत्याच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावादिकारशकारयोः सवर्णत्वज्ञानेऽप्यणुदित्सूत्रजन्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावान्नेकारेणात्र शकारग्रहणमिति भावः ॥ ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन्प्रति प्रवृत्तत्वेऽपि पाणिनेस्तत्तच्छास्त्रप्रणयनान्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन [11]तज्ज्ञानस्यैतच्छास्त्रासाध्यत्वेन च नाज्झलावित्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात् । अस्मदादीनां बोधस्तु तत्तात्पर्यज्ञव्याख्यातृपरंपरया लक्षणया भविष्यतीति शकारयोः प्रतिषेधः प्राप्नोति । [12]एवमकारयोरपीति चेन्न । ज्ञानसत्त्वेऽपि तदभिप्रायेण प्रयोगे तात्पर्यग्राहकाभावात् । [13]करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराभावस्यैव प्रतिपादनाच्च । [14]अत एव हलन्त्यसूत्रे इतरेतराश्रयमाशङ्क्य एकशेषेण समाहितं भाष्ये । अन्यथा पाणिनिना हल्पदार्थस्य

---

१ भेदादिति । तथाच शरामनच्त्वान्निषेधाप्रवृत्त्या मिथः सावर्ण्येन लुप्तमध्यशकारकं रूपं सिद्धमिति भावार्थः सूचितः ॥ छाया ॥

२ सूत्रमेवेति । तथाच 'एकं संधित्सतोऽपरं प्रच्यवते' इति न्यायापत्तिरिति भावः ॥ छाया ॥

३ प्रकृतेऽपि भेदाश्रयणमावश्यकमेवेत्याह—किं चेति ॥ प्रश्लेषोऽप्रामाणिक इति भावः । इदमपि एतत्कृतमयत्नवैलक्षण्यमपि ॥ तस्य पाणिनेः ॥ छाया ॥

४ अभ्युपेत्यवादेन तु पक्षान्तरं भाष्ये तदाह—भवतु वेति ॥ इह प्रकृतसूत्रे ॥

५ पर्यवसितमाह—ततश्चेति ॥

६ अस्य पक्षस्य पूर्वपक्षिणं आवश्यकत्वमाह—अन्यथेति ॥ वाक्यापरिसमाप्तिन्यायानङ्गीकारे इत्यर्थः ॥ छाया ॥

७ निष्पत्तेः स्वरसतः पूर्वं सत्त्वादाह—जनितेति ॥ छाया ॥

८ पूर्वं सामान्यतो बोधस्य सत्त्वादाह—एते इति ॥ एतेन पूर्वजातव्यवच्छेदः ॥ एवमग्रे बीजानि बोध्यानि ॥ छाया ॥

९ तत्र तेषामुपदेशादिचतुर्णां मध्ये ॥ छाया ॥

१० प्राचोक्तं भाष्यार्थं दूषयति—यत्त्विति ॥ छाया ॥

११ अदोषादिति ॥ तथा च सामान्यज्ञानं पूर्वमस्त्येव ॥ छाया ॥

१२ तज्ज्ञानस्य । पाणिनिज्ञानस्येत्यर्थः ॥ छाया ॥

१३ भाष्यमुपलक्षणमेवेत्याह—एवमकारयोरपीति ॥ हकारग्रहणेन तस्य हल्त्वात् ॥ छाया ॥

१४ ननु तत् प्रणयनमेव तात्पर्यग्राहकमत आह—करिष्यमाणेति ॥ अनेन भाष्येणेति शेषः ॥ छाया ॥

१५ इदं द्रढयति—अत एवेति । तथा तदभावादेवेत्यर्थः । अन्यथा तथा तदङ्गीकारे ॥ छाया ॥

ज्ञातत्वेन तस्यान्योन्याश्रयाभावात्तेन तदभिप्रायेण प्रयोगे बोद्धबोधस्य लक्षणयैवोपपत्तौ तत्पर्यन्ता[1]नुधावनमनर्थकं स्यात् । मम तु पाणिनेस्तथा व्यवहाराभावान्न दोषः ॥ उक्तार्थे[2] ज्ञापकमप्युपन्यस्यति—एवमीकारोपीति । अत्र पक्षे दीर्घप्लुताकाराभ्यां हकारे सावर्ण्यवारणं तु प्रश्लेषाद्बोध्यम् । तत्र तात्पर्यग्राहका वेलास्वित्यादिनिर्देशाः, प्रागुक्तं भाष्यं चेति बोध्यम् ॥

( आक्षेपभाष्यम् )

**यथैव तर्हीकारः शकारं न गृह्णाति । एवमीकारमपि न गृह्णीयात् ॥**

**तत्र को दोषः ? ।**

**कुमारी ईहते कुमारीहते "अकः सवर्णे" (इति) दीर्घत्वं न प्राप्नोति ॥**

(प्रदीपः) तत्र[3] क्व ग्रहणकशास्त्रं प्रवर्तते क्व नेति विषयविभागदर्शनाय चोद्यं करोति—**यथैव तर्हीति** । इकारस्य[4] ह्यत्राग्राहकत्वं दृष्टमित्यकःसवर्णे दीर्घ इत्यत्रापि प्राप्तमिति प्रश्नः ॥

(उद्द्योतः) प्रदर्शनाय बोधनाय[5] ॥

( समाधानभाष्यम् )

**नैष दोषः । यदेतद् "अकः सवर्णेदीर्घः" इत्यत्र प्रत्याहारग्रहणं, तत्रेकार ईकारं गृह्णाति शकारं न गृह्णाति ॥**

(उद्द्योतः) भाष्ये यदेतदिति । तद्बोध[6]वेलायां वाक्यपरिसमाप्तेरिति भावः ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—**

***अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्* ।**

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ॥**

**किं कारणम् ? ।**

**अज्झल्त्वात् । अचैव हि शकारो हल्च ॥**

**कथं तावदच्त्वम् ? ।**

**इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम्, हल्षु चोपदेशाद्धल्त्वम् ॥**

**तत्र को दोषः ? ॥**

***तत्र सवर्णलोपे दोषः* ॥**

**तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । "झरो झरि सवर्णे" इति लोपो न प्राप्नोति ॥**

***सिद्धमनच्त्वात्* ।**

**सिद्धमेतत् ॥**

**कथम् ?**

**अनच्त्वात् ॥**

**कथमनच्त्वम् ! ॥**

***वाक्यापरिसमाप्तेर्वा* उक्ता वाक्यापरिसमाप्तिः ॥**

(प्रदीपः) अनच्त्वमेवं[7] वाक्यापरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह—**अपर आहेति** ॥

( आक्षेपभाष्यम् )

**अस्मिन्पक्षे—वेत्येतदसमर्थितं भवति ॥**

(प्रदीपः) **अस्मिन्पक्ष इति** । एकत्र हि साध्ये हेतुविकल्पो भवति, इह तु साध्यभेदः । सिद्धेरनच्त्वं हेतुः, अनच्त्वस्य वाक्यापरिसमाप्तिः ॥

(उद्द्योतः) एकत्रेति । तुल्यार्थानां[8] विकल्प इति न्यायादित्यर्थः ॥

( समाधानभाष्यम् )

**एतच्च समर्थितम् ॥**

**कथम् ? ।**

**अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा, मा वा भूत् ॥**

(प्रदीपः) **एतच्चेति । अस्तु वा ग्रहणमिकारेण शकारस्येति** वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः ॥

(उद्द्योतः) मा वा भूदित्येतत्सूचितप्रतिज्ञाया आशयमाह—अस्तुवेति ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम् परश्शतानि कार्याणि "झरो झरि सवर्णे" इति लोपो न प्राप्नोतीति ॥**

---

१ पूर्वपक्षस्याज्ञानेनोपपत्तेराह—तत्पर्यन्तेति ॥ एकशेषेण समाधिपर्यन्तेत्यर्थः ॥ छाया ॥

२ अग्रिमग्रन्थस्य प्रकृतासंबद्धत्वं निराचष्टे—उक्तार्थे इति ॥ ज्ञापकम् अचीत्यनुवृत्तिरूपम् ॥ अत्र पक्षे तुल्यप्रयत्नत्वपक्षे ॥ तत्र प्रश्लेषे ॥ प्रागुक्तमिति । अन्यथा फलभेदे प्रत्याख्यानाय तदुक्तिरसंगता स्यादिति भावः ॥ छाया ॥

३ तत्र वाक्यापरिसमाप्तौ ॥ छाया ॥

४ ननु अकः सवर्णे इत्यादेर्ग्रहणशास्त्रलिङ्गत्वात्कथं चोद्यमत आह—इकारेति । दृष्टं सामान्यतः प्राप्तमेतद्दृष्टान्तेन । तथा च विमत इकारः सवर्णाग्राहक इकारत्वात् एतत्सूत्रगताच्गतेकारवदिति प्रयोगो बोध्यः ॥ छाया ॥

५ मुख्यार्थासंभवादाह—बोधनायेति ॥ छाया ॥

६ तद्बोधेति । तथा च स्वाङ्गान्यतरगततत्त्वोपाधिपराहतमनुमानमिति भावः ॥ छाया ॥

७ अनच्त्वमेवेति । एवो व्युत्क्रमे । वाक्यापरिसमाप्त्यैवेत्यर्थः ॥ अत एवाह—नन्विति ॥ एतदर्थमेव पुनरादितोऽनुवाद इति भावः ॥ छाया ॥

८ 'तुल्या(एका)र्थास्तु विकल्पेरन्' ( १२।३।१० पू. मी. ) इति जैमिनीयमर्थतोऽनुवदति—तुल्यार्थानामिति ॥ छाया ॥

( आक्षेपबाधकभाष्यम् )

**मा भूल्लोपः ॥**

( आक्षेपसाधकभाष्यम् )

**ननु च भेदो भवति—सति लोपे द्विशकारकम्, असति लोपे त्रिशकारकम् ॥**

(प्रदीपः) ननुचेति। श्रुतिकृतं भेदमुपगम्योच्यते ॥

(उद्योतः) ननु 'व्यञ्जनपरस्यैकस्यानेकस्य वा नोच्चारणे विशेषः' इति न्यायात् कथं भेद इत्यत आह—श्रुतिकृतमिति ॥

( आक्षेपबाधकभाष्यम् )

**नास्ति भेदः,—असत्यपि लोपे द्विशकारकमेव॥ कथम्?।**

**विभाषा द्विर्वचनम् ॥**

(उद्योतः) भाष्ये असतिलोपे त्रिशकारमिति वदन्प्रष्टव्यः—किं द्विशकारं न स्यादिति तवाशयः, उत त्रिशकारं स्यादिति। आद्ये आह—असत्यपीति। द्विशकारं भवत्येवेत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**एवमपि भेदः—असति लोपे—कदाचिद्द्विशकारकम्, कदाचित् त्रिशकारकम्। सति लोपे—द्विशकारकमेव ॥**

(उद्योतः) द्वितीये आह—एवमपीति। विभाषा द्विर्वचनेऽपीत्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

**स एष कथं भेदो न? ॥**

(प्रदीपः) स एष कथं भेदो नेति। अत्रैव च्छेदः। भेद एवेत्यर्थः ॥

(उद्योतः) एवमपीत्यनेन भेद एवेत्युक्त्वा,तदुपपादनावसरे यदि लोपो न स्यादिति वाच्यम्, किमुच्यते—नित्यो लोपः स्यादिति। अतश्छित्त्वा भिन्नकर्तृकत्वेन योजयति—स एष इति। त्रिशकारमिष्टमेवेति तात्पर्यम् ॥

( तटस्थाक्षेपनिरासभाष्यम् )

**स्याद् यदि नित्यो लोपः स्याद्। विभाषा तु स लोपः ॥**

(प्रदीपः) इतर आह—स्याद्भेदो यदि नित्यो लोपः स्यात् विभाषा तु स लोप इति। ततो नास्ति भेद इत्यर्थः ॥

१ व्यञ्जनपरेति। व्यञ्जनात्परस्य व्यञ्जनपरकस्य चेत्यर्थः ॥ छाया ॥

२ यथाश्रुतेऽनुपपत्तेराह—असतीति ॥ छाया ॥

३ भेदएवेत्यनेन—भाष्ये 'सर्वं वाक्यम्' इति न्यायेन तथेति सूचितम्॥ ॥ छाया ॥

४ भाष्येति। सूत्रपाठभेदादिति भावः ॥ 'सर्वत्र शाकल्यस्य' 'वा हृत—'इत्यादि स्वस्यैव प्रपञ्चः ॥ छाया ॥

( समाधानभाष्यम् )

**यथाऽभेदस्तथास्तु ॥ नाज्झलौ ॥ १० ॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायप्रथमपादे चतुर्थमाह्निकम् ॥ ४ ॥

(प्रदीपः) द्विर्वचनमपि विभाषा **यरोऽनुनासिकेऽनुनासिको वेत्यतो** वेत्यनुवर्तनात्। लोपोऽपि विभाषा **झयो होऽन्यतरस्यामित्यतोऽन्यतरस्यामित्यनुवर्तनादित्यर्थः ॥ १० ॥**

इति श्रीजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायप्रथमपादे चतुर्थमाह्निकम् ॥ ४ ॥

(उद्योतः) झयो ह इति। इदं वृत्तिरीत्या। भाष्यरीत्या तु वाऽवसान इत्यत इति बोध्यम् ॥ १० ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥ ४ ॥

## प्रथमाध्यायस्य प्रथमपादे पञ्चमाह्निकम् ॥

( अथ प्रगृह्यसंज्ञाप्रकरणम् )

( १० प्रगृह्यसंज्ञासूत्रम् ॥ १। १। ५ आ. १ सू. ॥ )

### ईदूदेद्द्विवचनं प्रगृह्यम् ॥ १।१।११ ॥

( अथ तपरपाठप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमीदानीं तपराणां प्रगृह्यसंज्ञोच्यते? ॥**

(प्रदीपः) **ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥ किमर्थमिति।** ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम्, उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां सवर्णानां ग्रहणार्थमपि नोपपद्यते, ॥ जातिपक्षेऽपि दीर्घोच्चारणात्प्रयत्नाधिक्याद् ह्रस्वानां न भविष्यति, प्लुतानां चेष्यत एवेतीष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः ॥

(उद्योतः) ईदूदेत् ॥ ११ ॥ व्यक्तिपक्षे ईदूतोस्तपरोरुपादानं भिन्नकालनिवृत्तये वा गुणान्तरयुक्तग्रहणाय वा स्यात्। तत्र नाद्य इत्याह—ईदूतोरिति। एवं चाणुदित्यस्य प्राप्त्यभावान्न तद्बाधकतपरसूत्रप्रवृत्त्यै तपरत्वमित्यर्थः। तपरसूत्रेऽण्ग्रहणाननुवृत्त्या तस्य प्राप्तावपि फलाभावान्न द्वितीय इत्याह—उदात्तादीनामिति ॥ ननु जातिपक्षे भिन्नकालनिवृत्त्यर्थं स्यात्तत्पक्षे हि तपरसूत्रं निर्यमार्थमेवेत्यत आह—जातीति ॥ प्लुतानां चेष्यत

५ नन्वेकारे यत्नाभावात्तत्र प्लुतव्यावृत्त्यर्थं तदित्यत आह—प्लुतानां चेति। चस्त्वर्थे ॥ एवं फलाभावरूपदोषमुक्त्वा अनिष्टत्वरूपदोषमेतत्प्रसङ्गात्सर्वत्रेत्याह—तीष्टेति ॥ छाया ॥

६ प्रवृत्तय इति। असंदेहार्थं तदस्त्विति भावः ॥ छाया ॥

७ वार्तिकरीत्या विध्यर्थतयाह—तपरेति ॥ छाया ॥

८ नियमेति। सवर्ण (अण्) पदानुवृत्तेः ॥ एतेन विध्यर्थत्वमपास्तम् ॥ ॥ छाया ॥

एवेति । एतच्च अग्रे भाष्ये एव स्फुटम् ॥ इष्टव्याघातमिति । जातिपक्षे ईदूदंशेऽपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः ॥

(समाधानभाष्यम्)

**"तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥**

**केषाम्? ॥**

**उदात्तानुदात्तस्वरितानाम् ॥**

(प्रदीपः) **तपर इति** । व्यक्तिपक्षो भेदकाश्च गुणा इति भावः ॥ **केषामिति** । प्लुतानामग्रहणप्रसङ्गात्प्रश्नः ॥ **उदात्तेति** । क्वचिदनुनासिकग्रहणमप्यस्ति तद्गुणप्रसङ्गेनोच्चारितम्, न हि प्रगृह्योऽनुनासिकः सम्भवत्यणोऽप्रगृह्यस्यानुनासिक इति निषेधात् ॥

(उद्योतः) **भेदकाश्च गुणा इति** । भेदकत्वात्स्वरस्येति वार्तिकोक्तेरण्विषये भेदकपक्षोऽप्यस्तीत्यभिमानः ॥ इदं प्रयोजनमीदूतोरेव, नत्वेदंशे अणुदित्सूत्रेणैव सिद्धेः ॥

(भाष्यम्)

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ॥**

(१४९ आक्षेपवार्तिकम् ॥ १ ॥)

**[॥ * ॥ प्लुतानां तु प्रगृह्यत्वाप्रसङ्गोऽतत्कालत्वात् ॥ * ॥]**

(भाष्यम्)

**प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति ॥**

**किं कारणम्? ।**

**अतत्कालत्वात् । न हि प्लुतास्तत्कालाः ॥**

(प्रदीपः) **प्लुतानां त्विति** । व्यक्तिपक्षाश्रयणादयं दोषो, न तु तपरत्वात् ॥

(उद्योतः) ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं, तत्कुतः प्लुतानां न प्राप्नोतीत्यत आह—**व्यक्तिपक्षेति** । ईदूदंशे इदम्, एदंशे तु तपरत्वादेव दोष इति बोध्यम् ॥

(आक्षेपबाधकभाष्यम्)

**असिद्धः प्लुतः । तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

(प्रदीपः) **असिद्ध इति** । शास्त्रासिद्धत्वाश्रयणात् प्लुतबुद्ध्यावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्तते । तथा हि वक्ष्यति ***असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च*** इति ॥

(उद्योतः) ननु इतिशब्दादिसमभिव्याहारे कार्यार्थं प्रगृह्यसंज्ञाप्रवृत्तेरन्तरङ्गत्वात्पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेऽपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह—**शास्त्रेति** । प्रवृत्तेऽपि शास्त्रेऽसिद्धवत्त्वेन तत्प्रवृत्तिबुद्ध्यभावेन प्लुतबुद्ध्यभावाद्द्विमात्रविषयाया बुद्धेस्त्रिमात्रे सत्त्वाद् द्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः ॥ एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेऽपि पुनः प्लुते तस्य तन्न स्यात् । न च स्थानिवत्त्वम् अनल्विधाविति निषेधात् । प्लुतस्थान्यल्वृत्तिधर्मत्वाद् । एवं चागच्छतमग्नी ३ इत्यादावणोऽप्रगृह्यस्येत्यनुनासिकः स्यादित्यपास्तम् ॥ ननु प्राधान्यात्कार्यासिद्धत्वमेव स्यादत आह—**तथाहीति** ॥ उत्सर्गः स्थानी ॥

(आक्षेपसाधकभाष्यम्)

**सिद्धः प्लुतः स्वरसन्धिषु ॥**

**कथं ज्ञायते—'सिद्धः प्लुतः स्वरसंधिषु'—इति? ॥**

**यदयं "प्लुतः प्रकृत्या" इति प्लुतस्य प्रकृतिभावं शास्ति ॥**

**कथं कृत्वा ज्ञापकम्? ॥**

**सतो हि कार्यिणः कार्येण भवितव्यम् ॥**

---

१ ननु तपरसूत्रस्य नियमार्थत्वेनाण्येव प्रवृत्त्या एकारे एतद्दोषसत्त्वेऽपीदूदंशे न तथेति चिन्त्यमिदमित्याह—जातिपक्ष इति ॥ छाया ॥

२ यथा स्यादिति । इत्येवमर्थमिति शेषः ॥ वार्तिकरीत्याऽयं ग्रन्थः । अन्यथाऽनुपपत्तेः ॥ छाया ॥

३ प्रसङ्गादिति । तत्प्रसङ्गरूपं दोषं सर्वथा लक्ष्यीकुर्वन्नित्यर्थः ॥ प्रश्न इति । केषांचित्सिद्धत्वात्प्रश्न इत्यर्थः ॥ छाया ॥

४ निषेधादिति । पूर्वमनुनासिकत्वे प्रगृह्यत्वं दुर्वचं विषयाभावात् । प्रगृह्यत्वे तु तदसंभव एवेति भावः ॥ छाया ॥

५ दोषान्तरमप्याह—भेदकत्वादिति ॥ अणुदित्सूत्रेऽग्रहणाच्चेत्यपि बोध्यम् ॥

६ इदं वार्तिकं क्वापि नोपलभ्यते । परंतु व्याख्यानभाष्याद्घटितमनुमीयते इति बोध्यम् ॥ दाधिमथाः ॥

७ व्यक्तिपक्षेतीति । जातिपक्षे नायं दोषः संध्यक्षरेष्विव दीर्घप्लुतसाधारणजात्यङ्गीकारादिति भावः । तदाह—ईदूदंश इति ॥ छाया ॥

८ सिद्धान्ती समाधत्ते—असिद्ध इति ॥

९ परवदनुकोरित्यत्रेदमुक्तम् । तथाचैकरूप्याय सर्वत्र शास्त्रासिद्धत्वमेवेति भावः ॥ छाया ॥

१० न्तरङ्गत्वादिति । इत्याद्यनपेक्षत्वादिति भावः ॥ कार्यासिद्धत्वेनेयं शङ्का । एवंच सिद्धेऽसिद्धत्वरूपेणादौ तत्प्रवृत्तिरावश्यिकेति तात्पर्यम् ॥ कथं स्थान्येति ॥ देवदत्तहन्तृहतन्यायादिति भावः ॥ छाया ॥

११ शास्त्रेतीति । तथाच भाष्ये प्लुतपदं शास्त्रपरमिति भावः ॥ उक्तहेतोरेवाह—प्रवृत्तेऽपीति ॥ छाया ॥

१२ भिन्नाशुक्तिं खण्डयति—एतेनेति । पुनः पश्चात् ॥ तस्येति । प्लुतस्य प्रगृह्यत्वं न स्यादित्यर्थः । तस्य कार्यस्यासिद्धत्वाभावेनात्राग्रहणेन सूत्राप्राप्तेरिति भावः ॥ लक्ष्ये लक्षणस्येति न्यायपर्यन्तानुधावनं त्वफलम् ॥ ॥ छाया ॥

१३ नन्वस्याः "स्त्रे" "उत्नः" इत्यादौ विशिष्टेऽपि सत्त्वात्कथमल्विधित्वमत आह—प्लुतस्थान्यलिति ॥ आदेशापनेयत्वात् ॥ छाया ॥

१४ पूर्वपक्षी स्वाभिप्रायमाचष्टे—सिद्ध इति ॥

१५ तटस्थः पृच्छति—कथमिति ॥

१६ पूर्वपक्षी समाधत्ते—यदयमिति ॥

१७ तटस्थः पृच्छति—कथमिति ॥

१८ पूर्वपक्षी समाधत्ते—सतोहीति ॥

(प्रदीपः) **यद्यमिति** । असिद्धत्वे प्लुतः प्रकृत्येत्येवमाश्रयणायोगात् [1]कार्यित्वेनाश्रयणादसिद्धत्वाभावोऽनुमीयते । सामान्येन स्वरसन्धिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते, न तु प्रकृतिभाव एव । यथा रोरुत्व एव । सोत्सर्गं सापवादं च प्रकरणमिति प्रकृतिभावेऽपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते ॥

**किमे[3]तस्य ज्ञापने प्रयोजनम् ? ॥**

(प्रदीपः) **किमेतस्येति** । प्रकृतिभाव एवाश्रयात्सिद्धत्वमस्त्विति प्रश्नः ॥

**अ[4]प्लुतादप्लुत इत्येतन्न वक्तव्यं भवति ॥**

(प्रदीपः) इतरो लाघवं दर्शयति—**अप्लुतादिति** । सिद्धे हि प्लुतेऽतोतीति तपरत्वादेवोत्त्वाप्रसङ्गः ॥

(उद्योतः) सामान्येनेति । त[5]दुत्सर्गेऽपीत्यर्थः ॥ न[6]नु प्रकृतिभावो न स्वरसन्धिप्रकरणस्थस्तत्राह—सोत्सर्गमिति । तदुत्सर्गनिरूपितापवादत्वस्यात्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः ॥ प्र[7]गृह्यत्वहेतुके प्रकृतिभावेऽपीत्यन्वयः ॥ प्रकृतिभाव एवेति । [8]प्लुतप्रकृतिभाव इत्यर्थः ॥ भाष्ये एतस्येत्यस्य स्वरसन्धिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**किमतो—[9]यत्सिद्धः प्लुतः स्वरसन्धिषु, संज्ञाविधावसिद्धः । तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

(प्रदीपः) **किमत इति** । यथोद्देशे संज्ञापरिभाषे प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपतिता न भवतीति प्रश्नः ॥

( आक्षेपसाधकभाष्यम् )

**सं[10]ज्ञाविधौ च सिद्धः । कथम् ? ।**

**कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्, "प्रगृह्यः प्रकृत्या" इत्युपस्थितमिदं भवति—"ईदूदेद्द्विवचनं प्रगृह्यम्" इति ॥**

(प्रदीपः) **कार्यकालमिति** । कार्यार्थत्वाद्गु[11]णानां कार्यस्य च प्रधानत्वात् प्रधानदेशत्वस्य न्याय्यत्वादिति भावः ॥

(उद्योतः) कार्यार्थत्वादिति । तदेकवाक्यतापन्नं संज्ञासूत्रं तत्प्रकरणस्थमिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**किं[12] पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् ?॥**

( आक्षेपसाधकभाष्यम् )

**प्र[13]गृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

( आक्षेपबाधकभाष्यम् )

**मा[14] भूदेवम् । प्लुतः प्रकृत्येत्येवं भविष्यति ॥**

( आक्षेपसाधकभाष्यम् )

**[15]नैवं शक्यम् । उ[16]पस्थिते हि दोषः स्यात् "अप्लुतवदुपस्थिते" इति । अत्र पठिष्यति ह्या[17]चार्यः—*वद्वचनं प्लुतकार्यप्रतिषेधार्थम् । प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात्* इति । तस्मात्प्लुतस्य प्रगृह्यसंज्ञैषितव्या । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

(प्रदीपः) **उपस्थिते हीति** । उपस्थितमनार्षं इतिकरणः । अभी ३ इतीत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभाव ई[18]ष्यते । तदाह—**पठिष्यतीति** । यत्र

---

१ एवं कार्यित्वेन व्यतिरेकमुक्त्वाऽन्वयमाह—कार्यित्वेनेति ॥ छाया ॥

२ नन्वेवं प्रकृतिभाव एव सिद्धत्वं स्यादिति स्वरसंधिष्विति भाष्यासंगतिः । अन्यथा प्रकृतिभाव इत्येव ब्रूयादत आह—सामान्येनेति ॥ अस्यार्थमाह—स्वरेति ॥ भाष्ये स्वरसंधिग्रहणं प्रकरणोपलक्षणमित्याह—प्रकरणेति ॥ इदमेव व्यतिरेकमुखेन द्रढयति—नत्विति ॥ अत्र वैधर्म्ये दृष्टान्तमाह—यथा रोरुत्वे इति ॥ एवमिति पाठे—यथा रोरुत्वे एवं तत्रैव, नत्वित्यर्थः ॥ छाया ॥

३ तटस्थः पृच्छति—किमेतस्येति ॥

४ पूर्वपक्षी लाघवं दर्शयति—अप्लुतादिति ॥

५ तदुत्सर्गेऽपीति । प्लुतप्रकृतिभावोत्सर्गे संधिकार्येऽपीत्यर्थः ॥ अपिना तस्यापि समुच्चयः ॥ छाया ॥

६ अप्यर्थं द्रढयन्नाशङ्कते—नन्विति ॥ तदुत्सर्गेति । प्लुतप्रकृतिभावोत्सर्गसंधिरूपकार्यनिरूपितापवादत्वस्य प्रगृह्यप्रकृतिभावेऽपि सत्त्वेन प्लुतः प्रकृत्येत्येतदपीत्यर्थः ॥ छाया ॥

७ यथाश्रुतेऽनुपपत्तेराह—प्रगृह्यत्वेति ॥ संनिहितसापेक्षशास्त्रसमुदायः प्रकरणमिति भावः ॥ नन्वेवं प्लुतस्य प्रकृतिभावविधानसामर्थ्येन तत्र तस्य सिद्धत्वं ज्ञाप्यते इत्येव कुतो नोक्तमृजुतया कैयटेन, प्रकृतिभावं प्रति तु उक्तरीत्याश्रयात्सिद्धत्वमेवेति चेत् ॥ न 'प्लुतस्य प्रकृतिभावं शास्ति' इत्यस्य 'सतो हि कार्यिणः' इत्यस्य च भाष्यस्यासामञ्जस्यापत्तेः । असिद्धत्वेऽपि, स्थानिवद्बुद्ध्या तत्र प्राप्तयणादिनिवारकतत्सार्थक्याच्च ॥ छाया ॥

८ उक्तरीत्यभावे यथाश्रुतानुपपत्तेराह—प्लुतेति ॥ सामान्यतो न प्रयोजनप्रश्नः किंतु विशेषत इत्याह—भाष्ये एतस्येत्यस्येति ॥ छाया ॥

९ [तटस्थः पृच्छति—] किमत इति । स्वरसंधिषु प्लुतः सिद्धोऽतः किम् । यत् यतः संज्ञाविधावसिद्ध इत्यन्वयः ॥ छाया ॥

१० पूर्वपक्षी समाधत्ते—संज्ञाविधाविति ॥

११ गुणानामिति । अङ्गानामित्यर्थः । तेषां प्रधानदेशकालान्वयस्य न्यायसिद्धत्वमिति भावः ॥ छाया ॥

१२ तटस्थः पृच्छति—किं पुनरिति ॥

१३ पूर्वपक्षी समाधत्ते—प्रगृह्येति ॥

१४ तटस्थोऽन्यथासिद्ध्याक्षिपति—माभूदिति ॥

१५ पूर्वपक्ष्यन्यथासिद्धिं परिहरति—नैवमिति ॥

१६ उपस्थित इति । तस्मिन्परत इत्यर्थः ॥ छाया ॥

१७ आचार्य इति । वार्तिककारः ॥ प्लुतकार्येति । फलितार्थकथनमिदम् । अप्लुतवदित्यनेनाप्लुतसादृश्यविधानस्यैव लाभेन शब्दमर्यादया प्लुतकार्यं नेत्यर्थस्यालाभात् ॥ ननु तत्कार्यप्रतिषेधे वतिरेव मास्त्वत आह—प्लुतेति । तत्स्थानेऽप्लुतस्य विधानेन तन्निवृत्तौ हीत्यर्थः ॥ प्रसज्यप्रतिषेधेन व्याख्यानं तु न युक्तं गौरवात् ॥

१८ इष्यत इति । स न स्यादिति शेषः ॥ पठिष्यतीति ॥ अप्लुतवदुपस्थित इत्यनेनेति शेषः ॥ भाष्ये तु नैतत्पाठः । तथा शैल्या अभावादिति कैयटाशयः ॥ वस्तुतः—'अप्लुतवदुपस्थित इति' इति । 'अत्र प—' इति

प्रगृह्यसंज्ञा नास्ति, स प्लुताश्रयप्रकृतिभावः प्रतिषेधविषयः—देवदत्ता ३ इति देवदत्तेति ॥

**(उद्द्योतः) प्रतिषिद्धे इति** । [1]अप्लुतवद्भावेन बाधिते इत्यर्थः ॥ भाष्ये **प्रगृह्यप्लुतप्रतिषेधेति** । प्रगृह्या[2]श्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः ॥ प्रगृ[3]ह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह—**अन्येनेति** । प्रगृह्यः प्रकृत्येत्य[4]नेनेत्यर्थः ॥ नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह—**यत्रेति** ॥

## ( आक्षेपबाधकरीत्यन्तरनिराकरणभाष्यम् )

**यदि[5] पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्येत, एवमप्येकार एव एकः सवर्णान्गृह्णीयाद्, ईकारोकारौ न गृह्णीयाताम् ॥**

**किं कारणम् ? ।**

**अनणुत्वात् ॥**

**(प्रदीपः) यदि पुनरिति** ॥ न[6]नु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति, न पुनस्तपरत्वात् ॥ अयमत्राशयः—आकृतिपक्ष आश्रयिष्यते दीर्घोच्चारणप्रयत्नाधिक्याद् ह्रस्वानां न भविष्यति प्लुतानां तु प्रवर्तिष्यते ॥ **एवमपीति** । अयं भावः—आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति, तथा दीर्घोच्चारणसामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यत इति प्लुतानां न स्यात् । य[7]था स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवतीति । आकृतिपक्षेऽपि विशिष्टैवाकृतिर्दीर्घा व्यक्तिर्गृह्यते तथा चानणुत्वादीदूतौ ग्राहकौ न स्याताम् ॥

**(उद्द्योतः) न पुनस्तपरत्वादिति** । तद्वक्ष्यति भाष्ये—"दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोतीति" ॥ प्लुतानां त्विति । त[8]परत्वाभावे इत्यर्थः । तपरत्वे तु तपरसूत्रस्य जातिपक्षेऽणण्यपि नियमार्थत्वान्न स्यादिति भावः ॥ ई[9]त्वादि इत्वाद्यनतिरिक्तं मन्यते ॥ **आकृतिरिति** । विना व्यक्त्युच्चारणं जातिनिर्देशाभावादवश्यं व्यक्तावुच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यत इति न्यूनकालव्यक्तिगताया इवाधिककालव्यक्तिगताया अपि न ग्रहणमिति भावः ॥ भिन्नभिन्न[10]व्याप्यजातिस्वीकारे तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम् । ए[11]त्वजातेस्तु प्लुते सत्त्वात्तेन प्लुतग्रहणं भवत्येव । ततो लघुव्यक्तेरभावाच्च ॥ नन्वेवं भाष्येऽनणुत्वादिति हेतुरसङ्गतोऽत आह—**आकृतिपक्षेऽपीति** । ईदृशे विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यत इत्यर्थः ॥ जा[12]तिप्राधान्ये फलाभावाद् व्यक्तिद्वारा कार्यसंबन्धाश्रयणे गौरवाच्च तस्यायुक्तत्वाच्च । तद्विशिष्टव्यक्तिग्रहणेऽप्यणुत्वाभावान्न तौ ग्राहकाविति भावः ॥

## ( आक्षेपबाधकरीत्यन्तरनिराकरणभाष्यम् )

**य[13]दि पुनर्ह्रस्वानामतपराणां प्रगृह्यसंज्ञोच्यते ॥ नैवं शक्यम् । इ[14]हापि प्रसज्येत—अकुर्वेहि अत्र अकुर्वह्यत्रेति ॥**

**(प्रदीपः) यदि पुनरिति** । ह्रस्वसाहचर्यादेकारोऽपि ह्रस्वशब्देनाभिधीयत इति ह्रस्वानामिति बहुवचनम् । त[15]त्रै ह्रस्वनिर्देशेऽणुत्वादाकृतिपक्षे वा यत्नाधिक्याभावादभिन्नकालानां ग्रहणं सिध्यतीत्यर्थः ॥

---

च विच्छिन्नं भाष्ये दृश्यते । तत्र इतीत्यन्तेन लक्ष्यविषयकसूत्रोपन्यासः पूर्वान्वयी । ततः—अत्रेत्यनेन तत्सूत्रपरामर्श इति बोध्यम् ॥ छाया ॥

१ शास्त्रे तत्प्रतिषेधाभावादाह—अप्लुतेति ॥ छाया ॥

२ प्रगृह्यप्लुतेत्यस्य भाविप्रगृह्यसंज्ञकप्लुतप्रतिषेधप्रसङ्ग इति शाब्दोर्थः । तत्फलितमाह—प्रगृह्याश्रय इति ॥ प्लुते कृते तस्यासिद्धत्वाद्दीर्घबुद्धिवत्तद्गतं प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु प्रकृतिवदित्यतिदेशात्तत्वम् । तथाच द्विमात्रस्य श्रवणं स्यात् त्रिमात्रस्य चेष्यत इति भावः ॥ छाया ॥

३ तत्करणे शङ्कते—प्रगृह्याश्रयस्यापीति ॥ अप्लुतवद्भावेन सूत्रस्यैकत्वात्संपूर्णसूत्रस्यैव निवृत्तिः । यद्वा प्रकृतिभावत्वेन तस्यैक्यात्तत्प्रकृतिभावस्यापि प्लुतकार्यत्वान्निवृत्तिः। यद्वा तस्य निषेधेऽपि प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे तस्यापि निवृत्तिस्तथाच दीर्घादिकं स्यादिति भावः ॥ छाया ॥

४ त्वनेनेति । तथाचाद्ययोः सूत्रभेदेन तथादुर्वचम् । अन्त्ये शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वेन तथा दुर्वचमिति भावः ॥ तथाच 'अन्येन' इतिग्रन्थो व्यवहितशेषो नाव्यवहितशेषः ॥ वस्तुतस्तु—अव्यवहितशेषतयापि स्वरसतया तथा प्रतीयमानः सुयोजः । तथाहि प्लुतो द्विविधः—शुद्धः प्रगृह्यत्वविशिष्टश्च । अत्र शुद्धस्थले एव तथा स्याद्वेतरभावेऽत आह—अन्येनेति । प्रतिलक्ष्यं लक्षणभेदेन तत्रापि तद्विषयकशास्त्रेण विहितत्वादित्यर्थः ॥ यद्वा—इतरधर्मानाक्रान्तत्वविशिष्टतद्रूपस्यानुद्देश्यतावच्छेदकत्वेन प्लुतत्वमात्रस्योद्देश्यतावच्छेदकत्वेन तदन्येन रूपेण विहितत्वादित्यर्थः इति बोध्यम् ॥ छाया ॥

५ पूर्वपक्ष्येव तटस्थेन करणीयां शङ्कां स्वयमेव संभाव्य निराकरोति—यदि पुनरिति ॥

६ अतपराणामिति विशेषणं व्यर्थमिति शङ्कते—नन्विति ॥ सवर्णान्गृह्णीयादिति यथाश्रुतभाष्यासंगतेराह—अयं भाव इति ॥ छाया ॥

७ ह्रस्वांशे दृष्टान्तमाह—यथेति ॥ छाया ॥

८ तपरत्वाभाव इति । एवं चात्र पक्षे तपरत्वस्याफलत्वाद् 'अतपराणाम्' इति भाष्ये न विशेषणपरं किं तु सामान्ये विवक्षापरमिति भावः ॥ छाया ॥

९ ननु जातिपक्षेऽपि प्रकृते व्यापकजातिनिर्देशस्य दुर्वचत्वेन व्याप्यजातेर्भिन्नत्वेन कथं प्लुतसंग्रहः किमर्थं चोक्तरीत्या ह्रस्ववारणमत आह—ईत्वादीति ॥ दीर्घमात्रसमवेतेत्वादिह्रस्वसमवेतेत्वाद्यनतिरिक्तमित्यर्थः॥छाया॥

१० मन्यत इतिसूचितामरुचिमाह—भिन्नेति ॥ एवं चास्मिन्पक्षेऽप्यनिष्टमेवेति भावः ॥ छाया ॥

११ नन्वेवमेकार एवेत्यस्य का गतिरत आह—एत्वेति । तेन एकारेण ॥ उक्तयुक्त्यभावमप्याह—तत इति ॥ छाया ॥

१२ उक्तप्रकारेण वारणे तात्पर्यमाह—जातीति ॥ छाया ॥

१३ पूर्वपक्ष्येव पुनरन्यामपि तटस्थकरणीयां शङ्कां संभाव्य निराचष्टे—यदि पुनर्ह्रस्वेति ॥

१४ इकारांशमात्रे दोषमाह—इहापीति ॥ छाया ॥

१५ तत्रेति । तस्मिन्नतपरे ह्रस्वनिर्देश इत्यर्थः ॥ तपरत्वे त्वग्नी वायू इत्यादौ न स्यादिति भावः ॥ छाया ॥

( आक्षेपोपसंहारभाष्यम् )

**[1]तस्माद्दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या । दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति ॥**

(उद्द्योतः) भाष्ये तस्माद्दीर्घाणामेव तपराणामिति । [2]गुणान्तरयुक्तसङ्ग्रहायासन्देहाय चेत्यर्थः ॥

( समाधानभाष्यम् )

**[3]एवं तर्हि किं न एतेन यत्नेन—यत्—'सिद्धः प्लुतः स्वरसंधिषु' इति । असिद्धः प्लुतः । तस्यासिद्धत्वात्तत्काला एव भवन्तीति ॥**

( आक्षेपभाष्यम् )

**[4]कथं यत्तज्ज्ञापकमुक्तम्—"प्लुतप्रगृह्या अचि" इति ? ॥**

( समाधानभाष्यम् )

**[5]प्लुतभावी प्रकृत्येत्येवमेतद्विज्ञायते ॥**

(प्रदीपः) प्लुतभावीति । प्लुतो भावी यस्य सः प्लुतभावी स्थानी प्रकृतस्तस्यैव प्रकृतिभावः ॥ ननु प्लुतस्यासिद्धत्वात्स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते ॥ नैष [6]दोषः । प्लुतो ह्यस्य भावीति बुद्ध्या प्रकल्पनमेतत् । न च तत्र प्लुतस्यासिद्धत्वम् अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात् ॥

(उद्द्योतः) कर्मधारयभ्रमं व्युदस्यति—प्लुतो भावीति ॥ यद्यप्याश्रयात्सिद्धत्वेनापि सिध्यति; तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः ॥ प्रकृत इति । [7]प्लुतशब्देन बोधित इत्यर्थः ॥ बुद्ध्येति । शास्त्रीये कार्येऽसिद्धत्वम्, नर्चायं व्यवहारः शास्त्रीयं कार्यमिति भावः ॥

( आक्षेपभाष्यम् )

**[9]कथं यत्तत्प्रयोजनमुक्तम् ? ।**

( समाधानभाष्यम् )

**[10]क्रियते तन्न्यास एव—"अप्लुतादप्लुते" इति ॥**

( आक्षेपभाष्यम् )

**[11]एवमपि यत्सिद्धे प्रगृह्यकार्यं तत्प्लुतस्य न प्राप्नोति—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

(प्रदीपः) कार्यकालपक्षमाश्रित्याह—एवमपीति । [12]ततैश्चाग्नी ३ इत्यत्राप्रगृह्यस्येत्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात्प्रगृह्यत्वाभावादनुनासिकः स्यात् ॥

(उद्द्योतः) कार्यकालपक्षमाश्रित्येति । अयं भावः—[13]तत्र पक्षे संज्ञाशास्त्राणां न पृथग्बोधकत्वम् । पूर्वत्रासिद्धमिति चातिदेशः कार्यार्थः । कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किं च पूर्वत्रासिद्धमित्यस्याधिकारत्वेन पूर्वत्रेदमसिद्धमिति तदर्थः । तत्र कार्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभाषाणामप्यसिद्धत्वबोधनम् । एवं च प्लुतदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यास्यापि तद्दृष्ट्याऽसिद्धत्वेन प्लुतशास्त्रेऽनुवृत्तपूर्वत्रासिद्धमित्यत्र पूर्वग्रहणेन ईदूदेद्, अदसोमादित्यस्य ग्रहीतुमशक्यत्वमिति ॥ [14]यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्यबोधकत्वात्तत्प्रति प्लुतासिद्धत्वबोधनं शक्यमेव ॥ एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वाक्षतिरित्यपास्तम् ॥ भाष्ये—यत्सिद्धे प्रगृह्येति । [15]प्लुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्यमित्यर्थः । यत्प्रगृह्यकार्यदृष्ट्या प्लुतः सिद्धस्तदिति यावत् ॥

( समाधानभाष्यम् )

**[16]एवं तर्हि किं न एतेन यत्नेन—'कार्यकालं संज्ञापरिभाषम्' इति । यथोद्देशमेव संज्ञापरिभाषम् । अत्र चासावसिद्धः । तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

(प्रदीपः) यथोद्देशपक्षाश्रयेण परिहारः—कथं पुनरयं पक्षो यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्या-

---

१ पूर्वपक्षी स्वाक्षेपमुपसंहरति—तस्मादिति ॥

२ दीर्घफलस्योक्तत्वात्तपरत्वफलमाह—गुणान्तरेति ॥ अभेदकत्वेनाकृतिपक्षेण वास्य सिद्धत्वादाह—असंदेहाय चेति ॥ छाया ॥

३ एवं पूर्वपक्षिणा तटस्थे मूकीकृते भगवान् सिद्धान्ती समाधत्ते—एवंतर्हीति ॥

४ तटस्थः पूर्वपक्षिदर्शितस्य ज्ञापकस्य तर्हि कथं चारितार्थ्यमिति पृच्छति—कथं यत्तज्ज्ञापकमिति ॥ यज्ज्ञापकमुक्तं प्लुतप्रगृह्या अचीति तत्कथमित्यर्थः ॥

५ सिद्धान्ती तस्य वैयर्थ्याभावं दर्शयति—प्लुतभेति ॥

६ नैष दोष इति ॥ यत इति शेषः ॥ न चेति । नहीत्यर्थः ॥ तत्र बौद्धे प्रकल्पने ॥ छाया ॥

७ अप्रकृतस्य कस्यचिदभावेन प्रकृत इति व्यर्थमतआह—प्लुतेति ॥ छाया ॥

८ अयं व्यवहार इति । शास्त्रीयव्यवहार इत्यर्थः ॥ छाया ॥

९ [तटस्थः पूर्वपक्ष्युक्तप्रयोजनस्य का गतिरितिपृच्छति—]कथं यत्तत्प्रयोजनमिति ॥ यत्प्रयोजनमुक्तं तत्कथमित्यर्थः ॥ छाया ॥

१० सिद्धान्ती लाघवं प्रयोजनं परिहरति—क्रियते इति ॥

११ तटस्थः आक्षिपति—एवमपीति । पूर्वपक्ष्युक्तज्ञापकप्रयोजननिराकरणेऽपीत्यर्थः ॥

१२ इष्टापत्तौ दोषमाह—ततश्चेति ॥ ननु संज्ञायाः कार्यार्थत्वादनुनासिकस्य च प्रगृह्याकार्यत्वात्कथं संज्ञोपस्थितिरत आह—प्रतिषेधे इति । तथाच न पर्युदासः किंतु प्रसज्यप्रतिषेध इति भावः ॥ छाया ॥

१३ तत्र कार्यकालपक्षे ॥ परिभाषातो विशेषमाह—संज्ञेति ॥ पृथगिति । स्वदेशे इत्यर्थः ॥ कत्वमिति ॥ किंतु प्रदेशवाक्येन सहैव वाक्यैकवाक्यतयेति शेषः ॥ तदेवोपपादयति—पूर्वत्रेति । तत्र । तथासति ॥ अस्यापि प्रगृह्यसंज्ञाशास्त्रस्यापि ॥ इतिर्भावसमाप्तौ ॥ छाया ॥

१४ परिहारीयमत्रैव प्रतिपादयन्नतदाश्रयणे बीजमाह—यथोद्देशेत्विति ॥ कार्यैति संज्ञादिरूपकार्यैरित्यर्थः ॥ एवं व्याख्याने—फलमाह—एतेनेति ॥ उक्तप्रकारेणेत्यर्थः ॥ छाया ॥

१५ भाष्ये 'सिद्धे' इति सत्सप्तमीत्याह—प्लुते इति ॥ यदित्यस्य व्यवहितान्वय इति भावः ॥ प्रत्यासत्त्या प्लुतस्यैव ग्रहणमिति वार्तिककृदुक्तसिद्धकाण्डभ्रमनिरासायाह—यत्प्रेति ॥ छाया ॥

१६ सिद्धान्ती समाधत्ते—एवं तर्हीति ॥

ख्या ॥ नैष दोषः । यदाऽनुद्दिश्य प्रयोजनविशेषं [1]प्रयोजनमात्रमभिसन्धाय भविष्यति किंचिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते, तदा संभवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपन्नपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपन्नपेक्षस्तु कार्यकालपक्षः ॥

(उद्योतः) यथोद्देशेति ॥ [2]नन्वत्र पक्षेऽग्नी ३ इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षेऽनुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावादल्विधित्वेन स्थानिवत्त्वाभावाच्चाप्रगृह्यत्वेनानुनासिकः स्यादिति चेन्न । संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजस्य सत्त्वेन पुनस्तस्याः सुलभ[3]त्वात् । एतदेव ध्वनयता प्लुतस्यासिद्धत्वात्तत्काला एव भवन्तीत्येवकारः प्रयुक्तः । प्लुतात्प्राक् संज्ञायां च तत्काला एवेति तदर्थ इत्यलम् ॥ प्रणीयते बोध्यते ॥

( इति तपरप्रयोजननिरूपणम् )

———>०<———

( अथ द्विवचनविशेषणताविचारभाष्यम् )

**कथं पुनरिदं विज्ञायते—ईदादयो यद् द्विवचनम्, आहो स्विदीदाद्यन्तं यद्द्विवचनमिति ॥**

(प्रदीपः) **कथं पुनरिति** । ईदादयो यदि संज्ञिनस्तद्विशेषणं तु द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न संभवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम् । अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येतीर्दाद्यन्तं द्विवचनमिति पक्षः ॥ तत्रोभयोरपि पक्षयोर्दोषदर्शनात्प्रश्नः ॥

(उद्योतः) [4]ईदादय इति । प्राथम्याददसोमादित्यनेनैकरूप्याच्चेति भावः ॥ तदेति । [5]अन्तशब्दोऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः ॥ अथेति । संज्ञाया आनन्तर्याद्येन विधिरित्यस्यानुग्रहाच्चेति भावः ॥

( विशेषजिज्ञासाभाष्यम् )

**[6]कश्चात्र विशेषः ? ।**

( १५० प्रथमपक्षे दोषप्रदर्शकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः ॥ * ॥**

( भाष्यम् )

**ईदाद[7]यो द्विवचनं प्रगृह्या इति चेद् अन्त्यस्य प्रगृह्यसंज्ञा विधेया–पचेते इति, पचेथे इति ॥**

(प्रदीपः) **पचेते इति** । एकारोऽत्र द्विवचनं न भवति, अपि तु तस्यान्तः ॥

(उद्योतः) भाष्ये अन्त्यस्येति । द्विवचनान्त्यस्य वर्णस्येत्यर्थः ॥

( दूषणबाधकभाष्यम् )

**[8]वचनाद्भविष्यति ॥**

(प्रदीपः) **वचनादिति** । द्वि[9]वचनावयवे द्विवचनशब्दो वर्तिष्यत इत्यर्थः ॥

( दूषणसाधकभाष्यम् )

**[10]अस्ति वचने प्रयोजनम् ॥**

**किम् ? ।**

**खट्वे इति, माले इति ॥**

(प्रदीपः) **अस्तीति** । मुख्ये संभवति गौणस्य ग्रहणमन्याय्यमित्यर्थः ॥ **खट्वे इतीति** । **अन्तादिवच्चे**त्यादिवद्भावादेकारो द्विवचनम् ॥

(उद्योतः) **गौणस्येति** । [11]जघन्यत्वसामान्याल्लाक्षणिकमपि गौणपदेन गृह्यत इति भावः ॥

( दूषणबाधकद्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि—ईदाद्यन्तं यद्द्विवचनम्–इति ।**

( १५१ द्वितीयपक्षे दूषणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ ईदाद्यन्तमिति चेदेकस्य विधिः ॥ * ॥**

( भाष्यम् )

**ईदाद्यन्तं द्विवचनमिति चेदेकस्य प्रगृह्यसंज्ञा विधेया–खट्वे इति, माले इति ॥**

---

१ अनुद्दिश्येत्यस्यैव व्याख्या प्रयोजनमात्रमिति ॥ अनभिसंधाने कारणमाह—भवीति ॥ तथाच प्रतिपत्तृभेदेन पक्षद्वयोपपत्तिरिति भावः ॥ एवं च मुख्यत्वं कार्यकालस्य गौणत्वं यथोद्देशस्य ॥ छाया ॥

२ मिश्रोक्तिं खण्डयति—नन्विति ॥ प्लुतस्य तच्छास्त्रस्य ॥ तमिति ॥ प्रागुक्तरीत्येति भावः ॥ बीजेति ॥ कार्यनिरपेक्षतया तद्रूपस्य उक्तरीत्या सामर्थ्यरूपस्य च बीजस्याभावादित्यर्थः ॥ लक्ष्ये लक्षणस्येति न्यायाच्चेत्यपि बोध्यम् ॥ छाया ॥

३ सुलभेति । लक्ष्ये लक्षणमित्यपि संजातकार्यविषयकमिति बोध्यम् ॥ अत्र मानमाह—एतदेवेति ॥ एवेन फलान्तरव्यवच्छेदः ॥ यत्ता भगवता ॥ इदमेवाभिप्रेत्य 'भविष्यति किंचित्' इति कैयटेनोक्तम् ॥ वस्तुतो नैवं यथोद्देशपक्षस्वरूपम् । किं त्वन्यादृशम् । तत्तु केचिदित्यादिना परिभाषेन्दुशेखरे व्यक्तमिति बोध्यम् ॥ तदाह—इत्यलमिति ॥ छाया ॥

४ अशाब्दत्वनिरासाय वचनसामर्थ्याल्लब्धमर्थमाह—ईदाद्यन्तमिति ॥ तत्र तयोः ॥ छाया ॥

५ नन्वन्तशब्दस्य समीपवचनत्वे तदन्तस्यैव द्विवचनान्तत्वसंभवोऽस्त्येवेत्याह—अन्तेति ॥ छाया ॥

६ तटस्थः पृच्छति—कश्चात्रेति ॥

७ पूर्वपक्षी समाधत्ते—ईदादय इति ॥

८ तटस्थ आक्षेपं निराकरोति—वचनादिति ॥

९ द्विवचनावयव इति । तदन्त्य इत्यर्थः । सामर्थ्याल्लक्षणेति भावः ॥ ॥ छाया ॥

१० पूर्वपक्षी स्थापयति—अस्तीति ॥

११ गौणपदासंगतिं परिहरति—जघन्येति॥प्रकृत इति शेषः ॥ तथाच न तन्न्यायसंचारोऽपि तु मुख्यार्थबाधरूपलक्षणाबीजाभावान्न लक्षणेति तात्पर्यम् ॥ ॥ छाया ॥

(प्रदीपः) **एकस्येति** । असहायस्येत्यर्थः । [1]ईदूतोः केवलयोरेव संभव इति वचनसामर्थ्यात्तयोरेव सिध्यति, एकारान्तस्य तु द्विवचनस्य पचेते इत्यादौ संभवात्खट्वे इत्यत्र न सिध्यतीति दोषः ॥ **येन विधिस्तदन्तस्येत्यत्र स्वस्य च रूपस्येति** नाश्रितमिति दोषोपन्यासः ॥

(उद्योतः) प्रथमोपस्थितेदूत्परित्यागेन एकारान्तोदाहरणदाने बीजमाह—**ईदूतोरिति** ॥ **नाश्रितमिति**। [2]वार्तिककृतेति शेषः ॥

( १५२ द्वितीयपक्षे समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ न वाद्यन्तवत्त्वात् ॥ * ॥

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ? ॥**

**आद्यन्तवत्त्वात् । आद्यन्तवदेकस्मिन्कार्यं भवतीत्येवमेकस्यापि भविष्यति ॥**

( पक्षान्तराभ्युपगमभाष्यम् )

**अथवा एवं वक्ष्यामि—ईदाद्यन्तं यद्विवचनान्तम्-इति ।**

(प्रदीपः) **अथवेति । प्रत्ययग्रहणे यस्मादिति** द्विवचनेन तदन्तविधिः, पश्चाद्द्विवचनान्तमीदादिभिर्विशेष्यत इत्ययं तृतीयः पक्षो भवति—**ईदाद्यन्तं यद्द्विवचनान्तमिति** ॥ नन्तु संज्ञाविधौ प्रत्ययग्रहणेन तदन्तविध्यभावः **सुप्तिङन्तं पदमि**त्यत्रान्तग्रहणेन ज्ञापित इति कथमेतत्पक्षोपपत्तिः । [3]चतुर्थपक्षप्रतिक्षेपाय वक्ष्यत्येवैतद्भाष्यकार इति नैतदपूर्वं चोद्यम् ॥

(उद्योतः) **तदन्तविधिरिति** । [4]अस्मादेव वचनाच्छब्दस्वरूपं विशेष्यमादायेति भावः ॥ **इत्ययं तृतीयः पक्ष इति** । [5]व्यपदेशिवद्भावानाश्रयणमस्य बीजम् ॥

( १५३ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधः ॥ * ॥

( भाष्यम् )

**ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधो वक्तव्यः । कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । एतद्धीदाद्यन्तं श्रूयते, द्विवचनान्तं च भवति प्रत्ययलक्षणेन ॥**

(प्रदीपः) [6]दोषान्तरेणेमं पक्षं निराकर्तुमाह—**लुकि प्रतिषेध इति** । दोषसद्भावेनैवास्य पक्षस्य निराकरणात्तदन्तविध्यभावोत्र नोक्तः । **कुमार्यगारमिति** ॥ कथं पुनरस्य द्विवचनान्तस्य समासो, यावता वृत्तौ [7]संख्याविशेषो न गम्यते ॥ नैष दोषः । यथा तावकीन इत्यादावादेशेन संख्याविशेषो व्यज्यते तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यासः ॥

(उद्योतः) **तदन्तविध्यभावोऽत्र नोक्त इति** । [8]ईदादिभिः श्रूयमाणत्वेन द्विवचनविशेषणमेव न्याय्यमित्येतत्पक्षासंभवरूपो दोषो नोक्त इत्यपि बोध्यम् ॥ **आदेशेनेति** । एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः ॥ **प्रकृतिभावेनेति** । [9]अन्यथाऽनुपपद्यमानेनेत्यर्थः । [10]एवं हि सिद्धान्ते प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य प्रयोगस्यासाधुत्वापत्तिः । असाधुप्रयोगे च भगवतोऽश्रद्धेयतापत्तिः । अतः पूर्वपदार्थतावच्छेदकरूपेणैव बोधो न तु सङ्ख्यावत्त्वेनेत्येव भाष्यसंमतम् । अतो वृत्तौ सङ्ख्यानवगमेऽप्यनेकार्थप्रतीत्या तथाविग्रहे बाधकाभाव इति बोध्यम् ॥

( १५४ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ [11]सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ॥ * ॥

( भाष्यम् )

**यदयम् "ईदूतौ च सप्तम्यर्थे" इत्यर्थग्रहणं क-**

---

१ ईदूतोरितीति । तथाचैतद्विधिबाध इति भावः ॥ छाया ॥

२ ननु सिद्धान्तिनाश्रितत्वादिदमयुक्तमत आह—वार्तिकेति ॥ तदेकदेशिनेत्यर्थः ॥ इदमपि सूत्ररीत्या बोध्यम् । तथाच तद्रीत्याऽयं ग्रन्थः । वार्तिककृतापि तस्य चेत्युक्तम् ॥ छाया ॥

३ चतुर्थेति ॥ पूर्वं मिथो विशेषणविशेष्यभावानाश्रयणेन समुदाये उभयोर्विशेषणत्वे जाते तदाश्रयेण स्वरूपभेदस्य सत्त्वेन 'विशेषयिष्यामः' इत्याद्युक्तिस्वारस्येन च 'अथवा' इत्यादिप्रतिज्ञाया अभावेऽपि तस्य चतुर्थपक्षत्वमित्यर्थः ॥ छाया ॥

४ यत्तु 'प्रत्ययग्रहणे- इत्यस्य 'यस्माद्–' इति योगविभागसाधितत्वेन तदन्तपदशून्यत्वेन तत्सत्त्वेऽपि 'प्रत्ययग्रहणं चापञ्चम्याः' इति तदन्तविधिफलप्रदर्शकवार्तिकेन 'स्त्रीप्रत्यये च' इति निषेधेन च तस्यास्तदादिनियमपरताया एव स्वीकार्यत्वाच्च चिन्त्योऽयं कैयट इति ॥ तन्न । अर्थानवबोधात् । यथाचैतत्तथोक्तं परिभाषेन्दुशेखरे तद् ध्वनयन्नाह—अस्मादिति॥ अन्तरङ्गत्वादिति भावः ॥ शब्दानुशासनप्रस्तावादाह—शब्देति ॥ छाया ॥

५ ननु द्वितीयस्य निर्दुष्टत्वे सति किमिति तृतीयपक्षाश्रयणमित्यत आह—व्यपदेशीति ॥ आनन्तर्येण तथैव स्वरसतो लाभादिति भावः ॥ छाया ॥

६ दोषान्तरेणेति ॥ साधारणं विहायोक्तेनासाधारणेन पूर्वोक्तपक्षद्वयदोषान्यदोषेणेत्यर्थः ॥ इममिति । समाधिना व्यवधानाभावेनाज्ञातज्ञापनरूपविधानाभावेनान्वादेशत्वाभावादेनादेशो न ॥ दोषेति । लक्ष्यासिद्धिरूपदोषेत्यर्थः ॥ छाया ॥

७ संख्याविशेष इति । एकत्वादीत्यर्थः ॥ न चैवमेकवचनान्तेनापि समासो न स्यादिति वाच्यम् । एकवचनस्यैकत्वाभावेऽपि प्रवृत्तेः सर्वसंमतत्वात् ॥ ॥ छाया ॥

८ न्यूनतां निराचष्टे—ईदादिभिरिति ॥ श्रुतस्य श्रुतेनैव संबन्धस्य न्याय्यत्वाद् ॥ द्विवचनेति । द्विवचनस्य विशेष्यीकरणमेवेत्यर्थः ॥ छाया ॥

९ अन्यथा द्विवचनान्तसमासं विना ॥ छाया ॥

१० प्रदीपे दोषमाह—एवं हीति ॥ छाया ॥

११ उक्तदोषमुद्धरति—सप्तम्यामिति । तद्घटितसूत्रे इत्यर्थः ॥ प्रत्ययेति । नियमशास्त्राणां विधिरूपेण प्रवृत्तेरिति भावः ॥ छाया ॥

रोति, तज्ज्ञापयत्याचार्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति ॥

(प्रदीपः) सप्तम्यामिति । ईदूतौ सप्तमीत्येव तदन्तविधौ सति प्रत्ययलक्षणेन सोमो गौरी अधिश्रित इत्यादौ सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति–[1]प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवतीति ॥

( आक्षेपभाष्यम् )

**तत्तर्हि ज्ञापकार्थमर्थग्रहणं कर्तव्यम् ॥**

(प्रदीपः) तत्तर्हीति । आद्यन्तवद्भावानाश्रयणाय तृतीयः पक्षः परिगृहीतः । तत्रै[2] च दोषप्रतिविधानार्थमधिकमर्थग्रहणं ज्ञापकार्थं कर्तव्यं भवतीति सुतरां गौरवं भवतीत्यर्थः ॥

(उद्योतः) सुतरामिति । अकरणात्करणं गुरु, तस्य च ज्ञापकत्वेनाश्रयणमिति सुतरां गौरवमित्यर्थः ॥

( समाधानभाष्यम् )

**न[3] कर्तव्यम् । ईदादिभिर्द्विवचनं विशेषयिष्यामः, ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति—ईदाद्यन्तं यद्द्विवचनं तदन्तमीदाद्यन्तम्—इति ॥**

(प्रदीपः) ईदादिभिरिति । अत्र पक्षे कुमार्यगारमित्यत्राप्रसङ्गः । न ह्यत्रेदूदेदन्तं द्विवचनम्, किं तर्हि? ओसिति सकारान्तम् ॥ तदन्तमिति द्विवचनान्तम् ॥ ईदाद्यन्तमिति । ईदादिभिः साक्षात्समुदायस्य संबन्धाभावादीदादिशब्देनेदाद्यन्तमुच्यते तेनेदाद्यन्तान्तमित्यर्थः ॥

(उद्योतः) ईदादिभिरिति । भाष्ये श्रुतस्य[4] श्रुतेन संबन्धो न्याय्य इति भावः ॥ साक्षात् द्विवचनमनपेक्ष्य ॥ समुदायस्य प्रत्ययान्तस्य ॥

( आक्षेपभाष्यम् )

**ए[5]वमप्यशुक्ले वस्त्रे शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्र प्राप्नोति । अत्र हीदादि च द्विवचनं तदन्तं च भवति प्रत्ययलक्षणेन ॥**

(प्रदीपः) शुक्ल्यास्तामिति । शुक्लशब्दाद्द्विवचनमौ तस्य नपुंसकाच्चेति शीभावः ततश्च्विप्रत्ययः । शीशब्दस्य सुप इति लुक् । अस्य च्वावितीत्वं । तद्धितान्तत्वात्सुप् । तस्याव्ययादिति लुक् । अत्र हि शीशब्द ईकारान्तं द्विवचनम्, तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति ॥ अत्र हीदादि च द्विवचनमिति । ईदादिशब्देनेदाद्यन्तमुच्यते ॥ क्वचित्तु पाठ ईदाद्यन्तं च श्रूयत इति, तत्रैवं व्याख्येयम्—ईदाद्यन्तं च श्रूयते सूत्रे तदन्तविधिरीदादिमिद्विवचनस्याश्रीयत इत्यर्थः । यस्त्वयमस्य च्वावितीकारः, स[6] द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम् ॥

(उद्योतः) नन्वत्र पक्षे न द्विवचनेनेदादि विशेष्यत इति कथमीदादि च द्विवचनमितीत्यत आह—ईदादीति । तदन्तत्वं चा[7]स्य व्यपदेशिवद्भावेन बोध्यम् ॥ श्रूयते सूत्रे इति । य[8]च्छ्रूयते सूत्रे द्विवचनं तदीदाद्यन्तमिति भाष्ये योजनेत्याशयः ॥

( समाधानभाष्यम् )

**अ[9]त्राप्यकृते शीभावे लुग्भविष्यति ॥**

( आक्षेपसाधकभाष्यम् )

**इद[10]मिह संप्रधार्यं लुक् क्रियतां, शीभाव इति ॥ किमत्र कर्तव्यम्? । परत्वाच्छीभावः ॥**

( समाधानसाधकभाष्यम्)

**नि[11]त्यो लुक् । कृते शीभावे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥**

( आक्षेपसाधकभाष्यम् )

**अनि[12]त्यो लुग् । अन्यस्याकृते शीभावे प्राप्नोत्यन्यस्य कृते । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । शीभावोऽप्यनित्यः । न हि कृते लुकि प्राप्नोति । उभयोरनित्ययोः परत्वाच्छीभावः । शीभावे कृते लुक् ॥**

(उद्योतः) अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेदतुल्यबलत्वात्परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये शीभावोऽप्यनित्य इत्युक्तम् ॥ कृते लुकि तदप्राप्तिस्तु प्रसङ्गरूपपष्ठ्यर्थस्याभावादिति भावः ॥

( आक्षेपदार्ढ्यभाष्यम् )

**अथा[13]पि कथंचिन्नित्यो लुक्स्यात् । ए[14]वमपि**

---

१ प्रगृह्यसंज्ञायामित्यस्य विशेषपरत्वनिरासायाह—प्रगृह्यसंज्ञाप्रकरणेति ॥ तथाच लुकि प्रतिषेधो न वाच्य इति भावः ॥ छाया ॥

२ तत्र च तत्रापि गौरवेऽन्वयः ॥ छाया ॥

३ पक्षान्तरेणोक्तदोषनिरासादुक्तज्ञापनार्थतया तत्र कार्यमित्याह–नेति ॥ अत एव तत्सूत्रस्थभाष्यविरोधो नेति बोध्यम् ॥ तमेव पक्षमाह—ईदादिभिरिति ॥ छाया ॥

४ श्रुतस्येति । 'गुणानां च' इति तु न
'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥'
इति न्यायात् ॥ प्रधानोपकारश्च कुमार्यगारमित्यादौ संज्ञाऽभावः ॥ छाया ॥

५ सिद्धान्ती चतुर्थपक्षमपि निराकरोति—एवमपीति ॥

६ स द्वीति । तस्य प्रकृत्यवयवत्वेन द्विवचनासंबन्धात् ॥ छाया ॥

७ चास्येति । द्विवचनस्येदाद्यन्तत्वं चेत्यर्थः ॥ छाया ॥

८ श्रूयते इत्यग्रे द्विवचनमित्यादि च तत्र पाठः । 'सूत्रे' इत्यार्थिकमित्याह—यदिति ॥ छाया ॥

९ तत्र शङ्कते [तत्पक्षवादी समाधत्ते—]अत्राप्येति ॥ एवं च प्रत्ययलक्षणेऽपि न तदन्ततेति भावः ॥ छाया ॥

१० समाधत्ते—[सिद्धान्ती निराकरोति—]इदमिहेति ॥ छाया ॥

११ तत्पक्षवादी समाधत्ते—नित्यो लुगिति ॥

१२ सिद्धान्ती निराकरोति—अनित्यो लुगिति ॥

१३ तत्पक्षवादी शङ्कते—अथापीति ॥

१४ तृतीयपक्षसाधारणं दोषमाह—एवमपीति ॥ छाया ॥

दोषः, ॥ वक्ष्यत्येतत्, *पदसंज्ञायामन्तग्रहणमन्यत्र[1] संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम्* इति । इदं चापि प्रत्ययग्रहणम् । अयं चापि संज्ञाविधिः ॥ [2]अवश्यं खल्वस्मिन्नपि पक्षे आद्यन्तवद्भाव एषितव्यः ॥ तस्मादस्तु स[3] एव मध्यमः पक्षः ॥ ईदूदेत् ॥ ११ ॥

(प्रदीपः) अथापि कथंचिदिति । [4]स्थानिविशेषानपेक्षायां कृताकृतप्रसङ्गित्वेन लुक्शास्त्रस्य प्रवर्तनादित्यर्थः ॥ अथवा नित्यत्वेन बाधकत्वं लक्ष्यते तेनान्तरङ्गानपीति न्यायेन शीभावस्य लुग् बाधक इत्यर्थः ॥ एवमपि दोष इति । [5]पक्षस्योत्थानमेव नास्तीति तत्पक्षासंभव एव दोषः ॥ अवश्यमिति । [6]यदाश्रयणभयादयं पक्षोऽङ्गीकृतस्तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षेऽवश्यमाश्रयणमङ्गीकृतम् । अम्नी इत्यत्र हीकार एव द्विवचनं न त्वीकारान्तम् ॥ तस्मादिति । द्वितीय एव पक्षोऽस्त्वित्यर्थः ॥ मणीवादीनां प्रतिषेधो वक्तव्य इति भाष्यवार्तिककाराभ्यामपठितत्वादप्रमाणमेतत् ॥ मणीवोष्ट्रस्येति तु प्रयोगो वाशब्दस्योपमानार्थस्य । रोदसीवेत्यादिषु च्छान्दसः प्रयोगः । छन्दसि तु सर्वे विधयो विकल्प्यन्ते ॥११

(उद्द्योतः) अम्नी इतीति । खट्वे इत्यस्याप्युपलक्षणमेतत् ॥ द्वितीय इति । प्रत्ययांशे तदन्तविधिसत्त्वेन पक्षद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम् ॥ एतदिति । वृत्तिकारोक्तमित्यर्थः ॥

( ११ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. २ ॥ )

## अदसो मात् ॥ १ । १ । १२ ॥

( मूत्वमीत्वयोरसिद्धत्वनिराकरणाधिकरणम् )

( १५५ आक्षेपवार्तिकम् ॥ )

### ॥ * ॥ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ॥ * ॥

( भाष्यम् )

मात्प्रगृह्यसंज्ञायां तस्य ईत्वस्य ऊत्वस्य चासिद्धत्वादयावेकादेशाः प्राप्नुवन्ति, तेषां प्रतिषेधो वक्तव्यः । अमी अत्र, अमू अत्र, अमी आसते, अमू आसाते ॥

(प्रदीपः) अदसो मात् ॥ १२ ॥ मात्प्रगृह्येति ॥ अस्मिन्सूत्रन्यास इत्यर्थः ॥ ऊत्वस्य चेति । चशब्दान्मत्वस्य च । शास्त्रस्यासिद्धत्वाच्च स्थानिलक्षणमेव कार्यं प्राप्नोति, नादेशलक्षणमित्ययादिप्रसङ्गः ॥ अमी आसाते इत्ययादेशः प्राप्नोति अमू आसाते इत्यावादेशः । अमी अत्रेत्यत्र एकादेशः ॥ ननु च द्विपदाश्रयत्वाद्बहिरङ्गा अयादयोऽन्तरङ्गेष्वीत्त्वादिष्वसिद्धा इति पूर्वाभावे कथं पूर्वत्रासिद्धमितीत्त्वादीनामसिद्धत्वं स्यात् ॥ नैष दोषः । नाजानन्तर्ये इति बहिरङ्गपरिभाषानिषेधात् ॥

(उद्द्योतः) अदसो मात् ॥ १२ ॥ अस्मिन्निति । मात्पदघटिते इत्यर्थः ॥ यदि तु अदसो दादित्युच्यते, तात्परश्चे पूर्वोत्तरसाहचर्यादवर्णभिन्नोऽज् औकारैकाररूप एव, तदा न स्याद्दोष इति भावः ॥ इदमेव ध्वनयितुम् 'अदसः प्रगृह्यसंज्ञायाम्' इति नोक्तम् ॥ नन्वीत्त्वोत्त्वयोरसिद्धत्वेऽपि अदसोमादित्यत्रेदूदिति निवर्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वान्नायादिप्रसङ्गोऽत आह—चशब्दान्मत्वस्येति । एवं चैदौतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः ॥ नन्वीत्त्वादीनामसिद्धत्वेऽपि तन्निवर्तितौकाराद्य[11]भावेन कथमयादिप्राप्तिः । किं चायादीन्प्रत्यसिद्धत्वेऽपि प्रगृह्यसंज्ञायामाश्रयात्सिद्धत्वेन तत्संज्ञायां तत्सामर्थ्यान्नायादयोऽत आह—शास्त्रेति ॥ नादेशलक्षणमिति । प्रकृतिभाव इत्यर्थः । [12]प्रगृह्यत्वं त्वनुनासिकपर्युदासेन चरितार्थमिति भावः ॥ एकादेशः । एङः पदान्तादतीति ॥ नाजानन्तर्ये इति । उत्तरकालप्रवृत्तिके [13]अयादावजानन्तर्यांश इति ॥ यदि त्वेतद्भाष्यबलात्तस्य परिष्कारकत्वमेवोच्यते तदा यथाश्रुतमेव सम्यगिति बोध्यम् ॥ छाया ॥

---

१ अन्यत्रेति । ज्ञापनफलाशयेन ॥ ज्ञाप्यांशस्तु संज्ञाविधावित्यादिरेव ॥ छाया ॥

२ द्वितीयपक्षसमर्थनाय तत्साधारणं दोषमाह—अवश्यमिति ॥ अस्मिन्निति चतुर्थे इत्यर्थः । अपिना द्वितीयसमुच्चयः ॥ छाया ॥

३ स एव आद्यन्तवद्भाववानेव ॥ तत्त्वस्य चतुर्थेपि सत्त्वादाह—मध्यम इति ॥ छाया ॥

४ 'क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता' इति न्यायार्थमाह—स्थानीति । अस्य क्वाचित्कत्वादेव कथंचिदित्युक्तं भाष्ये । कथंचिदित्यस्य प्रकारान्तरेणेत्यर्थाशयेनाह—अथवेति । नित्यत्वेन तद्बोधकेन ॥ छाया ॥

५ तदाशयमाह—पक्षेति ॥ इति हेतौ तेन हेत्वन्तरनिरासः ॥ एवेन लक्ष्यासिद्धिरूपदोषस्य प्रागुक्तस्य निरासः ॥ छाया ॥

६ यदेति । तृतीयपक्षदोषनिरासाय द्वितीयस्यादरे यदाश्रयणभयं तस्मादित्यर्थः ॥ अयं चतुर्थः ॥ छाया ॥

७ वस्तुतस्तु व्याख्यानेनैव विकल्पार्थपदे स्वरितत्वाभावावगत्या इकोयणचीत्यादाविव द्वैधासाधकत्वस्य निर्णये सूत्रेषु क्वचित् क्वचित् नित्यशब्दोपादानसामर्थ्यात्सूत्रेषु नित्यशब्दस्याभीक्ष्ण्यपर्यायतयां प्रायःपर्यायबाहुल्यसमानार्थत्वमेवेति पस्पशायां सूत्रकृत्संमतेः सिद्धान्तितत्वेन न क्वापि दोष इति बोध्यम् ॥ दाधिमथाः ॥

८ ननु मध्यमत्वस्योभयमात्रनिरूपितत्वेन कथं तदुक्तिरत आह—

९ मूत्वमीत्वयोरन्तरङ्गत्वेन बलीयस्त्वम्, 'अन्तरङ्गं बलीयः' इति न्यायात् । नाजानन्तर्य इति निषेधस्तु 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यस्या एव न तूदाहृतपरिभाषायाः । यद्यपि 'असिद्धं बहिरङ्गमन्तरङ्ग' इत्यनयैव गतार्थत्वादन्तरङ्गं बलवदिति पृथक्परिभाषा न कर्तव्येति विप्रतिषेधे परमिति सूत्रे भाष्यकृद्वक्ष्यति । तथाप्यभ्युच्चयमात्रं तत् । अन्तरङ्गपरिभाषाया निरपवादत्वाद् असिद्धपरिभाषायास्तु नाजानन्तर्य इति सापवादत्वादुभयोरावश्यकत्वात् इति भागवृत्तिकाराः । कैयटलघुविवरणकारादयोऽप्येवम् ॥ बृहद्विवरणकारास्तु नाजानन्तर्ये इति परिभाषा मास्तु । तज्ज्ञापकतया यत्संमतम्, तेनासिद्धपरिभाषाया अनित्यत्वमेव ज्ञाप्यते इत्याहुः ॥ कथं तर्हि वार्तिककृतोक्तम्—विप्रतिषेधाद्वा—इति ॥ सत्यम् । अत एवापरितोषाद्भाष्यकारेण अथवेति पक्षान्तरमाश्रितमिति दिक् ॥ श. कौ. ॥

१० अनतिप्रसङ्गायाह—दात्परश्चेति । 'ईदूदेत्' 'शे' इति साहचर्यादित्यर्थः ॥ छाया ॥

११ घभावेनेति । देवदत्तहन्तृहतन्यायात् ॥ संज्ञायां कृतायाम् ॥छाया॥

१२ संज्ञावैयर्थ्यं परिहरति—प्रगृह्यत्वमिति ॥ छाया ॥

१३ हरदत्तरीत्याऽयं समाधिरित्याह—अयादाविति ॥ छाया ॥

न्तर्यादिति भावः ॥ त्रैपादिके[1]ऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्ते- र्विसर्जनीयसूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति परे ॥

( आक्षेपबाधकभाष्यम् )

**न[2]नु च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥**

(प्रदीपः) **ननु चेति** । यथोद्देशपक्षे आश्रयात्सिद्धत्वं भविष्यतीत्यर्थः ।

(उद्द्योतः) **यथोद्देशेति** । नन्वाश्रयात्सिद्धत्वेन प्रगृह्यत्वेऽपि मूत्वादेरसिद्धत्वादयादिकं स्यादेवेति चेन्न । ए[3]वमपि संज्ञाशास्त्र- वैयर्थ्यादत्रत्याश्रयणेनायादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात् ॥

( १५५ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ * वचनार्थो हि सिद्धे ॥ * ॥

(भाष्यम् )

**नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ॥**

**य[4]त्सिद्धे प्रगृह्यसंज्ञाकार्यं तदर्थमेतत्स्यात्—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

(प्रदीपः) कार्यकालपक्षमाश्रित्याह—**वचनार्थो हीति** । वचनस्य प्रयोजनमित्यर्थः ॥

(उद्द्योतः) भाष्ये **यत्सिद्धे इति** । न च तत्र पूर्वसूत्रेणैव सिद्धिः । अद्विवचने तदप्रवृत्तेः । पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताङ्गीकाराच्च ॥

( आक्षेपबाधकभाष्यम् )

**नै[5]कं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयाद्—"अणोऽप्रगृह्यस्यानुनासिको यसो न" इति ॥**

(प्रदीपः) **नैकमिति** । अ[6]नेककार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यत इत्यर्थः । अन्यत्तु सूत्रमेकेनापि प्रयुज्यते मुद्गादणित्यादि ॥ **तत्रैवायमिति** । न च तत्रेदूदेद्- ग्रहणं कर्तव्यं माँदिति वा । यस्मादणोऽनुनासिकोऽवसाने विधीयते पूर्वेण णकारेणाण्ग्रहणमिति असौ अमुके अमुकाभ्यामित्यादावनुनासिकस्याप्रसङ्ग एव । त[8]देवं कार्यकालेऽपि संज्ञापरिभाषे प्रकरणोत्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्यार्थां सत्यसिद्धत्वं बाधिष्यत इत्यर्थः ॥

(उद्द्योतः) नन्वीदाद्युपजीवनायात्र करणमित्यत आह— **नचेति** । हेऽसुक असका इत्यादौ तु 'अ[10]दस' इत्यावर्त्य न विद्यते दस्य स्थाने सो यस्य तादृशादस इत्यर्थेनानुनासिकः स्वमतेऽपि भवत्येवेति भाष्याशयमाहुः ॥ तादृशानामनभिधानमेवेत्यन्ये ॥ **प्रकरणोत्कर्षेणेति** । सं[11]ज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः ॥ **सर्वेति** । प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः ॥

( १५६ समाधानवार्तिकम् ॥ २ ॥ )

## ॥*॥ विप्रतिषेधाद्वा [प्रगृह्यसंज्ञा] ॥*॥

( भाष्यम् )

**अथवा प्रगृह्यसंज्ञा क्रियताम् अयादयो वेति । प्रगृह्यसंज्ञा भविष्यति विप्रतिषे[12]धेनेति ॥**

( प्रदीपः ) **विप्रतिषेधाद्वेति** । * **अयावेकादेशप्रतिषेधो वक्तव्यः** * **विप्रतिषेधाद्वा प्रगृह्यसंज्ञा** * इति विकल्पार्थो वाशब्दः ॥ **नैकं प्रयोजन**मित्यादिषु परिहारो भाष्यकारेणोक्तो न वार्तिककारेणेति न त[13]दपेक्षो विकल्पः ॥

(उद्द्योतः) भाष्ये **विप्रतिषेधाद्वेति** । अ[14]न्तरङ्गत्वान्मूत्वादौ कृते पदान्तरसमभिव्याहारेऽयादिभ्यः परत्वात्संज्ञासिद्धौ तत्सामर्थ्यान्मूत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धम् । आश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः ॥

---

१ इदं सर्वं दूषयति—त्रैपादिकेति । पक्षद्वयेऽपीति भावः ॥ न दोष इति । तथाच दोष एव नेति शङ्का समाधिश्चायुक्त इति भावः ॥ छाया ॥

२ वार्तिकशेषमवतारयति—ननु चेति ॥

३ एवमपि प्रगृह्यत्वेऽपि ॥ फलाभावादिति भावः ॥ छाया ॥

४ यत्सिद्धे प्रगृह्येति । सिद्धे सिद्धकाण्डस्थे ईत्वादौ सति यत्प्रगृह्यसंज्ञा कार्यं यत्कार्यदृष्ट्या ईत्वादिकं सिद्धं तदर्थमित्यर्थः ॥ छाया ॥

५ अत्रास्वरसमाह—नैकमिति ॥ छाया ॥

६ यद्यप्येकफलस्य सामान्यशास्त्रानारम्भकत्वमित्यर्थस्तथापि प्रकृतत्वादाह—अनेकेति ॥ अत एवाह—अन्यदिति ॥ छाया ॥

७ लाघवादाह—मादिति वेति ॥ तथाचाधिकं गौरवमिति भावः ॥ छाया ॥

८ उपसंहरति—तदेवमिति ॥ अपिना यथोद्देशसमुच्चयः ॥ सतीति । तदन्यथानुपपत्त्या संज्ञावदयादिकं प्रत्यपि सामर्थ्यादिति शेषः ॥ तथाच वार्तिकं न कार्यमिति भावः ॥ छाया ॥

९ 'नचैवं हे असुक इत्यत्रापि निषेधापत्तिः । त्यदादीनां संबोधनविभक्तिविरहस्यौत्सर्गिकत्वात् इति शब्दकौस्तुभ औत्सर्गिकत्वं प्रायिकत्वपरम् । तेन 'अदस औ सुलोपश्च' इति सूत्रभाष्ये 'हे असौ' इति संबोधनदर्शनेऽपि न दोषः । सर्वथैव संबोधनविरहस्तु भाष्यविरोधादुपेक्ष्य एव ॥

१० अदस इति । अदसो नेत्यत्रेतिभावः ॥ स इति अकार उच्चारणार्थः । स्वमतेऽपि भाष्यमतेऽपि ॥ आहुरित्यरुचिबीजं त्वावृत्त्यादौ न मानमिति ॥ भाष्यासंगतिस्तु नेत्याह—तादृशानामिति । भाष्यप्रामाण्यादेवेति भावः ॥ छाया ॥

११ प्रकरणस्योत्कर्षाभावादाह—संज्ञेति ॥ छाया ॥

१२ षेधेनेतीति । इतिर्हेतौ । यतो विप्रतिषेधेन प्रगृह्यसंज्ञा भविष्यति । अतोऽयादीनां प्रतिषेधो न वक्तव्य इत्यर्थः । तथाच न पाणिनेर्न्यूनतेति भावः ॥

१३ न तदपेक्ष इति । वार्तिकग्रन्थे पठितपूर्वापेक्षयैवाग्रिमेण विकल्पस्यौचित्यात् ॥ छाया ॥

१४ ननु द्वयोर्युगपत्प्राप्त्यभावेन कथं विप्रतिषेधः, कथं च तेनेष्टसिद्धिः प्रकृतिभावदृष्ट्या तस्यासिद्धत्वादत आह—अन्तरङ्गत्वादिति ॥ पदसंस्कारपक्षे तदानीं प्रगृह्यत्वाप्राप्तेरिति भावः ॥ यादिभ्य इति । तद्दृष्ट्या सिद्धत्वात्तत्प्राप्तिः ॥ अपिनाऽयादिपरिग्रहः ॥ छाया ॥

(समाधानबाधकभाष्यम्)

**नैष[1] युक्तो विप्रतिषेधः । "विप्रतिषेधे परम्" इत्युच्यते ॥ पूर्वा च प्रगृह्यसंज्ञा, परेऽयादयः ॥**

(प्रदीपः) **नैष युक्त इति ।** इष्टसिद्धये इति भावः ॥

(उद्द्योतः) ननु प्रगृह्यसंज्ञामिनिर्वर्तमानेत्यादि वक्ष्यमाणप्रकारेण घटत एव विरोध इत्ययुक्तमेतदित्यत आह—**इष्टेति ॥**

(समाधानसाधकभाष्यम्)

**परा[2] प्रगृह्यसंज्ञा करिष्यते ॥**

(प्रदीपः) **करिष्यत इति ।** आश्रयिष्यत—इत्यर्थः ॥

(समाधानबाधकभाष्यम्)

**सूत्र[3]विपर्यासः कृतो भवति ॥**

(प्रदीपः) इतरस्त्वगृहीताभिप्राय आह—**सूत्रविपर्यास इति ।**

(समाधानसाधकभाष्यम्)

**एवं[4] तर्हि परैव प्रगृह्यसंज्ञा ॥**

**कथम् ? ।**

**"कार्यकालं संज्ञापरिभाषम्," यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । "प्रगृह्यः प्रकृत्या" इत्युपस्थितमिदं भवति "अदसो मात्" इति ।**

(प्रदीपः) अभिप्रायं प्रकाशयितुमाह—**एवं तर्हीति ॥**

(उद्द्योतः) भाष्ये **परैवेति ।** पूर्वपाठेऽपि तत्र वाक्यार्थबोधाभावेनेति भावः ॥

(उद्द्योतः) **कथमिति ।** पाठकृतं स्वगतं पूर्वत्वमनपगतमिति प्रश्नः ॥

(उद्द्योतः) उत्तरयति—**कार्यकालमिति ।** तत्पक्षे संज्ञाशास्त्रस्य प्रदेशदेश एवार्थबोधः । तदुत्तरं च विरोधोपस्थितिस्तत्कार्यज्ञानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजमिति भावः ॥ परैवेत्येवकारेण पाठकृतं पूर्वत्वं विद्यमानमपि विप्रतिषेधसूत्रप्रवृत्तौ न नियामकमिति सूचितम् । परि[5]भाषाणां तु तत्पक्षेऽपि तत्तद्देशेऽर्थबोधोऽस्त्येवेति तद्विषये विप्रतिषेधसूत्रप्रवृत्तौ पाठकृतमेव तन्नियामकमिति तात्पर्यम् । [6]आकडारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्र परया पूर्वबाधसिद्धिः ॥ ष्यङः[7] संप्रसारणमिति सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः ॥ परे[8]त्तु परैवेत्यस्य संज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते इति भावः ॥ आशयानभिज्ञस्य प्रश्नः **कथमिति ।** एकदेशिन उत्तरम् **कार्यकालमित्यादीत्याहुः ॥** ए[9]तेन कार्यकालपक्षेऽपि पाठकृतपरत्वमयादीनामेव । अन्यथा ङमो ह्रस्वादचीत्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषाप्रवृत्त्या परत्वात्तत्र तस्मादित्युत्तरस्येत्येवेति सिद्धान्तासङ्गतिरुभयोरप्येकदेशस्थत्वेन परत्वासंभवादित्यपास्तम् ॥

(समाधानबाधकभाष्यम्)

**एवम[10]प्ययुक्तो विप्रतिषेधः ॥**

**कथम् ? ॥**

**द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः । एचामयादयः, ईदूतोः प्रगृह्यसंज्ञा ॥**

(प्रदीपः) **द्विकार्ययोगो हीति ।** द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

(उद्द्योतः) **द्वाभ्यामिति ॥ योग इति ।** कर्मणि घञ् । द्विकार्यशब्दस्य पात्राद्यन्तत्वादस्त्रीलिङ्गस्य योगशब्देन कर्तृकरणे कृतेति समासः ॥ भा[11]ष्ये ईदूतोः प्रगृह्यसंज्ञेत्यस्य तत्कार्यं प्रकृतिभाव इत्यर्थः ॥

(समाधानसाधकभाष्यम्)

**ना[12]वश्यं द्विकार्ययोग एव विप्रतिषेधः ॥**

**किं तर्हि ? ।**

**असंभवोऽपि । स चास्त्यत्रासंभवः ॥**

**कोऽसावत्रासंभवः ? ॥**

**प्रगृह्यसंज्ञामिनिर्वर्तमाना अयादीन् बाधते, अयादयोऽभिनिर्वर्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्तीत्येषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ॥**

(प्रदीपः) **असंभवोऽपीति ।** असंभ[13]व एव विप्रतिषेधः । स तु कदाचिद् द्विकार्ययोगो भवति कदाचित्केवलोऽपि ।

१ प्रतिषेधवादी विप्रतिषेधं दूषयति—नैष इति ॥

२ विप्रतिषेधवादी समर्थयति—परेति ॥

३ प्रतिषेधवादी दूषयति—सूत्रेति ॥

४ [ विप्रतिषेधवादी समर्थयति ]—एवं तर्हीति । तर्हिरप्यर्थे एवमपि सूत्रविपर्यासेऽकृतेऽपि ॥ छाया ॥

५ नन्वेवं ङमोह्रस्वादित्यत्रत्यभाष्यासंगतिरत आह—परीति । तथाच प्रागुक्तं संज्ञाशास्त्रमात्रविषयकमिति भावः ॥ तदिति । कार्यकालेत्यर्थः । अपिना यथोद्देशसमुच्चयः ॥ छाया ॥

६ नन्वेवमपि भपदसंज्ञादौ दोष एवात आह—आकडारेति ॥ छाया ॥

७ नन्वेवं ष्यङ इति सूत्रस्थभाष्यविरोधोऽत आह—ष्यङ इति ॥ छाया ॥

८ संज्ञापरिभाषयोरवैरूप्याय सिद्धान्तमाह—परेरिवति ॥ त्वस्य प्रस्थस्य भाव इत्यत्रान्वयः ॥ छाया ॥

९ यदर्थमित्थं व्याख्यातम् तदाह—एतेनेति ॥ परिभाषेति ॥ परिभाषाद्वयेत्यर्थः ॥ छाया ॥

१० प्रतिषेधवादी दूषयति—एवमप्येति ॥ नच नहि ॥

११ सिद्धान्तरीत्या व्याचष्टे—भाष्ये ईदूतोरिति ॥ छाया ॥

१२ विप्रतिषेधवादी समर्थयति—नावश्यमिति ॥

१३ अस्याग्रेऽपेरुक्त्या द्विकार्ययोगः केवलः तत्समुच्चयो वेति प्रतीयमानार्थनिरासायाह—असंभव एवेति ॥ तथाच भाष्येऽग्रे प्रदीपे चापिरेवार्थे न समुच्चय इति भावः ॥ अवश्यमित्युक्तिस्वारस्यादाह—स तु कदेति ॥ दृष्टान्तेरिति । तथाचान्वयव्यभिचारः ॥ असंभव इति । स विप्रतिषेधो भवतीत्यर्थः । व्याघातादिति । तथाच तेनैव तदङ्गीकाराद्व्यतिरेकव्यभिचार इति भावः ॥ छाया ॥

तथाहि सति संभवे द्विकार्ययोगो न विप्रतिषेधः, यथैकस्य दधातेरडागमद्विर्वचने भवतः—अदधादिति । क्वचिदेकस्य द्विकार्ययोगाभावेऽप्यसंभवोऽस्ति यथा त्रपूणामित्यत्र नुम्नुटोः प्रकृतिप्रत्ययभक्तयोः परस्परनिमित्तव्याघातात् ॥ **अयादीन्वाधत इति** । प्रकृतिभावविधानात् ॥ **निमित्तमिति** ईत्वमूत्वं च ॥

**(उद्द्योतः) कदाचिदिति** । एवंच प्रकृते केवलासंभवरूपः स इत्यर्थः । केवलद्विकार्ययोगो न सर्वथा विप्रतिषेध इत्याह—**तथाहीति** । **ईत्वमूत्वं चेति** । तद्विघातेन संज्ञाऽभावे तत्कार्यप्रकृतिभावविघातः स्पष्ट एवेति भावः ॥

**( समाधानबाधकभाष्यम् )**

**एवमप्ययुक्तो विप्रतिषेधः । सतोर्हि विप्रतिषेधो भवति । न चात्रेत्वोत्वे स्तः । नापि मकारः । उभयमप्यसिद्धम् ॥**

**(उद्द्योतः)** केचित्तु संज्ञाकार्यस्य अयादिभिर्विप्रतिषेधोऽयुक्तः । वाक्यसंस्कारपक्षे मूत्वादितः पूर्वमेवायादिप्राप्त्या मूत्वाद्युत्तरं च संज्ञायां तत्प्राप्त्या युगपत्प्राप्त्यभावात् । तस्मात् प्रगृह्यसंज्ञाशब्देन तज्जनकमूत्वादिकं लक्षयित्वा तस्यायादिभिर्विप्रतिषेध इति वार्तिकार्थः ॥ तमपि-दूषयति-भाष्ये **एवमपीति** ।

**( १५७ समाधानसाधकवार्तिकप्रथमखण्डम् ॥ ३ ॥ )**

**॥ * ॥ आश्रयात्सिद्धत्वं यथा रोरुत्वे ॥ * ॥**

**( भाष्यम् )**

**आश्रयात्सिद्धत्वं भविष्यति । तद्यथा रुरुत्वे आश्रयात्सिद्धो भवति ॥**

**( प्रदीपः ) आश्रयात् सिद्धत्वमिति** । प्रगृह्यसंज्ञायां कार्यित्वेनाश्रयणादसिद्धत्वाभावादीत्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते । तथाहि सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे ईदादीनामेव विप्रतिषेध आक्षिप्तः । तत्रायादीनां चयनं चायकः, लवनं लावकः, अग्नेऽत्रेत्यत्रावकाशः । ईदादीनां तु यत्रायादीनामप्रसङ्गः सोवकाशः, अमी स्थिताः अमू स्थितौ अमीभ्य इति । अमी अत्रेत्यादावुभयप्रसङ्गे परत्वादीदादय एव भवन्ति ॥ अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम् ॥

**(उद्द्योतः) कार्यित्वेनाश्रयणादिति** । तत्सामर्थ्यादयादीन्प्रत्यपि सिद्धत्वमित्यर्थः । यथोद्देशे इदम् । **कथं कार्यकालमिति** तु प्रकृतिभावायादिविप्रतिषेधविषयम् । इदानीं तु स नेति स्पष्टमेव ॥ **असिद्धत्वाभावादिति** । ईत्वादीनामसिद्धत्वाभावादित्यन्वयः ॥ सामान्यत एवासिद्धत्वाभावबोधनादित्यर्थः ॥ **तेषामीत्वादीनाम्** ॥ **परत्वादिति** । ईत्वादिषु जातेषु तेषामसिद्धत्वाभावादयादीनामप्रसङ्ग एवेति भावः ॥ **व्याख्यानान्तरमिति** । प्रगृह्यत्वकार्यप्रकृतिभावेनायादीनां विप्रतिषेधपरमेव भाष्यम् । **सतोरित्यस्य** युगपत्प्राप्तयोरित्यर्थः । वाक्यसंस्कारपक्षे ईत्वादीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः, कृते त्वीत्वादावस्येति न तयोर्युगपत्प्राप्तिरिति भावः ॥ तदाह—**नचात्रेत्यादि** । अत्र अयादिप्राप्तिकाले । असत्त्वे हेतुः—**उभयमसिद्धमिति** । **पूर्वत्रासिद्धेनेतिशेषः** ॥ परिहरति—**आश्रयादिति** । पदसंस्कारपक्ष एवात्राश्रीयत इति भावः । एवंचोभयोर्युगपत् प्राप्तिः । प्रगृह्यसंज्ञायां तत्कार्ये च तयोः सिद्धत्वादयादीन्प्रति चासिद्धत्वादित्युपपन्नो विप्रतिषेध इति ॥ वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति क्लेशः ॥

**(उद्द्योतः)** परेत्वनुक्तेदादिविप्रतिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तं पक्षान्तरैरपि परिहारकरणादित्याहुः ॥

**( समाधानबाधकाक्षेपभाष्यम् )**

**किं पुनः कारणं रुरुत्वे आश्रयात्सिद्धो भवति न पुनर्यत्रैव रुः सिद्धः, तत्रैवोत्वमप्युच्यते ? ॥**

**(प्रदीपः) न पुनर्यत्रैवेति । रोः सुपीत्यस्यानन्तरमत उरतीति** वक्तव्यम् । एवं चासिद्धत्वं न बाधितं भवति । अत्र पाठक्रमेऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात्तत्कालत्वाभावादप्लुतादप्लुते इति न वक्तव्यं भवति ॥

**(उद्द्योतः) रोः सुपीत्यस्यानन्तरमिति** । न चैवं ह्रशिचे-

---

१ प्रथमपक्षे आह—प्रकृतीति ॥ विधानादित्यस्य तद्द्वारेत्यर्थः ॥ सिद्धान्ते तु प्रगृह्येत्यस्य प्रकृतिभावः इत्येवार्थः ॥ छाया ॥

२ यथाश्रुतार्थे दोष इत्याह—केवलेति ॥ छाया ॥

३ प्रथमपक्षाश्रयेणोक्तं सिद्धान्तरीत्या योजयति—तद्विघातेति ॥ छाया ॥

४ [प्रतिषेधवादी विप्रतिषेधासंभवमेवाह—एवमप्येति ॥] उभयमिति । एकासिद्धत्वे द्वयोरेव सत्त्वादुभयमित्युक्तम् ॥ छाया ॥

५ कार्यस्य प्रकृतिभावस्य ॥ पूर्वं पदसंस्काराश्रयकत्वस्योक्तत्वादाह—वाक्येति ॥ तदिति । प्रकृतिभावेत्यर्थः ॥ इत्यर्थ इत्याहुरिति पाठः ॥ तमपि पक्षम् ॥ एवंच एवमपीत्यस्य बुद्धिस्थतत्पक्षाङ्गीकारेऽपीत्यर्थः ॥छाया॥

६ विप्रतिषेधवादी समाधानसाधकवार्तिकभागमुपन्यस्यति—आश्रयादिति ॥

७ पूर्वेति । एतत्पूर्वे इत्यर्थः ॥ छाया ॥

८ पूर्वविरोधं परिहरति—यथोद्देश इति ॥ छाया ॥

९ अग्रे तेषामिति सत्त्वादाह—ईत्वादीनामिति ॥ छाया ॥ उक्तरीत्यार्थमाह—सामेति ॥ छाया ॥

१० सिद्धान्तरीत्याह—प्रगृह्यत्वेति ॥ पूर्वपक्षाशयमाह—वाक्येति ॥ छाया ॥

११ सिद्धेनेति । तत्सूत्रेणेत्यर्थः ॥ छाया ॥

१२ तत्कार्ये च प्रकृतिभावे ॥ छाया ॥

१३ प्रदीपं दूषयति—परे त्विति॥ तस्य खण्डनेन यत्तस्य प्रागुक्तस्य समर्थनं तत्परत्वेनेत्यर्थः ॥ यदितु कैयटस्यान्यत्तात्पर्यम् । तथाहि—उपक्रान्तसंज्ञाविप्रतिषेधपरमेवेदं 'सतोर्हि' इति नचात्रेत्यत्र 'प्रगृह्यसंज्ञा' इत्यध्याहारः। तत्र हेतुः—'ईत्वोत्वे स्तो नापि' इति । 'मकारः' इत्यत्र नापीति मात्रयावृत्तिरिति ॥ आवृत्त्यध्याहाराभ्यां दुरूहत्वमस्येति क्लेश—इत्युच्यते ॥ तदा सम्यगेव ॥ छाया ॥

१४ उक्तं द्रढयितुं प्रसङ्गादाह—किं पुनरिति ॥ छाया ॥

त्यस्यैतदुत्तरत्वाद्ढोरीति दृष्ट्याऽसिद्धत्वापत्तौ मनोरथासिद्धिः । ढो ढे लोपः, रोरीत्यनयोर्यरोऽनुनासिक इत्यतः पूर्वं पाठः कार्यं इत्याशयात्[1] ॥

( भाष्यम् )

**नैवं शक्यम् ॥**

( १५७ समाधानसाधकवार्तिकसाधकखण्डम् ॥ ३ ॥ )

## ॥ * ॥ असिद्धे ह्युत्वे आद्गुणाप्रसिद्धिः ॥ * ॥

( भाष्यम् )

**असिद्धे ह्युत्वे आद्गुणस्याप्रसिद्धिः स्यात्—वृक्षोत्र प्लक्षोत्र । तस्मात्तत्राश्रयात्सिद्धत्वमेषितव्यम् । यथा तत्राश्रयात्सिद्धत्वं भवति । एवमिहाप्याश्रयात्सिद्धत्वं भविष्यति ॥**

(१५८ समाधानान्तरवार्तिकम् ॥ ४ ॥ )

## [॥ * ॥ [2]वचनसामर्थ्याद्वा ॥ * ॥]

( भाष्यम् )

**अथवा प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥**

(प्रदीपः) अथ वेति । यथोद्देशपक्षाश्रयेणैतदुच्यते ॥

(उद्द्योतः) [3]अनुनासिकपर्युदासेन चारितार्थ्यमाशङ्क्याह—यथोद्देशेति । एतद् वचनसामर्थ्याद्वेति[4]वार्तिकं तद्व्याख्यानभाष्यं चेत्यर्थः ॥

(उद्द्योतः) [5]पूर्वभाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षेऽप्याह—अथवेति । वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञायां तयोर्निमित्तत्वेनाश्रयणरूपवचनसामर्थ्यादयादीन्प्रत्यपि सिद्धत्वं ज्ञाप्यते इत्यर्थे कार्यकालेऽपि न दोषः ॥ किं च यथोद्देशेऽपि संज्ञां प्रति निमित्तत्वेनाश्रयणात्तदृष्ट्या मीत्वस्य सिद्धत्वेन संज्ञाया अनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव । प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशाश्रयणेन । एवमुपक्रमस्थभाष्येऽपि बोध्यमित्याहुः ॥

( १५९ समाधानान्तरवार्तिकम् ॥ )

## [॥ * ॥ योगविभागाद्वा ॥ * ॥]

( भाष्यम् )

**अथ वा योगविभागः करिष्यते । "अदसः" अदसः ईदादयः प्रगृह्यसंज्ञा भवन्तीति । ततो "मात्" मात्परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । अदस इत्येव ॥**

**किमर्थो योगविभागः ? ॥**

**[6]एको यत्तत्सिद्धे प्रगृह्यकार्यं तदर्थः ॥ [7]अपरो यदसिद्धे ॥**

(प्रदीपः) कार्यकालतायामप्याह[8]—अथ वेति । अदस इति संबन्धसामान्ये षष्ठी । अदसः संबन्धिन ईदूदेत इति ॥

(उद्द्योतः) भाष्ये[9] 'योगविभागाद्वा' इति वार्तिकं व्याचष्टे अथवेति ॥ अदस इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र मादित्यस्य विशेषणानापत्तिरत आह—संबन्धेति ॥ यत्तत्सिद्धे इति । मूत्वे इति शेषः । यत्र[10] कार्ये मूत्वं सिद्धं तत्प्रगृह्यकार्यमित्यर्थः ॥ अपरो यदसिद्ध इति । यत्र मूत्वमसिद्धं तदित्यर्थः ॥

( आक्षेपभाष्यम् )

**[11]इहापि तर्हि प्राप्नोति—अमुया अमुयोरिति ॥**

**किंच स्यात् यद्यत्र प्रगृह्यसंज्ञा स्यात् ? ॥**

**प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत ॥**

---

१ इत्याशयादिति । पूर्वपक्षिण इति भावः ॥ तस्माद्विप्रतिषेधः सर्वथा युक्त इति बोध्यम् ॥ छाया ॥

२ इतो वार्तिकत्रयं क्वापि भाष्यपुस्तकेषु नोपलभ्यते तथापि उद्द्योतच्छाययोरनुरोधेनास्माभिः कोष्ठकमध्ये दर्शितम् ॥ दाधिमथाः ॥

३ अनुनासिकेति । कार्यकाल इत्यादिः ॥ छाया ॥

४ वार्तिकमिति । अनेन 'ननु च—' इत्यादिपूर्वेणापौनरुक्त्यं सूचितम् । तस्य भाष्यीयत्वाद् एतस्य वाक्यकारीयत्वात् । अयं विप्रतिषेधतो लघुः । तत्र ह्याश्रयात्सिद्धत्वेनायादीन् संज्ञां च प्रति सिद्धत्वमाश्रित्य विप्रतिषेधेनायाद्यभावो ज्ञाप्यते । अत्र तु वचनसामर्थ्यात्साक्षादेव तदभावसिद्धिरिति ॥ सिद्धं धर्मिणमिति न्यायविरोधस्तु न, ( पू. मी. ८।२।१७ अधि० ) हविरार्तिवदसिद्धस्याप्युद्देश्यत्वाविरोधात् ॥ छाया ॥

५ प्रदीपं दूषयितुमन्यथावतरणमाह—पूर्वेति ॥ एवमपीत्यादिभाष्यस्येत्यर्थः ॥ व्याख्यान्तरेति । उद्द्योतोक्तव्याख्यान्तरेत्यर्थः ॥ वादिन इत्यस्याहुरित्यत्रान्वयः ॥ पदसंस्कारेणोक्तत्वादाह—वाक्येति ॥ एवं च तत्र विप्रतिषेधासंभवात्पक्षान्तरमिति भावः ॥ वस्तुतस्त्वित्यस्य बोध्यमित्यत्रान्वयः॥ प्रेति । तत्रोपस्थितेत्यर्थः ॥ तयोरीत्वोत्वयोः ॥ इत्यर्थ इति । अस्य वार्तिकादेरिति भावः ॥ एतेन ततो भेदोऽपि सूचितः ॥ पूर्वमेतादृशवचनसामर्थ्यं न ॥ अतएव वैपरीत्ये आह—किं चेति ॥ मीत्वस्य मीत्वादेः ॥ तस्मादेवमावश्यकमित्याह—प्रकृतीति ॥ एवमिति । इदानीं भेदस्तु प्रागुक्त एव बोध्यः ॥ इति बोध्यमिति पाठः ॥

६ व्युत्क्रमेणाह—एक इति । अन्य इत्यर्थः । द्वितीय इति यावत् ॥ छाया ॥

७ अपरो यदसीति । परभिन्नोऽपर आद्य इत्यर्थः ॥ छाया ॥

८ तायामपीति । अपिना यथोद्देशसमुच्चयः ॥ छाया ॥

९ भाष्ये तत्पाठादर्शनादाह—भाष्ये योगेति ॥ तथाच तत्र धृतमिति भावः । एवमग्रेऽपि । अत्र पक्षे हविरार्तिदृष्टान्ताश्रयणमपि न लोके शास्त्रे च सिद्धस्यैव संज्ञाविधानात् । अत एव 'सतो—' इत्यादिवृद्धिसंज्ञासूत्रभाष्यसंगतिः ॥ विशेषणेति । धर्मपरम् ॥ अवयवषष्ठ्याममीत्यादावयवत्वं दुर्बोधम् ॥ एतेन ईदाद्यपेक्षयावयवषष्ठी गौर्यसावित्यादौ सामीप्यसंबन्धेनातिप्रसङ्गापत्त्या कैयटोक्तं चिन्त्यमित्यपास्तम् । तद्घटितप्रयोगघटकत्वसंबन्धेनानतिप्रसङ्गात् ॥ अत्र तदनुवृत्तिरग्रे न दृष्टा तस्य मात्परत्वाभावात् । अत आद्ये दोषं वक्ष्यति—इहापीति । एवंच बहुवचनासंगतिरेकदेशानुवृत्तेरसंभवात् ॥ छाया ॥

१० यत्तदिति मूत्वे सिद्धे यत्तत्प्रगृह्यकार्यं तदर्थ इत्यर्थः । तत्फलितमाह—यत्रेति ॥ एवमग्रेऽपि ॥ छाया ॥

११ योगविभागे दूषणमाह—इहापि तर्हीति । तर्हि योगविभागाङ्गीकारे इहापि प्राप्नोतीत्यन्वयः ॥

(प्रदीपः) इहापीति । अदस् टा, अदस् ओस्, अलम्, टाप् । सवर्णदीर्घत्वम् । आङि चाप इत्येत्वम् । अदे आ अदे ओस् इति स्थिते अदस इत्यत्र मादिति विशेषणाभावात्प्रगृह्यसंज्ञायां सत्यामयादेशाप्रसङ्गः ॥

( आक्षेपनिरासभाष्यम् )

नैष दोषः । पदान्तप्रकरणे प्रकृतिभावः । न चैष पदान्तः ॥

( आक्षेपभाष्यम् )

एवमप्यमुकेत्र, अत्रापि प्राप्नोति ॥

( प्रदीपः ) अमुकेत्रेति । अदस इत्यनेन प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

द्विवचनमिति वर्तते ॥

( आक्षेपसाधकभाष्यम् )

यदि द्विवचनमिति वर्तते अमी अत्र, अत्र न प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

एवं तर्हि एदन्तमिति निवृत्तम् ॥

(प्रदीपः) एदन्तमिति । ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः । अननुवृत्तिरेव च निवृत्तिः । यद्येवं माद्ग्रहणं न कर्तव्यम् एद्ग्रहणनिवृत्त्यैवामुकेत्रेत्यत्राप्रसङ्गात् । नैतदस्ति । सति माद्ग्रहणे योगविभागो भवति नान्यथा ॥

(उद्योतः) ननु समस्तत्वात्समुदायानुवृत्तिः स्यात्तत्कथमेतो निवृत्तिरत आह—ईदूतोरेवेति । नान्यथेति । सिद्धान्ते तु व्यर्थमेव माद्ग्रहणमिति भावः ॥

( १६० समाधानान्तरवार्तिकम् ॥ ६ ॥ )

[ ॥ * ॥ मार्थादीदाद्यर्थानां वा ॥ * ॥ ]

( भाष्यम् )

अथवाऽऽहायम्-"अदसो मात्" इति । न च ईत्वोत्वे स्तः । नापि मकारः । त एवं विज्ञास्यामः-'मार्थादीदाद्यर्थानाम्-इति ॥

(प्रदीपः) एकयोगे परिहारान्तरमप्याह—अथ वेति ॥ मार्थादिति । मार्थ एव स्थानी मशब्देनोक्तः, ईदूदेदर्थश्चेदूदेदिति । न चास्यां कल्पनायामसिद्धत्वं भवति, बुद्धिपरिकल्पनायामसिद्धत्वाभावस्योक्तत्वात् ॥

(उद्योतः) भाष्ये '*मार्थादीदाद्यर्थानां वा*' इति वार्तिकं व्याचष्टे अथवा हेति । ननु एवं सति अदेऽदौ इत्यस्यामवस्थायां प्रगृह्यत्वेपि मीत्वमूत्वयोः कृतयोरीकारादीनामप्रगृह्यत्वादेतदैयर्थ्यमत्वविधित्वेन प्रगृह्यत्वाभावादिति चेन्न । प्रदेशे प्रगृह्यस्थानिकस्या.पि लक्षणया ग्रहणेनादोषात् ॥

( १६१ समाधानान्तरवार्तिकम् ॥ ७ ॥ )

॥ * उक्तं वा ॥ * ॥

किमुक्तम् ? ।

* अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे * [सिद्धे वक्तव्ये] * प्रगृह्यसंज्ञायां च * इति ॥

( प्रदीपः ) उक्तं वेति । असिद्धत्वमेवात्र प्रतिषिद्धमित्यर्थः ॥ स्वरे इति । अचीत्यर्थः ॥ बहिष्पदलक्षणे । द्वितीयपदव्यवस्थित इत्यर्थः । तेनैकपदव्यवस्थितेऽच्यसिद्धे ईत्वोत्वे । तेनामुयाऽमुयोरित्यत्रायादेशो भवत्येव ॥ प्रगृह्यसंज्ञायां चेति । प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः ॥

(उद्योतः) द्वितीयेति । द्वितीयपदस्थेऽचि यत्कार्यं तत्रासिद्धत्वं नेत्यर्थः ॥

(उद्योतः) अन्ये तु 'अथवा वचनसामर्थ्यात्' इत्यादि भाष्ये भाष्यकृत एवोक्तिः । अत एव सांप्रतपुस्तकेषु वार्तिकापाठ इत्याहुः ॥

---

१ [ योगविभागे दूषणमपहरति—नैष इति ॥ ] पदान्तेति । एङः पदान्तादित्यतोऽनुवृत्तिर्विभक्तिविपरिणामश्चेति भावः ॥ छाया ॥

२ पदान्तानुवृत्तावप्यतिप्रसङ्गस्तदवस्थ एवेत्याक्षिपति—एवमपीति ॥

३ एदन्तमिति ॥ तत्परमेद्ग्रहणमित्यर्थः ॥ छाया ॥

४ नन्वेवं कथं निवृत्तिरत आह—अननुवृत्तिरिति ॥ अस्वरितत्वात् ॥ छा.

५ अयमपि न सिद्धान्त इत्याह—सिद्धान्तेस्विति ॥ अयमेतत्पक्षाभिसंधिः—एकयोगत्वे एकत्र चारितार्थ्ये वचनसामर्थ्यं न संभवतीति प्रकारान्तरेण तद्दर्शितम् । इदानीं योगविभागद्वारा स्फुटं तदुच्यत इति सिद्धत्वेन ततः क्वापि न दोषः । विध्यर्थं च सूत्रद्वयमिति ॥ छाया ॥

६ नापीति ॥ असिद्धत्वात् ॥ त इति । ते वयमित्यर्थः ॥ मार्थादिति मः अर्थ आदेशत्वेन प्रयोजनमस्येत्यर्थः ॥ एवमग्रेऽपि ॥ छाया ॥

७ कृतयोरिति । एतेन प्रकृतिभावादीत्वादिकं भावि न स्यात् 'प्रगृह्यः प्रकृत्या' इति विकारमात्रनिवर्तनादित्यपास्तम् । तदप्रवृत्तौ संज्ञाया एवाप्रसक्तेः । अचि परे तन्निमित्तककार्यं प्रति प्रकृतिभावेनेत्वादित्वं प्रति तदप्राप्तेश्च ॥ एतदिति । यणाद्यापत्त्येति भावः ॥ ननु स्थानिवत्त्वेन तत्त्वमत आह—अलिति ॥ अस्थानिवत्त्वेनेति शेषः ॥ यद्यप्यादौ प्रगृह्यत्वेऽयादीन्प्रत्येव प्रकृतिभावे ततो मीत्वादौ तस्याप्रगृह्यत्वेऽप्यसिद्धत्वादेव स्वरसंध्यभावे न दोषः, तथाप्यनुनासिको न स्यात् । तद्दृष्ट्या तस्य तस्य सिद्धत्वात् । किं च प्रकृतिभावदृष्ट्यापि मीत्वस्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन तदभावात्सोऽपि न स्यादिति भावः ॥ छाया ॥

८ ननु उपस्थितेऽस्योपयोगाभावोऽत आह—प्रदेश इति । प्रगृह्येति । बहुव्रीहिः । अत्र लक्षणावत्त्वापि लक्षणेति भावः ॥ यद्यपि कार्यकालेऽणो प्रेत्यत्र मुख्यार्थसंभवेन तदबाधान्नोचिता लक्षणा तथापि तात्पर्यानुपपत्त्या लक्षणा । अत एव नैकमिति न्यायोऽनुगृहीतो भवतीति दिक् ॥ छाया ॥

९ उक्तं वेति ॥ स्वरितो वेति सूत्रे वार्तिककृतेति शेषः ॥ तदेव प्रश्नपूर्वमाह—किमुक्तमिति ॥ छाया ॥

१० 'सिद्धे वक्तव्ये' इत्यंशस्तु भाष्यकृतो वार्तिकार्थपूर्तयेऽध्याहारग्रन्थः॥ दाधिमथाः ॥

११ उदात्तादिनिवृत्तये आह—अचीति ॥ अदःशब्दापेक्षया बहिष्ठादि ॥ छाया ॥

(उद्द्योतः) अन्ये तु अन्त्ये 'उक्तंवेत्यस्य(त्र)' वार्तिकत्वं मत्वा कोशे वार्तिकपाठो भ्रष्ट इत्याहुः[1] ॥

(उद्द्योतः) सिद्धे इति । प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना सप्रयोजनं नेति सामर्थ्यात्तान् प्रत्यपि तौ सिद्धाविति भावः ॥

( अनिष्टापत्तिनिवारणाधिकरणम् )

( १६२ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ तत्र सकि दोषः ॥ * ॥

( भाष्यम् )

तत्र सककारे दोषो भवति—अमुकेत्र ॥

( प्रदीपः ) तत्र सकि दोष इति । मात्परं यदीदाद्यन्तमिति दोषोपन्यासः । पूर्वसूत्रे हि तदन्तं गृहीतमितीहापि तदन्तस्यैवानुवृत्तिरिति भावः ॥

(उद्द्योतः) विशेष्यासंनिधाने कथं तदन्तविधिरत आह—पूर्वसूत्रे इति । अर्थाधिकारादिति भावः ॥

( १६३ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ न वा ग्रहणविशेषणत्वात् ॥ * ॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ? ॥

ग्रहणविशेषणत्वात् । न माद्ग्रहणेन ईदाद्यन्तं विशेष्यते ॥

किं तर्हि ? ॥

ईदादयो विशेष्यन्ते-मात्परे ये ईदादय-इति ॥

अदसो मात् ॥ १२ ॥

(प्रदीपः) स्वरितत्वेन शब्दमात्रमनुमीयत[2] इति उत्तरेऽभिप्रायः । तत्र[3] माद्ग्रहणेन गृह्यमाणमीदूदेद्विशेष्यते तेनामुकेत्रेत्यत्र व्यवधानाद्दोषाभाव एव । योगविभागे[4] दोषप्रसङ्गादेदन्तमिति निवृत्तमित्युक्तम् । एकयोगे तु तन्निवृत्त्या न प्रयोजनमिति न वा ग्रहणविशेषणत्वादित्युत्तरमुक्तम् ॥ १२ ॥

( उद्द्योतः ) शब्दमात्रमिति । एवंच विशेष्याभावान्न तदन्तविधिरिति भावः ॥ १२ ॥

( १२ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ: ३ ॥ )

## शे ॥ १ । १ । १३ ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—काशे, कुशे, वंशे, इति[5] ? ॥

(प्रदीपः) शे ॥ १३ ॥ इह कस्मादिति । अत्र हि प्रत्यक्षमेव शे इति रूपम् । युष्मे अस्मे इत्यत्र तु शकारस्यानुबन्धस्य स्मरणादनुमेयमिति[6] प्रश्नः ॥

(उद्द्योतः) शे ॥ १३ ॥ प्रत्यक्षमेवेति । एवंच इहेति—भाष्यस्य इहैवेत्यर्थः ॥ युष्मे इति ॥ सुपां सुलुगिति विभक्त्यादेशः शेशब्द इत्यर्थः ॥

( १६४ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ शेऽर्थवद्ग्रहणात्[7] ॥ * ॥

( भाष्यम् )

अर्थवतः शेशब्दस्य ग्रहणम् । न चैषोऽर्थवान् ॥

(प्रदीपः) शेऽर्थवद्ग्रहणादिति । स्वं[8] शब्दस्येत्येवान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं रूपग्रहणं कृतम् । अत्र[9] च शशब्दोऽनर्थकः, सप्तम्येकवचनं त्वर्थवत्, तयोः समुदायोऽर्थान्तराप्रादुर्भावादनर्थकः ॥

(उद्द्योतः) शेश्चासावर्थवांश्च[10] तस्य ग्रहणादित्यर्थः । शक्तिग्रह-

---

१ इत्याहुरिति । अनेनारुचिः सूचिता । तथाहि आश्रयात्सिद्धत्वं यथा रोरुत्वे असिद्धेखुत्वे आङ्गुणाप्रसिद्धिः' इति वार्तिकेन 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वे बोधित एवाश्रयात्सिद्धत्वमन्यथानुपपत्त्या कल्प्यते । तथाङ्गीकारेऽर्थापत्त्याऽसिद्धत्वाभावः कल्पनीय इति गौरवं दर्शितम् ॥ तदनन्तरपठिते तु 'उक्तं वा' इत्यस्मिन् सिद्धत्वमित्यनुवर्त्य 'वार्तिककृता सिद्धत्वमुक्तमेव' इति नार्थापत्त्या तत्कल्पनमिति लाघवम् । नागेशदर्शितवार्तिकत्रयपाठे तु सिद्धत्वमित्यनुवृत्तौ कष्टकल्पना स्यात् । तस्मादनार्षमेव तद्वार्तिकत्रयमिति बोध्यम् ॥ भाष्यस्य फलितार्थत्वकल्पने तु वार्तिकत्रयेऽपि सिद्धत्वमित्यनुवृत्तौ तु न काप्यनुपपत्तिरिति तत्त्वम् ॥ दाधिमथाः ॥

२ शब्दमात्रमिति । शब्दाधिकार इति भावः ॥ छाया ॥

३ तत्रेति । तथानुवृत्तावित्यर्थः ॥ छाया ॥

४ नन्वेदन्तमिति निवृत्तमित्युक्तत्वादेव न दोष इति किमिति नवेत्युत्तरमत आह—योगेति ॥ वस्तुतोऽनुवृत्तिरेव न फलाभावादिति बोध्यम् ॥ छाया ॥

५ 'शे' इति भाविबौद्धसुपादेशानुकरणम् ॥ तदनभिज्ञः शङ्कते—इहेति ॥ छाया ॥

६ अनुमेयमिति । तथाच श्रुतानुमितन्यायसंचारो बोध्यः ॥ छाया ॥

७ आनर्थक्यप्रतिहतानामिति न्यायेनानुमेयस्याप्यर्थवतो ग्रहणमुचितं न प्रत्यक्षस्यापि निरर्थकस्येत्याशयेनाह—शेर्थवदिति ॥ सिद्धमिति शेषः ॥ छाया ॥

८ ननु शब्दानुशासने यथाकथंचिच्छब्दमात्रस्य ग्रहणमुचितं नत्वर्थवत एवात आह—स्वमिति ॥ छाया ॥

९ अत्र च काशे इत्यादौ च ॥ सुपामिति विहितस्य तु स्थान्यर्थेन तत्त्वमिति तस्यैव ग्रहणम् ॥ छाया ॥

१० 'अर्थवतः शेशब्दस्य' इति व्याख्यायाः पूर्वरूपस्य चानुरोधादाह—शेश्चासाविति ॥ वस्तुतः 'शे' इति सूत्रेऽर्थवद्ग्रहणात्सिद्धमित्यर्थः । सर्वत्र तथैवाचार्यशैलीसत्त्वात् । व्याख्या तु संभवात्तात्पर्यार्थपरा । सूत्रे इवात्रापि लुप्तविभक्त्यन्तत्वेन तदनुकरणत्वेन पूर्वरूपसंभवः । किंच समासे 'अर्थवच्छेग्रहणात्' इत्युचितम् उक्तप्रसिद्धरीत्योपपत्तौ राजदन्तादित्वकल्पनमफलं चेति बोध्यम् ॥ छाया ॥

निरपेक्षप्रतीतिकत्वेनान्तरङ्गत्वम् । अर्थप्रतीतावपि प्रतीयमानत्वमहेयत्वम् । शब्दान्तरैरप्रत्यायनादसाधारणत्वात् ॥ अप्रादुर्भावोऽप्रतीतिः ॥

( आक्षेपभाष्यम् )

**एवमपि हरिशे, बभ्रुशे, इत्यत्रापि प्राप्नोति ॥**

(प्रदीपः) **एवमपीति** । अत्र हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायोऽर्थवानेवावयवधर्मानुविधानात्समुदायस्येति प्रश्नः ॥

(उद्द्योतः) मत्वर्थीयो लोमादिशः ॥

( समाधानभाष्यम् )

**एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्येवं न भविष्यति ॥**

(प्रदीपः) **लक्षणेति** । प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति, लाक्षणिके तु लक्षणानुसन्धानद्वारेण विलम्बितेति न तस्य ग्रहणम् ॥

( पूर्वोक्तसमाधानाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु—'अर्थवद्ग्रहणे नानर्थकस्य' इति ॥**

**कथं तर्हि—हरिशे बभ्रुशे इति ? ।**

**एकोऽत्र विभक्त्यर्थेनार्थवान्, अपरस्तद्धितार्थेन । समुदायोऽनर्थकः ॥ शे ॥ १३ ॥**

(प्रदीपः) **अथ वेति** । अर्थवत्समुदायस्यापि कस्यचिदानर्थक्यं यथा दशदाडिमादिवाक्यस्य । पदार्थानां परस्परसमन्वयाभावाद् । इहापि हरिशशब्दवाच्यार्थगतसंख्याधिकरणशक्तिप्रतिपादनाय प्रवृत्ता सप्तमी न शप्रत्ययमात्रप्रतिपाद्येनार्थेनान्वेतीति शेशब्दस्यानर्थक्यम् ॥ १३ ॥

(उद्द्योतः) आनर्थक्यमिति । प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणानुगतार्थवत्परिभाषा प्रबलेति भावः ॥ १३ ॥

---

( १३ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ४ ॥ )

## निपात एकाजनाङ् ॥ १ । १ । १४ ॥

( पदकृत्याधिकरणम् )

( आक्षेपभाष्यम् )

**निपात इति किमर्थं ? ॥**

(प्रदीपः) **निपात एकाजनाङ् ॥ १४ ॥ निपात इति किमर्थमिति** । निपातस्यैवैकाचोऽर्थवत्त्वात् प्रत्ययस्य केवलस्य प्रयोगाभावादानर्थक्यात् कल्पितरूपत्वात्, कल्पनायाश्च नियमाभावात् प्रश्नः ॥

(उद्द्योतः) निपात० ॥ १४ ॥ आनर्थक्यादिति । अर्थवत्त्वानिश्चयादित्यर्थः ॥ तत्र हेतुः—कल्पितरूपत्वादिति ॥ ततः किं तत्राह—कल्पनाया इति । अत एव केचिच्छतिपमन्ये शप्तिपौ वदन्ति । तत्रेयत्तोऽर्थवत्त्वमिति न निश्चेतुं शक्यत इत्यर्थः ॥ ननु निपातग्रहणाभावे एकाजिति वर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाभाव इति चेन्न । बहुव्रीहिरित्याशयात् । गौणमुख्यन्यायस्य तु नेह प्रवृत्तिः । पर्युदासेनैवाज्रूपत्वे लब्धे एकाज्ग्रहणस्य गौणमुख्यसंग्रहार्थत्वाद् न्यायानित्यत्वाच्च ॥ एतेन सत्यभिधाने-ऽनिरिरमवद् ईअभवदित्यादौ प्रगृह्यत्वं न स्याद् गौणमुख्यन्यायादिति परास्तम् । अत एवौदित्यत्रैव च्व्यन्तप्रतिषेध आरब्धः ॥

( समाधानभाष्यम् )

**चकारात्र जहारात्र ॥**

(प्रदीपः) **चकारात्रेति** । अन्वयव्यतिरेकाभ्यां प्रत्यय-

---

१ अर्थप्रतीति ॥
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'
इति हर्युक्तेः ॥ तथा च शब्दसमकक्षतयाऽर्थस्येहाश्रयेणैतन्मूलकपरिभाषयाऽर्थवत एव ग्रहणं न्याय्यमिति भावः ॥ छाया ॥

२ अत्र हीति । हरिश इत्यादौ हि ॥ छाया ॥

३ लोमादिश इति । उभयत्रेति भावः ॥ छाया ॥

४ एकदेशी समाधत्ते—एवं तर्हीति ॥

५ अन्तरङ्गबहिरङ्गशब्दाभ्यां शीघ्रोपस्थितिकत्व-विलम्बोपस्थितिकत्वे उच्येते । तयोरेव तद्बीजत्वात् । न तु तत्परिभाषाविषयत्वम् ॥ छाया ॥

६ सिद्धान्त्याह—अथवेति ॥ शशब्दस्य सप्तम्येकवचनेऽनभिधानमिति भावः ॥ छाया ॥

७ ननु गामानयेत्यादिवदर्थवत्समुदायस्यार्थवत्त्वमुक्तमेवैकदेशिनेत्याशयेनाह—कथमिति ॥

८ 'प्रत्ययानां प्रकृत्यर्थान्वितेति न्यायेन सिद्धान्तमाह—एक इत्यादि । एकोऽन्यो द्वितीयः ॥ अपर आद्यः ॥ छाया ॥

९ एकदद्युक्तिमपि विघटयति—अर्थवदिति ॥ प्रत्ययानामिति सूचयन्नाह—इहापीति ॥ छाया ॥

१० ननु पुनः पूर्वपक्षाश्रयणे किं बीजं तथापि निर्वाहादत आह—प्रत्यक्षेति ॥ लौकिकलाघवगौरवमूलकप्रत्यक्षेतिन्यायाभिन्नलक्षणेतिन्यायापेक्षयेत्यर्थः ॥ अनुगता बोधिता ॥ न्यायसिद्धाद्वचनसिद्धस्य प्राबल्यम् । किंच तस्य गुणभूतशब्दमात्रसंबन्धित्वमस्य तु प्रधानभूतार्थाश्रितत्वमित्यपि तत तत्त्वमिति बोध्यम् ॥ छाया ॥

११ ननु कल्पितरूपत्वेन कल्पितार्थवत्त्वमपि स्यादत आह—अर्थवत्त्वेति ॥ तत्र हेतुरिति । तत्रानिश्चये प्रयोगाभावस्तु कल्पितरूपत्वे हेतुरिति भावः ॥ ततः किमिति । तद्रूपत्वात्कथं तदनिश्चय इत्यर्थः ॥ तत्रेयत इति । एवं च तस्मात्तदशक्यत्वेन तदनिश्चय इत्यर्थः ॥ छाया ॥

१२ वर्णग्रहेति । वर्तिपदार्थप्राधान्येनान्तरङ्गतया कर्मधारयात् ॥ बहुव्रीहिरिति । लक्ष्यानुरोधाद् एकग्रहणसामर्थ्याच्च । व्याहरतीत्यादिनिर्देशस्तु सौत्रः ॥ शयादिति । पूर्वपक्षिणः ॥ ननु सिद्धान्तेऽपि गौणमुख्येति न्यायेन नातिप्रसङ्ग इति तद्वर्थमेवात आह—गौणेति । शब्दतस्तथाऽलाभादाह—न्यायेति ॥ उक्तस्य फलमाह—एतेनेति । सतीत्यनेनान्यथा दोष एव नेति सूचितम् ॥ ननु तत्र तदभावे इष्टापत्तिरत आह—अत एवेति ॥ एवेन प्रकृतसूत्रव्यवच्छेदः । अन्यथाऽत्रापि तथा वाच्यः । यतो नोक्तोऽतस्तथेति भावः ॥ छाया ॥

स्याप्यर्थवत्त्वमिति भावः ॥ निपातोऽपि केवलो न प्रयुज्यते द्योतकत्वादिति साम्यमेव निपातप्रत्यययोः । **अततेर्डः अः ।** अआगच्छ आगच्छेत्यपि प्रत्युदाहरणम् ॥

( उद्द्योतः ) अन्वयेति । [1]व्याकरणानुसन्धानानुगृहीताभ्यामित्यर्थः । तस्यैव चास्मच्छास्त्रप्रवृत्त्युपयोगित्वादिति भावः ॥ [2]वस्तुतोऽनर्थकनिपातेऽपि अस्य प्रवृत्तेरोत्सूत्रे भाष्ये वक्ष्यमाणत्वादत्रार्थवत एव ग्रहणमिति न नियमः ॥ प्रश्नाशयस्तु—अनाङिति पर्युदासादप्रत्ययस्य ग्रहणमिति । उत्तराशयस्तु—पर्युदासेन तथाऽऽश्रयणे न मानं निपातग्रहणादेव । तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति ॥ [3]अ आगच्छेत्यत्रापि प्लुते प्रकृतिभावो दुर्वार इति प्लुताभावे कथंचिदुदाहरणत्वं यदि तर्हि सवर्णदीर्घे तथा बोधः ॥

( आक्षेपभाष्यम् )

**एकाजिति किमर्थम् ? ॥**

(प्रदीपः) **एकाजिति किमर्थमिति ।** एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते, ततश्च प्रेदं ब्रह्मेत्यनिष्टनिवृत्तिर्न कृतेति प्रश्नः ॥

( उद्द्योतः ) एकग्रहणेति । [4]स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावेनैकग्रहणं विनापि कर्मधारयार्थलाभादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**प्रेदं ब्रह्म । प्रेदं क्षत्रम् ॥**

( आक्षेपबाधानुपपत्तिभाष्यम् )

**एकाजित्यप्युच्यमानेऽत्रापि प्राप्नोति । एषोऽपि ह्येकाच् ॥**

( आक्षेपबाधोपपत्तिभाष्यम् )

**एकाजिति नायं बहुव्रीहिः—एकोऽज् यस्मिन् सोऽयमेकाच् एकाजिति ॥**

**किं तर्हि ? ।**

**तत्पुरुषोऽयं [5]समानाधिकरणः—एकः अच् एकाच् एकाजिति ॥**

(प्रदीपः) **तत्पुरुषोऽयमिति ।** अन्तरङ्गत्वाद्[6]वृत्तिपदार्थप्राधान्याच्चेति भावः ॥

( उद्द्योतः ) अन्तरङ्गत्वे हेतुमाह—वर्तीति ॥

( आक्षेपभाष्यम् )

**[7]यदि तत्पुरुषोऽयं समानाधिकरणो, नार्थ एकग्रहणेन ॥**

( प्रत्याक्षेपभाष्यम् )

**इह कस्मान्न भवति—प्रेदं ब्रह्म । प्रेदं क्षत्रम् ॥**

(उद्द्योतः) भाष्ये इह कस्मादिति । अजन्तो निपात इत्यर्थ इति प्रश्नः ॥

( प्रत्याक्षेपबाधकभाष्यम् )

**[8]अजेव यो निपात इत्येवं विज्ञायते ॥**

( उद्द्योतः ) अजेवं य इति । निपातेनाज्विशेषणादित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ।**

(उद्द्योतः) किं वक्तव्यमिति । निपातस्य न्यायप्राप्तविशेष्यत्वाभावायेत्यर्थः ॥

( समाधानभाष्यम् )

**न हि ? ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ? ॥**

( समाधानभाष्यम् )

**अज्ग्रहणसामर्थ्यात् । यदि ह्यचोऽन्यश्च तत्र स्याद्, अज्ग्रहणमनर्थकं स्यात् ॥**

(उद्द्योतः) यदिहीति । अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः ॥

( सामर्थ्यानुपपत्तिभाष्यम् )

**[9]अस्ति ह्यन्यदज्ग्रहणस्य प्रयोजनम् ॥**

---

१ तयोरपि अवास्तवत्वाद्वैपरीत्यापत्तेश्चाह—व्याकरणेति । तदागमन्यायेन प्रत्ययस्य तादृशोपलम्भान्न वैपरीत्यमिति भावः ॥ मुख्यस्य तस्य वाक्य एव सत्त्वादाह—तस्यैव चेति ॥ तथा कल्पितार्थतत्त्वस्यैवेत्यर्थः ॥ स्यादिति । एतदित्यर्थः ॥ छाया ॥

२ प्रदीपं दूषयति—वस्तुत इत्यादिना । अत्र प्रकृतसूत्रे ॥ तर्हि कथं प्रश्नोऽत आह—प्रश्नेति ॥ तथेति । अप्रत्ययेत्यर्थः ॥ निपातेति । अन्यथा तदानर्थक्यं स्पष्टमेव । तथा चानित्यत्वात्तन्न्यायाप्रवृत्तिः ॥ तत्फलमाह—तेनेति ॥ प्रत्ययेति । तस्यानुकरणेऽनितिपरत्वे गतित्ववन्निपातत्वस्यापि सत्वादिति भावः ॥ इति सिद्धान्तसमाप्तौ ॥ छाया ॥

३ अततेरित्यपि दूषयति—अ आगेति ॥ पि प्लुते, दूराद्धूते चेति ॥ तथा च संध्यभावस्य तदेष्टत्वम् ॥ नतु प्रत्युदाहरणत्वम् ॥ कैयटाशयमाह—इति प्लुताभावे इति । तस्य वैकल्पिकत्वात् । इतिर्हेतौ ॥ उदेति । प्रत्युदेतीत्यर्थः ॥ कथंचिस्त्वमेव स्पष्टयति—यदीति ॥ तथा बोध इति । तदभाववद्बोध इत्यर्थः । तथा च तदन्यथानुपपत्त्या तदापि न संधिरित्युभयथापि न प्रत्युदाहरणत्वमित्यर्थः ॥ छाया ॥

४ एकत्वविवक्षाया कैयटदण्डिकृष्णाद्युक्ताया दूषयिष्यमाणत्वेनाह—स्वाङ्गेति ॥ एवं चैकग्रहणांश एव तात्पर्यम् । अन्यथा तस्यानेकाज्व्यावृत्त्यर्थत्वस्य स्पष्टतया प्रश्नासंगतिश्च । अतएवाग्रे—एवं तर्हीत्यादिना एकग्रहणस्यैव फलं वक्ष्यति भगवान् ॥ छाया ॥

५ व्यधिकरणनिरासायाह—समेति ॥ स्पष्टार्थमाह—एक इति ॥ छाया ॥

६ वर्तीति । निपादस्थपतिन्यायेन लाघवादित्यर्थः ॥ छाया ॥

७ आनर्थक्येति न्यायेन ततो बहुव्रीहिरेव प्रबल इति शङ्कां वक्ष्यमाणफलान्तरेणापनेतुं विशिष्टप्रश्नतात्पर्यमाह—यदीति ॥ छाया ॥

८ अजेवेति । अज्ग्रहणसामर्थ्येन सर्वं वाक्यमिति न्यायेन वावधारणलाभः ॥ छाया ॥

९ अस्तिहीति । नानर्थकम् । यत इत्यादिः ॥ छाया ॥

---

१ केवलम् अ इत्यस्य वाक्यत्वाभावेन प्लुतत्वस्य सर्वथैवाप्राप्तिरिति नागेशोक्तिरसाधुरेवेति ॥ दाधिमथाः ॥

**किम् ? ॥**

**अजन्तस्य यथा स्यात् । हलन्तस्य माभूत् ॥**

**( सामर्थ्योपपत्तिभाष्यम् )**

**नैव दोषो न प्रयोजनम् ॥**

(प्रदीपः) **नैव दोष इति** । ननु पुरोऽह्विरिति [1]हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् ॥ नैष दोषः, प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् । सकारस्य च कार्यान्तराप्रसङ्गात् । उत्वे तु रुत्वमाश्रयात्सिद्धम् ॥

(उद्द्योतः) प्रगृह्यसंज्ञायामिति ॥ [2]ननु सान्तस्य प्रगृह्यत्वे एकदेशविकृतन्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न । प्रकृतिभावेऽप्यसिद्धत्वात् ॥

**( सामर्थ्यानुपपत्तिभाष्यम् )**

**एवमपि कुत एतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः "आद्यन्तवदेकस्मिन्" "येन विधिस्तदन्तस्य" [3]इति च—इयमिह परिभाषा भविष्यति—"आद्यन्तवदेकस्मिन्" इति । इयं च न भविष्यति—"येन विधिस्तदन्तस्य" इति ? ॥**

(प्रदीपः) **एवमपीति** । अन्यतरनिवृत्त्याऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते तदन्तं निरस्यते । विपर्ययस्तु न भवतीति विशेषाभावात् प्रश्नः ॥ पारार्थ्य[4]सामान्यात् संज्ञातिदेशौ परिभाषाशब्देनोक्तौ ॥ **सावकाशयोरिति** । निरवकाशस्य बाधकत्वादेवमुक्तम् । तत्र तदन्तविधेरवकाशः-ओरावश्यके लाव्यं पाव्यम् । आद्यन्तवद्भावस्यावकाशः मिदचोऽन्त्यात्परः-तानि यानीति । अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः ॥ **समवस्थितयोरिति** । इह प्राप्तयोः ॥

(उद्द्योतः) अथ निपातस्य विशेष्यतया अजन्त इति व्याख्यानेऽपि अज्ग्रहणसामर्थ्यान्मुख्याजन्तपरिग्रहेण केवलाज्व्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति—एवमपीति भाष्ये ॥ अन्यतरनिवृत्त्येति । निपातस्य विशेषणत्वे तदन्तपरिभा[5]षाऽप्रसक्तिरेव निवृत्तिः । विशेष्यत्वे त्वजिति विशेषणसाम[6]र्थ्यात्तदन्तस्यैव ग्रहेण मुख्याजन्तपरिग्रहादाद्यन्तवदित्यस्य निवृत्तिरिति भावः ॥ विपर्ययः निपातस्य विशेष्यत्वेनाजन्तपरिग्रहः केवलाचो निवृत्तिरिति ॥ इतिविशेषाभावादिति । अत्र[7] च कारणाभावादित्यर्थः ॥ संज्ञा येनविधिरिति । अतिदेशः आद्यन्तवदिति ॥ लाव्यमिति । उङ्शब्दे इत्यत आवश्यके ण्यदनभिधानान्नेति भावः ॥

**( सामर्थ्यानुपपत्तिनिराकरणभाष्यम् )**

**आचार्यप्रवृत्तिर्ज्ञापयति—इयमिह परिभाषा भवति—"आद्यन्तवदेकस्मिन्"इति, इयं च न भवति "येन विधिस्तदन्तस्य" इति । यदयम्—'अनाङ्' इति प्रतिषेधं शास्ति ॥**

(प्रदीपः) **आचार्यप्रवृत्तिरिति** । यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूलाद्यन्तवत्परिभाषा कथं प्रवर्तते । नैष दोषः, आद्यन्तवदित्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते पश्चात्तु लिङ्गात् परित्यज्यते ॥ अथ वा लिङ्गादज्ग्रहणं निपातेन विशेष्यत इति विशेष्येण च तदन्तविधेरभावादतिदेशस्यापि मा भूत् प्रवृत्तिस्तत्फलसंपत्त्या [8]तूक्तम्—**परिभाषा भविष्यतीति** ॥

(उद्द्योतः) यदि तर्हीति । [9]एवंच इयमिह भवतीति भाष्यमनुपपन्नमिति भावः ॥ ननु पूर्वं प्रवर्त्य पश्चात्परित्यागापेक्षयाऽप्रवृत्तौ लाघवमित्यभिप्रेत्याह—अथवेति ॥

**( समाधानभाष्यम् )**

**एवं [10]तर्हि—सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञा[11]पयत्याचार्यः—'अन्यत्र वर्णग्रहणे जातिग्रहणं भवति' इति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

***दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्***

**इति [12]यदुक्तं, तदुपपन्नं भवति ॥**

(प्रदीपः) **एवं तर्हीति** । संज्ञाया विधीयमानत्वात्

---

१ हलन्तस्य रान्तस्य ॥ ननु सान्तस्यैवास्त्वत आह—सकारस्येति ॥ तस्य रुत्वं तु न कार्यं प्रकृतिभावे रुत्वस्यासिद्धत्वात् । तदजनिमित्तककार्यत्वस्य तत्राभावाच्चात आह—कार्यान्तरेति ॥ छाया ॥

२ ननु सान्तस्य योग्यमेव कार्यान्तरं व्यावर्त्यमिति शङ्कते—नन्विति । स्थानिवदित्यस्य त्रिपाद्यामपि प्रवृत्तेः । तथा चोत्वं न स्यादिति भावः ॥ प्रकृतीति । रुत्वस्येति भावः । अपिना संज्ञासमुच्चयः । तथाच प्रकृतिभावः सान्तं पश्यति न रान्तमिति तत्र प्रगृह्यत्वेऽपि स्ववारणीयतादृशकार्यप्रसङ्गो यत्र च तत्प्रसङ्गो न तं स्वयं पश्यतीति तत्राप्रवृत्तिरेवेति भावः ॥ छाया ॥

३ इति च इत्यनयोर्मध्ये ॥ न्तस्येति । एतत् कुत इत्यन्वयः ॥

४ सामान्यादिति । दृश्यते च 'प्रकृतिवद्' इत्यतिदेशरूपा 'प्रातिपदिकग्रहणे–' इति संज्ञारूपा परिभाषा ॥ छाया ॥

५ भाषाप्रसेत्यत्राकारप्रश्लेषः ॥ छाया ॥

६ सामर्थ्यादिति । अवधारणेनेति शेषः ॥ छाया ॥

७ विशेषशब्दः करणव्युत्पन्न इत्याह—अत्रचेति ॥ इत्युक्तौ चेत्यर्थः ॥ छाया ॥

८ दोषमुद्धरति—उक्तिति ॥ छाया ॥

९ पूर्वपक्षाशयमाह—एवं चेति ॥ अथवेतीति । विशेषणविशेष्यभावव्यत्यय एव ज्ञापकम् । यथा येनेतिसूत्रवार्तिकानां तद्व्यवस्थापकत्वं तद्वत् ॥ वस्तुतस्तु कृतार्थेति शेषपूरणे न कोऽपि दोष इति बोध्यम् ॥ छाया ॥

१० एवंतर्हीति । एकग्रहणसामर्थ्योपक्षयप्रदर्शनम् । अज्ग्रहणमात्रे क्रियमाणे प्रेदमित्यादौ दोषवारणे सिद्धे सति यदेकेत्याद्यर्थः ॥ अन्यत्रेति । फलपरमिदम्, नतु ज्ञाप्यांशकोटिप्रविष्टम् । तादृशार्थज्ञापनासंभवात् । आनर्थक्यापरिहारात् । नहि पीनो देवदत्त इत्यत्र रात्रिजागरगादिकल्पनं युक्तिमत् ॥ छाया ॥

११ 'सूत्रे लिङ्गवचनमतन्त्रम्' इति ज्ञापयन् इत्यादिः ॥ इति दाधि० ॥

१२ यदुक्तमिति । हलन्ताच्चेत्यत्र । दम्भेः सिद्धमित्यन्वयः । अत्र हेतुः हलिति ॥ छाया ॥

प्राधान्यात् संज्ञिनो गुणत्वात् **पशुना यजेते**तिवत् संख्याविवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम् । अंच्समुदायग्रहणशङ्काया निरासार्थं त्वेकग्रहणं ज्ञापनफलं संपद्यते ॥ किं पुनः स्याद् यद्यत्राच्समुदायस्य ग्रहणं स्यात्? ॥ उच्यते । इह अइउ अपेहीति समुदायस्यैका संज्ञा स्याद्, नावयवानाम् । समुदायैकाज्द्विवचनवदित्यन्त्यस्यैव प्रकृतिभावाद्यणादेशो न स्यात् । पूर्वयोस्तु स्वरसंधिः स्यात् । अंच्समुदायपरिग्रहानुरोधित्वाच निपातसमुदायो गृह्येत, एकनिपातस्याच्समुदायस्याभावात् ।

**(उद्द्योतः)** ननु एकग्रहणाभावेऽच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं तत्राह—**संज्ञाया इति । गुणत्वादिति ।** संज्ञोपकारकत्वादित्यर्थः । पशोरपि यागोपकारकत्वाद्गुणत्वम् । नहि यागः पश्वर्थः । अपि तु यागार्थः पशुः । **ग्रहं संमार्ष्टी**त्यादौ तु ग्रहार्थत्वात्संमार्गस्य ग्रहस्य प्राधान्यमिति न तद्गतसंख्या विवक्षितेति भावः ॥

परे तु संज्ञा स्वकार्यद्वारा संज्ञ्युपकारिका न तु संज्ञी संज्ञोपकारकः । अन्यथा ग्रहोऽपि कर्मत्वेन संमार्गार्थः स्यादिति **विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षित**मिति मीमांसकमर्यादैव ज्यायसी, भाष्यसंमता चेतीदं चिन्त्यम् । तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावान्न तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनापि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय इत्याहुः ॥

**जातिग्रहणमित्यस्य** तज्जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थः । अन्यथा जातिग्रहणेऽपि जातेरैकैकव्यक्तिव्यङ्ग्यतयासंगतिरेव । प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्यावक्तव्यत्वाच्च । **इहेत्यादि ।** अत्रेदं चिन्त्यम् । समुदायसंज्ञयाऽवयवानामनतुग्रहात्र द्विवचनन्यायः । नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणम्, स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनैवैकैकत्र सूत्रचारितार्थ्यादिति । तस्मात्तितउशब्दैकदेश अउशब्दानुकरणे उक्तसमुदायानुकरणेवाऽनितिपरे निपातसंज्ञके अउ अकरोदित्यादौ प्रगृह्यत्वं स्यात्तद्वारणायैकग्रहणमिति तत्त्वम् ॥ भाष्ये **दम्भेरिति** । दम्भेः सनि दम्भ इच्चेतीत्त्वे सनीवन्तेति इडभावपक्षे इक्समीपो नकारो न ततो झलादिः सन् परः, यतश्च भात्परः सन्न स इक्समीप इति हलन्ताच्चेति कित्त्वाभावे 'अनिदितामि'ति न लोपो न स्यादिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं सनश्च तस्मात्परत्वमिति कित्त्वे धिप्सतीति सिद्धिरित्यर्थः । अनेन सामीप्यमव्यवहिते एवेति सूचितम् ॥

( आक्षेपभाष्यम् )

**अनाङिति किमर्थम्?** ॥

**(प्रदीपः) अनाङिति किमर्थमिति ।** ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय प्रश्नः ॥

**(उद्द्योतः)** प्रदर्शनाय प्रदर्शनं कारयितुमित्यर्थः ॥

( समाधानभाष्यम् )

**आ उदकान्ताद् ओदकान्तात्** ॥

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—आ एवं तु मन्यसे, आ एवं किल तदिति?** ॥

**(प्रदीपः) इह कस्मादिति ।** अनुबन्धनिवृत्तौ विशेषापरिज्ञानात् प्रश्नः ॥

( समाधानभाष्यम् )

**सानुबन्धकस्येदमाकारस्य ग्रहणम्, अननुबन्धकश्चात्राऽऽकारः** ॥

( आक्षेपभाष्यम् )

**क्व पुनरयं सानुबन्धकः, क्व निरनुबन्धकः?** ॥

( समाधानभाष्यम् )

**ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।**
**एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्'**
**॥ १ ॥ निपात ॥ १४ ॥**

**(प्रदीपः)** अर्थवशाद् विशेषावसाय इत्युत्तरम् । ईष-

---

१ तद्विशदयति—अजिति ॥ हि यतः ॥ ज्ञापनेति ॥ बहुव्रीहिः ॥ छाया ॥

२ ननु प्रत्येकं निपातत्वेन समुदायस्यात्तत्त्वात्कथमापत्तिरत आह—अजिति ॥ चस्त्वर्थे ॥ छाया ॥

३ संस्कारकत्वरूपगुणत्वस्याभावादाह—संज्ञोपेति ॥ तदेवाह—पशोरिति ॥ छाया ॥

४ इदं दूषयति—परेस्त्विति ॥ स्वकार्येति । तत्तच्छास्त्राव्यवहितेत्यर्थः ॥ कर्मत्वेन तत्कर्मत्वेन ॥ मीमांसकेति । गुणगता साऽविवक्षितेति तैः क्वापि नोक्तम् । अतएव ग्रहोद्देशेन संमार्गविधानेपि तस्य न प्राधान्यम् । अतएव वृद्धिसूत्रे प्रधानानुरोधेन संज्ञाया आवृत्तिरुक्ता ॥ छाया ॥

५ तज्जात्याश्रयैकानेकव्यक्तिग्रहणमित्यर्थः इति पाठः ॥ तदिति उपात्तेत्यर्थः ॥ यथासंभवमिति भावः ॥ यथाश्रुतार्थत्यागे बीजमाह—अन्यथेति ॥ उक्तार्थानङ्गीकार इत्यर्थः । ननु तस्य तथैवार्थोस्तु अत आह—प्रवृत्तीति ॥ छाया ॥

६ तत्रादौ दृष्टान्तवैषम्यमाह—समुदायेति । अग्रहणे दृष्टान्तमाह—स्वाङ्गेति ॥ ननु सामर्थ्यात्स्यादत आह—एकैकत्रेति ॥ इति चिन्त्यत्वसमाप्तौ ॥ छाया ॥

७ भाष्याशयमाह—तस्मादिति ॥ स्वरूपबोधनाय संध्यकरणम् ॥ उक्तेति । अइउइति निपातसमुदायेत्यर्थः ॥ इत्यादौ इत्याद्येकदेशे । आदिना समुदायपरामर्शः ॥ छाया ॥

८ अनेन भाष्येण । अन्यथाऽनर्थकमेव चोद्यादि सर्वं स्यादिति भावः ॥ छाया ॥

९ प्रश्नकर्तुरग्रे तत्प्रदर्शकत्वाभावाद्यथाश्रुतासंगतेराह—प्रदर्शनमिति ॥ पुनः प्रश्नपूर्वकतत्प्रदर्शनं कारयितुमयं पक्षः । ङकारादर्शनान्मूलभूततत्साफल्यविषयकः सामान्यतः प्रश्न इत्यर्थः ॥ छाया ॥

१० निवृत्तौ सत्याम् ॥ छाया ॥

११ इदम् अनाङिति ॥ छाया ॥

१२ मर्यादाभिविधाविति । शाकपार्थिवादिः । अन्यथा कथमप्यसंगतेः ॥ यः आत् ॥ छाया ॥

**दर्थे**-आ उष्णमोष्णमिति । **आङीषदर्थ** इति चोक्तम् ॥ **क्रियायोगे**-आ इतः एतः । प्रादिषु हि ङित् पठ्यते ॥ **आङ् मर्यादाभिविध्योरिति** समासविधौ ङिन्निर्दिष्टः । आ उदकान्ताद् ओदकान्तात् । आ अहिच्छत्रात् आहिच्छत्रादिति । विना तेनेति **मर्यादा,** सह तेनेत्यभिविधिः ॥ पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनायाऽऽकारः प्रयुज्यते, आ एवं नु मन्यसे । नैवं पूर्वममंस्थाः संप्रति मन्यस इति । वाक्यारम्भसूचनायाऽऽकार इत्यपरे ॥ तथा स्मृतेः सूचक आकारः प्रयुज्यते ततः स्मृतोऽऽर्थो निर्दिश्यते—आ एवं किल तदिति ॥ १४ ॥

(उद्द्योतः) किंचिद्विधानायोपात्तस्यान्यविधानाय पुनरुपादानमन्वादेशः । प्रकृते च विधानद्वयाभावादेतमित्येनादेशो न कृत इत्याहुः । विनातेनेत्यादि । यथा आ काशीं वृष्टो देव इत्यादौ काशीममिव्याप्य काशीं वर्जयित्वेति वार्थः ॥ १४ ॥

---

( १४ संज्ञासूत्रम् ॥ १ । १ । ५ आ. ५ ॥ )

## ओत् ॥ १ । १ ॥ १५ ॥

( सूत्रवैयर्थ्यनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

( समाधानभाष्यम् )

**आहो इति, उताहो इति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । निपातसमाहारोऽयम् । आह उ आहो इति । उत आह उ उताहो इति । तत्र "निपात एकाजनाङ्" इत्येव सिद्धम् ॥**

(प्रदीपः) ओत् ॥ १५ ॥ निपातसमाहारोऽयमिति । अनर्थकानामपि निपातानां कमीमिदुइत्यादीनां दर्शनादर्थभेदाभावेऽपि निपातसमाहारत्वमुक्तम् ॥

(उद्द्योतः) ओत् ॥ १५ ॥ दर्शनादिति । 'वेदे, चादीनां पादपूरणार्थानां च लोकेपीत्यादिः ॥ अर्थभेदाभावेऽपि । तन्नानात्वाभावेऽपि अवयवा अनर्थकाः, निपातसमुदाय एवार्थवानिति भावः । उशब्दोऽत्र निरनुबन्धकः । तेन उञ इत्यनेन सिद्धिरिति न भ्रमितव्यम् ॥

( समाधानसाधकभाष्यम् )

**एवं तर्ह्येकनिपाता इमे ॥**[10]

(प्रदीपः) एवं तर्हीति । चादिषु तथा[11] पाठादिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथवा[12] प्रतिषिद्धार्थोऽयमारम्भः । ओ षु यातं मरुतः । ओ षुयातं बृहती शक्करी च । ओ च्रित्सखायं सख्या ववृत्त्याम् ( ऋ० १०।१०।१ ) ॥**

(प्रदीपः) ओ षुयातमिति । आ उ ओ इत्यत्रान्तवद्भावाद्भवत्ययमाङ्स्यनाङिति प्रतिषेधः प्राप्नोति, पर्युदासे तु सति न दोषः, तत्र ह्याङ्सदृशस्योकारस्याङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यत इति सिध्यत्येव प्रगृह्यसंज्ञा । तस्याश्च प्रयोजनं क्वचिच्छाखायाम्-**ओ अयातम्**-इति पाठे प्रकृतिभावः ॥

(उद्द्योतः) पर्युदासेत्विति । वस्तुतः[15] पर्युदासेऽपि दोषः आङ्भिन्नत्वस्याशास्त्रीयत्वात् । न च स्वाश्रयमाङ्भिन्नत्वम् आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात् । न चान्तवत्त्वमेव दुर्लभं—शास्त्रीयकार्याभावादिति वाच्यम् । तत्रापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्यविषयत्वेन प्रगृह्यत्वाभावस्य शास्त्रीयतयाऽन्तवत्त्वप्रवृत्तेरिति

---

१ उक्तमिति ॥ कुगतीत्यत्र वाक्यकृता ॥ छाया ॥

२ अन्यथात्वेति । अनभिमतत्वेत्यर्थः । तदाह—नैवमिति ॥ स्मृतेरिति ॥ विस्मृतस्य स्मृतिविषयताया इत्यर्थः ॥ एवं किल तदिति ॥ स्मृतार्थनिर्देशादिदमर्थो लब्धः । तदाह—तत इति ॥ छाया ॥

३ विधानेति ॥ अत्रोभयत्र विधानं प्रवर्तनाविषयत्वरूपमिति प्रकृते एकसत्त्वेपि द्वयं नास्तीति न्यायेन द्वितीये विधानसत्त्वेप्याद्ये तदभावेन तद्द्वयाभावादेतमित्यत्र स न कृत इत्यर्थः ॥ आहुरिति । कौस्तुभकृदादय इत्यर्थः ॥ अत्रारुचिबीजं तु कथितानुकथनमात्रमिति भाष्यविरोध इति ॥ तस्मादज्ञातज्ञापनरूपापूर्वबोधनमेवोभयत्रापि विधानम् । नतु तत् । अत एवेमकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमित्युदाहरणसंगतिः । तदपि प्रकृते आद्ये न ईषदर्थादिवृत्तित्वस्य सिद्धत्वेनाबुद्धबोध्यत्वाभावेनाननुवाद्यत्वाद् अतो नादेशः । वस्तुतस्तु मिथोनिराकाङ्क्षयोरेव तयोर्यत्र सत्ता तत्रैवान्वादेशत्वमिति पूर्वार्धोक्तस्य नित्यमुत्तरसापेक्षत्वेनाधोक्तिरूपत्वेन तद्वाक्यपूर्त्यभावेनोक्तस्य पुनरुक्तिरूपत्वाभावेन तस्य संभव एव नेति न तत्प्रसक्तिः । अत एव कैयटाद्यनुक्तिरिति बोध्यम् ॥ छाया ॥

४ लाघवादुभयोरेकमेवोदाहरणमाह—यथेति ॥ छाया ॥

५ पूर्वपक्षी पृच्छति—किमुदेति ॥

६ सिद्धान्ती समाधत्ते—आहोइतीति ॥

७ पूर्वपक्षी निरस्यति—नैतदिति ॥

८ न्यूनतां निराचष्टे—वेदे इति ॥ तन्नानेति । अर्थनानेत्यर्थः ॥ छाया॥

९ ननूञइत्यनेन सिद्धमिति वाच्ये निपातेति कथमुक्तिरत आह—उशब्दोत्रेति ॥ छाया ॥

१० सिद्धान्ती समाधत्ते—एवंतर्हीति ॥

११ तथेति । अन्यथा पुनः पाठो वृथा स्यादिति भावः ॥ छाया ॥

१२ एकदेशी निपातसमाहारमेवाभ्युपेत्य समाधत्ते—अथवेति ॥

१३ प्रतिषिद्धपदस्वारस्यात्प्रसज्यप्रतिषेधे नेदमित्याह—आउओ इति ॥ छाया ॥

१४ प्रदीपं दूषयति—वस्तुत इति ॥ साहश्यस्य स्वाश्रितस्य सत्त्वादाह—आङ्भिन्नेति ॥ छाया ॥

१५ तत्रापि पर्युदासेपि ॥ एवं च पक्षद्वयसाधारणमिदं भाष्यम् । नचोञ इति सिद्धिः, उक्तोत्तरत्वात् । शाकल्यान्यमते रूपसिद्ध्यर्थत्वाच्च ॥ छाया ॥

बोध्यम् ॥ तस्याश्चेति । प्रगृह्येषु पदपाठे इतिशब्दप्रयोगनियमादपि फले विशेषो बोध्यः ॥

( च्यन्ते सूत्रप्रवृत्तिनिराकरणाधिकरणम् )

( १६५ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ ओतश्च्विप्रतिषेधः ॥ * ॥

( भाष्यम् )

**ओदन्तो निपात इत्यत्र च्यन्तस्य प्रतिषेधो वक्तव्यः ॥ अनदः अदः अभवत्=अदोऽभवत्, अतिरः तिरः अभवत्=तिरोऽभवत् ॥**

(प्रदीपः) **अदोऽभवदिति** । च्यन्तत्वेनात्र निपातत्वम् । ऊर्यादिच्विच्चेत्यत्र निपाताधिकारात् ॥ प्रतिषिद्धार्थत्वादस्य कथमत्र प्राप्तिरिति चेद् ॥ उभयथार्थत्वाददोषः । तथा ह्योदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना प्रतिबन्धाभावाददोऽभवदित्यत्रापि भवति, ओ षु यातमित्यत्रापि परत्वादनाङिति प्रतिषेधं बाधत इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः ॥

(उद्योतः) भाष्ये—**ओतश्च्वीति** । पूर्वसूत्रवदत्राप्यर्थाधिकाराद्गौणमुख्यन्यायस्याप्रवृत्तिरित्याशयः ॥ **प्रतिषिद्धार्थत्वादिति** । प्रतिषिद्धसंज्ञकं पदं प्रतिषिद्धपदेनोच्यते ॥ **परत्वादिति** । निषेधाश्च बलीयांस इत्यस्य तु नायं विषयः । तस्य पूर्वेण सह पाठात्तन्निषेधकत्वादिति भावः ॥

( आक्षेपबाधकभाष्यम् ).

**न वक्तव्यः । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य' इत्येवं न भविष्यति ॥**

(प्रदीपः) ओकारस्य प्रतिपदोक्तस्य ग्रहणमित्युत्तरम् ॥

(उद्योतः) **प्रतिपदोक्तस्येति** ॥ न च प्रतिषिद्धार्थोऽयमारम्भ इति पूर्वभाष्यासङ्गत्यात्रैतत्परिभाषाया अप्रवृत्तिरेवानित्यत्वादुचितेति वाच्यम् । अस्यैकदेश्युक्तत्वात् ॥

( आक्षेपसाधकभाष्यम् )

**एवमपि-अगौः गौः समपद्यत गोऽभवद् । अत्र प्राप्नोति ॥**

(प्रदीपः) **एवमपीति** । ओकारस्यात्र प्रतिपदोक्तत्वमस्ति गमेर्डोः इति साक्षादुच्चारणात् । यस्य हि साक्षादुच्चारणं नास्ति, आद्गुण इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते ॥

(उद्योतः) तद्ध्वनयन् भाष्ये आह—**एवमपीति** । ननु लक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह—**यस्य हीति** ॥

( समाधानभाष्यम् )

**एवं तर्हि "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति । तद्यथा-'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इति न वाहीकोऽनुबध्यते ॥**

(प्रदीपः) **एवं तर्हीति** । गुणादागतो **गौणः** । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः । मुखमिव प्रधानत्वान्मुख्यः । तत्र **स्वंरूपमित्यत्र** रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम् । स चार्थः प्राथम्यान्मुख्य एव गृह्यते । गौणे ह्यर्थे शब्दः प्रवर्तमानो मुख्यार्थारोपेणैव प्रवर्तते । अनियतश्च गौणोऽर्थः । तस्माल्लौकिकोऽयं न्यायो-**गौणमुख्ययोरिति** ॥ गोऽभवदित्यत्र च जाड्यादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य । गोऽभवदित्यत्र च वृत्तौ प्रकृतेः कर्तृत्वं संधीभवन्ति ब्राह्मणा इति बहुवचनदर्शनात् । प्रकृतौ च गोत्वमारोपितं, न तु मुख्यमिति प्रगृह्यलाभावः ॥

(उद्योतः) **प्रधानत्वाद्** । अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात् ॥ तादृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वं च बोध्यम् ॥ गौणमुख्यन्यायबीजं दर्शयितुमाह—**तत्रस्वंरूपमिति** ॥ प्राथम्यमेवोपपादयति—**गौणेहीति** । आरोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः ॥ **मुख्यार्थारोपेणेति** । आरोपितसिंहत्व-

---

१ फलमत्रैवाह—प्रगृह्येष्विति ॥ छाया ॥ तथा च शुक्लयजुःप्रातिशाख्ये कात्यायनः "प्रगृह्यं चर्चायामितिना पदेषु" इति (४।१८) प्रदर्शितवान् ॥ दाधिमथाः ॥

२ वार्तिके ओत इत्यधिकरणस्य शेषत्वविवक्षया षष्ठी । तथा शैलीसत्त्वात् । तदाह—ओदन्त इति ॥ छाया ॥

३ प्रतिषिद्धेति । सर्वं वाक्यमिति न्यायेनेतरनिपाताविषयत्वादिति भावः ॥

४ उभयेति ॥ एतद्वार्तिकान्यथानुपपत्त्या तस्यैकदेश्युक्तित्वेनानादृतत्वादिति भावः ॥

५ तस्येति ॥ अनाङिति प्रतिषेधस्य निपातएकाजित्यंशेनेत्यर्थः ॥ तन्नीति । अनन्तरस्येति न्यायात् ॥ एतेन 'प्रतिषिद्धार्थोऽयमारम्भः' इति प्रतिज्ञाहानिर्दर्शिता । तथाचानेन प्रतिषिद्धार्थव्यवस्था व्यर्थमेव क्रियत इति भावः । एकनिपातपक्षे तु न काचिदनुपपत्तिरिति बोध्यम् ॥ छाया ॥

६ पूर्वेति । तत्पक्षे सर्वेषां लाक्षणिकत्वात् ॥ अस्यैकेति ॥ एतेनैकनिपातपक्ष एव स्थापितोऽनेन, पक्षान्तरे सर्वेषां तत्त्वादेतत्समाध्यनुपपत्तिरिति निरस्तम् ॥ छाया ॥

७ वार्तिकबाधाक्षिपति—एवमपीति । तत्र तथा निर्वाहेपीत्यर्थः ॥

८ हि यतः 'उच्यते' इत्यत्रान्वयः । यत्सूत्रे यस्मिन् गृह्यते तत्र लाक्षणिकत्वादिना परिभाषाविषयत्वम् । सूत्रोपात्तस्य यस्य रूपस्य लक्षणप्रवृत्तिं विना न संभवः तस्यैव लाक्षणिकस्य तद्विषयत्वम् । इदमेव ध्वनयितुम्—ओकारस्येति-आद्गुण इत्यादि सामान्यलक्षणेनेति चोक्तम् ॥ भाष्यमप्येवमेव समञ्जसम् ॥ छाया ॥

९ संप्रत्यय इतीति । 'एवं न भविष्यति' इत्यस्यानुषङ्गः । उभयत्रेति भावः ॥ अस्य लौकिकत्वबोधनायात्र दृष्टान्तमाह—तद्यथेति ॥ छाया ॥

१० एवमर्थे तत्त्वसिद्धावपि शब्दे कथमत आह—तादृशेति ॥ तादृशतादृशेति यावत् ॥ छाया ॥

११ दर्शयितुमिति । 'सचार्थः' इत्यादिनेति शेषः । तथाच तदुपोद्घातत्वेनेदमुच्यते इति भावः ॥ छाया ॥

१२ ननु किमतः प्राथम्यासिद्धेरत आह—आरोपाय हीति ॥ यत एव; मतः प्राथम्यमिति भावः ॥ छाया ॥

वान् माणवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः ॥ मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह—**अनियतश्चेति** । सिंहशब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः ॥ एतेन—'वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तेरोकारस्य[1] लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम् ॥ अनयैव तस्यापि वारणाद् ॥ [2]द्वावामश्चेत्यादेस्तज्ज्ञापकस्य लक्षणप्रतिपदोक्तपरिभाषाऽनित्यत्वमात्रज्ञापकतया वर्णग्रहणे सर्वत्र तदप्रवृत्तौ मानाभावाच्च ॥ न चे[3]यमपि अर्थवत्परिभाषामूलकत्वात्तद्वदेव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्ततां तत्रैवार्थोपस्थितेः सत्त्वादिति वाच्यम् ॥ निपात इति विशिष्टरूपोपादानसत्त्वात् ॥ निपात[4]संज्ञा हि चादिपदोपस्थितचादीनां सति संभवेऽर्थवतामेवेति ये सार्थकास्तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणम्, न तु गौणार्थकानामिति भावः ॥ एवंच कार्यकालपक्षेऽपि च्व्यन्ता निपाता इत्यस्यात्रानु[5]पस्थितिः, एतत्परिभाषावशाद् । विशिष्टरूपपदेन चार्थवद्रूपमेवोच्यते ॥ प्रकृते गौणत्वमुपपादयति—**जाड्यादिनेति** । आरोपे बीजमाह—**प्रकृतेः कर्तृत्वमिति** । एवंच गोऽभवदित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः । य[6]त्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमिति भावः ॥ [ननु?] **सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत** इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तं **वृत्ताविति** । एवंच च्व्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः ॥ प्रकृतेरेव कर्तृत्वे हेतुमाह—**सङ्घीभवन्तीति** ॥

( समाधानबाधकभाष्यम् )

[7]**कथं तर्हि वाहीके वृद्ध्यात्वे भवतः,-गौस्तिष्ठति, गामानयेति ? ॥**

( समाधानसाधकभाष्यम् )

**अर्था[8]श्रय एतदेवं भवति । यद्धि शब्दाश्रयम्, शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ॥ ओत् ॥ १५ ॥**

(प्रदीपः) **शब्दाश्रये चेति** । स्वार्थे वृत्तात् प्रातिपदिकाद्विभक्त्यावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते । त[9]स्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वान्मुख्यव्यपदेशस्य गौणाभावेऽभावाच्छब्दाश्रये चेत्युक्तं न त्वि[10]त्रार्थो नापेक्षते । तत्र यथा **श्वेतं छागमालभेतेति** गुणद्रव्ययोः श्रौतः क्रियासंबन्धो, वाक्यीयात्तु न्यायात् पश्चात् परस्परेण । एवं गां वाहीकमानयेति पूर्वं क्रियाभिसंबन्धापेक्षया विभक्त्यावुत्पन्नायां वाक्यीयात्तु न्यायात् सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति **पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्वित्युक्तम् शब्दाश्रये चेति** ॥ १५ ॥

(उद्योतः) ननु शब्दाश्रये चेतिभाष्यस्यार्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते, स चायुक्तः [11]सर्वनामस्थानाम्शसाक्षिप्तप्रातिपदिकस्यौत इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह—**स्वार्थे इति** ॥ स्वार्थादिप्रयुक्तकार्येण पूर्णस्य पदस्यार्थप्रतिपादनाय प्रयोगार्हस्य पदार्थान्तरान्वये बाधप्रतिसन्धाने गौ[12]णार्थ-

---

१ ओकारस्येति । अदोऽभवदित्यत्रेतिभावः ॥ एतेनेत्यस्यैव व्याख्या—अनयैवेति । गौणमुख्यपरिभाषयैवेत्यर्थः ॥ छाया ॥

२ इदं परारीत्याऽतः सिद्धान्तमाह—द्वावेति ॥ तदिति । वर्णग्रहणेऽप्रवृत्तीत्यर्थः ॥ मात्रपदेन विशेषव्यवच्छेदः ॥ मानेति । तथाच नैवं तस्यैकदेश्युक्तित्वं किंतु माग्युक्तरीत्यैवेति भावः ॥

३ उपोद्घातत्वेनैतेनेत्याद्युक्त्वा प्रकृतमाह—नचेयमिति ॥ सत्त्वादिति । अनुवृत्त्येति भावः ॥ छाया ॥

४ नन्वनर्थकानामपि तेषां सत्त्वादर्थवत एवाग्रहणात्कथमेतत्माप्तिरत आह—निपातसंज्ञेति ॥ सतीत्यनेन तेषामपि संग्रहः सूचितः ॥ अत एवाह—ये इति ॥ छाया ॥

५ अनुपेति । अन्यथा तत्सामर्थ्यात्स्यादेव ॥ नन्वेवमपि रूपे न वैशिष्ट्यं कस्यचिदिति कथं तद्विषयकत्वमत आह—विशिष्टेति ॥ एतेन—गोशब्दोऽत्र गौणार्थक इत्येतावन्मात्रेणायं न्याय उक्तः नतु वार्तिकं विनाऽनेनैव निर्वाहः । प्रगृह्यसंज्ञाया अपि वृद्ध्यात्वसमकक्षत्वेन न्यायेन वारणासंभवात् । नत्वत्रार्थाश्रयणं वृद्ध्यात्वयोर्नेति युक्तिमत् । किंच गौणत्वमात्रेणेयं संज्ञा न, तर्हि निपातादिसंज्ञापि न स्यात् । तस्माद्वार्तिकेनैव वारणम्, नतु न्यायेन । फलं त्वस्य माणवकादिशब्दाट्टुगाद्यभावः । अग्निशब्दस्य तेजस्वित्वादिशून्यसंज्ञायां तु प्रसिद्धाप्रसिद्धेति न्यायेन तद्वारणम् । प्रसिद्धमुख्ययोरप्रसिद्धगौणयोरपर्यायत्वेनैकयाऽन्यस्या गतार्थत्वं न ॥ एतेन गतार्थतां वदन्कौस्तुभकृन्निरस्तः । युष्मद्युपपद इत्यादावादेशाभावोऽस्तित्वमित्यादौ तद्भाव इति वैषम्यस्य दुरुपपादत्वात् ॥ मन्मते तु आद्ये प्रसिद्धेति वारणम् अन्त्ये प्रसिद्धशब्दमात्राश्रये द्वयोरप्रवृत्त्या तद्भावः ॥ एतेन स्वं रूपमित्यादि—सुकययोरितीत्यन्तं कैयटोक्तं निरस्तम् प्रकृतसूत्रेऽर्थवतः कस्याप्यग्रहणेन स्वं रूपमित्यादेरसंबद्धप्रलापत्वात् । नहि ओत्–निपातान्यतरशब्दः स्वं रूपमित्यस्य विषयः । तस्य शब्दशास्त्रे कृता या संज्ञा तदात्मकत्वादिति निरस्तम् ॥ सर्वस्य भाष्यस्यासंगत्यापत्तेः । तदज्ञानकल्पनापेक्षया स्वाज्ञानकल्पनाया एव युक्तत्वात् । वार्तिकखण्डनार्थमेव भगवतः प्रवृत्तत्वात् । वैषम्यस्य भगवतैवाग्रेऽत्राश्रयणेन कण्ठतो निरस्तत्वात् । निपातसंज्ञायां विशिष्टरूपोपादानाभावेनास्या अप्रवृत्तेः । अव्ययसंज्ञायां तु यथा न तथा वक्ष्यते । अप्रसिद्धस्यापि तद्गुणारोपादेव बोधेन द्वितीयपरिभाषाया अभावात् ॥ अत एव युष्मद्युपपद इत्यादौ वैषम्यस्य निर्वाहेण कौस्तुभादेर्युक्तत्वात् ॥ प्रकृतेऽर्थवतो ग्रहणस्योक्तत्वेनासंबद्धप्रलापाभावात् ॥ अत एव विशिष्टरूपोपादानसत्त्वात्स्वं रूपेत्यस्यांशस्योक्तत्वेन तद्विषयत्वस्यानुक्तत्वाच्चेति दिक् ॥ छाया ॥

६ ननु स्वरूपत एव तद्रूपेण भवनं कुतो नात आह—यत्रचेति ॥ तत्संभवमाह—योगीति ॥ छाया ॥

७ [ वार्तिकवादी शङ्कते—कथमिति ॥ ] वाहीक इति । तल्लक्षकयोः शब्दयोरित्यर्थः ॥ छाया ॥

८ [ न्यायवादी समाधत्ते—] अर्थेति ॥ लौकिकार्थवत्त्वयोग्यपदाश्रये उक्तन्यायेन मुख्यस्यैव ग्रहणं भवतीत्यर्थः ॥ छाया ॥

९ ननु तदानीमपि न्यायसंचारः कुतो न तस्य मुख्यत्वस्य सत्त्वादाह—तस्य चेति ॥ व्यपदेशो व्यवहारः । अग्रे व्यपदेशशब्देन शब्दः ॥ छाया॥

१० उक्ताशयव्यतिरेकमाह—नत्विति ॥ छाया ॥

११ वृद्ध्यात्वक्रमेणाह—सर्वेति ॥ छाया ॥

१२ प्रतीतेरिति । तथाचानयोर्विशिष्टशब्दाश्रयत्वेपि तदानीं गौणार्थकत्वमेव नेति न न्यायप्रवृत्तिरिति भावः ॥ छाया ॥

प्रतीतेरिति भावः । [1]आक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावाच्च । **गौणापेक्षयेति** । मुख्यशब्दस्य गौणापेक्षया संबन्धिशब्दत्वात् । **गौणाभावे** [2]गौणस्य बुद्ध्यसंनिधाने **मुख्यव्यपदेशस्य** मुख्यपदस्याभावादित्यन्वयः ॥ एवंच **शब्दाश्रये** चेति भाष्यस्य मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इत्यर्थः । पदव्यपदेशरहितस्य कार्यित्वेनाश्रयणमिति फलितमिति तात्पर्यम् ॥ ननु द्वितीयादेः [3]कर्मत्वाद्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानयेत्यादौ विशिष्टस्य क्रियासंबन्धेन कर्मत्वेऽपि तदभिधानाय जायमाना द्वितीया समुदायस्याप्रातिपदिकत्वात्[4]प्रत्येकं प्रवर्तते, ततश्च पूर्वमेव गौणत्वादात्वं न स्यादत आह—**तत्रेति** ॥ **श्रौतः क्रियासंबन्ध इति** द्वितीया[5]श्रुत्यनुपपत्त्या कल्पित इत्यर्थः ॥ विभक्त्यन्तेन हि उपस्थितार्थस्य क्रियान्वय इति ततः प्राग् गुणे साक्षात्परंपरासाधारण्येन द्रव्ये च साक्षात् सामान्यतः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः ॥ **वाक्यीयान् न्यायाद्** । आकाङ्क्षादिमूलकशक्त्या । **पश्चाद्** विभक्त्युत्पत्त्यनन्तरम् ॥ **एवमिति** । द्वितीयादेः सामान्यतः क्रियासंबन्धज्ञानापेक्षत्वात् तज्ज्ञानमूलकद्वितीयाद्युत्पत्तौ गोपदार्थस्य वाहीकेऽन्वयः प[6]श्चादेव । एवंच कर्मणोरेव विशेष्यविशेषणभावः, न तु विशिष्टस्य कर्मत्वमिति भावः ॥ य[7]त्तु—विभक्त्यर्थस्य क्रियाकारकसंबन्धरूपत्वेन तयोः संबन्धबोधः श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः पश्चाद्गुणद्रव्ययोः परस्परान्वयबोधः । एवं गां वाहीकमानयेत्यादावपीति कैयटार्थं[8] व्याख्याय दूषयन्ति—गां वाहीकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासंबन्ध एवासंभवी तत्र पूर्वमेव गौणत्वावगतेरात्वाद्यनापत्तेरिति ॥ तदेतेन परास्तम् । विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितरान्वयेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च तादृशबोधद्वयकल्पने गौरवाच्च अनुभवाभावाच्च ॥ किं च अपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव [9]गौणार्थत्वग्रहेण अत्वं त्वं संपद्यते अमहान्महान्भूतस्त्वद्भवतीत्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यमात्रविषयत्व[10]मुपात्तविशिष्टरूपकेत्यपि बोध्यम् । [11]अत एवात इञित्यादेः श्वशुरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः । किं [12]च गामित्युक्ते सर्वा क्रिया प्रसक्तेत्याद्यर्थवत्सूत्रस्थभाष्यबलात्संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति इति वृद्धिसूत्रस्थभाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मदुक्तव्याख्यैव तस्योचिता । प्रयो[13]क्तापि पदान्येवार्थे मुख्ये गौणे वा प्रयुयुक्षति, न तु प्रातिपदिकादिक्रमेणेति सुष्ठूच्यते—**पदकार्येष्विति** । **सामानाधिकरण्यादिति** । [14]इदमुपलक्षणं पठनादिक्रियान्वयादित्यपि बोध्यम् ॥ १५ ॥

(१५ प्रगृह्यसंज्ञादेशिसूत्रम् ॥ १ । १ । ५ आ. ६ ॥)

## उञ ऊँ ॥ १ । १ । १७[15] ॥

### (अनिष्टापत्तिवारणाधिकरणम्)

### (आक्षेपभाष्यम्)

**[16]इह कस्मान्न भवति—आहो इति. उताहो इति?॥**

---

१ अभ्युपेत्येदम्, वस्तुतो विशिष्टशब्दाश्रयत्वमेव नेति तदमाप्तिरेवेत्याह—आक्षेपे इति । अन्वयस्य पदत्वेन संभवेन अन्यथानुपपत्त्यभावादिति भावः ॥ ननु तेषां प्रकृत्यंशे एव साकाङ्क्षत्वमिति सास्त्येवात आह—आक्षिप्तस्य वेति ॥ तत्र वृत्त्युपस्थाप्यत्वस्यैव नियामकत्वादिति भावः ॥ छाया ॥

२ सर्वथा तदभावस्यासत्त्वादाह—गौणस्येति ॥ एतावता किमत आह—एवंचेति ॥ तदानीं तस्य मुख्यत्वाभावे चेत्यर्थः । शाब्दार्थमाह—मुख्येति ॥ फलितार्थमाह—पदेति ॥ फलितं फलितार्थः ॥ तात्पर्यमिति ॥ कैयटस्येति भावः ॥ छाया ॥

३ कर्मत्वेति । धर्मपक्षे इदम् । धर्मिपक्षे तदवच्छिन्नेत्यर्थः ॥ तयेति । कारकत्वस्य क्रियानिरूपितत्वेन तदन्वयावश्यकत्वेनेति शेषः ॥ छाया ॥

४ प्रत्येकमिति । आनर्थक्यन्यायेन ॥ तत्रेतीति ॥ तस्मिन्सतीत्यर्थः । छाया

५ तस्य शक्त्या वाक्यबोध्यत्वेन वस्तुतः श्रुतिबोध्यत्वाभावादाह—द्वितीयेति ॥ एवंचायं सर्वो ग्रन्थः स्वरीत्या नतु जैमिनिरीत्येतिबोध्यम् ॥ ततः विभक्तेः ॥ सामान्यतः क्रियात्वेन ॥ एवमग्रेपि ॥ छाया ॥

६ पश्चादेव । विभक्त्युत्पत्त्यनन्तरमेव । फलितमाह—एवंचेति ॥ छाया ॥

७ नारायणकौस्तुभाद्युक्तिं खण्डयति—यत्त्विति ॥ संबन्धेति । तयोः संबन्धेत्यर्थः ॥ अतएवाह—तयोरिति ॥ शीघ्रमिति ॥ तस्या निरपेक्षप्रमाणत्वात् ॥ पश्चादिति । समभिव्याहाररूपवाक्यात् ॥ व्याख्याय प्रतिपाद्य ॥ गां वाहीकमानयेत्यादौ निर्वाहेप्यन्यत्रानिर्वाहमाह—गामिति ॥ छाया ॥

८ एतदुक्तरीत्या तत्रापि सिद्धत्वेनादोपान्तरायाह—विभक्त्यन्तेति ॥ छा.

९ गौणार्थकत्वस्य ग्रहेणेति पाठः ॥ मुनिसंमतिमप्याह—अत्वमिति । आदिना मद्भवति महान् भवतीत्यादिपरिग्रहः । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः । भाष्यप्रयोगेऽप्येवम् ॥ छाया ॥

१० विशेषमाह—उपात्तेति ॥ बहुव्रीहिः ॥ पदकार्यविशेषणम् ॥

११ एतत्फलमाह—अत एवेति । प्रवृत्तिरिति । श्वाशुरिरित्यत्रेति भावः ॥ एतत्तत्त्वं गदायाम् ॥

१२ इदं प्रयोक्तॄणां तदा गौणार्थकत्वप्रतीतिमभ्युपेत्य, वस्तुतः सापि नेत्याह—किंचेति ॥ करत्वेनेति । नियामकत्वस्य लाभेनेत्यर्थः ॥ एतस्य कैयटस्य ॥ छाया ॥

१३ तदेवाह—प्रयोक्तापीति ॥ प्रयुयुक्षत इति पाठः ॥

१४ न्यूनतां निराचष्टे—इदमुपेति ॥ छाया ॥

१५ 'उञ ऊँ' इत्येतावदेकमेव सूत्रं पाणिनिना प्रोक्तम् अतएव प्रकृतसूत्रपदभञ्जर्याम्—'यद्ययमेको योगः स्यात् उञ ऊँ इति यथापठितं सूत्रकारेण' इति हरदत्तोक्तं संगच्छते ॥ तथा च समुदित 'उञ ऊँ' इत्यत्रैव संख्याङ्क एक एवोचितः,नत्वाधुनिककल्पितः काशिकायां कौमुद्यां भाष्ये चोपलभ्यमानः क्रमिकः पृथक् संख्याङ्कः । नच भाष्यकृता योगविभागस्य दर्शितत्वेन संख्याविभागोप्युचित एवेति वाच्यम् । तथा सति 'सहसुपा' 'श्लिष आलिङ्गने' इत्यादावपि योगविभागसत्त्वेन पृथक्संख्याङ्कस्यौचित्यापत्तेः ॥ न च तत्र योगविभागस्य भाष्यकृत्कृतत्वेन न पृथक्संख्याङ्कदानम् । अत्र तु पाणिनिकृतत्वेन पृथग्गणनेति वाच्यम् । अत्रापि भाष्ये कृत इत्यनुक्त्वा योगविभागः कर्तव्य इति तव्यप्रत्ययप्रयोगेण योगविभागस्य पाणिन्यकृतत्वसूचनेन पृथक्संख्याङ्गीकारानौचित्यात् । न चैवं प्रथमपादे पञ्चसप्ततिः सूत्राणि न स्युरिति वाच्यम् । पञ्चसप्ततिगणनाया अप्रामाणिकत्वात् । नच 'वृद्धिरादैजन्तवदव्ययीभावः प्रत्ययस्य लुक् पञ्चदश' इति लेखस्य पादसमाप्तावष्टाध्याय्यां पाणिनिकृतस्यैव मानत्वेनाप्रामाणिकत्वकल्पनाया मूलोच्छेद इति वाच्यम् । प्रतिपादसमाप्ति तादृशलेखोपदर्शितसंख्याया बहुत्र वार्तिकगणसूत्रप्रक्षेपेण पूर्तिदर्शनात्तादृशलेखे पाणिनिकृतत्वाभावकल्पनत एव दोषोद्धारसंभवात् ॥ प्राचीनपुस्तके 'वृद्धिस्तरपृशिसर्वप्रत्ययलोपे चतुर्दश' इत्येवमेव पाठस्योपलभ्यमानत्वाचेतिदिक् ॥ दा०

१६ पूर्वपक्षी पृच्छति—इह कस्मादिति ॥

(प्रदीपः) उञ ऊँ ॥ १७ ॥ इह कस्मादिति । निपातसमाहारं मत्वा प्रश्नः ॥

(उद्द्योतः) उञ ऊँ ॥ १७ ॥ प्रश्न इति । एवंचात्र ऊँ आदेशः प्राप्नोतीति भावः ॥

( आक्षेपबाधकभाष्यम् )

उञ[1] इत्युच्यते । न चात्रोञं पश्यामः ॥

( आक्षेपसाधकभाष्यम् )

उञोऽयमन्येन[2] सहैकादेश उञ्ग्रहणेन गृह्यते ॥

( आक्षेपबाधकभाष्यम् )

आचार्यप्रवृत्तिर्ज्ञापयति[3]–'नोञ एकादेश उञ्ग्रहणेन गृह्यते' इति । यदयम् "ओदू" इत्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति ॥

(प्रदीपः) यदयमिति । एकादेशे कृते आदिवद्भावात् संज्ञासिद्धिः ॥

(उद्द्योतः) संज्ञासिद्धिरिति । निपातएकाजित्यनेनेत्यर्थः॥ स्थानिवद्भावेन[4] तु नैतल्लभ्यम् । एकादेशस्थान्यल्वृत्तिधर्मत्वात् (?)। एकादेशस्थान्यल्मात्रवृत्तिधर्मस्तु नायम् । उञिति समुदायेऽपि सत्त्वात् । तेनान्तादिवद्भावेन ताद्रूप्यानतिदेशेऽपि न दोषः ॥

( आक्षेपसाधकभाष्यम् )

नैतदस्ति[5] ज्ञापकम् । उक्तमेतत्—'प्रतिषिद्धार्थोऽयमारम्भः' इति ॥ दोषः खल्वपि स्यात्, यद्युञेकादेश उञ्ग्रहणेन गृह्येत । जानु उ अस्य रुजति, जानू अस्य रुजति, जान्वस्य रुजति, "मय उञो वो वा" इति वत्वं न स्यात् ॥

(उद्द्योतः) भाष्ये यद्युञ् इति । सामान्येन ज्ञापकमिति भावः । वत्वाभावपक्षे[6] ऊँ आदेशो न स्यादित्यपि दोषो बोध्यः ॥

( समाधानभाष्यम् )

एवं[7] तर्ह्येकनिपाता इमे ॥

अथ वा द्वावुकाराविमौ । एकोऽननुबन्धकः । अपरः सानुबन्धकः । तयोऽननुबन्धकस्तस्यैष एकादेशः ॥

( योगविभागाधिकरणम् )

( १६६[1] सिद्धान्तआक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ उञ इति योगविभागः ॥ * ॥

( भाष्यम् )

उञ इति योगविभागः कर्तव्यः । "उञः" शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञा भवति । उइति विति ॥ ततः "ऊँ" उञ ऊँ इत्ययमादेशो भवति शाकल्यस्याचार्यस्य मतेन दीर्घोऽनुनासिकः प्रगृह्यसंज्ञकश्च । ऊँ इति ॥

(प्रदीपः) इह रूपत्रयं साध्यम्—उइति, विति, ऊँ इति । तच्चैकयोगे[9] न सिध्यति । एकयोगे ह्युञ इति श्रुतिरादेशेन श्रुतत्वात् संबध्यते न प्रगृह्यसंज्ञया । सा तु **निपात एकाजनाङिति** नित्यैवास्य भवति । शाकल्यश्रुत्यनुवृत्त्या ऊँ आदेशे विकल्पिते रूपद्वयं स्यात्—उ इति, ऊँ इति । न तु वितीति, तदर्थमाह[10]-**उञइति योगविभाग इति** । उञ इत्यत्र **शाकल्यस्येतौ प्रगृह्य**मिति चानुवर्तते । तत्र[11] प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते, नान्येषामिति । स्मृत्यन्तरानुसन्धानद्वारेण विभाषा संपद्यते । उ इति वितीति । ऊं इत्यत्र च यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात् । ततश्च 'विति, ऊँ इति' एते द्वे एव रूपे स्याताम् । तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि रूपाणि सिध्यन्ति ॥

(उद्द्योतः) नित्यैवेति । आदेशाभावपक्षे[12] इत्यर्थः ॥ ननु वितीति ॥ न च उ इतीत्यस्य निरनुबन्धकोकारमादाय सिद्धत्वेन शाकल्यानुवृत्तिसामर्थ्यात्[13]पक्षे वितीति भविष्यतीति वाच्यम् । मयः परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गात् । शाकल्यानुवृत्तिसामर्थ्यान्निपातेति[14] प्रगृह्यत्वाभावे मय इति वत्वस्यासिद्धत्वेनेकोयणचीति वत्वेऽनुस्वारापत्तेः उ इतीत्यतः सानुबन्धकबोधस्यापीष्टत्वेन तदनापत्तेश्चेति भावः । अन्ये तु अनेन[15] प्रकरणात् प्रगृह्यत्वस्य ऊँ आदेशस्य च विधानेन तस्य निपात इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे ऊँ इति वितीति

---

१ तटस्थः समाधत्ते—उञ इति ॥

२ पूर्वपक्षी निरस्यति—उञोऽयमिति ॥

३ तटस्थः समाधत्ते—आचार्येति ॥

४ आदिवदित्युक्तिं सफलयति—स्थानीति । नन्वेवमादिवद्भावोपि न स्यान्निषेधादत आह—एकेति ॥ छाया ॥

५ [पूर्वपक्षी निरस्यति—नैतदस्तीति ॥] ज्ञापकमिति । यत इति शेषः ॥ दोषान्तरमाह—दोष इति ॥ छाया ॥

६ ननु न सामान्यतो ज्ञापकमिति न भाष्योक्तदोषोऽत आह–वत्वाभावेति ॥ छाया ॥ इतिपरकत्व इति शेषः ॥

७ सिद्धान्ती समाधत्ते—एवं तर्हीति ॥

८ अत एव 'यदेतनूँ इति पदकाराः पठन्ति' इत्यनुकरणे 'यरोऽनुनासिकेऽनुनासिको वा' इत्येष विधिः प्रवर्तते ॥ श० कौ० ॥

९ चस्त्वर्थे ॥ छाया ॥

१० तदर्थं वितीतिसिद्ध्यर्थम् ॥ छाया ॥

११ तत्र उञ इत्यत्र ॥ छाया ॥

१२ आदेशाभावेति ॥ तत्पक्षे तेन बाधात् ॥ छाया ॥

१३ सामर्थ्यादिति । निपात इत्यप्रवृत्तेरिति भावः ॥ छाया ॥

१४ असिद्धिप्रसङ्गमुपपादयति—शाकल्येति ॥ दोषान्तरं तत्राह—उ इतीति ॥ छाया ॥

१५ अनेन उञ ऊँ इत्यनेन । उञ इति भावः ॥ श्रुतत्वादाह—आदेशेति ॥ तस्य प्रगृह्यत्वसमानाधिकरणस्यादेशस्य ॥ छाया ॥

सिध्यति, न तु उ इति अतो योगविभागः ॥ नं[1] चापवादे विशिष्टे ऊँ आदेशे असंति निपातेति प्रगृह्यत्वं स्यात् अप्रवर्त्तमानापवादस्योत्सर्गबाधकत्वाभावात्, अत एव पारेमध्ये इत्यव्ययीभावाभावे उत्सर्गः षष्ठीसमासो भवतीति वाच्यम् । प्रगृह्यपदस्य सर्वत्र[2] साक्षादुद्देश्यसंबन्धस्य कृप्तत्वेनात्र विधेयविशेषणत्वे मानाभावात् । सहे[3] विधानेन वाक्यभेदस्याप्यभावात्स्थानिवद्भावेन च ऊँ इत्यस्य प्रगृह्यकार्यं बोध्यम् । एवंच पक्षे प्रगृह्यत्वाभावेऽप्यस्य तात्पर्यान्नैतदभावे निपात इत्यस्य प्रवृत्तिरित्याहुः ॥ प्रगृह्यस्येति । अनुव[4]र्त्तमानप्रगृह्यपदस्यादेशेन संबन्धे उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञकस्य ऊँभावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्त्तमानप्रगृह्यपदं पष्ठ्यन्ततया विपरिणमय्य स्थानिना संबध्यत इति भावः ॥ द्वे[5] एवेति । न च[6] उ इतीति रूपमपि निरनुबन्धकोकारमादाय सिद्धम् । सानुबन्धकप्रतीत्यनापत्तेः । मयः परत्वे किम्विवीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गाच्च । वस्तुतस्तु[7] उञ इत्यस्यात्रानुवृत्तस्यार्थाधिकारादप्रगृह्यपरतैव प्रगृह्यमिति चादेशविशेषणमेव । तथैव[8] भाष्यस्वरसादिति ऊँ इति उ इति च रूपे स्यातां न तु वितीति तदर्थं विकल्पानुवृत्तिः । ऊँ इति[9] दीर्घोच्चारणात्प्रगृह्यपदस्यात्र संबन्ध इति सर्वमवदातम् ॥

( योगविभागवैयर्थ्यभाष्यम् )

**किमर्थो योगविभागः ? ।**

(उद्द्योतः) किमर्थो योगविभाग इति । प्रगृह्यत्वादेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोग एव प्रवृत्तिः स्यात् । एवंच ऊँ इति वितीति च रूपे । तेचैकयोगेऽपि सिध्यत इति प्रश्नः ॥ एवंचैकयोगे वितीति न सिध्यतीति प्रागुक्तकैयटश्चिन्त्य एवेति बोध्यम् ॥

( १६६[२] आक्षेपप्रयोजनवार्तिक२यखण्डम् ॥ १ ॥ )

## ॥ * ॥ ऊँ वा शाकल्यस्य ॥ * ॥

( भाष्यम् )

**शाकल्यस्याचार्यस्य मतेन ऊँ विभाषा यथा स्यात् । ऊँ इति उ इति । अन्येषामाचार्याणां मतेन—विति ॥ उ ञ ऊँ ॥ १७ ॥**

(प्रदीपः) उं वा शाकल्यस्येति । शाकल्यस्य—श्रुतेरेव फलं वाग्रहणेन प्रतिपादयति । एतदेव व्याचष्टे-शाकल्यस्य विभाषा यथा स्यादिति । प्रगृह्यसंज्ञादेशश्च । तत्र यद्यपि पूर्वसूत्रेषु फलरूपतया निर्देशात् प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयस्तथापीहोञ इति षष्ठीनिर्देशात् स्वरूपपदार्थकः संपद्यते ॥ १७ ॥

(उद्द्योतः) शाकल्येति । एवंच योगविभागसामर्थ्याच् शाकल्यानुवृत्तिसामर्थ्याच्च तंत्र यथाश्रुतम् । किं तु विकल्पमात्रतात्पर्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः । एवंच शाकल्यमत एव विकल्पः । तदाह—भाष्ये शाकल्यस्य विभाषेति ॥ शाकल्यमते ऊँ आदेशविकल्पे तत्फलति तद्दर्शयति—प्रगृह्यसंज्ञादेशश्चेति । तन्मते पर्यायेणोभयं सिध्यतीत्यर्थः ॥ ननु प्रगृह्यमित्यस्य प्रथमान्तस्य कथमुञ इत्यनेन पष्ठ्यन्तेनान्वय इत्यत आह—यद्यपीति ॥ फलरूपतयेति । फलं संज्ञाया बोध्यतया संज्ञिनः । च तद्बोधकं पदं लक्ष्यते । तद्रूपतया तत्समानविभक्तिकतयेत्यर्थः ॥ द्विवचनाद्यभिधेय इति बहुव्रीहिः । प्रगृह्यशब्दवदभिन्नं[10] द्विवचनादीति बोधः । प्रगृह्यशब्दत्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम् ॥ स्वरूपपदार्थक इति । उञो वाचकं प्रगृह्यपदमित्यर्थादिति भावः ॥ वस्तुतः[11] पूर्वत्रापि शब्दपर एव शब्दार्थयोरभेदात्सामानाधिकरण्यम् । पटः शुक्ल इतिवत् । प्रकृते तु पटस्य शुक्ल इत्यत्रेवोक्तरीत्या वैयधिकरण्येनान्वय इति न कश्चिद्दोषः ॥ केचित्तु[12] प्रदेशे वृद्धिपदाभिन्ना आदैच इति उपस्थितिः । संज्ञावाक्ये तु तथा शाब्दबोधः । द्विवचनाद्यभिधेय इत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः । षष्ठीसमभिव्याहारे तु विशेष्यतया स्वरूपपदार्थक इति कैयटं योजयन्ति ॥ १७ ॥

( १६ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ७ ॥ )

# ईदूतौ च सप्तम्यर्थे ॥ १ । १ । १८ ॥

( अर्थग्रहणप्रयोजननिरूपणाधिकरणम् )

( १६७ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ 'ईदूतौ सप्तमीत्येव' ॥ * ॥

( भाष्यम् )

**ईदूतौ[13] सप्तमीत्येव सिद्धम्, नार्थोऽर्थग्रहणेन ॥**

(प्रदीपः) ईदूतौ च सप्तम्यर्थे ॥ १८ ॥ ईदूतौ सप्तमीत्येवेति । सप्तमीसहचरितं यदीदूदन्तं सप्तम्यां वा परतस्तत् प्रगृह्यसंज्ञं भवतीत्येवं प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां सोमो गौरी अधिश्रित इत्यादौ भविष्यति प्रगृह्यसंज्ञेति प्रश्नः ॥

१ प्रगृह्यत्वविशिष्टादेशविधिरित्याशयेनाशङ्कते—नचेति ॥ छाया ॥

२ सर्वत्र पतदन्यत्र ॥ छाया ॥

३ ननूभयविधाने वाक्यभेदापत्तिरतस्तथावश्यकमत आह—सहेति ॥ नन्वेवं कथमादेशे प्रगृह्यत्वमत आह—स्थानीति ॥ चस्त्वर्थे ॥ एवं च उक्तरीत्याश्रयणम् ॥ तत्र युक्तन्तरमप्याह—एवंचेति ॥ छाया ॥

४ ननु प्रगृह्यमित्यनुवृत्त्या प्रथमान्तोक्तिः कथमत आह—अनुवर्त्तेति ॥ मात्रं कार्त्स्न्ये ॥ छाया ॥

५ प्राग्वदाह—नचेति ॥ छाया ॥

६ पूर्वपक्षतत्त्वमाह—वस्तुत इति ॥ तथैवेति । प्रगृह्यसंज्ञकत्वेत्युक्तेः ।

७ नन्वत्र प्रगृह्यत्वस्यासंबन्ध इति प्रागुक्तमत आह—ऊँ इतीति ॥

८ चिन्त्यएवेतीति । तथान्येत्यादिना प्रागुक्तमेव ॥ छाया ॥

९ तत् शाकल्यपदम् ॥ छाया ॥

१० प्राचां सिद्धान्तरीत्याह—प्रगृह्यशब्दवदिति ॥ छाया ॥

११ अत एव भाष्यसिद्धान्तमाह—वस्तुत इति ॥ उक्तेति । भेदविवक्षया उञो वाचकमित्यादीत्यर्थः ॥ छाया ॥

१२ केचिदिति । अक्षरमर्यादया न लभ्यमिदमित्यस्वारसिः ॥ छाया ॥

१३ श्लोकवार्तिकं खण्डशो व्याचष्टे—ईदूतावित्यादि ॥ छाया ॥

१४ यदीदूदन्तमित्यस्योभयान्वयः ॥ अपिना पूर्वसवर्णसमुच्चयः ॥ छाया ॥

(उद्द्योतः) ईदूतौ च ॥ १८ ॥ ईकारोकारात्मकसप्तम्या असंभवं मत्वाह—सप्तमीसहेत्यादि । तात्पर्या[1]नुपपत्त्या च लक्षणेति भावः ॥ सप्तम्यां चेति । सप्तमीति पदं लुप्तसप्तमीकं व्याख्यास्यत इति भावः ॥ [2]जघन्यवृत्तिकल्पनापेक्षयेदं न्याय्यमिति तात्पर्यम् ॥ लुप्तायामपीति । न लुमतेति निषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थेऽपीति भावः ॥

( १६८ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ लुप्तेऽर्थग्रहणाद्भवेत् ॥ * ॥

( भाष्यम् )

लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति ॥

क्व ? ॥

सोमो गौरी अधिश्रितः (ऋ० ९।१२।३) । इष्यते चात्रापि स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमर्थग्रहणम् ॥

(प्रदीपः) लुप्त इति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याभावात् प्रत्ययनिमित्तं यत्रान्यस्य कार्यं विधीयते तत्रैव प्रत्ययलक्षणसद्भावाद् गौरीत्यत्राप्रसङ्गादर्थग्रहणं कृतम् । अर्थग्रहणे सत्यर्थनिमित्ता संज्ञेयं भवति न प्रत्ययश्रवणनिमित्तेति लोपेऽपि सिध्यति ॥

(उद्द्योतः) ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे प्रत्ययलक्षणेन सिद्धं सोमो गौरी इति, तत्राह—संज्ञेति ॥ सप्तम्या एवेति । सप्तमीपदस्य लुप्तसप्तम्यन्तत्वे सप्तमीसहचरितलाक्षणिकत्वे च न मानमिति भावः ॥ यद्यपीकारोकारसप्तम्योरसंभव एव तत्र मानं तथापि वचनादित्यादिना तद्वक्ष्यतीत्यत्र तात्पर्यम् ॥ असत्याश्च कार्याभावादिति । प्र[5]गृह्यसंज्ञाकार्यं हि सन्धिकार्याभावफलकप्रकृतिभावः लुप्ते षष्ठ्यर्थप्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्याप्राप्त्या प्रकृतिभावानुपयोगात्तत्कार्याभाव इत्यर्थः ॥ तदेवाह—प्रत्ययनिमित्तमित्यादिना ॥

( समाधानबाधकभाष्यम् )

[6]नात्र सप्तमी लुप्यते ॥

किं तर्हि ? ।

पूर्वस[8]वर्णोऽत्र भवति ॥

(प्रदीपः) पूर्वसवर्णइति । सति च पूर्वसवर्णे एकादेशे चादिवद्भावाद्भवतीकारः सप्तमीति सिद्धा संज्ञा ॥

(उद्द्योतः) पूर्वसवर्णे इति । स च सुपां सुलुगित्यनेन ॥

( १६९ समाधानसाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ 'पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते' ॥ * ॥

( भाष्यम् )

यदि पूर्वसवर्णः, आट् आम्भावश्च[9] प्राप्नोति ॥

(प्रदीपः) आडाम्भाव इति । एकादेशं बाधित्वाऽऽडामौ स्याताम् ॥

(उद्द्योतः) एकादेशमिति । परत्वाद्वार्णादाङ्गस्य [illegible]ति । स्त्वाच्चेति भावः । एवंच ङ्यन्ते गौरीत्यादौ लुक आवश्य[illegible] तदर्थमर्थग्रहणमिति तात्पर्यम् ॥

( समाधानबाधकभाष्यम् )

[10]एवं तर्हि आहायम्-ईदूतौ सप्तमीति । न चास्ति सप्तमी ईदूतौ, तत्र वचनाद्भविष्यति ॥

(प्रदीपः) वचनादिति । सर्वत्रैव सप्तमी लुप्यत इति वचनसामर्थ्यात् सप्तमीशब्देन सप्तमीसहचरितस्य ग्रहणान्मु[11]ख्यैकल्पनाऽसंभवे गौणी कल्पना गृह्यते इत्याश्रयणात् सिध्यतीति भावः ॥

(उद्द्योतः) सर्वत्रैवेति । [12]ननु ययीत्यादिभ्यो ङौ दीर्घे तनू इत्यादौ ओस्सुपोः पूर्वसवर्णादेशे च ईदूदन्तसप्तमीसंभवात्कथमेतदिति चेन्न । 'ईदूत्सप्तमी प्रगृह्यम्,' 'अदसः,' 'एच्च द्विवचनम्' इत्येव सिद्धे स्थलान्तरे ईदूतौ सप्तमीति गुरुवचनसामर्थ्येन सप्तमीसहचरितग्रहणमिति भाष्याशयान्न दोष इति केचित् ॥ तन्न । न चास्ति सप्तमी ईदूताविति भाष्यासङ्गतेः । [13]तस्मादेतद्भाष्यप्रामाण्यात्तेषामनभिधानमिति तत्त्वम् ॥

( १७० समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ '[14]वचनाद्यत्र दीर्घत्वम्' ॥ * ॥

( भाष्यम् )

नेदं[15] वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥

---

१ वक्ष्यमाणरीत्याऽन्वयानुपपत्त्यभावादाह—तात्पर्येति ॥ चस्त्वर्थे ॥ छाया ॥

२ द्वितीयपक्षाश्रयणे बीजमाह—जघन्येति ॥ अपिना तस्यापि समुच्चयः ॥ छाया ॥

३ वार्तिके लुप्ते इति सामान्ये नपुंसकम् । तदाह—लुप्तायामिति ॥ छाया ॥

४ न्तत्वे इति । तत्परकत्वे ॥ फलितार्थोऽयम् ॥ छाया ॥

५ यथाश्रुतासंगतेराह—प्रगृह्यसंज्ञेति ॥ लुप्ते लोपे ॥ छाया ॥

६ वार्तिकमवतारयितुं पूर्वपक्ष्याशयं प्रकटयति—नात्रेत्यादिना ॥

७ पूर्वेति । तनू इत्याद्यर्थकमिदम् । गौर्यादावविशेषात् ॥ छाया ॥

८ असावीकार ऊकारश्च सप्तम्यादेशपूर्वसवर्ण एव दृश्यते नात्र सप्तमी लुप्यत इति चेत् । तन्न । सप्तम्याः पूर्वसवर्णं बाधित्वाम्भावः प्रसज्यते । कथंचिदामादेशाभावेऽप्याडागमः प्रसज्येतेति वार्तिकार्थः ॥

९ भावशब्दो विकारपर इत्याह—आम्भावश्चेति ॥ छाया ॥

१० वार्तिकमवतारयितुं पूर्वपक्षाशयं प्रकटयति—एवं तर्हीति ॥

११ कल्पनासंभव इत्यत्राकारप्रश्लेषः ॥ छायां ॥

१२ नारायणाद्युक्तिं खण्डयति—नन्वित्यादिना—केचिदित्यन्तेन॥छाया॥

१३ सिद्धान्तमाह—तस्मादिति ॥ छाया ॥

१४ 'ईदूतौ सप्तमी' इति वचनसामर्थ्यादेवाडाम्भावं बाधित्वा पूर्वसवर्णदीर्घो भविष्यति—इति चेत् । तन्न यत्र सप्तम्या दीर्घकारादेशस्तत्र वचनस्य चारितार्थ्यादिति वार्तिकार्थः ॥

१५ वचनादिति वार्तिकमनन्वितं भेदान्वयेन व्याचष्टे—नेदमिति ॥ छाया॥

**किम्?॥ यत्र सप्तम्या दीर्घत्वमुच्यते—"दृतिं न शुष्कं सरसी शयानम्" (ऋ० ७।१०३।२) इति। सति प्रयोजने इह न प्राप्नोति—'सोमो गौरी अधिश्रितः' (ऋ० ९।१२।३) इति॥**

(प्रदीपः) मुख्यकल्पना सम्भवत्येवेत्याह—यत्रेति। सरसीत्यत्र सरःशब्दात् परस्य ङिशब्दस्य * इयाडियाजीकाराणामुपसंख्यानम् * इतीकारे कृते भवतीकारः सप्तमीति तत्रैव स्यान्न तु गौरीत्यत्रेति भावः॥

(उद्योतः) सरःशब्दादिति। सरस्शब्दस्याद्युनन्तत्वेनाद्युदात्तत्वेऽपि स्वरव्यत्ययाद् 'दृतिं न शुष्कं सरसी शयान'मित्यत्र सरसीत्यस्यान्तोदात्तत्वं बोध्यम्॥

(१७१ समाधानबाधकवार्तिकम्॥ ५॥)

॥ * ॥ 'तत्रापि सरसी यदि' ॥ * ॥

(भाष्यम्)

**तत्रापि सिद्धम्।**

**कथम्?॥**

**यदि सरसीशब्दस्य प्रवृत्तिरस्ति। अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः।**

**कथम्?।**

**दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यते॥**

(प्रदीपः) **सरसी यदीति**। यदीति सम्भावनायाम्। तस्मात् स्थितमेतद्वचनात् सर्वत्र लुप्तायामपि सप्तम्यां भविष्यतीति नार्थोऽर्थग्रहणेन॥

(उद्योतः) निराकर्तुं संशयार्थो यदिशब्दोऽनुपपन्न इत्यत आह—संभावनायामिति। शास्त्राणि चेत्प्रमाणं स्युरितिवद्संदिग्धे संदिग्धवचनमिदमिति भावः॥ सरसीशब्दो यदि ङीषन्तस्तदान्तोदात्तत्वं न्यायसिद्धम्। अमुन उगन्तत्वान् ङीबन्तत्वे तु स्वरव्यत्ययादेव तत्त्वम्। एवं च ततो लुकैवोक्तप्रयोगे सिद्धे इयाडिति वार्तिके ईकारादेशो न विधेय इति भाष्याशयः॥ तस्मात्पूर्वोक्तरीत्या वचनसामर्थ्याल्लुप्तेऽपि सिद्धिः॥

(१७२ समाधानवार्तिकम्॥ ६॥)

॥ * ॥ 'ज्ञापकं स्यात् तदन्तत्वे' ॥ * ॥

(भाष्यम्)

**एवं तर्हि ज्ञापयत्याचार्यो 'न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवति' इति॥**

**किमेतस्य ज्ञापने प्रयोजनम्?।**

**कुमार्योरगारं कुमार्यगारम्। वध्वोरगारम् वध्वगारम्। प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति॥**

(प्रदीपः) **ज्ञापकमिति**। ईदूदेदित्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः॥ इह प्रगृह्यसंज्ञाप्रकरणे यदि प्रत्ययलक्षणं स्यात् तदेदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत् प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थंग्रहणेन, तत् क्रियमाणं प्रत्ययलक्षणाभावं सूचयति॥

(उद्योतः) सप्तमीसहचरितत्वं च प्रत्ययलक्षणेन बोध्यम्॥

(१७३ समाधानवार्तिकम्॥ ७॥)

॥ * ॥ 'मा वा पूर्वपदस्य भूत्' ॥ * ॥

(भाष्यम्)

**अथ वा पूर्वपदस्य मा भूदित्येवमर्थमर्थग्रहणम्। वाप्यामश्वो वाप्यश्वः, नद्यामातिर्नद्यातिः॥**

(प्रदीपः) संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात् तदन्तपक्षस्तत्र नैव स्थित इति ज्ञापनफलाभावादाह—**मा वेति॥ वाप्यश्वो नद्यातिरिति**। **संज्ञायामिति** समासे कृते सप्तमीसहचरितमीकारान्तं पूर्वपदमिति स्यात् प्रगृह्यसंज्ञेति तदर्थमर्थग्रहणम्॥

(उद्योतः) **संज्ञायामितीति** अत एवाग्रे भाष्ये जहत्स्वार्थावृत्तिरिति सङ्गच्छते। न च वाक्येन संज्ञानवगमादस्य नित्यसमासत्वे वाप्यामश्व इति विग्रहो नोचित इति वाच्यम्। वाक्यात्संज्ञिनोऽनवगमेन नित्यसमासत्वद्वशत्वेऽपि न तद्विधायके वाग्रहणासंबन्ध इति समासघटकीभूतानां तद्विषये विग्रहाभावे माना-

१ उच्यत इति। तदिति शेषः॥ छाया॥

२ स्वरदोषं परिहरति—सरःशेति॥ 'वाङ्मनसी यच्छेत्' इति तु द्वितीयाद्विवचनान्तम्। समासान्तस्त्वनित्यत्वान्न। एतेन तत्र मनःशब्दात्सप्तम्या इयाडितीकारेऽपि संहितायामनच्परत्वाद्ब्राह्मणे पदापाठाच्च न संज्ञायाः फलमिति निरस्तम्॥ छाया॥

३ उक्तोदाहरणेऽपि लुग् पूर्वसवर्णो दीर्घो वा भवति सरसीशब्दस्य दर्शनात्। तथाच सरसी इत्यस्यान्तोदात्तत्वमपि निराबाधमेव। लुकि प्रकृतिस्वरस्य पूर्वसवर्णे तस्यानुदात्तत्वेऽपि 'एकादेश उदात्तेन' इत्युदात्तस्य श्रवणसिद्धेः॥ तथा च दीर्घेकारविधानं व्यर्थमेवेति सप्तम्या ईदूद्रूपाया अन्यथानुपपत्त्या वचनसामर्थ्यादेवाडाम्भावनिवृत्तिः सिद्धेति वचनसामर्थ्यादेव प्रगृह्यसंज्ञा भविष्यतीति भावः॥ छाया॥

४ संशयेति। बहुव्रीहिः॥ प्राग्वदाह—सरसीति। पिप्पल्यादित्वात्। भाष्याशय इति॥ शाखान्तरे आद्युदात्तपाठे तु तत्र व्यत्ययेन ङीप्॥ उपसंहरति—तस्मादिति॥ छाया॥

५ उगिदन्तत्वादिति पाठ उचितः॥

६ वार्तिके ज्ञापकमित्यत्र तदभावस्येति शेषः॥ किं फलमत आह—तदन्तेति। संज्ञिनो द्विवचनान्तत्वाभिमते इत्यर्थः। कुमारीत्युपलक्षणम् शुक्ल्यास्तामित्यादेरपि॥ छाया॥

७ तदन्तस्व इत्यस्यार्थमाह—ईदूदेदित्यत्रेति॥ भाष्ये प्रगृह्यसंज्ञापदं प्रकरणपरमित्याह—इहेति॥ छाया॥

८ इदं सूत्रमूलयति अत एवेति॥ संज्ञेति। कर्मण्यण्। अत एवाग्रे संज्ञिन इत्युक्तिः॥ छाया॥

भावात्। ध्वनितं चेदं द्वितीयतृतीयेति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यते ॥ सप्तमीसहचरितमिति। प्रत्ययलक्षणेनेति भावः॥

( आक्षेपभाष्यम् )

**अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति? ॥**

(प्रदीपः) **अथेति** । अस्त्येवात्र सप्तम्यर्थ इति प्रश्नः ॥

( समाधानभाष्यम् )

**जहत्स्वार्था वृत्तिरिति ॥**

(प्रदीपः) **जहत्स्वार्थेति** । समासस्यैवार्थवत्त्वात् पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात् सप्तम्यर्थोऽत्र नास्तीत्यर्थः ॥

(उद्ब्योतः) **वर्णवदानर्थक्यादिति** । संज्ञायामिति समासेऽस्य रूढिशब्दत्वादवयवार्थाप्रतीतेरिति भावः । 'वाप्यामश्व' इति विग्रहप्रदर्शनं तु रथन्तरादिपदानां रथेन तरतीत्यादिविग्रहप्रदर्शनवद्बोध्यम् । अत एव[1]—"जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" इति वृद्धैरुक्तम् ॥

( आक्षेपभाष्यम् )

**अथाजहत्स्वार्थायां वृत्तौ दोष एव ॥**

(उद्ब्योतः) भाष्ये अथाजहत्स्वार्थायामिति । सुप्सुपेति समासेन केवलयौगिके इत्यर्थः ॥

( समाधानभाष्यम् )

**अजहत्स्वार्थायां च[2] न दोषः । समुदायार्थोऽभिधीयते ॥**

**'ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।**
**पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते'॥**
**वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।**
**ज्ञापकं स्यात् तदन्तत्वे मा वा पूर्वपदस्य भूत्'**
**॥ २ ॥ ईदूतौ च सप्तम्यर्थे ॥ १८ ॥**

(प्रदीपः) **समुदायार्थ इति** । वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानात् पांसूदकवत् स्वार्थस्य विवेकानवगमात् समुदायार्थो वृत्तौ संसृष्टरूपेणैवाभिधीयते । सप्तम्यर्थग्रहणेन—यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा ॥ १८ ॥

(उद्ब्योतः) **प्रधानार्थमपीति** । अश्वपदशक्तिसमुदायशक्ति[3]सहकारेण गृहीतशक्तिकाद्वापीपदात्स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरित्यर्थः ॥ [4]तत्र **समुदायशक्तिः** संसर्गांश एव । तदाह—**स्वार्थसंसृष्टस्येत्यादि** ॥ **विवेकानवगमात्** । पृथगनुपस्थितेरित्यर्थः । पांसूदकं मिलितं यथा संसृष्टमेव ज्ञानविषयो न तु पृथक्, तथा समासात्संसृष्ट एवोपस्थितिविषयो न तु पृथगित्यर्थः ॥ यावानित्यस्य विवरणं केवल इति । कैवल्यं विवृणोति—**असंसृष्ट उद्भूत इति** । [5]असंसृष्टत्वं विशेषणाविशिष्टत्वम् । उद्भूतत्वमितराविशेषणत्वमिति बोध्यम् ॥ **समुदायरूपोर्थः** पूर्वपदार्थविशिष्ट उत्तरपदार्थोऽ**भिधीयते**ऽभिधाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः ॥ **अर्थग्रहणसामर्थ्यात्**सप्तम्यर्थमात्रपर्यवसन्नार्थकमर्थग्रहणमिति भावः ॥ गौरीत्यादौ त्वस्त्येव गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् । समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव [6]**सप्तम्यर्थपर्यवसन्नत्वरूपत्वात्** ॥ न चार्थग्रहणेऽपि गौरीत्याद्यसिद्धिः । सप्तम्यर्थे ईकाराद्यभावात् । ईदाद्यन्तमित्यर्थस्तु दुर्लभो विशेष्याभावादिति वाच्यम् । सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात् ॥ १८ ॥

( इति प्रगृह्यसंज्ञाप्रकरणम् )

( १७ घुसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ८ ॥ )

## दा धा घ्वदाप् ॥ १ । १ । १९ ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( १७४ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् ॥ * ॥

( भाष्यम् )

**घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम् । दाधाप्रकृतयो[7] घुसंज्ञा भवन्तीति वक्तव्यम् ॥**

**किं प्रयोजनम्? ।**

**आत्वभूतानामियं संज्ञा क्रियते । सा आत्वभूतानामेव स्याद्, अनात्वभूतानां न स्यात् ॥**

**ननु च भूयिष्ठानि घुसंज्ञाकार्याणि आर्धधातुके । तत्र चैत आत्वभूता दृश्यन्ते ॥**

---

१ ननु वैलक्षण्योपलम्भान्न तत्तुल्यत्वमत आह—अत एवेति ॥ छाया ॥ एवकारो भिन्नक्रमः 'तत्र जहत्स्वार्थैव' इति वास्तविकोऽर्थः ॥ दाधिमथाः ॥

२ चोऽप्यर्थे ॥ छाया ॥

३ शक्तीति । एतदुभयशक्तिसहकारेणेत्यर्थः ॥ उपस्थितावस्यान्वयः ॥ ॥ छाया ॥

४ तत्र तयोर्मध्ये ॥ छाया ॥

५ उभयोः साफल्यमाह—असंसृष्टत्वमिति ॥ इतरेति । तत्पुरुषः । एवं सति समुदायार्थ इति भाष्ये षष्ठीतत्पुरुष इति भ्रमनिरासाय तदर्थमाह—समुदायरूपोऽर्थ इति ॥ कर्मधारय इति भावः ॥ एवंचासिद्धान्तभूततत्पक्षेऽप्ययं दोषो न दोषान्तरसत्त्वेऽपीति तात्पर्यम् ॥ छाया ॥

६ करणतात्पर्यार्थेति । र्थकग्रहणमिति पाठः ॥ सप्तम्यर्थेति । तन्मात्रेत्यर्थः ॥ छाया ॥

७ दाधाप्रकृतय इत्यत्र दाश्च धौ च प्रकृतयश्चेति द्वन्द्वः । सूत्रे चोपस्थितत्वात्तयोरेव संबन्ध इति भावः ॥ छाया ॥

---

१ '—करणतात्पर्यार्थ—'इत्येवं पाठोऽस्मदुपलब्धपुस्तकेषु तु न दृश्यते ॥

**"शिदर्थम्" । शिदर्थं प्रकृतिग्रहणं कर्तव्यम् । शित्यात्वं प्रतिषिध्यते तदर्थम् । प्रणिदयते प्रणिद्यति प्रणिधयतीति ॥**

**(प्रदीपः) दाधा घ्व ॥ १९ ॥** दाधाशब्दयोर्घुसंज्ञा विधीयमाना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह—**घुसंज्ञायामिति ॥**

**किं प्रयोजनमिति ।** दोदेङ्धेटामेजन्तानामनुकरणानि व्यवस्थाप्यात्वे कृते ददातिदधातियच्छब्दानुकर-णानां चैकशेषे कृते द्वन्द्वनिर्देशात् सिद्धा दोदेङ्धेटामपि घुसंज्ञा, कृतात्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः ॥

**आत्वभूतानामिति ।** भवतेः प्राप्त्यर्थाद् **"आधृषाद्वा"** इति विभाषितणिचः कर्तरि कर्मणि वा क्तप्रत्ययः । तत्र आत्वं भूता आत्वेन वा भूता आकारान्ता इत्यर्थः । ननु लक्षणेन कृतात्वा इति विज्ञेयम् । अस्याप्ययमभिप्रायः—एजन्तानुकरणत्वे प्रमाणाभावात् प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः सामान्यानुकरणं वा दा इति धा इति पृथक् पदं निर्दिष्टमिति ॥

**प्रणिदयत इति ।** घुसंज्ञायां सत्यां **नेर्गदेति** णत्वं भवति ॥

**(उद्योतः) दाधाघ्व ॥ १९ ॥ दाधाशब्दयोरिति ।** प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणादिति भावः ॥

**दोदेङ्धेटानामेजन्तानामिति ।** ऐषां चात्र 'प्रकृतिवदनुकरणं भवतीतिन्यायादशितीति प्रसज्यप्रतिषेधाश्रयणाच्चात्वमिति भावः ॥ अत्रे च पक्षे **लक्षणप्रतिपदोक्तपरिभाषा-निरनुबन्धकपरिभाषादीनां** न प्रवृत्तिः । सर्वेषां स्वरूपेणैवानुक्तत्वात् ॥ दारयतिधारयत्योश्च नातिप्रसङ्गः । तयोरनुकरणे आत्वासंभवेनेह दृश्य इत्यनयोरनुपात्तत्वाद् ॥ दीङोऽपि नेह ग्रहणम् । एज्विषयाभावेन तदनुकरणे आत्वासंभवादिति बोध्यम् ॥

नन्वात्वभूतानामित्यस्य जातात्वानामित्यर्थे दाणादीनां संज्ञा न स्यान्निष्ठायाः पूर्वनिपातश्च स्यादत आह—**भवतेरिति ।** प्राप्तात्वानामित्यर्थः ॥ **प्रमाणाभावादिति ।** प्रयोगार्थत्वाच्छास्त्रस्योपस्थितप्रयोगस्यानुकरणे संभवति अनुपस्थितैजन्तानुकरणे प्रमाणाभाव इत्यर्थः ॥ **गौरवाच्चेति ।** दीङस्तुजादावात्वे कृते प्रणिदातेत्यत्र **नेर्गदेति** णत्वानापत्तेश्चेत्यपि बोध्यम् ॥ एकशेषस्य स-चिन्त्यम्, आत्वभूतशब्देन कृतात्वानामग्रहणे मानाभावात् । एजन्तानुकरणस्य स्वयमेवोक्तत्वेनाकारान्तानुकरणत्वप्रमाणस्यैव तत्र प्रमाणत्वसंभवात् । प्रक्रियागौरवाश्रयणस्यौचित्यात् । प्रकृतिग्रहणेन (ऽ)त्ववारणस्योपायान्तरत्वसंभवात् । 'ननु लक्षणेन' इत्यस्य 'प्रयोग एव' इत्यस्य मिथोविरुद्धत्वाच्चेत्यपास्तम् ॥ उक्तहेतोराशयानवबोधाच्च ॥ छाया ॥

वेदाधारूपाणामानन्त्येन ज्ञानासंभवाद् दुर्ज्ञेयत्वेऽप्याह—**सामान्येति ।** ननु समाहारद्वन्द्वे दाधमिति स्यात्, अन्यत्र दाधाविति स्यादत आह—**पृथक्पदमिति ।** सो रुत्वे यत्वे लोपे च निर्विसर्गं साधु ॥

**( भाष्यम् )**

**भारद्वाजीयाः पठन्ति—**

**( भारद्वाजीयोक्तमाक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् ॥ * ॥

**( भाष्यम् )**

**घुसंज्ञायां प्रकृतिग्रहणं क्रियते ।**

**किं प्रयोजनम् ? ।**

**शिदर्थं विकृतार्थं च । शित्युदाहृतम् ॥ विकृतार्थं खल्वपि—प्रणिदाता प्रणिधाता ।**

**किं पुनः कारणं न सिध्यति ? ।**

**'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इति प्रतिपदं ये आत्वभूतास्तेषामेव स्याद्, लक्षणेन ये आत्वभूतास्तेषां न स्यात् ॥**

**(प्रदीपः) प्रणिदातेति ।** धतेर्देङो वा रूपम् ॥ **प्रणिधातेति ।** धेटः ॥ **लक्षणेति ।** लाक्षणिके हि लक्षणानुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा, प्रतिपदोक्ते त्वन्तरङ्गा ॥

**(उद्योतः)** विकृतानां दोदद्घोरिति सूत्रे घेणॢनिवृत्त्यर्थं दाग्रहणपर्यालोचनाया घुत्वं सुलभमिति मत्वा वार्तिके **शिदर्थमित्युक्तम् ।** भारद्वाजीयैस्तु तावद्विवेकासमर्थान्प्रति **विकृतार्थमित्यप्युक्तम् ॥** प्रणिदातेत्यादौ लाक्षणिकत्वं स्फुटयति—**धतेर्देङोवेति ॥**

**( प्रत्याक्षेपभाष्यम् )**

**अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते-दाधाः प्रकृतय इति, आहोस्विद्दाधां प्रकृतय इति ? ॥**

**किं चातः ?**

**(प्रदीपः) कथमिति ।** दाधाप्रकृतय इति षष्ठीसमासः कर्मधारयो वोभयथाप्यव्याप्तिरिति प्रश्नः ॥

**यदि विज्ञायते-दाधाः प्रकृतय इति, स एव**

---

१ स्याहेति । स्यत आहेत्यर्थः ॥ कृते इति । तेषामिति शेषः ॥ अपिना तेषां यथास्थितानां समुच्चयः ॥ छाया ॥

२ एषां चेति । एतेनोपदेशाद्यभावादप्रत्ययपरत्वाच्च कथमात्वमित्यपास्तम् ॥ छाया ॥

३ अस्य पक्षस्य युक्तत्वं प्रतिपादयति—अत्रेचेति ॥ आदिनाऽर्थवद्ग्रहण-लुग्विकरणपरिभाषादिसंग्रहः ॥ एतेन लक्षणप्रतिपदोक्तपरिभाषाविरोधादुभयत्रानुकार्यानुकरणयोरेतत्प्रवृत्त्याशयेनैव प्रकृतीति वार्तिकप्रवृत्तेश्च दोदेङित्यादि चिन्त्यमित्यपास्तम् ॥ छाया ॥

४ इत्यपीति । एतेन—आत्वं भूता इत्यादि—इतीत्यन्तं कैयटोक्तं

५ पूर्वपक्षी कात्यायनीय आक्षेपवार्तिकेऽनुक्तमपि प्रयोजनान्तरं भारद्वाजीयप्रोक्तं दर्शयति—भारद्वाजीया इत्यादि ॥

६ तटस्थः पृच्छति—अथेति ॥

दोषः—आत्वभूतानामेव स्यात् अनात्वभूतानां न स्यात् ॥ अथ विज्ञायते-दाधां प्रकृतय इति, अनात्वभूतानामेव स्यादात्वभूतानां न स्यात् ॥

(प्रदीपः) दाधाः प्रकृतय इति । दीयत इत्यादावीत्वादेः । आत्वभूतानामिति । दाण्दाञ्धाञाम् ॥

(उद्द्योतः) प्रकृतय इत्यस्य सापेक्षत्वादाह—ईत्वादेरिति ॥ [1]दाणिति । आत्वभूता इत्यनेन उपदेशे आकारान्ता एवोच्यन्ते, तद्विलक्षणास्त्वनात्वभूता इति भावः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

[2]एवं तर्हि, नैवं विज्ञायते-दाधाः प्रकृतय इति, नापि दाधां प्रकृतय इति ॥

कथं तर्हि ? ।

दाधा घुसंज्ञा भवन्ति प्रकृतयश्चैषामिति ॥

(प्रदीपः) प्रकृतयश्चैषामिति । प्रत्यासत्त्यैषामिति लभ्यते ॥

(उद्द्योतः) प्रत्यासत्त्येति । एवं चैषामिति नापूर्वमिति भावः ॥ एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यत इति तात्पर्यम् ॥

( आक्षेपोपसंहारभाष्यम् )

[3]तत्तर्हि प्रकृतिग्रहणं कर्तव्यम् ? ॥

( समाधानभाष्यम् )

[4]न कर्तव्यम् । इदं प्रकृतमर्थग्रहणमनुवर्तते ॥

क्व प्रकृतम् ? ।

"ईदूतौ च सप्तम्यर्थे" इति । ततो [5]वक्ष्यामि "दाधा घ्वदाप्" "अर्थः" इति ॥

(प्रदीपः) अर्थ इतीति । एतद्वितीयं वाक्यम् । सन्निधानाच्च दाधामर्थे यो वर्तते स घुसंज्ञ इति प्रकृतीनामपि सिध्यति ॥

(उद्द्योतः) नन्वेकवाक्यत्वे दारयत्याद्येकदेशानर्थकव्यावृत्त्यर्थमेव [6]तत्स्याद्, न त्वन्यरूपप्रापकमत आह—एतद्वितीयमिति । अर्थवत्परिभाषयैवानर्थकव्यावृत्तौ सिद्धायामर्थग्रहणानुवृत्तिर्वाक्यभेदार्थैवेति भावः ॥

( समाधानबाधकभाष्यम् )

[7]नैवं शक्यम् । ददातिना समानार्थान् रातिरासतिदासतिमंहतिप्रीणातिप्रभृतीनाहुः । तेषामपि घुसंज्ञा प्राप्नोति । तस्मान्नैवं शक्यम् ॥ न चेदेवं, प्रकृतिग्रहणं कर्तव्यमेव ॥

(उद्द्योतः) भाष्ये प्रीणातीति । यथा पितृभ्यः प्रीणातीत्यादौ ।

( समाधानसाधकभाष्यम् )

[8]न कर्तव्यम् । शिदर्थेन तावन्नार्थः प्रकृतिग्रहणेन । अवश्यं तत्र मार्थं प्रकृतिग्रहणं कर्तव्यम्, प्रणिमयते प्रण्यमयतेत्येवमर्थम् । तत् पुरस्तादपकक्ष्यते घुप्रकृतौ माप्रकृतौ चेति ॥

(प्रदीपः) तत्पुरस्तादिति । नेर्गदेति सूत्रे [10]घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्तव्यं तदुभाभ्यामभिसम्भन्त्स्यते ॥

(उद्द्योतः) ननु तत्रोभयान्वयाय प्रकृतिग्रहणद्वये [11]कर्तव्येऽत्रैव करणं युक्तमत आह—तदुभाभ्यामिति । घुप्रकृतिमाशब्दानां द्वन्द्वे सन्निधानाविशेषादुभयप्रकृतिर्गृह्यते इति प्रणिदयते प्रणिमयत इति उभयत्रापि णत्वं सिध्यतीत्यर्थः ॥

( आक्षेपभाष्यम् )

[12]यदि प्रकृतिग्रहणं क्रियते । प्रनिमिनोति प्रनिमीनाति । अत्रापि प्राप्नोति ॥

(प्रदीपः) प्रनिमिनोतीति । मीनातिमिनोतिदीङां ल्यपि चेत्यात्त्वविधानाद्भवति माप्रकृतित्वमनयोः ॥

(उद्द्योतः) आत्वविधानादिति । [13]एज्विषये ईकारान्तानामात्वविधानादिति भावः ॥

( प्रतिबन्दीभाष्यम् )

[14]अथाक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति,-प्रनिमाता प्रनिमातुं प्रनिमातव्यमिति ॥

( प्रतिबन्दीसमाधानभाष्यम् )

[15]आकारान्तस्य ङितो ग्रहणं विज्ञायते ॥

( समाधानभाष्यम् )

[16]यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते । एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते॥

---

१ Bengal Asiatic Society मुद्रितपुस्तकेषु प्रदीपपाठो मध्ये मुद्रित इति शोधकानां व्युत्पत्तिवैचित्र्यम् ॥

२ पूर्वपक्षी समाधत्ते—एवं तर्हीति ॥

३ तटस्थः पृच्छति—तत्तर्हीति ॥

४ सिद्धान्ती समाधत्ते—न कर्तव्यमिति ॥

५ ततो वक्ष्यामीति । प्रकृतत्वादनुवृत्तिं करिष्यामीत्यर्थः ॥ छाया ॥

६ तत्स्यादिति । एतेन संभवत्येकवाक्यत्वे ति न्यायेन वाक्यभेदानौचित्यात्कैयटोक्तं चिन्त्यमित्यपास्तम् ॥ छाया ॥

७ पूर्वपक्षी खण्डयति—नैवमिति ॥

८ अमसिद्धत्वादाह—यथेति ॥ छाया ॥

९ [सिद्धान्ती खण्डयति]—न कर्तव्यमिति ॥ यत इति शेषः ॥ तत्र नेर्गदेति सूत्रे ॥ छाया ॥

१० ननु घोः पूर्वं पाठे दोष एवात आह—घुमेति ॥ छाया ॥

११ कर्तव्ये सतीति शेषः ॥ छाया ॥

१२ पूर्वपक्षी आक्षिपति—यदीति ॥

१३ भाष्यरीत्येदं, न वार्तिकरीत्येत्याह—एज्विषये इति ॥ छाया ॥

१४ तत्र सिद्धान्ती तन्मुखेनैव समाधातुं शङ्कते—अथेति । नेर्गदेतिसूत्र इति भावः ॥ छाया ॥

१५ पूर्वपक्षी समाधत्ते—आकारान्तेति ॥

१६ सिद्धान्ती पूर्वपक्ष्युक्तमेव समाधानं करोति—यथैवेति ॥

(उद्द्योतः) भाष्ये एवं क्रियमाणेऽपीति। णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः॥ यद्यपि लक्षणप्रतिपदोक्तपरिभाषया मीनातिमिनोत्यादेशानां ग्रहणाभावो वक्तुं शक्यस्तथापि मेङो ऽग्रहणवारणाय गामादाग्रहणेष्वविशेष इत्युक्तेर्माग्रहणे तदप्रवृत्तिः। मामाने[1] इत्यस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्यम्॥

( भारद्वाजीयप्रयोजननिराकरणभाष्यम् )

**विकृतार्थेन चापि नार्थः। दोष एवैतस्याः परिभाषाया "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" इति–"गामादाग्रहणेष्वविशेषः" इति॥**

(प्रदीपः) **गामादाग्रहणेष्विति**। अस्य चार्थस्य दैपः पित्त्वमदाविति पित्प्रतिषेधे सामान्यग्रहणार्थं[2] लिङ्गम्। अन्यथाऽस्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन पित्त्वेन। सामान्यापेक्षया च **निरनुबन्धकग्रहण इति लक्षणप्रतिपदोक्तयोरिति** च परिभाषाद्वयानुपस्थानमिह ज्ञापयतीति धेटोऽपि सिध्यति। **दो दद्धोरित्यत्र** वा द इत्येव धेटो निवृत्त्यर्थं सद्धेटो घुसंज्ञां ज्ञापयति न हि दधातिनिवृत्त्यर्थं द इत्येतत्, तस्य **दधातेर्हिरिति** ह्यादेशविधानाद्दद्भावाप्रसङ्गात्॥

(उद्द्योतः) **सामान्येति**। एतत्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगाद्यपेक्षया[3] परिभाषाद्वयापेक्षया चेत्यर्थः॥ **निरनुबन्धकेति**। स च दोऽवखण्डन इत्ययम्॥ **धेटोपीति**। अन्यथाऽस्य लाक्षणिकत्वाद् ग्रहणाप्रसक्तिः॥ यत्तु[4] सानुबन्धकत्वादिति। तन्न। निरनुबन्धकस्य धाइत्यस्याप्रसिद्धत्वात्॥ ये तु दाविषयमेव तज्ज्ञापकं मन्यन्ते। तन्मते धेडंशे ज्ञापकान्तरमाह—**दोददिति**॥

( यदागमन्यायाधिकरणम् )

( १७५ आक्षेपवार्तिकम्॥ २॥)

## ॥ * ॥ समानशब्दप्रतिषेधः ॥ * ॥

( भाष्यम् )

**समानशब्दानां प्रतिषेधो वक्तव्यः। प्रनिदारयति प्रनिधारयति। दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति॥**

(प्रदीपः) **समानशब्दानामिति**। समानश्रुतीनामित्यर्थः॥ **प्रनिदारयति प्रनिधारयतीति**। दद्धृङोर्णिचि वृद्धावाकारे कृते दाधाशब्दौ संपद्येते। तौ चार्थवन्तौ। पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः॥

(उद्द्योतः) समानत्वं नार्थत इत्याह—**श्रुतीनामिति**॥ **तौ चेति**। एतेना[5]नर्थकत्वात्तयोर्घुत्वं नेत्यपास्तम्॥ **पश्चादिति**[6]। प्रणिदापयतीत्यत्र पुगिवेति भावः॥ **आगमभूतत्वात्**। आगमस्वरूपत्वात्॥

( १७६ समाधानवार्तिकम्॥ ३॥)

## ॥ * ॥ समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात् ॥ * ॥

**समानशब्दानामप्रतिषेधः, अनर्थकः प्रतिषेधोऽप्रतिषेधः॥**

**घुसंज्ञा कस्मान्न भवति?॥**

**अर्थवद्ग्रहणात् अर्थवतोर्दाधोर्ग्रहणात्। न चैतावर्थवन्तौ।**

(प्रदीपः) **अर्थवद्ग्रहणादिति**। **अर्थवद्ग्रहणे नानर्थकस्येत्यस्य स्वं रूपमित्यनेन** ज्ञापितत्वा[7]द्। **उरण् रपर** इति चाण्विधीयमान एव रपरो भवतीति वृद्धिः क्रियमाणा रपरा भवतीति दार्धारोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा॥

( १७७ समाधानहेत्वन्तरवार्तिकम्॥ ४॥)

## ॥ * ॥ अनुपसर्गाद्वा ॥ * ॥

( भाष्यम् )

**अथवा यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति। न[8] चैतौ दाधौ प्रति क्रियायोगः॥**

(प्रदीपः) **अनुपसर्गाद्वेति**। अभ्युपगम्य घुसंज्ञां दोषं परिहरति। घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेर्घौ परतो णत्वं विधीयते। अत्र दाधापेक्षया नास्ति प्रशब्दस्योपसर्गत्वम्, किंतु दार्धारोरपेक्षयेत्यदोषः॥

(उद्द्योतः) **अभ्युपगम्येति**। अदाबिति[9] प्रतिषेधार्थेन दैपः पित्त्वेन दोददित्यनेन च परिभाषयात्रानुपस्थानज्ञापनसंभवादिति भावः॥ **किंत्विति** तयोरेव क्रियावाचित्वादिति भावः॥

---

१ इदमेव तस्य न फलमित्याह—मामान इति॥ छाया॥

२ ग्रहणार्थमिति॥ क्रियमाणमिति शेषः॥ छाया॥

३ गृहीतगाद्येति। एतेन—अदाब्ग्रहणस्यैव ज्ञापकत्वसंभवेन तदपहाय पित्त्वस्य तदाश्रयणानौचित्यात्कैयटोक्तम्—'अस्य चार्थस्य–' इत्यादि चिन्त्यम्। परिभाषान्तराप्रवृत्तेरपि ज्ञापयितुं त्वन्मतेऽपि शक्यत्वेन तदनुक्तौ मानाभावाच्चेत्यपास्तम्॥ आशयानवबोधात्। उपायस्योपायान्तरादूपकत्वाच्च॥

४ नारायणाद्युक्तिं खण्डयति—यत्त्विति॥ वैयर्थ्यं परिहरति—येरिवति॥ छाया॥

५ एतेनेति। एतेनार्थवदित्यस्यासिद्धान्तिनोक्तत्वेन तदप्रवृत्त्यैव शङ्कौचित्येन 'तौ च' इत्यादि कैयटोक्तं चिन्त्यमित्याद्यपास्तम्। आशयभेदेन तदुक्तिसामञ्जस्येन दोषलेशाभावात्। एवं योजने एव चमत्कारातिशयाच्च॥ छाया॥

६ यथाश्रुतानुपपत्तेराह—आगमस्वरूपेति॥ छाया॥

७ ज्ञापितत्वादिति। प्रतिपादितमिदमसकृत्॥ एतेन स्वमित्यनेनास्या वैयर्थ्यस्यैव भाष्यसंमतत्वेन ज्ञापितत्वे मानाभावाच्चिन्त्यमित्यपास्तम्॥ छाया॥

८ न चैताविति। अनयोर्धात्वोर्या क्रिया तद्योग इत्यर्थः॥ छाया॥

९ अस्यैव युक्तत्वादरुचिसूचकं नेदमितिध्वनयन्नभ्युपगमे बीजमाह—अदाबितीति॥ तथाचेत एवारुच्या भाष्ये पक्षान्तरमिति भावः॥ छाया॥

( आक्षेपभाष्यम् )

**[यद्येवम्] इहापि तर्हि न प्राप्नोति—प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ, नाप्येतौ दाधौ प्रति क्रियायोगः ॥**

(प्रदीपः) **इहापि तर्हीति** । अत्रापि[1] पुकि कृते पकारान्तोऽर्थवान् न केवलो दाशब्दः । पुगन्तमेव[2] च प्रत्युपसर्गत्वम्, न दाशब्दं प्रतीति प्रश्नः ॥

( १७८ समाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथाऽन्यत्र ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ।**

**किं कारणम् ? ।**

**अर्थवत आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेन गृह्यते । यथान्यत्र । तद्यथा—अन्यत्रापि अर्थवत आगमोऽर्थवद्ग्रहणेन गृह्यते ॥**

**क्वान्यत्र ? ।**

**लविता चिकीर्षितेति ।**

(प्रदीपः) **न वाऽर्थवत इति** । लब्धात्मकस्य भावस्य निमित्तवशादुपचयापचयौ व्यपदेशहानिं न कुरुतः, यथा[3] देवदत्तस्याङ्गाधिक्याङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमित्यदोषः । अनर्थकस्याप्यागमो व्यपदेशहानिं न करोति, यथा सत्यपि रेफेऽकाराकारयोर्गुणवृद्धिव्यपदेशाहानिः । इह त्वर्थवतो ग्रहणादर्थवत इत्युक्तम् । यदा च प्रकृत्यर्थः प्रेण विशेष्यते तदाऽयं परिहारः, ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाद् णत्वं न भवत्येव ॥ **तद्गुणीभूत इति** । प्रयोगसंपादन उपकारक इत्यर्थः ॥

(उद्द्योतः) भाष्ये **तद्गुणीभूत इति** । यमुद्दिश्य[4]आगमो विहितः स **तद्गुणीभूतः** शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन **गृह्यते** बोध्यते आगमविशिष्ट इति परिभाषार्थः । तदाह—**लब्धात्मकस्येति** ॥ तेन[5] दाधारोर्व्याप्तिः सूचिता ॥ **अपचय इति** । दृष्टान्तार्थम् ॥ **अन्तरङ्गत्वादिति** । इदं यथोद्देशे, कार्यकाले तु णत्वदेशा संज्ञासिद्धा स्यादिति बोध्यम् ॥ वस्तुतः[6] कार्यकालपक्षे पूर्वं पुकः प्रवृत्तावपि दापो दाशब्देन ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम् ॥ **घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमितीति** । स्वविशिष्टे तयोरानयनादिति भावः ॥ **अकाराकारयोरिति** । रेफ[7]विशिष्टयोरित्यर्थः ॥ **इह त्विति** । घुसंज्ञासूत्रे इत्यर्थः ॥ अत्रेदं बोध्यम् । अङ्गावयवाकारस्य मुग्विधायकानेमुगिति सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः । तेन दिदीये इत्यादौ यणादिकं न । अयमेवार्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यत इत्याहुः ॥ **प्रयोगेति** । इदं चिन्त्यम् । आगमवत्प्रत्ययादेरपि प्रयोगसंपादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिर्मूलयुक्तेर्[8]तुल्यत्वात् । अस्य मूलयुक्तित्वाभावे तु तत्कथनवैयर्थ्यापत्तिः । तस्मान्म[9]दुक्तव्याख्यैव ज्यायसी ॥

( आदेशवादिन आगमवादिनं प्रत्याक्षेपभाष्यम् )

**युक्तं[10] पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात् न[11] नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामापूर्वः शब्दोपजनः ? ॥**

(प्रदीपः) **युक्तं पुनरिति** । ततश्च[12] नित्येष्वागमविरोधात् तद्द्वारेणादेशविधानाद्दाप्शब्द एवार्थवान्न दाशब्द इति तदवस्थो दोष इति भावः ॥

१ आद्यतुल्यतां भाष्योक्तामाह—अत्रापीति ॥ छाया ॥

२ द्वितीयतुल्यतां तदुक्तामाह—पुगन्तमिति ॥ छाया ॥

३ अस्यालौकिकसिद्धत्वमाह—यथेति ॥ परिभाषापाठे यदागमा इति पाठादत्र 'अर्थवतः' इति प्रकृताभिप्रायं न सार्वत्रिकमित्याह—अनर्थकेति । अत एवात्रैकवचनान्तपाठः ॥ एतेन—लब्धेत्यादि—'इत्युक्तम्' इत्यन्तं चिन्त्यम् । शब्दविशेषे कृतसंज्ञाया लोकदृष्टान्तेनान्यत्रानयनासंभवात् । अर्थवद्ग्रहणेनैव तत्र तदहानेर्वर्ण्यत्वेन तदानर्थक्यापादनानौचित्यादित्याद्युक्तमपास्तम् । नास्या ज्ञापकसिद्धत्वमित्यन्यत्र स्पष्टम् ॥ एतेन णेरनिटीत्यनिड्ग्रहणमत्र ज्ञापकमित्यपास्तम् । नास्या ज्ञापकसिद्धत्वमिति भूयादित्यादौ दोषाभावस्य सत्वेनोक्तरीत्यान्यथोक्तेरसंबद्धत्वात् ॥ छाया ॥

४ यमुद्दिश्येति । य इति शेषः ॥ तद्गुणीत्यस्य व्याख्या शास्त्रेणेति ॥ एवमग्रेऽपि बोध्यम् ॥ शेषं पूरयति—आगमविशिष्ट इति । सोऽपीत्यर्थः ॥ तेनागमस्यापि ग्रहणम् । तेन ङमुट्सूत्रस्थभाष्यविरोधो न ॥ छाया ॥

५ तेन लब्धात्मकस्येत्यनेन ॥ दृष्टान्तेति । प्रकृतानुपयोगात् ॥ छाया ॥

६ प्रदीपं दूषयति—वस्तुत इति ॥ छाया ॥

७ यथाश्रुतासंगतेराह—रेफेति ॥ दोषवारणं भाष्याद्यनुक्तं प्राचां सिद्धान्तभूतमाह—अत्रेदमिति ॥ क्वचिदित्यस्य व्याख्या वर्णेति आदिभ्यां जहारेत्यादावात औ णल इति ॥ शब्दतोऽलाभादाह—ध्वन्यत इति ॥ इत्याहुरिति ॥ अत्रारुचिबीजं तु ततो ज्ञापकादनित्यत्वमेवास्या नतु वर्णग्रहणेऽप्रवृत्तिमात्रम् आनेमुक्सूत्रभाष्याद्यसंगत्यापत्तेरिति स्पष्टं परिभाषेन्दुशेखरे । अर्थवत इत्याशयस्तूक्त एवेति ॥ छाया ॥

८ तुल्यत्वादिति । एतेनावयवान्योपकारकतायास्तत्राप्रसिद्धत्वेनावक्तता (?) श्रयणानौचित्यादयुक्तमिदमित्यपास्तम् ॥ छाया ॥

९ मदुक्तेति । शास्त्रेणेत्यनेनेति भावः ॥ छाया ॥

१० पुनरिति प्रश्ने । इति किं युक्तमित्यर्थः ॥ छाया ॥

११ उत्तरयति—नेति ॥ युक्तमित्यस्यानुषङ्गः ॥ अयुक्तत्वमेवाह—नित्येष्विति ॥ चस्त्वर्थे ॥ शब्दोपेति । उपजायमानः शब्द इत्यर्थः ॥ छाया ॥

१२ प्रश्नादिसकलतात्पर्यमाह—ततश्चेति ॥ एतेन—इदमयुक्तम् । आगमपक्षेऽपि प्रणिदापयतीत्यादावुक्तरीत्यैव साधनीयत्वेनादेशपक्षेऽपि तस्य तथैव साधयितुमौचित्येन तद्दूषणस्पर्शात् । आदेशा इति सिद्धान्ताशयेन शङ्कोक्तेरनौचित्याच्चेत्यपास्तम् ॥ छाया ॥

१ वस्तुतस्तु आदेशवादिन आगमवादिनं प्रत्याक्षेपभाष्यम् । अग्रेऽपि तत्प्रतिबन्दीभूतमागमवादिन आदेशवादिनं प्रत्याक्षेपभाष्यम्—अथ युक्तमितीति बोध्यम् ॥ दाधिमंथाः ॥

(उद्द्योतः) भाष्ये यन्नित्येष्विति । विर्यदादिवद् वर्णप्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे इति भावः ॥ दाप्शब्द एवार्थवान्न दाशब्द इति । स तु न दाशब्द इत्यर्थः । एवं च घुत्वाभावाचद्वस्थो दोष इति भावः ॥ श्रौतस्थानपष्ठ्यभावात्स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्यम् ॥ कूटस्थत्वं व्याचष्टे—भाष्ये अविचालिभिरिति । तद्विवरणमनपायेत्यादि । द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः ॥

( आगमवादिन आदेशवादिनं प्रत्याक्षेपभाष्यम् )

**अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः ॥**

(प्रदीपः) अथ युक्तमिति । तत्रापि स्थानिनमपनीयादेशः क्रियत इत्यनित्यत्वप्रसङ्गः । यश्चोभयोर्दोषो न तमेकश्चोद्यः॥

(उद्द्योतः) नन्वेतावतापि स्वपक्षास्थापनाद्वैतण्डिकत्वमस्यादत आह—यश्चेति ॥

( आदेशवादिनः समाधानभाष्यम् )

**बाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपत्तिर्युक्ता ॥**

(प्रदीपः) बाढमिति । प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची, ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते । आगमस्त्ववस्थितस्यापूर्वः क्रियमाणो नित्यत्वं विरुणद्धि ॥

(उद्द्योतः) प्रसङ्गवाचीति । षष्ठी स्थान इत्यत्रत्यः । प्रसङ्गश्च बुद्धेरिति भावः ॥ सन्त एव प्रयोगे नित्या इति । आदेशरूपा इत्यर्थः ॥ बुद्ध्युन्मज्जननिमज्जने यथाक्रममादेशस्य स्थानिनश्च ॥ भाष्ये शब्दान्तरे इति । तद्बुद्धौ प्राप्तायामित्यर्थः ॥

( सिद्धान्तोपसंहारभाष्यम् )

**आदेशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकाः ॥**

**तत् कथम् ? ।**

**'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।**

**एकदेशविकारे हि नित्यत्वं नोपपद्यते' ॥**

(प्रदीपः) आदेशास्तर्हीमे इति । इड् भवतीत्येतद्द्वारेण तव्यस्येतव्यादेशः क्रियते ॥ सर्वे इति । आगमा अपीत्यर्थः ॥ सर्वपदादेशा इति । पदशब्देन न सुप्तिङन्तं गृह्यतेऽपि तु कार्यं प्रतिपद्यमानं प्रतीयमानं प्रकृतिप्रत्ययादि तत् सर्वं पदम् ॥ एकदेशविकारे हीति । यद्यपि सर्वविकारेऽप्यनित्यत्वं यथा पिठरस्थस्य पयसः पाकादिषु, तथापि विकाराभावप्रतिपादनपरमेतत् । बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियत इत्यर्थः ॥ यद्येवं दाशब्दस्य दाप्शब्द आदेशः क्रियत इति दाशब्दस्यानर्थक्यप्रसङ्गः ॥ नैष दोषः । नित्यतासमर्थनायादेशपक्ष आश्रितः । प्रक्रियायां तु कल्पितायामागमागमिभाव एव । अन्यथागमादेशयोर्भेदेन व्यवहारो न स्यात् ॥

(उद्द्योतः) आदेशास्तर्हीम इति । इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशास्तत्सदृशा भविष्यन्तीत्यर्थः ॥ आद्यन्तावित्याद्येकवाक्यतया आर्धधातुकस्याद्यावयव इडित्यर्थे वृत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायामिकारादिः साधुरिति बोधः ॥ तेनात्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः ॥ यदागमा इति न्यायस्य चात्रापि पक्षे सत्त्वाण्णिदापयतीत्यादौ न दोषः ॥ ये त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति, ते मान्याः । अनागमकानामित्यादिव्यवहारासङ्गतेः । निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनागमव्यवहारस्यापि निर्बाधत्वात् । तस्कथमिति प्रश्ने तुल्यन्यायत्वादाह—सर्वे सर्वपदेति । यथा एधुरित्यादौ अवयवयोः श्रौतस्थान्यादेशभावेऽपि नित्यत्वानुपपत्तिमूलकः समुदाययोरपि स कल्प्यते, एवम् अवयवत्वेन विधानेऽपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयवबुद्ध्योर्विपरिणाममात्रेणादेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति । यथा च तत्र कल्प्यमानस्थान्यादेशभावेन श्रौतावयवस्थान्यादेशभावस्य न त्यागः, अत एवाचः परस्मिन्नित्यादीनामुक्तिसम्भवः । तथाऽत्रापि श्रौतावयवावयविभावस्य न त्याग इति यदागमा इत्येतत्प्रवृत्तिरव्याहतैवेति ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः, स्थानिवदितिश्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके एधुरित्यादावेव तत्प्रवृत्तेः । नत्वत्र केवलानुमानिके । अत एव लावस्थायामडिति पक्षेऽडादिविशिष्टस्यापि बदित्यादौ न पिबाद्यादेशा इति दिक् । तदेतदाह—इड्भवतीत्येतद्द्वारेणेति ॥ आगमा अपीत्यर्थ इत्यस्य तथेत्यादिः । अत एवाग्रे वक्ष्यति—'बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभाव-

१ वास्तवनित्यत्वस्याभावादाह—वियदिति ॥ द्वितीयादिना महावाक्यम् ॥ छाया ॥

२ ननु स्थानिवद्भावेन तत्त्वमत आह—श्रौतेति ॥ छाया ॥

३ अपौनरुक्त्यायाह—कूटेति ॥ छाया ॥

४ इह आदेशस्थले ॥ तत्र तथा सति ॥ छाया ॥

५ वस्तुतस्तत्त्वस्याभावादाह—इमे इति ॥ तत्त्वमुपपादयति—आद्यन्ताविति ॥ वृत्ते निष्पन्ने ॥ छाया ॥

६ प्राचां मतं खण्डयति—येत्विति ॥ विपक्षे बाधकमुक्त्वा तत्र साधकमाह—निरेति ॥ इदमेव सर्वम् 'अनागमकानाम्' इत्यनेनोक्तम् ॥ प्रकृतासंबद्धत्वादाह—तुल्येति ॥ छाया ॥

७ तदुक्तिसाफल्यायाह—यथाचेति ॥ तत्र अवयवस्थले ॥ तत्र मानमाह—अत एवेति ॥ छाया ॥

८ नन्वेवं स्थानिवत्त्वेन सिद्धमत आह—ईदृशेति ॥ तत्र बीजमाह—श्रौतेति ॥ इदं सफलयति—अत एवेति ॥ छाया ॥

९ यथाश्रुतासंगतेराह—आगेति ॥ अत एवेति । अन्यथा तत्रोभयोक्तिरफलेति स्पष्टमेव ॥ छाया ॥

द्वारेण क्रियते' इति ॥ एतेनागमा अपीत्येवं सर्वपदव्याख्यायामेकदेशविकारे हीति वाक्यशेषविरोधः । आदेशत्वोपपादिकाया विकारव्यापकीभूताभावप्रतियोगित्वरूपनित्यत्वानुपपत्तेः सकलपक्षावृत्तित्वादित्यपास्तम् ॥ पच्यमानमिति । कार्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः ॥ सर्वपदेत्यत्र घञर्थे कः । सर्वशब्दश्चात्रावयवकार्त्स्न्यवाची ॥ यद्येवमिति । एवं चैतदवयवस्यानर्थक्यान्न संज्ञा, पुकः पूर्वं दा इत्यस्य तु न संज्ञा, कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुक्दृष्ट्यासिद्धत्वात् पूर्वमप्रवृत्तेः । न च पुग्विशिष्टस्य दाग्रहणेन ग्रहणम् । यदागमा इत्यस्याभावात् । पूर्वोक्तरीत्या स्थानिवत्त्वाप्रवृत्तेश्चेति भावः ॥ आदेशपक्ष इति । बुद्धिविपरिणामपक्ष इत्यर्थः । कल्पितप्रक्रियादशायां तु न कल्पितागमत्वादिव्यवहारत्याग इति यदागमा इत्यादेः सत्त्वेनात्रापि पक्षे न दोष इति भावः ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( १३३ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे ॥ * ॥

( भाष्यम् )

**दीङः प्रतिषेधः स्थाघ्वोरित्त्वे वक्तव्यः ॥ उपादास्तास्य स्वरः शिक्षकस्येति । "मीनातिमिनोति" इत्यात्वे कृते "स्थाघ्वोरिच्च" इतीत्त्वं प्राप्नोति ॥**

(प्रदीपः) दीङ इति । उपादीसृत इति स्थिते मीनातिमिनोतीत्यात्त्वे कृते दारूपत्वादर्थवत्त्वाच्च घुसंज्ञाप्रसङ्गः ॥

( प्रत्याक्षेपभाष्यम् )

**कुतः पुनरयं दोषो जायते—किं प्रकृतिग्रहणाद्, आहोस्विद्रूपग्रहणात् ? ॥**

(उद्द्योतः) सन्निपातपरिभाषया दीङ आत्वे दारूपाश्रयघुत्वं न । प्रकृतिग्रहणस्य प्रत्याख्यातत्वान्न तन्निबन्धनमपि इति गूढाशयः पृच्छति—भाष्ये—कुतः पुनरिति ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**रूपग्रहणादित्याह ॥**

(उद्द्योतः) आशयमविदुष उत्तरम्—रूपग्रहणादिति ॥

( प्रकृतिग्रहणदोषभाष्यम् )

**इह खलु प्रकृतिग्रहणाद्दोषो जायते । उपदिदीषते । "सनि मीमाघुरभलभ" इति ॥**

(प्रदीपः) इह खल्विति । एचो विषये आत्वविधानाद्दीशब्द एव दाप्रकृतिरिति दोषः ॥

(उद्द्योतः) इह खलु प्रकृतिग्रहणादिति । [4]घुसंज्ञासूत्रे प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः ॥

( दोषनिराकरणभाष्यम् )

**नैष दोषः । दाप्रकृतिरित्युच्यते । न चेयं दाप्रकृतिः । आकारान्तानामेजन्ताः प्रकृतयः, एजन्तानामपीकारान्ताः । न च प्रकृतेः प्रकृतिः प्रकृतिग्रहणेन गृह्यते ॥**

(प्रदीपः) न चेयमिति । एच एव स्थाने आत्त्वविधानादित्यर्थः ॥

(उद्द्योतः) अथैकदेशी एनं दोषं परिहर्तुमाह—नचेयमिति ॥ तद्व्याचष्टे—एच एवेति । मीनातीत्यस्योपदेशकाले प्रवृत्तिमसौ न जानाति । एवं च साक्षाद्दाप्रकृतिसंभवे व्यवहितप्रकृतेर्नग्रहणमिति भावः ॥ [6]अतिफल्गुत्वात्त्वेतन्मतदूषणानभिनिवेशो भाष्यकृत इति द्रष्टव्यम् ॥ [7]यत्त्विदं वार्तिकमतम्—न चैतत्पक्षेऽवदान इत्यादावादन्तत्वनिबन्धनयुजाद्यसिद्धिः । तत्राकारान्तलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः । भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदिति ॥ तन्न । [8]तादृशवार्तिकस्यानुपलम्भाद् । विपरीतं मिनातीति सूत्रे [9]उपदेशवचनं कर्तव्यं कघञ्युच्सिद्ध्यर्थमिति वार्तिकम् । [10]तत्रोपदेशे एच इति विरुद्धमित्याशङ्क्य एज्विषय इति भाष्यकृता व्याख्यातम् । न तु भवदुक्तवार्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते । एवंच प्रकृतिग्रहणं घुसंज्ञायां वार्तिककारोक्तं दुष्टमेव । न तु तदनुरोधेन गुरुभूत[11]वचनान्तरकल्पनाभिनिवेशः कार्यः । नह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणे किंचित्फलमित्या[12]हुः ॥

(आक्षेपोपसंहारभाष्यम्)

**[13]स तर्हि प्रतिषेधो वक्तव्यः ॥**

---

१ Bengal Asiatic Society पुस्तकशोधकैरपि 'अपीत्येवं सर्वपद' इत्येवं पाठः प्रकाशितः । परंत्वस्माभिः 'त्येव सर्वेति पाठः' इत्येव छायायामुपलभ्य एव स्थापितः ॥ दाधिमथाः ॥

२ अवयवेति ॥ ननु पदबहुत्वे इति भावः ॥ छाया ॥

३ रूपेत्युक्तिसमर्थनायाह—इहेत्यादि ॥ छाया ॥

४ घुसंज्ञेति । एतेनासंबद्धत्वं निरस्तम् ॥ छाया ॥

५ असौ वाक्यकृत् ॥ छाया ॥

६ नन्वस्यासिद्धान्तत्वात्कथमिदमत आह—अतिफेति ॥ वक्ष्यमाणहेतोः ॥ छाया ॥

७ नारायणकौस्तुभकृदाद्युक्तिं खण्डयति—यत्त्विति । तत्रेति । वचनान्तर्गतम् ॥ इति च्छाया ॥ परंतु—'भवत्याकारान्तलक्षणः प्रत्ययविधिः' इत्यादेच इति सूत्रे भाष्यकारीयं ज्ञापकसिद्धं वचनमिति बोध्यम् ॥ दाधिमथाः ॥

८ तादृशेति । तत्राकारान्तेतीत्यर्थः ॥ नन्वत्र विवादोऽत आह—विपेति ॥ विपरीतं वार्तिकं दृश्यत इत्यर्थः ॥ छाया ॥

९ 'उपदेशवचनं प्रत्ययविध्यर्थम्' इति वार्तिकस्थप्रत्ययपदव्याख्याने 'णघञ्युजविषयस्तर्हि प्रयोजयन्ति' इति भाष्यफलितम्—'णघञ्युच्सिद्ध्यर्थम्' इति ॥ दाधिमथाः ॥

१० भाष्यमपि तथा नेत्याह—तत्रोपेति ॥ छाया ॥

११ वचनान्तरेति । तत्राकारान्तेतीत्यर्थः ॥ छाया ॥

१२ आहुरिति भाष्यतत्त्वविदः ॥ छाया ॥

१३ तदरथः पृच्छति—स तर्हीति ॥

( समाधानभाष्यम् )

[1]न वक्तव्यः ॥

( आक्षेपभाष्यम् )

[2]घुसंज्ञा कस्मान्न भवति ? ॥

( समाधानभाष्यम् )

"[3]सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इत्येवं न भविष्यति ॥

(प्रदीपः) सन्निपातेति । अकित्त्वसन्निपातेनात्त्वं क्रियते । यदिचात्र घुसंज्ञा स्यात्[4] स्थाघ्वोरिच्चेति कित्त्वं स्यादित्यकित्त्वस्य व्याघातः स्यादिति घुसंज्ञां प्रति नैवाकार आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते ॥ अत्र केचिदाहुः—दीङस्तृजादावात्त्वे घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति । अत एव वार्तिककारेण स्थाघ्वोरित्त्व इति विशेषो निर्दिष्टः ॥ अन्ये त्वाहुः—निर्देश एवैजन्तानामनुकरणानामात्त्वे कृते[5] दाण्दाञ्धाञ्‌भ्यां चैकशेषे द्वन्द्वे च दाधा इति निर्देशाद्दीङो नास्ति प्राप्तिः, नहि तदनुकरणस्यात्त्वमस्ति । अगुणविषयत्वात् ॥

(उद्द्योतः) अकित्त्वेति । एचो विपयस्याऽन्यथाऽसंभवादिति भावः ॥ कित्त्वमिति । तद[6]भावे संनियोगशिष्टत्वादित्वमपि नेति कार्याभावाद् घुत्वस्याप्रवृत्तिरिति भावः ॥ प्रणिदातेतीति । ननु प्रणिदीयते इत्यत्र नित्यणत्वप्रसङ्गो णत्वविधौ प्रकृतिग्रहणादिति चेन्न, इष्टापत्तेः ॥ अन्ये त्वाहुरिति । अत्रारुचिवीजं तु वा[7]र्तिकभाष्यविरोधाद् न तथा सूत्रतात्पर्यमिति ॥ अगुणेति । गुणनिमित्तप्रत्ययप्रसङ्गाभावादित्यर्थः ॥

( नानुबन्धकृतमनेजन्तत्वन्यायाधिकरणम् )

( १८० आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् ॥ * ॥

( भाष्यम् )

[8]दाप्प्रतिषेधे दैपि प्रतिषेधो न प्राप्नोति—अवदातं मुखम् ॥

ननु चाऽऽत्त्वे कृते भविष्यति ॥

तद्ध्यात्त्वं न प्राप्नोति ॥

किं कारणम् ? ॥

अनेजन्तत्वात् ॥

(प्रदीपः) दाप्प्रतिषेध इति । दाप्लवने इत्यस्यैव निषेधः स्यादित्यर्थः ॥ अवदातमिति । तत्त्वमत्र प्राप्नोति ॥

(उद्द्योतः) इत्यस्यैवेति । न[9] तु दैप इत्यर्थः । तस्य पकारे श्रूयमाणे आत्वायोगादिति भावः ॥ ननु पकारे लुप्तेपि कथमात्वमुपदेशकाले एजन्तत्वाभावाद्, नानुबन्धकृतमित्याद्याश्रयणे तु प्रकृतेपि न दोष इति चेन्न । उपदेश इ[10]ति षष्ठ्यर्थे सप्तम्याः सत्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्वप्रवृत्तेः । सति तु तस्मिन्नात्वमेजन्तत्वाभावाद्, यस्मात्परो नास्ति तत्रैवान्तशब्दप्रवृत्तेरिति दिक् ॥ तत्त्वमिति । अच उपसर्गात्त इत्यनेनेत्यर्थः ॥

( १८१ समाधानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ सिद्धमनुबन्धस्याऽनेकान्तत्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ।

अनुबन्धस्यानेकान्तत्वात् । अनेकान्ता अनुबन्धाः ॥

(उद्द्योतः) भाष्ये अनेकान्ता इति । एवं च पकारसत्त्वेपि एजन्तत्वानपायादात्त्वप्रवृत्तिरिति भावः ॥

( १८२ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ पित्प्रतिषेधाद्वा ॥ * ॥

( भाष्यम् )

अथ वा "दाधा घ्वपित्" इति वक्ष्यामि । तच्चाऽवश्यं वक्तव्यम् । अदाबिति ह्युच्यमाने इहापि प्रसज्येत-प्रणिदापयतीति ॥

( आवश्यकतानिराकरणभाष्यम् )

[11]शक्यं तावदनेनादाबिति ब्रुवता बान्तस्य प्रतिषेधो विज्ञातुम् ॥

(प्रदीपः) शक्यं तावदिति । दा[12]ब्दैपौ च धातुषु बान्तौ पठितव्यौ ।

१ सिद्धान्ती समाधत्ते—नेति ॥

२ तटस्थः पृच्छति—घुसंज्ञेति ॥

३ सिद्धान्ती समाधत्ते—संनिपातेति ॥

४ स्यादिति । तर्हीति शेषः ॥ छाया ॥

५ कृते इति ॥ तेषामिति शेषः ॥ छाया ॥

६ तदभावे कित्त्वाभावे ॥ छाया ॥

७ क्रमस्य विवक्षितत्वादाह—वार्तिकेति ॥ न तथेति ॥ एतेन—एजन्तानामनुकरणेऽप्यात्वासंभवाद्दोदेङादेरिव दीङोपि कृतात्वस्य ग्रहणसंभवेन तस्यापि घुत्वसंभवाच्चायुक्तम्—अन्येस्त्वितीत्यपास्तम् ॥ गुणेति । तत्पुरुषः ॥ छाया ॥

८ दाप्प्रतिषेध इति । तथानिषेधे स्वीक्रियमाणे सतीत्यर्थः । न्यासान्तरे तु न दोष इत्यनुपदमेव स्फुटीभविष्यति ॥ छाया ॥

९ एवव्यवच्छेद्यं भाष्योक्तमेवाह—नत्विति ॥ छाया ॥

१० इतीति । इति सप्तम्याः षष्ठ्यर्थे सत्त्वेनेत्यर्थः ॥ छाया ॥

११ शक्यमिति । अयमपि प्रयोगः प्रागवद्बोध्यः ॥ छाया ॥

१२ भाष्ये बान्तस्येति जातावेकवचनमित्याह—दाब्दैपाविति ॥ छाया ॥

(उद्द्योतः) तच्चावश्यमित्यादि विघटयितुं[1] भाष्ये शक्यं तावदिति । लक्षणप्रतिपदोक्तपरिभाषया तु पुगन्तेऽदाविति निषेधो न शक्यो वारयितुं गामादाग्रहणेऽविशेषाद् । दावित्यपि पकारोपलक्षितदाग्रहणमेवेति भावः । वान्तपक्षेपि चर्त्वेन पस्य सिद्धत्वान्नास्ति सूत्र[2]भेदः ॥

( आक्षेपभाष्यम् )

**सूत्रं तर्हि भिद्यते ॥**

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम् "*दाप्प्रतिषेधे न दैपि*" इति ॥**

( परिहारस्मारणभाष्यम् )

**परिहृतमेतत् "*सिद्धमनुबन्धस्यानेकान्तत्वात्* इति ॥**

( आक्षेपभाष्यम् )

**अथैकान्तेषु दोष एव ॥**

( समाधानभाष्यम् )

**एकान्तेष्वपि न दोषः । आत्त्वे कृते भविष्यति ॥**

( समाधानानुपपत्तिभाष्यम् )

**ननु चोक्तम्—'तद्घात्वं न प्राप्नोति, किं कारणम् । अनेजन्तत्वाद्—' इति ॥**

( समाधानोपपत्तिभाष्यम् )

**पकारलोपे कृते भविष्यति ॥**

( आक्षेपभाष्यम् )

**नह्ययं तदा दाप् भवति ॥**

(उद्द्योतः) शङ्कते—नह्ययमिति ॥

( समाधानभाष्यम् )

**भूतपूर्वगत्या भविष्यति ॥**

(उद्द्योतः) उत्तरयति—भूतपूर्वेति । दात्वं श्रुत्वा, पकारवैशिष्ट्यं तु अनयेति भावः ॥

( समाधानसाधकभाष्यम् )

**एतच्चात्र युक्तम्—यत्सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते ॥ अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति ॥**

(प्रदीपः) तावत्येवेति । इत्संज्ञायां सत्यामेव प्रयोगे दाशब्द एवायं पित्कार्यं तु लभत इत्यर्थः ॥

(उद्द्योतः) इत्संज्ञायामिति । उपदेशोत्तरकालं जातायामेवेत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमनेजन्तत्वम्' इति । यदयम् "उदीचां माङो व्यतीहारे" इति मेङः सानुबन्धकस्याऽऽत्त्वभूतस्य ग्रहणं करोति ॥**

(प्रदीपः) अथवेति । अनुबन्धानामेकान्तत्वपक्षे उपदेश एवैजन्तानामात्त्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञापकोपन्यासः ॥ **माङ इति** । मेङो ग्रहणं न माङः, मेङो व्यतिहारेण नित्ययोगात् । माङस्तु विवक्षावशाद् व्यतिमिमीत इति कादाचित्कत्वाद् व्यतिहारयोगस्य । [3]प्रणिदानं व्यतिहार इत्येकोऽर्थः । **उदीचां मेङ** इति तु न कृतम् । एवं हि **'नानुबन्धकृतमनेजन्तत्वम्'** इति न ज्ञापितं स्यात् ॥

( उद्द्योतः ) मेङ इति । [4]अन्तरङ्गत्वाद्व्यतीहारो नित्यसंबद्ध एव गृह्यते; न तु पदान्तरसन्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः ॥ केचित्[5]तु माङोऽनभिधानात्क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः ॥ उदीचां मेङ इति । [6]उदीचां म इत्यस्याप्युपलक्षणमिदम् । न चानुबन्धसत्त्वे मे इत्यस्य धातुत्वाभावात्कथमात्वम्, अनुबन्धलोपे एव धातुत्वमित्यर्थस्य 'न धातुलोप' सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति वाच्यम् । आत्वविधायके धातोरित्यस्यासंबन्धाद् । ग[7]वादिशब्दानामुपदेशाभावान्नात्वम् । इरेप्रभृतीनामुपदेशेपि तेषामशित्परत्वाभावाद् नात्वम् । प्रसज्यप्रतिषेधेपि प्रत्यासत्त्या शित्प्रत्ययपरत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक् ॥

( समाधानान्तरभाष्यम् )

**अथ वा दाबेवायम् । न दैबस्ति ॥**

**कथम्—'अव दायति' इति ? ॥**

**श्यन्विकरणो भविष्यति ॥ दाधाघ्वदाप् ॥ १९ ॥**

(प्रदीपः) **अथवेति** । दिवादिषु **दाप्शोधने** इति पठिष्यत इत्यर्थः ॥ १९ ॥

( उद्द्योतः ) दिवादिष्विति । ननु ताच्छीलिके चानशि दायमान इत्यत्र स्वरे भेदः श्यनि धातोर्[8]दात्तत्वं, शपि चानशो-

१ घटयितुमिति । आहेति शेषः ॥ ननु तत्राविशेषेप्यत्र .दाविद्युक्तेर्न दाग्रहणमत आह—दावित्यपीति ॥ प्रयोगे तस्य क्वाप्यश्रवणादिति भावः ॥ वक्ष्यमाणो न्यासान्तरे दोषो नात्र पक्षे इत्याह—वान्तेति ॥ सिद्धत्वात् निष्पन्नत्वात् ॥ छाया ॥

२ सूत्रेति । परिमाणग्रहणमिति धातुसंज्ञासूत्रवार्तिकान्यथानुपपत्त्याऽर्थनिर्देशस्यापाणिनीयत्वात् पाणिनीयधातुसंहितापाठे 'दैप्पा' 'दाप्ल्व्या' इत्येव पाठसत्त्वादिति भावः ॥ 'दाधाघ्वदाबाद्यन्तवदेकस्मिन्' इति पाणिनीयसूत्रसंहितापाठे पान्तपक्षेपि जश्त्वेन वकारस्य सिद्धत्वान्नास्ति सूत्रभेदः । वृत्तिकृत्कल्पितसूत्रविभागे वकारस्यापि चर्त्वेन पकारे नास्ति सूत्रभेद इति तत्त्वम् ॥ दाधिमथाः ॥

३ ननु सूत्रे 'व्यतिहारे' इत्युक्तावपि 'प्रणिदाने' इति अत्रोक्तमिति कथं तस्यैव ग्रहणमत आह—प्रणीति । प्रकृत इति भावः ॥ छाया ॥

४ कैयटस्य सहेतुकं तात्पर्यमाह—अन्तरङ्गत्वादिति । प्रथमोपस्थितत्वादित्यर्थः ॥ बहिरिति । बहुव्रीहिः ॥ छाया ॥

५ केचिदिति । नारायणकौस्तुभकृदादय इत्यर्थः ॥ छाया ॥

६ अत्रालाघवादाह—उदीचां म इतीति ॥ छाया ॥

७ तत्फलानामन्यथोपपत्तिमाह—गवादीति ॥ नात्वमिति । पर्युदास इति भावः ॥ शिदिति बहुव्रीहिः । अतएव तिष्ठतु तावत्सांन्यासिकमित्युक्तं भाष्ये । भाष्यान्तरं त्वेकदेश्युक्तिः । तदाह—दिगिति ॥ छाया ॥

८ 'ञ्नित्यादिर्नित्यम्' इत्यनेन प्राप्नोतीति शेषः ॥

न्तोदात्तत्वमिति चेन्न । सतिशिष्टादपि विकरणस्वरात् सार्वधातुकस्वरस्य वलीयस्त्वोक्तेरुभयथाप्यन्तोदात्तत्वानपायादिति दिक् ॥ १९ ॥

( १८ अतिदेशसूत्रम् ॥ १ । १ । ५ आ. ९ ॥ )

## आद्यन्तवदेकस्मिन् ॥ १ । १ । २० ॥

**(प्रदीपः) आद्यन्तवदेक ॥ २० ॥** एकशब्दोऽसहायवाची न संख्यावाची। बहुष्व[3]पि व्यवस्थितस्यैकत्वसंख्याऽस्तीति किमेकस्मिन्नित्यनेन कृतं स्यात्। एकस्मिन्नित्युपमेये सप्तमीनिर्देशादाद्यन्तवदित्युपमानात् सप्तम्यन्ताद्वतिर्विज्ञायते । यथा मथुरावत् पाटलिपुत्रे प्राकार इति । द्वयोर्ह्युपमानोपमेययोराधाराधेयसंबन्धप्रतिपादनाय वाक्यं प्रयुज्यते । यदि च तयोर्भिन्नविभक्तिकत्वं स्याद् उपमानोपमेयभाव एव न गम्येत ॥ सर्वातिदेशानां कार्यातिदेशस्य प्राधान्यात्तस्यैवेहाश्रयणम् ॥

**(उद्योतः) आद्यन्तव ॥ २० ॥ बहुष्वपीति ।** य[4]द्यप्युत्तरा सङ्ख्या पूर्वसङ्ख्यावाधिका; तथापीतरेषां बुद्धिविपयत्वाभावे बहुमध्यस्थस्यैकत्वाङ्गीकारान्न दोषः । यथा शते पञ्चाशदितीति भावः ॥ **किमेकस्मिन्नित्यनेनेति ।** तद्धि समासंनयने भव इत्यर्थे भाकारस्यादित्वे तस्य वृद्धत्वेन प्राप्तच्छाभावार्थं दरिद्रातेरिषर्णान्तलक्षणाचोऽभावार्थं च । अ[5]त्र च स्वरे विशेषः ॥ उपमेये सप्तमीसत्त्वे सप्तम्यन्ताद्वतौ मानमाह—**द्वयोरिति ॥ उपमानोपमेययोरिति ।** प्रा[6]कारपदवाच्येनेति शेषः ॥ **आधाराधेयसंबन्धेति ।** आ[7]धारत्वाधेयत्वरूपसंबन्धप्रतिपादनायेत्यर्थः ॥ **न गम्येतेति ।** उपमानप्रकारकोपमेयविशेष्यकबोधे समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः ॥ **सर्वातिदेशानामिति ।** रू[8]प, निमित्त,-तादात्म्य,-शास्त्र,-व्यपदेश,-कार्या-तिदेशानां मध्ये इत्यर्थः ॥ **प्राधान्यादिति ।** स[9]र्वेषां कार्यार्थत्वादिति भावः ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते? ॥**

**(प्रदीपः) किमर्थमिति ।** व्य[10]पदेशिवद्भावेनैव सिद्धत्वान्न कर्तव्यमित्यर्थः ॥

( १८३ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् ॥ * ॥

( भाष्यम् )

**सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिरित्युच्यते । सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते । सत्यन्यस्मिन्नाद्यन्तवद्भावादेतस्मात् कारणाद् एकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति । इष्यन्ते च स्युरिति । तान्यन्तरेण यत्नं न सिध्यन्ति इत्येकस्मिन्नाद्यन्तवद्वचनम् । एवमर्थमिदमुच्यते ॥**

**(प्रदीपः)** इतरो मु[11]ख्ये संभवति गौणे न स्यादित्याह—**सत्यन्यस्मिन्निति ।** आद्यन्तौ विद्येते यस्मिन् शास्त्रे तदाद्यन्तवत् तस्य भावात् प्रवर्तनादित्यर्थः । क्वचि[12]दाद्यन्तभावादिति पाठः ॥

**(उद्योतः) मुख्ये** व्यपदेशिनि । **गौणे** व्यपदेशिसदृशे ॥ नन्वाद्यन्तवद्भावादिति न वतिः, सत्यन्यस्मिन्मुख्याद्यन्तत्वात् । नापि मतुप् । आद्यन्तशब्दवच्छास्त्रसद्भावस्य प[13]रैः पूर्वसत्त्वानपेक्षत्वेन सत्यन्यस्मिन्नित्यस्यायोगादत आह—**आद्यन्ताविति ।** आद्यन्तशब्दावित्यर्थः ॥ एवं चाद्यन्तवद्भावादित्यस्याद्यन्तपदवच्छास्त्रप्रवृत्तेरित्यर्थः ॥ **क्वचिदिति ।** आ[14]द्यन्तव्यवहारादिति तदर्थः ॥

---

१ 'चित् प्रत्ययस्य रस्य' इत्येवोचितम् ॥ दाधिमथाः ॥

२ नपायादिति ॥ स्पष्टं चेदम् आरममाने खश्चेतिसूत्रे भाष्ये ॥ स्थानिवत्सूत्रस्थकैयटस्तु प्रामादिक इति तत्रैव वक्ष्यते ॥ तदाह—दिगिति ॥ छाया ॥

३ बहुष्वपि हीतिपाठः ॥ छाया ॥

४ अइउण्सूत्रभाष्यरीत्या शङ्कते—यद्यपीति ॥ छाया ॥

५ अत्र च दरिद्रास्थले च ॥ छाया ॥

६ यथाश्रुतानुपपत्तेराह—प्राकारेति ॥ वाच्येनेतीति । वाच्येन सहेत्यर्थः ॥ क्वचित्तथा पाठ एव ॥ छाया ॥

७ यथाश्रुते भावपदं विनाऽनुपपत्तेर्धर्मपरतया योजयति—आधारस्वेति ॥ छाया ॥

८ निर्धारणषष्ठीत्याह—रूपेति । अभ्यर्हितत्वात्सर्वाधारत्वात्पूर्वनिपातः ॥ छाया ॥ तत्र रूपातिदेशो यथा—तृज्वत्क्रोष्टुः । निमित्तातिदेशो यथा पूर्ववत्सनः इत्यत्र सन्नन्तेपि प्रकृतिगतमात्मनेपदनिमित्तत्वमतिदिश्यते । तादात्म्यातिदेशो यथा सुबामन्त्रिते पराङ्गवत्स्वरे इति भिन्नपदयोरभेदातिदेशः । शास्त्रातिदेशो यथा—कर्मवत्कर्मणा तुल्येत्यत्र पाक्षिको वक्ष्यते । व्यपदेशातिदेशो यथा—आद्यन्तवदेकस्मिन् ॥ कार्यातिदेशो यथा गोतोणित् ॥ दाधिमथाः ॥

९ सर्वेषामिति । यत्तु रत्नकृत्—अयं व्यपदेशातिदेशः एकशब्दः संख्यावाची । आद्यन्तशब्दादर्शआद्यजन्तान्मतुप् । प्रत्यासत्त्या एकस्मिंस्तदाद्यन्त इव व्यपदेशो भवतीत्यर्थः ॥ अतएव समासंनयनादौ न दोषः । कैयटोक्तं तु न युक्तम् । गार्ग्य इत्यादि भाष्यासंगत्यापत्तेः । वृद्धिर्यस्येति सूत्रे आदिग्रहणानर्थक्यापत्तेः । आभ्यामित्यादौ दीर्घव्यवस्थाया असंभवापत्तेः । तत्र कथंचित्संभवेपि अस्येत्यादौ स्याद्यभावापत्तेः । तेषां तत्राप्रवर्तमानत्वेन तदकार्यत्वात् । एकाचोद्वेइत्यादिवक्ष्यमाणासंग्रहापत्तेः । वृद्धिर्यस्येति सूत्रे प्रकृतसूत्रगतैकशब्दप्रयोजनपरग्रन्थविरोधापत्तेश्चेति ॥ तन्न । प्रकृतिप्रत्ययमात्रकार्ये विजातीयसत्त्वेपि सजातीयाभावेनासहायत्वस्य सत्त्वेन दोषलेशाभावात् । अतएवादिग्रहणस्य स्वग्रन्थविरोधस्य चाभावात् । औपश्लेषिकाधिकरणसप्तम्याऽस्येत्यादावदोषात् । अत एकस्याप्यसंग्रहाभावात् प्रधानन्यायविरोधापत्तेः । अप्रयुक्तगौरवापत्तेः । कार्याणि कार्यमित्यसकृदुक्तिपरभाष्यविरोधापत्तेश्चेति दिक् ॥ छाया ॥

१० व्यपदेशीति । लौकिकेनेत्यर्थः । तथा च भाष्येऽर्थशब्दः प्रयोजनवाची ॥ छाया ॥

११ मुख्य इति ॥ तथाच शास्त्रीयेण गौणमुख्यन्यायेन लौकिकस्य तस्य बाध इति भावः ॥ छाया ॥

१२ प्रथमपाठस्य व्याख्यानानुगुणत्वादेवाह—क्वचिदिति ॥ छाया ॥

१३ सौत्रक्रमेणाह—परेति ॥ छाया ॥

१४ क्वाचित्कपाठार्थमाह—आद्यन्तेति । तथा च स एव युक्त इति तात्पर्यम् ॥ छाया ॥

( आक्षेपभाष्यम् )

अस्ति प्रयोजनमेतत् ? ॥

( समाधानभाष्यम् )

किं तर्हीति ॥

( १८४ आक्षेपवार्तिकं प्रथमखण्डम् ॥ २ ॥ )

॥ * ॥ तत्र व्यपदेशिवद्वचनम् ॥ * ॥

( भाष्यम् )

तत्र व्यपदेशिवद्भावो वक्तव्यः । व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम् ॥

(प्रदीपः) तत्र व्यपदेशिवद्वचनमिति । सर्वकार्यसिद्ध्यर्थं व्यापकं कर्तव्यमित्यर्थः ॥ तत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्यास्ति स व्यपदेशी यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते ॥

(उद्द्योतः) सर्वकार्येति । आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्यसिद्ध्यर्थं गुर्वपि व्यपदेशिवदिति आद्यन्तवदित्यस्य स्थाने कार्यमिति भावः ॥ स तेनेति । तेन तुल्यमिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम् ॥

( भाष्यम् )

किं प्रयोजनम् ? ।

( १८४ प्रयोजनवार्तिकं द्वितीयखण्डम् ॥ ३ ॥ )

॥ * ॥ एकाचोद्वेप्रथमार्थम् ॥ * ॥

( भाष्यम् )

वक्ष्यति-'*एकाचोद्वेप्रथमस्येति बहुव्रीहिनिर्देशः*-इति । तस्मिन् क्रियमाणे इहैव स्यात्—पपाच पपाठ; इयाय आर इत्यत्र न स्यात् । व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति ॥

(उद्द्योतः) भाष्ये तस्मिन्क्रियमाण इति । तस्मिन्नाश्रीयमाण इत्यर्थः ॥ पपाचेति ॥ नन्वत्र धातुरेव प्रथम एकाज् , न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न । आदित्वपर्यायप्रथमत्वस्य सूत्रेणैवातिदेशसिद्ध्या तत्र व्यपदेशिवद्भावारम्भस्य मुख्यं प्रयोजनमित्याशयात् । इयायेत्यादौ तु द्विर्वचनेऽचीति रूपस्थानिवत्त्वादजन्यतिरिक्ताभावेन नैकाच्त्वमिति बोध्यम् ॥

( १८४ प्रयोजनवार्तिकं तृतीयखण्डम् ॥ ४ ॥ )

॥ * ॥ षत्वे चाऽऽदेशसंप्रत्ययार्थम् ॥ * ॥

( भाष्यम् )

वक्ष्यति-'आदेशप्रत्यययोरित्यवयवषष्ठ्येषा-' इति । एतस्मिन् क्रियमाणे इहैव स्यात्-करिष्यति हरिष्यति, इह न स्याद् '[इन्द्रो मा] वक्षत् (ऋ० १।१३५।४)' 'स देवान्यक्षत् (ऋ० ३।४।३)' इति । व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति ॥

(प्रदीपः) वक्षदिति । वच् लेट् तिप् इतश्च लोप इतीकारलोपः, लेटोडाटाविस्यडागमः सिप् कुलम् । अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययस्यावयवः सकार इति षत्वं न स्यात् ॥

(उद्द्योतः) भाष्ये—अवयवषष्ठ्येषेति। प्रत्ययांशे इति भावः॥ एतस्मिन्क्रियमाणे इति । अवयवषष्ठीत्वे आश्रीयमाणे इत्यर्थः ॥

( आक्षेपोपसंहारभाष्यम् )

स तर्हि व्यपदेशिवद्भावो वक्तव्यः ? ॥

( सिद्धान्तिसमाधानभाष्यम् )

न वक्तव्यः ॥

( १८५ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अवचनाल्लोकविज्ञानात् सिद्धम् ॥ * ॥

( भाष्यम् )

अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत् ॥

(प्रदीपः) अवचनादिति । अवचनं वचनरहितं यल्लोकविज्ञानं तस्माल्लोकव्यवहारादित्यर्थः । इहं तावदियायेति [य] इण्धातुः प्रयोगभेदाद्बहुरूपः—एति इतः यन्ति अयनम् आयकः अगात् गमयतीति । तस्यायमेकोजवयव इव लक्ष्यते । अथवा अर्थवतो धातोरयं वर्णरूप एकोऽजित्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति । एवं शिलापुत्रकस्य शरीरमित्यनेकक्रियाविषयस्याऽवस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः । एवं सिप्प्रत्यय इट्सहितोऽपि दृष्टो जोषिषदित्यादौ, वक्षदित्यादौ केवलोऽपीति, तस्यायं सकार इति व्यपदिश्यते । लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहाराद्गौणमुख्यन्यायोऽत्र नावतरति ॥

(उद्द्योतः) विज्ञानशब्दो व्यवहारवाचीत्याह—व्यवहारा-

१ तत्र प्रयोजने सति ॥ छाया ॥

२ गौणमुख्यन्यायबाधनार्थं व्यपदेशिवद्वचनं कर्तव्यमिति भाष्याशयमित्यभिप्रेत्याह—सर्वेति ॥ तत्र वचने ॥ छाया ॥

३ गुर्वीति । गौरवं मात्राकृतम्, अवान्तरपदत्वेन पदकृतमपि ॥ छाया ॥

४ ननु प्राग्वत्प्रत्ययन्ताद्युचितो वतिरत आह—तेनेति ॥ तस्या इपपदविभक्तित्वेन षष्ठ्यर्थत्वात् । अतो न प्रागुक्तदोष इति भावः ॥

५ एकाच इति । विभक्तिं विहाय समुदायानुकरणम् ॥ छाया ॥

६ अवचनादिति बहुव्रीहिणा विज्ञानस्य समानाधिकरणं विशेषणमित्याह—अवचनमिति ॥ छाया ॥

७ मुख्यैकाज्व्यपदेशिना सादृश्यमाह—इहेति ॥ इति इत्यत्र य इत्यस्य तस्येत्यत्रान्वयः ॥ छाया ॥

८ केवलोपीति । सकृत इति भावः ॥

९ व्यवहारेति । करणल्युटप्रत्ययस्येति भावः ॥ एवं सति भाष्यविरोधमाह—तत्फलीति ॥ छाया ॥

दिति ॥ तत्फलितव्याख्यानं भाष्ये अन्तरेणैवेति। यथा लोके व्यवहारो वचनं विनैव सिध्यति तथा शास्त्रेपि वचनं विना सिध्यतीत्यर्थः ॥ अगादित्यादि। 'इणो गा लुङि' 'णौ गमिरबोधने' इत्यादेशौ। एकोच् असहायोऽजित्यर्थः ॥ नन्वेकाचो[1]ऽवयविनो द्विर्वचनमिति यस्यायमवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह—अथवेति ॥ काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह—एवमिति ॥ व्यपदेशो भेदनिबन्धनसंबन्धव्यवहारः ॥ शास्त्रेपीति। लोकाप्रसिद्धत्वमेव तत्त्यागे बीजं तच्च न प्रकृते इति भावः ॥

( एकदेशिदृष्टान्तभाष्यम् )

**तद्यथा[2]—लोके—'शालासमुदायो ग्रामः'—इत्युच्यते। भवति चैतदेकस्मिन्नपि—"एकशालो ग्रामः"—इति ॥**

( उक्तदृष्टान्तविघटनभाष्यम् )

**विषम[3] उपन्यासः। ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा—'ग्रामो दग्धः' इति ॥**

**अस्ति वाटपरिक्षेपे वर्तते। तद्यथा—'ग्रामं प्रविष्टः'—इति ॥**

**अस्ति च मनुष्येषु वर्तते। तद्यथा—'ग्रामो गतो ग्राम आगतः'—इति ॥**

**अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते। तद्यथा—'ग्रामो लब्धः'—इति ॥**

**तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत्प्रयुज्यते—'एकशालो ग्रामः' इति ॥**

( एकदेशिदृष्टान्तान्तरभाष्यम् )

**यथा[4] तर्हि—'वर्णसमुदायः पदम्' 'पदसमुदाय ऋक्,' 'ऋक्समुदायः सूक्तम्' इत्युच्यते। भवति चैतदेकस्मिन्नपि—'एकवर्णं पदम्,' 'एकपदा[5] ऋक्,' 'एकर्चं सूक्तम्' इति ॥**

(प्रदीपः) पदसमुदाय इति। पादपर्यायः[6] पदशब्दः। तथा चैकपदा ऋगिति पाद एव विवक्षितः। न तु ऋचः कस्याश्चिदप्येकमेव पदं भवति ॥

(उद्द्योतः) पादपर्याय इति। वर्णसमुदायः[7] पदमित्यत्र तु पदशब्दो यथाश्रुत एव ॥

( दृष्टान्तान्तरविघटनभाष्यम् )

**अत्राप्यर्थेन[8] युक्तो व्यपदेशः। पदं नामार्थः, ऋङ् नामार्थः, सूक्तं नामार्थ इति ॥**

(प्रदीपः) अत्राप्यर्थेनेति। पदादीनां योऽर्थः सोऽन्यपदार्थ इत्यर्थः। अभेदोपचाराच्चार्थ एव पदादिभिरभिधीयते ॥

(उद्द्योतः) पदादीनामिति। एकवर्णं पदमित्यादौ ॥ ननु अर्थस्य पदत्वं कथमत आह—अभेदेति। तदुपचारश्च शब्दार्थयोरनादिरिति बोध्यम् ॥ पदादिभिः पदशब्दादिभिः ॥

( सिद्धान्तिदृष्टान्तभाष्यम् )

**यथा तर्हि—बहुषु पुत्रेष्वेतदुपपन्नं भवति—अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयानिति। भवति चैतदेकस्मिन्नपि—'अयमेव मे ज्येष्ठोऽयमेव मे मध्यमोऽयमेव मे कनीयान्' इति ॥**

(प्रदीपः) अयमेव मे ज्येष्ठ इति। प्रथमरूपता[9]ध्यवसायात्। मध्यमकार्यकरणाच्च मध्यम इति व्यपदिश्यते। अन्यो न जनितेति बुद्ध्या कनीयानिति व्यपदिश्यते ॥

(उद्द्योतः) प्रथमेति। तस्मात्[10]पूर्वस्याभावादिति भावः ॥ मध्यमकार्यं तत्संबन्धजसुखादिकम् ॥

( सिद्धान्तिदृष्टान्तान्तरभाष्यम् )

**तथा[11]ऽसूतायामसोष्यमाणायां च भवति—'प्रथमगर्भेण हता' इति ॥**

(प्रदीपः) असूतायामिति। बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते। तथा या प्रसोष्यते साऽपि काचित्पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम्। नापि प्रसूता नापि प्रसोष्यते कुक्षिस्थेनैव गर्भेण हता 'प्रथमगर्भेण हतेत्युच्यते। अपत्यपर्यायो गर्भशब्दः। तत्र तस्या एव योग्यताध्यवसायेन भाविगर्भविवक्षया प्रथमगर्भेण हतेत्युच्यते। स्त्र्यन्तरेषु वा बहुपुत्रत्वे सत्याद्यगर्भस्य प्रथमव्यपदेशदर्शनात् तथाविधस्य प्रथमगर्भव्यवहारः ॥

(उद्द्योतः) बहुकृत्वोऽपीति। यथा परशुरामेण रेणुका ॥ तथा येति। संप्रति गर्भिणीत्यर्थः। गर्भस्थमादाय तत्र[12]ापि प्रथमव्य-

---

१ अत्र पक्षे दोषमाह—नन्विति ॥ दृष्टान्तमिति। अनेन एवम् इत्यस्य यथेत्यर्थः सूचितः ॥ छाया ॥

२ सिद्धान्त्येकदेशी लोकविज्ञानमाह—तद्यथेति ॥

३ दृष्टान्तं विघटयति—विषम इति ॥

४ दृष्टान्तान्तरमाह—यथा तर्हीति ॥ एवमग्रेपि ॥ छाया ॥

५ एकपदाऋचो यथा—"आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम्" ६।६३।११
"असिक्न्यां यजमानो न होता" ४।१७।१५
"उरौ देवा अनिबाधे स्याम" ५।४२।१७
"सिषक्तु न ऊर्जव्यस्य पुष्टेः" ५।४१।२० इत्यादयः

एकर्चमिति। 'जातवेदसे' ऋ० सं० १ म० ९९ सूक्तम्—इति ॥

६ पादपर्यायः तद्वचनः ॥ इति इत्यत्र ॥ तत्र बीजमनुपपत्तिमाह—नहीति ॥ छाया ॥

७ प्रथमं त्यक्त्वाग्रे व्याख्याने बीजमाह—वर्णेति ॥ अनुपपत्त्यभावात् ॥ छाया ॥

८ एतदपि विघटयति—अत्राप्येति ॥ छाया ॥

९ एकत्र त्रिविधव्यवहारे बीजान्याह—प्रथमेति ॥

१० प्रथमत्वे बीजमाह—तस्मादिति ॥ अनेन न्यायप्रदर्शनमेव कृतम् ॥ छाया ॥

११ एवं पुत्रदृष्टान्ते स्थितेऽपि दृष्टान्तान्तरमाह—तथेति ॥ एवमग्रेपि ॥ छाया ॥

१२ तत्र कुक्षिस्थगर्भे ॥ छाया ॥

वहार इत्यर्थः ॥ ननु या सुता सा न गर्भेण हता भवति किं त्वपत्येनेति गर्भेण हतायां तद्यतिरेकप्रदर्शनमयुक्तमत आह—अपत्यपर्याय इति । तच्चोदरस्थं बहिर्भूतं वेत्यन्यत् ॥ तत्र प्रथमव्यवहारे बीजमाह— तस्या एवेति । इयन्तरेषु बहुप्रसववतीषु ॥ तथाविधस्येति । अविद्यमानपूर्वगर्भस्येत्यर्थः ॥

( सिद्धान्तिदृष्टान्तान्तरभाष्यम् )

**तथाऽनेत्याऽनाजिगमिषुराह—'इदं मे प्रथममागमनम्' इति ॥**

**(प्रदीपः) अनेत्येति ।** बहुकृत्वो ह्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं तत्र मुख्यं करोत्येव, आजिगमिषुश्च भावीन्यागमनानि बुद्ध्या व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारम् । यस्तु सकृदेवागतः सोपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थमनेत्यानाजिगमिषुरित्युपात्तम् । तत्रान्यसंबन्धिषु बहुष्वप्यागमनेष्वायस्य प्रथमव्यवहारदर्शनात् तथाविधत्वात् स्यादेकस्मिन्नप्यागमने प्रथमव्यवहारः ॥

**(उद्द्योतः)** नन्वागमनं विनेदं मे प्रथममागमनमिति व्यवहारासंभवादनेत्येदं मे प्रथममागमनमित्यसङ्गतमत आह—बहुकृत्व इति ॥ अनेत्येत्यस्यैतः पूर्वमिति शेष इति भावः ॥ तथाविधत्वादिति । अविद्यमानपूर्वागमनत्वादित्यर्थः ॥

( सूत्रप्रत्याख्यानभाष्यम् )

**आद्यन्तवद्भावश्च शक्योऽवक्तुम् ॥**

**(उद्द्योतः)** परे तु पदकगादिपदानि अर्थशब्दसमुदायवृत्तीनि, तस्य शब्दमात्ररूपवर्णपादकगाद्यवयव इत्येव भाष्यार्थः । न तु शुद्धोर्थोन्यपदार्थ इति । तथाऽप्रतीतेः एकार्च सूक्तं पठेत्यादिव्यवहारानापत्तेश्च । एवं चार्थवतो धातोरयमेकोज् वर्णरूप इति अर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजितीति कैयटोक्तं चिन्त्यम् । एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाविषयत्वात् । कैयटरीत्या शुद्धार्थस्यान्यपदार्थत्वेऽत्रापि तथैवास्तु शब्दार्थयोरभेदाच्च शब्देपि तत्त्वमिति । अत्रापि न व्यपदेशिवद्भावप्रयोजनम् । किं चैकाजिति बहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणम् । तस्य चानर्थकत्वमिति अर्थस्योपादानत्यागावत्यसंबद्धौ । एतदेव ध्वनयता पदं नामार्थं इति भाष्ये उक्तम् । धात्ववयवत्वं तु कैयटोक्तरीत्या वक्तुं शक्यम् । अत एव बहुव्रीहिनिर्देशानुपपत्तिरेव व्यपदेशिवदित्याश्रयणे बीजमुक्तम् ॥ अत्राप्यर्थेनेति भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः ॥ अर्थशब्दोभयवृत्तिपदत्वकक्त्वादीत्याशयः ॥ पदं नामार्थं इत्यादेरर्थोपीत्यर्थः ॥ यथा तर्हीति । यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वस्याप्यारोपेणैकाच्त्वादिव्यवहारोपपत्तिर्द्वितीये तृतीये च दृष्टान्ते प्रथमेत्युपलक्षणं चरमस्यापि । तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात् । आद्यन्तवद्भावश्च शक्योऽवक्तुमित्यस्य प्रकारान्तरेणापीति शेष इत्याहुः ॥ वस्तुतस्तु ईदृशेषु पातञ्जलोक्तं विकल्पात्मकं वस्तुशून्यमेव ज्ञानमिति आरोपानुपयोग एव । लोकव्यवहारवत्तेनापि शास्त्रीयो व्यवहार इति तत्त्वम् ॥

**कथम् ? ॥**

( १८६ प्रत्याख्यानसाधकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अपूर्वानुत्तरलक्षणत्वादान्तयोः सिद्धमेकस्मिन् ॥ * ॥

( भाष्यम् )

**अपूर्वलक्षण आदिः, अनुत्तरलक्षणोऽन्तः । एतच्चैकस्मिन्नपि भवति । अपूर्वानुत्तरलक्षणत्वादेतस्मात् कारणाद् एकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्यन्तवद्भावेन ॥**

**(प्रदीपः)** इदानीं योगं प्रत्याख्यातुमाह—**अपूर्वेति ॥** यद्यपि बहुष्ववस्थितेष्वाद्यन्तशब्दौ प्रयुज्येते तथाप्यपूर्वानुत्तरत्वमात्रमेतयोः प्रवृत्तिनिमित्तम् । तच्चैकस्मिन्नप्यस्तीति नार्थः सूत्रेण ॥

( प्रत्याख्यानासंभवभाष्यम् )

**गोनर्दीयस्त्वाह—सत्यमेतत् 'सति त्वन्यस्मिन्' इति ॥**

**(प्रदीपः)** भाष्यकारस्त्वाह—**'सति त्वन्यस्मिन्निति ।'** न ह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः । तस्मादेकस्मिन्मुख्य आद्यन्तव्यपदेशो नास्तीति कर्तव्योऽयं योगः ॥

---

१ बहुप्रसवेति । नीलरूपवदितिवत्प्रयोगः ॥ छाया ॥

२ अनेत्येत्येति । तथाचेत्यादिः ॥ छाया ॥

३ चेन व्यपदेशिवदित्यस्य समुच्चयः ॥ अग्रे चेन तदन्यसमुच्चयः ॥ आद्यन्तवदिति । व्यपदेशीत्यस्याप्युपलक्षणम् ॥ छाया ॥

४ कैयटं दूषयति तदभ्युपेत्य—परेस्त्वित्यादिना ॥ छाया ॥

५ पूर्वक्रमविवक्षयाह—उपादानेति ॥

६ अतएव धात्ववयवत्वस्य सिद्धत्वादेव ॥ अत्र पक्षे भाष्यासंगतिं परिहरति—अत्राप्येत्यादिना ॥ छाया ॥

७ न्यूनतां परिहरसि—प्रथमेत्युपेति ॥ प्राग्वदाह—आद्यन्तेति ॥ एकप्रकारस्योक्तत्वादाह—प्रकारान्तरेणेति ॥ छाया ॥

८ वस्तुतः सोपि नेत्याह—वस्तुत इति । पतञ्जलिना योगानुशासने समाधिपादे 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इत्यसूत्रि । तस्य चार्थस्तु शब्दप्रयोगं तज्जन्यज्ञानं चानु पतति तज्जनको बाह्यवस्तुशून्यो वृत्तिविशेषो बाधाबाधकालाविशेषेण सदैव जायमानो विकल्पः—इत्येवं मञ्जूषायामुक्तः ॥ नेदं रजतमिति बाधज्ञानोत्तरमिदं रजतमिति शब्दप्रत्यययोरभावाद् विपर्यये नास्यान्तर्भावः ॥ भवति च चैत्रस्य गौरित्यादौ मुख्यव्यवहारे सर्वज्ञातस्य भेदनियतसंबन्धरूपस्य षष्ठ्यर्थस्य चितेरेव पुरुषत्वेनानुचितत्वेपि पुरुषस्य चैतन्यमित्यतो बोधः । भवति च खपुष्पशशशृङ्गादिपदेभ्योपि बोधः ॥ अभावस्याधिकरणरूपत्वेनाधाराधेयभावानुपपत्तावपि निष्क्रियः पुरुष इत्यादितो बोधः । तथा गतिनिवृत्तेरभावरूपत्वेपि भावरूपत्वस्य तत्रापि पूर्वापरीभावस्य च 'तिष्ठति बाणः स्थास्यति स्थितः' इत्यादितो बोधः ॥ दाधिमथाः ॥

९ सत्यमित्यादेः—एतत् त्वदुक्तं सत्यम्, तु परंतु सत्यन्यस्मिन्नित्यपि बोध्यम् । तथा च त्वदुक्तं तद्घटकं नतु तावन्मात्रम् । किं तु विशिष्टं प्रवृत्तिनिमित्तमिति भावः । तदाह—नह्येति ॥ छाया ॥

यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति । तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगोऽयमारब्धः ॥

(उद्योतः) गोनर्दीयपदं व्याचष्टे—भाष्यकार इति ॥ अनपेक्षितप्रतियोगिनोः अनपेक्षितपरपूर्वयोः ॥ आद्यन्तयोः आद्यन्तरूपार्थयोः ॥ प्रवृत्तिः । आद्यन्तशब्दप्रवृत्तिरित्यर्थः ॥ तथापीति । वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवात्र नास्तीत्यर्थः ॥

( सूत्रोदाहरणाधिकरणम् )

( प्रयोजनजिज्ञासाभाष्यम् )

**कानि पुनरस्य योगस्य प्रयोजनानि ?।**

( १८७ प्रयोजनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ आदिवत्त्वे प्रयोजनं प्रत्ययञ्नित्दाद्युदात्तत्वे ॥ * ॥

( भाष्यम् )

**प्रत्ययस्यादिरुदात्तो भवतीति । इहैव स्यात्—कर्तव्यं तैत्तिरीयः । औपगवः कापटवः इत्यत्र न स्यात् ॥**

(प्रदीपः) प्रत्ययञ्नित्दाद्युदात्तत्व इति । प्रत्ययस्याद्युदात्तत्वं ञ्नितीति चाद्युदात्तत्वमित्यर्थः ॥ कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः । उच्यते—प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययोऽपि विषय इति प्रत्ययेऽपि तदुच्यते । यद्वा ञ्नितीति यदाद्युदात्तत्वं तद् ञ्नितोऽपि संबन्धि भवतीति नास्ति भिन्नविभक्तित्वम् ॥ ऋदोरबित्याद्युदात्तत्वनिवृत्त्यर्थात्पित्त्वाल्लिङ्गादेकाचोपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेदकारविषयमेव लिङ्गं स्यादितीकारोकारयोः प्रत्ययाद्युदात्तत्वं न स्यात् । विशेषणार्थं वा पित्करणं स्यात् थाथादिसूत्रे इत्यज्ञापकं स्यात् ॥

(उद्योतः) कथमिति । भिन्नविभक्त्यन्तयोरसमप्रधानत्वेन साहित्याप्रतीतेरित्यर्थः ॥ इकारोकारयोरिति ॥ उपाधिः चिकीर्षुरित्यादौ ॥ सामान्यापेक्षज्ञापकत्वेप्याह—विशेषणार्थं चेति ॥

**"ञ्नित्यादिर्नित्यम्" इति इहैव स्याद्—अहिचुम्बकायनिः आग्निवेश्यः । गार्ग्यः कृतिरित्यत्र न स्यात् ॥**

(प्रदीपः) गार्ग्य इति ॥ अत्र परत्वाद्यस्येति लोपे कृत आदित्वाभावात्प्रकृतेराद्युदात्तत्वं न प्राप्नोति । स्वरविधौ स्थानिवद्भावप्रतिषेधाच्च नास्ति यच्त्वम् । स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वान्नास्ति हलपेक्षमप्यादित्वम् ॥ कृतिरिति । क्तिनो नित्त्वं तादौ च निति कृत्यताविलेवमर्थं स्यात् । सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतदनाश्रित्यैतदुक्तम् ॥

(उद्योतः) अहिचुम्बकात्प्राचामवृद्धादिति फिन् । अग्निवेशाद्गर्गादियञ् ॥ स्वरविधाविति ॥ नन्वस्य स्वरोद्देश्यके विधाविल्यर्थो वा हलः स्वरप्राप्ताविल्यर्थो वा । उभयथापि नेह प्राप्तिरिति चेत् ॥ सत्यम्, अत्र सूत्रेऽजन्तरापेक्षमेवादित्वं गृह्यते । अन्त्यस्याच एव तद्यावर्त्यत्वेनोपस्थितत्वादिति भाष्याशयात् । किं च सूत्रेण मित्यादावाद्युदात्तत्वं न स्यादिति दोषः । भित्त्वं तु वृद्ध्यर्थतया सावकाशं बोध्यम् ॥ क्तिन इति । अनेकाज्भ्यस्तु चिरिजिर्यादिभ्योऽनभिधानात् क्तिन्नभाव इति भावः ॥ ननु तदन्तसप्तमीत्वे गार्ग्यादौ समुदाये मुख्य एवादिः संभवतीति न दोष इत्यत आह—सौवर्य इति ॥

( १८८ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ वलादेरार्धधातुकस्येट् ॥ * ॥

( भाष्यम् )

**वलादेरार्धधातुकस्येट्प्रयोजनम् ॥ "आर्धधातुकस्येड्वलादेः" इतीहैव स्यात् करिष्यति हरिष्यति । 'जोषिषद् (ऋ० २।३५।१)' मन्दिषदित्यत्र न स्यात् ॥**

(प्रदीपः) जोषिषदिति । लिङर्थे लेट् । इट इटीति च ज्ञापकं सिब्विषयमेव स्यादिति सिप इण्न स्यात् ॥

(उद्योतः) लेडिति । सिब्बहुलं लेटीति सिप् ॥ इट ईटीति । न च यमरमनमातामित्यत्र वलादेरित्यस्य संबन्धे फलाभावात्कथमेतज्ज्ञापकम् । रुदादिभ्य इति सूत्रे वलादेरित्यस्य संबन्धसत्त्वेन मध्येपि संबन्धस्यैव न्याय्यत्वात् । अत एव सप्तमे (३७२१) सूत्रे भाष्ये—"एकाचस्तौ वलीति वा" इत्युक्तम् ॥

( १८९ प्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ यस्मिन्विधिस्तदादित्वे ॥ * ॥

( भाष्यम् )

**यस्मिन्विधिस्तदादित्वे प्रयोजनम् । वक्ष्यति—'यस्मिन्विधिस्तदादावल्ग्रहणे' इति । तस्मिन् क्रियमाणे "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ"**

---

१ भ्रान्तिपदसूचितमाह—वस्तुत इति ॥ अनेन सूत्रानावश्यकत्वमेवोक्तम् ॥ छाया ॥

२ उच्यते इति । एवमभिन्नविभक्त्यन्तप्रदर्शनार्थमेव तथोक्तं भाष्ये । अन्यथा षष्ठ्युपादानमयुक्तं स्यात् ॥ छाया ॥

३ लिङ्गादिति । बहुषु लिङ्गेन सूत्रनिराकरणस्य दृष्टत्वात् । तस्य तन्निवृत्त्यर्थत्वं तु सिद्धान्तरीत्या ॥ छाया ॥

४ सूत्र इति पूर्वान्वयि । विशेषणार्थत्वेऽपीत्संज्ञा भवत्येव तत्त्वस्य तत्राप्रतिबन्धकत्वात् ॥ छाया ॥

५ भिन्नेति । व्याख्यानभाष्यात्तथाप्रतीतेरिति भावः ॥ छाया ॥

६ समकक्षत्वसूचनाय वाक्यम् ॥ छाया ॥

७ भाष्यानुपपत्तिं परिहरति—अनेकाज्भ्य इति ॥ छाया ॥

८ सिब्विषयमिति । एतेनेदमयुक्तं ज्ञापकेन सूत्रप्रत्याख्यानानौचित्यादित्यपास्तम् । बहुशो दृष्टत्वात् ॥ छाया ॥

९ Bengal Asiatic Society. मुद्रितपुस्तकेपि 'वलीति च' इति पाठस्तु भाष्यानवलोकनमूलकः । 'अथवा वलीति तत्रानुवर्तते' इति हि तत्रत्यं भाष्यम् ॥ दाधिमथाः ॥

१० क्रियमाणे आश्रीयमाणे ॥ छाया ॥

इहैव स्यात् श्रियः भ्रुवः, श्रियौ भ्रुवौ इत्यत्र न स्यात् ॥

(प्रदीपः) यस्मिन्विधिरिति । स्वस्य च रूपस्येति नानुवर्तते इति प्रयोजनत्वेनोपन्यासः ॥

( १९० प्रयोजनवार्तिकम् ॥ १० ॥ )

**॥ * ॥ अजाद्याट्त्वे ॥ * ॥**

( भाष्यम् )

**अजाद्याट्त्वे प्रयोजनम् । "आडजादीनाम्" इहैव स्याद्—ऐक्षिष्ट । ऐहिष्ट । ऐष्ट अध्यैष्टेत्यत्र न स्यात् ॥**

(प्रदीपः) अजाद्याट्त्वे इति । सूत्रपाठापेक्षया प्रयोजनोपन्यासः । वार्तिककारस्तु 'अजादीनामटा सिद्धम्–' इत्याह ॥

( अन्तवत्त्वप्रयोजननिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**अथान्तवत्त्वे कानि प्रयोजनानि ? ॥**

( १९१ प्रयोजनवार्तिकम् ॥ ११ ॥ )

**॥ * ॥अन्तवद्[1] द्विवचनान्त-प्रगृह्यत्वे ॥ * ॥**

( भाष्यम् )

**अन्तवद् द्विवचनान्तप्रगृह्यत्वे प्रयोजनम्॥ "ईदूदेद् द्विवचनं प्रगृह्यम्" इहैव स्यात्-पचेते इति पचेथे इति। खट्वे इति माले इतीत्यत्र न स्यात् ॥**

(प्रदीपः) अन्तवदिति । *येन विधिस्तदन्तत्वे* इत्यनेनैव गतार्थे प्रपञ्चार्थोऽयमुपन्यासः ॥

(उद्योतः) येनविधिरिति । तेनैव[2] हीदूदेद्द्विवचनमित्यत्र तदन्तविधिरिति भावः ॥

( १९२ प्रयोजनवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ मिदचोऽन्त्यात्परः ॥ * ॥**

( भाष्यम् )

**"मिदचोऽन्त्यात्परः" प्रयोजनम् । ["[3]नपुंसकस्य झलचः"] इहैव स्यात्—कुण्डानि वनानि । तानि यानीत्यत्र न स्यात् ॥**

( १९३ प्रयोजनवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ अचोऽन्त्यादि टि ॥ * ॥**

( भाष्यम् )

**"अचोन्त्यादि टि" प्रयोजनम् । "टित आत्मनेपदानां टेरे" इहैव स्यात्—कुर्वाते कुर्वाथे । कुरुते कुर्वे इत्यत्र न स्यात् ॥**

(प्रदीपः) कुरुत इति । अर्थवतो[4] व्यपदेशिवद्भावात् तशब्दाकारस्यानर्थकत्वादिह प्रयोजनत्वेनोपन्यासः ॥

(उद्योतः) अर्थवतेति । तत्र ह्यर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः ॥ इदं चिन्त्यम् । 'यद्यपि व्यपदेशिवद्भावेन सिध्यति, तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तं प्रति सूत्रारम्भः' इति पूर्वग्रन्थविरोधात्सूत्रकारेण तदज्ञानात् तदुदाहरणसंभवाच्च । अर्थव[5]तेति चासहायत्वस्यैवोपलक्षणम्, ससहायस्य प्रायेणानर्थकत्वात् । तशब्दाकारश्चासहाय एव । येन सहायेनाचामन्तत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाभावात् । अन्यथाऽऽद्यन्तवद्भावोपि न स्याद् विजातीयकन्यादिसहायसत्त्वेप्येकपुत्रस्यायमेव ज्येष्ठ इत्यादिव्यवहाराद् ईदृशस्थलेपि लोकसिद्धत्वमित्याहुः ॥

( १९४ प्रयोजनवार्तिकम् ॥ १४ ॥ )

**॥ * ॥ अलोऽन्त्यस्य ॥ * ॥**

( भाष्यम् )

**"अलोऽन्त्यस्य" प्रयोजनम् ॥ "अतो दीर्घो यञि सुपि च" इहैव स्यात्—पटाभ्यां घटाभ्यामिति । आभ्यामित्यत्र न स्यात् ॥**

(प्रदीपः) आभ्यामिति । अत्र द्वे अन्तवत्त्वे उपयुज्येते अकारान्तस्याङ्गस्य अलोऽन्त्यस्य दीर्घत्वं भवतीति पृथक् प्रयोजनत्वेनोपन्यासः ॥

( १९५ प्रयोजनवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ येन विधिस्तदन्तत्वे ॥ * ॥**

( भाष्यम् )

**येन विधिस्तदन्तत्वे प्रयोजनम् । "अचो यद्" इहैव स्यात्—चेयम् जेयम् । पयमध्येयमित्यत्र न स्यात् । "आद्यन्तवदेकस्मिन्" कार्यं भवतीत्यत्रापि सिद्धं भवति ॥ आद्यन्तवदेकस्मिन् ॥ २० ॥**

---

१ अन्तवत् तत्र तस्य प्रयोजनमित्यर्थः ॥ द्विवचनान्तेति । एकदेश्युक्तमताश्रयकोयं निर्देशः । यद्वा द्विवचनप्रगृह्यत्वे इत्येव पाठः ॥ यद्वा अन्तस्येदाद्यन्तस्य द्विवचनस्य प्रगृह्यत्वे इत्यर्थः ॥ छाया ॥

२ तेनैव हीति । स्वस्य चेत्येतदनाश्रित्येदम् ॥ छाया ॥

३ कोष्ठकान्तर्गतपाठो न क्वाप्युपलभ्यते ॥

४ 'अर्थवता व्यपदेशिवद्भावः' इति तावन्नेयं परिभाषा तस्या विध्यङ्गत्वात् । व्यपदेशिवद्भावस्तु लौकिक इत्युक्ततया तं प्रत्यङ्गत्वायोगात् । किंतु शास्त्रे व्यपदेशिवद्भावयोजनाय शब्दार्थसमुदायमाश्रित्य तस्यैकदेशः शब्द इति व्युत्पादयितुमर्थवत्तापेक्षितेति परं तस्याशयः । अत एव षष्ठे 'निजौ चत्वार एकाच' इत्येतद्व्युत्पादनावसरे भाष्यकैयटयोरनर्थकेनापि व्यपदेशिवद्भावः स्वीकृतः । लोक इव शास्त्रेप्यनर्थकस्य व्यपदेशिवद्भावसंभवात् । तस्मादर्थवतेति प्रायोवादमात्रम् । सूत्रप्रत्याख्यानं तु सम्यगेवेति दिक् ॥ श० कौ० ॥

५ तथासति भाष्यं योजयन्यथाश्रुतेऽतिप्रसङ्गात्कैयटमपि योजयति—अर्थवतेति चेति ॥ तत्र बीजमाह—ससहेति ॥ अव्यभिचारायाह—प्रायेणेति ॥ नन्वेवमप्यत्र हल्सहाय एवात आह—तशब्देति ॥ असहायत्वं च सजातीयसहायाभावकृतमेव लोके तस्य तथैव लाभादित्याह—येनेति ॥ आहुरित्यरुचिबीजं तु वस्तुत इत्यादिनाऽनुपदमेव दर्शितम् ॥ छाया ॥

(प्रदीपः) एयमिति । ईङो रूपम् । इणस्तु इत्यमिति भवति ॥ २० ॥

(उद्द्योतः) इत्यमिति । एतिस्तुशास्विति क्यपो विधानादित्यर्थः ॥ २० ॥

( १९ घसंज्ञासूत्रम् ॥ १ । १ । ५ आ. १० ॥ )

## तरप्तमपौ घः ॥ १ । १ । २१ ॥

( प्रकरणोत्कर्षप्रयोजनाधिकरणम् )

(प्रदीपः) तरप्तमपौ ॥ २१ ॥ आतिशायनिकप्रत्ययप्रकरण एव 'तादी घः' 'पितौ घः' इति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं—स्वार्थेऽपि तरबस्तीति सूचनार्थम् । तेनाल्पाच्तरमिति सिद्धं भवतीत्याहुः ॥

(उद्द्योतः) तरप्त ॥ २१ ॥ प्रकरणोत्कर्षेणेति । प्रकरणे संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः ॥ स्वार्थे इति । अनातिशायनिकस्यापि संज्ञाविधानार्थमत्र सूत्रम् । स चानिर्दिष्टार्थत्वात्स्वार्थे । तस्य संज्ञाफलं चोच्चैरेवोच्चैस्तरामित्यादौ किमेत्तिङव्ययघादित्याम्सिद्धिरिति भावः ॥ इत्याहुरिति । अत्रारुचिबीजं तु भाष्यानुक्तिः ॥

( अनिष्टनिवारणाधिकरणम् )

( १९६ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ घसंज्ञायां नदीतरे प्रतिषेधः ॥ * ॥

( भाष्यम् )

**घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः । नद्यास्तरो नदीतरः ।**

(प्रदीपः) नदीतर इति । तरतेर्ऋदोरबित्यप् । सर्वत्र चानुबन्धाः स्मर्यमाणा एव कार्यं प्रति हेतुत्वं लभन्त इति घसंज्ञाप्राप्तिः । साहचर्यं चेह व्यवस्थाहेतुः सर्वत्र नाश्रीयते । तथाहि द्वित्रिश्चतुरिति कृत्वोर्थ इति कृत्वोर्थग्रहणं चतुश्शब्दविशेषणार्थं कृतम् । अन्यथा द्वित्रिश्शब्दसाहचर्याच्चतुश्शब्दोऽपि कृत्वोर्थ एव ग्रहीष्यत इति किं कृत्वोर्थग्रहणेन ॥

(उद्द्योतः) ननु नायं तरबित्यत आह—सर्वत्रेति ॥ ननु तमप्साहचर्यात्तद्धित एव तरो ग्रहीष्यते इति नास्त्यवन्ते तरे प्रसक्तिरत आह—साहचर्यमिति । प्रत्ययाप्रत्यययोरिति परिभापापि नाश्रितेति बोध्यम् ॥ इह । शास्त्रे ॥

( १९७ समाधानवार्तिकप्रथमखण्डम् ॥ २ ॥ )

## ॥ * ॥ घसंज्ञायां नदीतरेऽप्रतिषेधः ॥ * ॥

( भाष्यम् )

**घसंज्ञायां नदीतरेऽप्रतिषेधः अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥**

(प्रदीपः) अप्रतिषेध इति । न प्रतिषेध इति प्रतिषेधनक्रिया नञा निषिध्यते । भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—अनर्थकः प्रतिषेध इति ॥

(उद्द्योतः) वस्त्वर्थमिति । तात्पर्यार्थमित्यर्थः । असंदेह इतिवत् प्रतिषेधस्याभाव इत्यर्थको नञ्समासः ॥ एवं चानर्थक इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमिति भावः ॥

( भाष्यम् )

**घसंज्ञा कस्मान्न भवति ? ।**

( १९७ समाधानहेतुवार्तिकद्वितीयखण्डम् ॥ २ ॥ )

## ॥ * ॥ तरब्ग्रहणं ह्यौपदेशिकम् ॥ * ॥

( भाष्यम् )

**औपदेशिकस्य तरपो ग्रहणम् । न चैष उपदेशे तरप्शब्दः ॥**

(प्रदीपः) औपदेशिकमिति । उपदेशः प्रयोजनमस्य । तत्र वा भवमौपदेशिकम् ॥

(उद्द्योतः) तरप्ग्रहणं तरप्शब्दः । औपदेशिकमुपदेशप्रयोजक इत्यर्थो भाष्यस्य । तदाह—उपदेशः प्रयोजनमिति । प्रयोजक इत्यर्थः । न चैष उपदेशे तरप्शब्द इति भाष्यस्वरसादाह—तत्र वा भव इति॥उपदेशे इति भाष्ये भव इति शेषः॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ॥**

( समाधानभाष्यम् )

**न हि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ? ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते—यत्रास्यैतद्रूपमिति । रूपनिग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च**

---

१ केचित्तु सामान्यापेक्षं ज्ञापकमाश्रित्येयसुनोपि स्वार्थिकतामाहुः । तेन 'अहो महीयस्तव साहसिक्यम्' इत्यादि प्रयोगाः समर्थिता भवन्ति ॥ श. कौ॥

२ यथाश्रुतार्थसंगत्यसंभवादाह—प्रकरणे इति ॥ भाष्यानुक्तिरिति । अल्पाच्तरमित्यादयस्तु सौत्रा इति भावः ॥ छाया ॥

३ तथाहीति वक्ष्यमाणश्लोपो न पृथक् ॥ सर्वत्र तदनाश्रयणे हीति तदर्थः ॥ छाया ॥

४ साहचर्यमितीति । प्रकारान्तरेण समाधत्तेर्वक्ष्यमाणत्वादनित्यत्वेपि पाक्षिकाश्रयणं न कृतम् ॥ छाया ॥

५ कैयटानुरोधेनैवाह—प्रत्ययेति ॥ सिद्धान्ते तु नास्या लक्ष्यसंस्कारकत्वमित्यन्यत्र स्पष्टम् ॥ छाया ॥

६ पूर्वपक्षवार्तिकमेवाकारप्रश्लेषेण सिद्धान्तपरतया व्याचष्टे—घेति ॥ तर इति इत्यनेनेति शेषः ॥ छाया ॥ वस्तुतस्तु घुसंज्ञासूत्रभाष्ये 'समानशब्दप्रतिषेधः' इत्याक्षेपवार्तिकस्य 'समानशब्दाप्रतिषेधः—' इति समाधानवार्तिकमिव 'निष्ठासंज्ञायां समानशब्दप्रतिषेधः' इत्याक्षेपवार्तिकस्य 'भिष्ठासंज्ञायां समानशब्दाप्रतिषेधः' इति समाधानवार्तिकमिव चात्रापि समाधानवार्तिकं पृथगेव ॥ दाधिमथाः ॥

७ तात्पर्येति । अत एवात्र भाष्ये वक्तव्य इति नोक्तम् (?) ॥ छाया ॥

८ घस्त्वर्थे ॥

**लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ॥**

**कोऽसौ ? ।**

**उपदेशो नाम । न चैष उपदेशे तरप्शब्दः ॥**

**(प्रदीपः) यत्रास्येति ।** अनुबन्धयुक्तमित्यर्थः ॥ **न चैष इति ।** काल्पनिकमस्य तरप्त्वं न तु साक्षान्निर्दिष्टम् ॥

**(उद्द्योतः) सर्वेष्वेव सानुबन्धकग्रहणेष्विति** भाष्यं प्रकृताभिप्रायं शब्दमात्रग्रहणेऽपि स्वं रूपमित्यनेन रूपाश्रयणादिति बोध्यम् ॥ **यत्रास्येति ।** यत्रास्यैतद्रूपं तत्र घसंज्ञेत्यर्थः ॥ एवं चोपदेश एव घसंज्ञा । प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम् ॥ **काल्पनिकमिति ।** ऋदोरबितिसूत्रपर्यालोचनावगतत्वेनानुमानिकमित्यर्थः ॥

**( घसंज्ञाभ्युपगमेऽपि दोषाभावप्रदर्शकभाष्यम् )**

**अथ वाऽस्त्वस्य घसंज्ञा को दोषः ? ।**

**( दोषदर्शनभाष्यम् )**

**घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥**

**( समाधानभाष्यम् )**

**समानाधिकरणेषु घादिष्वित्येवं तत् ॥**

**(प्रदीपः) समानाधिकरणेष्विति ।** आतिशायनिकश्च स्वार्थिकत्वात् समानाधिकरणः ॥

**(उद्द्योतः) स्वार्थिकत्वात् ।** प्रकृत्यभिहितद्योतकत्वात् ॥ **समानाधिकरणः ।** प्रकृत्या समानविषय इत्यर्थः । सामानाधिकरण्यं चैकविशेष्यकबोधजनकत्वमिति बोध्यम् ॥

**( आक्षेपभाष्यम् )**

**यदा तर्हि सैव नदी, स एव तरस्तदा प्राप्नोति ॥**

**(प्रदीपः) यदा तर्हीति ।** ननु तीर्णिरिति भवितव्यम्, एवं तर्हि तीर्यत इति तर इति सामान्येन पदं संस्क्रियते, पश्चान्नद्या विशेष्यते इति न दोषः ॥

**(उद्द्योतः) ननु तीर्णिरिति ।** ऋतः परस्य क्तिनो निष्ठावद्वचनान्नत्वम् ॥ **सामान्येनेति ।** अनिर्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्वम्[२] । घञजपः पुंसीत्युक्तेः ॥

**( समाधानभाष्यम् )**

**स्त्रीलिङ्गेषु घादिष्वित्येवं तत् ॥ अवश्यं चैतदेवं विज्ञेयम् । समानाधिकरणेषु घादिष्वित्युच्यमाने[३] इह प्रसज्येत—महिषी रूपमिव, ब्राह्मणी रूपमिवेति ॥ तरसमपौ घः ॥ २१ ॥**

**(प्रदीपः) स्त्रीलिङ्गेष्विति ।** स्वार्थिकश्च प्रकृतिलिङ्गानुविधानात् स्त्रीलिङ्गः ॥ **महीषीरूपमिवेति ।** इवशब्दो भिन्नक्रमः । तेनायमर्थः—महिषी इवेयमाकृतिरिति । तत्र सुप्सुपेति समासे कृते ह्रस्वत्वं स्यात् ॥ २१ ॥

**(उद्द्योतः) महिषीरूपमिवेति ।** नन्विदमसमस्तं समस्तं वा । नाद्यः । उत्तरपदाधिकाराद्रूपशब्दस्य चातथात्वादप्राप्तेः । किं च रूपशब्देनाकृत्यभिधानात्कस्याकृतिरिव महिषीति साकाङ्क्षं स्यात् । नान्त्यः । षष्ठीतत्पुरुषे वैयधिकरण्याद्घस्याप्राप्तेः । विशेषणसमासे तु पूर्वनिपातवैपरीत्यापत्तिः तस्मादुपमागर्भसमासस्य विग्रहवाक्यमिदम् । स च समासो नोपमानानि सामान्यवचनैरित्यनेन रूपशब्दस्योपमेयवाचकत्वेऽपि साधारणधर्मावाचकत्वात् । साधारणधर्मो ह्यत्र विसंष्ठुलत्वादिः । नाप्युपमितं व्याघ्रादिभिरिति, रूपशब्दस्योपमेयवाचित्वेन पूर्वनिपातवैपरीत्यापत्तेः तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वाद्वृत्तिर्न स्यादत आह—इवशब्द इति । सप्सुपेति च ॥ **ह्रस्वत्वं स्यादिति ।** अप्रत्ययोरपि घत्वे तत्साहचर्याद्रूपादेरप्रत्ययस्यापि ग्रहणं स्यादिति भावः ॥ यद्यपि रूपमित्युक्ते कस्य रूपमिति अस्त्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥ २१ ॥

**( २० संख्यासंज्ञासूत्रम् ॥ १ । १ । ५ आ. ११ ॥ )**

## बहुगणवतुडति संख्या ॥ १ । १ । २२॥

**( लोकप्रसिद्धसंख्यावाचिनां संख्यात्वसाधनाधिकरणम् )**

**( १९८ आक्षेपवार्तिकप्रथमखण्डम् ॥ १ ॥ )**

### ॥ * ॥ संख्यासंज्ञायां संख्याग्रहणं [ संख्यासंप्रत्ययार्थम्[४] ] ॥ * ॥

**( भाष्यम् )**

**संख्यासंज्ञायां संख्याग्रहणं कर्तव्यम् । बहुगणवतुडतयः संख्यासंज्ञा भवन्ति, संख्या च संख्यासंज्ञा भवतीति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**"संख्यासंप्रत्ययार्थम्" । एकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्येत्येष संप्रत्ययो यथा स्यात् ॥**

**(प्रदीपः) बहुगणवतुडति ॥ २२ ॥ संख्यासंप्रत्ययार्थमिति ।** संख्याया एकादिकायाः संख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः ॥

**(उद्द्योतः) बहुगण ॥ २२ ॥** संख्यात्वेन संप्रत्ययस्य लोकत एव सिद्धेराह **एकादिकाया इति । संख्यासंप्रत्ययेति** वार्तिके सङ्ख्येति[५] संप्रत्यय इत्यर्थः । एकादिकायाः सङ्ख्यायाः

१ अतस्त्वादाह—प्रकृत्यमीति ॥ वस्तुतस्तत्वादाह—प्रकृत्येति ॥ तदुक्तिं योजयति—सामेति ॥ पदनिवेशो नेति भावः ॥ छाया ॥

२ पुंस्त्वमिति ॥ इदं च प्रायिकमिति नेकोगुणेतिसूत्रस्थग्रन्थविरोधः ॥ राजदन्तादिर्माष्यस्वारस्यात् ॥ छाया ॥

३ इत्युच्यमान इति । एतावन्मात्र उच्यमान इत्यर्थः ॥ छाया ॥

४ अस्य प्रयोजनप्रदर्शकस्यांशस्यैतस्मिन्वार्तिके पाठः क्वचिदेवोपलभ्यते न सर्वत्र । अत एव नागेशेनोद्द्योते—'संख्यासंप्रत्ययेतिवार्तिके' इत्युक्तम् । प्रयोजनप्रदर्शनपाठे उभयथैवाचार्यस्य शैली दृश्यते—'*अकारस्य विवृतोपदेश आकारग्रहणार्थः*॥' *'संज्ञोपसर्जनप्रतिषेधः* *सर्वाद्यानन्तर्यकार्यार्थम्*' इति । दाधिमथाः ॥

५ संख्येतीति । अतएवाग्रे 'संख्येति प्रतीता' इति भगवतोक्तम् ॥ अन्यस्य वार्तिकतोऽलाभादाह—एकादीति ॥ एवं सति भाष्यासंगतिं परिहरति—संख्येत्येष इतीति ॥ छाया ॥

सङ्ख्याप्रदेशेष्विति शेषपूरणं बोध्यम् ॥ सङ्ख्येत्येष इति भाष्यस्य सङ्ख्येत्येतच्छब्दाभिन्न इत्यर्थः ॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्संकर' इति पातञ्जलसूत्रात्[1] । एतच्च पातञ्जलसूत्रवृत्तावुपपादितमस्माभिः । नारद[2] इत्यबोधि इत्यादावप्येवमेव । एवंच कर्मत्वाप्रसक्तिरेव ॥ सङ्ख्याशब्दजन्य इत्यर्थे सङ्ख्येत्याकारक इत्यर्थे च एषशब्दान्वयानुपपत्तिस्तदुपादानवैयर्थ्यं चेति बोध्यम् ॥

( आक्षेपबाधकभाष्यम् )

**ननु चैकादिका संख्या लोके संख्येति प्रतीता । तेनास्याः संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति ॥**

(प्रदीपः) **नन्विति** । यथा पैशुरपत्यं[3] देवतेति लौकिकोऽर्थो गृह्यते, तथैकादिकापि संख्या ग्रहीष्यत इत्यर्थः ॥

(उद्द्योतः) **सङ्ख्याग्रहीष्यत इति** । सूत्रं त्वधिकसंग्रहार्थमिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**एवमपि कर्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

( १९८ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

**॥ * ॥ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके ॥ * ॥**

( भाष्यम् )

**अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष संप्रत्ययो न स्यात् ॥**

**किं कारणम् ? ।**

**अकृत्रिमत्वात् ॥ बह्वादीनां कृत्रिमा संज्ञा । "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति"॥ यथा लोके ॥ तद्यथा लोके—'गोपालकमानय' 'कटजकमानय' इति यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जातः॥**

(प्रदीपः) **कृत्रिमाकृत्रिमयोरिति** । न्यायोयम् । तथाहि सर्वार्थाभिधानशक्तियुक्तः[4] शब्दो यदा विशिष्टेर्थे संव्यवहाराय नियम्यते, तदा तत्रैव प्रतीतिं जनयति नान्यत्र ॥

(उद्द्योतः) **न्यायोऽयमिति** । अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः ॥ **नियम्यते इति** । सर्वार्थबोधकत्वेऽपि[5] लोके तत्रैव गृहीतशक्तिकतयाऽन्यत्र शक्त्यग्रहेण च अधिकसंग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चास्य नियमत्वं चिन्त्यम् । न्यायबीजं तु प्रकरणमिति भाष्ये एव स्फुटीभविष्यति ॥

( आक्षेपभाष्यम् )

**यदि तर्हि कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति, "नदीपौर्णमास्याग्रहायणीभ्यः" इत्यत्रापि प्रसज्येत ॥**

(प्रदीपः) **नदीपौर्णमासीति** । यू स्त्र्याख्यौ नदीति संज्ञाविधानात् संज्ञिनो[6] ग्रहणं प्राप्तं न तु स्वरूपस्याशब्दसंज्ञेति निषेधात् ॥

( समाधानभाष्यम् )

**पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति॥**

(प्रदीपः) **पौर्णमासीति** । नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां स्यादिति चेत् । एवमपि—**'ऊपौर्णमास्याग्रहायणीभ्यः'** इति वक्तव्यं स्याद् । ऊकारग्रहणेन च नदीसंज्ञकमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहचर्याद् ग्रहीष्यते ॥

(उद्द्योतः) **नियमार्थमिति** । नियमश्च सामान्यविषय एव, न कालवाचिविषयो व्याख्यानादतो गौर्याद्यन्तेऽपि न दोषः ॥ नन्वनदीसंज्ञकेभ्योऽपि खलप्वादिभ्य ऊकारान्तेभ्यः स्यादत आह—ऊकारग्रहणेनेति । वस्तुतस्तु[7] दोषग्रस्तनियमापेक्षया नदीशब्देन कृत्रिमाकृत्रिमन्यायबाधज्ञापनमेव ज्यायः ॥

( आक्षेपभाष्यम् )

**तद्विशेषेभ्यस्तर्हि प्राप्नोति ।**

---

१ 'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्' इति विभूतिपादे पतञ्जलिसूत्रम् ॥ एतत्सूत्रभाष्ये भगवता व्यासेन—संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः—योयं शब्दः सोयमर्थः, योऽर्थः स शब्दः इत्येवमितरेतराध्यासरूपः संकेतो भवति । इत्येवमेते शब्दार्थप्रत्यया इतरेतराध्यासात्संकीर्णाः गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम् । य एषां प्रतिभागज्ञः स सर्ववित् ॥ इति भाषितम् ॥ अस्यायमाशयः—संकेतस्तु पदपदार्थयोः संकेतकर्तुराहार्येतरेतराभेदारोपरूपेतरेतराध्यासरूपः । अभेदारोपमानं तु विभागाभाव एव । त्रयाणामपि बुद्धिधर्मत्वेन परस्परमविभागात् । शब्देन बौद्धस्यैवार्थस्य प्रतीतेः । तत्रापि नाधुनिकसंकेतो विषयव्यवस्थापकः, तस्यानियतत्वात् । किं तु स्मृत्यात्मकः शक्तिग्राहकपाणिन्यादिस्मृत्यात्मकः । ज्ञानविषय एव वा, न स्वरूपसन्निति । न चेदृशाध्यासस्य संकेतत्वे मानाभाव इति वाच्यम् । 'वृद्धिरादैच्' इत्यादौ व्याकरणे 'ओमित्येकाक्षरं ब्रह्म' 'रामेति द्व्यक्षरं नाम' इत्यादिषु शास्त्रेषु 'विष्णुर्नारायणः कृष्णः' इत्यादिकोशेषु च 'योऽयं शब्दः सोऽर्थः योऽर्थः स शब्दः' इत्येवमितरेतराध्यासरूपस्यैव संकेतस्य दर्शनात् । ईदृशारोपस्यैवाश्रयणेन वैदिकाः मन्त्रार्थयोरभेदेनैवोपासनमाचरन्ति । मीमांसकाश्च मन्त्रमयीं देवतामाहुः । *इतीन्द्रवद्विषय* इति वार्तिके शब्दप्रादुर्भावेऽव्ययीभावं कृत्वा 'एक इन्द्रशब्दोऽनेकस्मिन्क्रतुशत आहूतो युगपत्सर्वत्र भवति' इति भाष्यकृता व्याख्यातम् ॥ क्वचित्तु भेदं परिकल्प्य 'अस्यार्थस्यायं वाचकः' इत्येवमपि संकेतः । यथा—'तस्य वाचकः प्रणवः' 'उञः प्रगृह्यम्' इति ॥ दाधि० ॥

२ प्रसङ्गादाह—नारद इतीति ॥ रत्नकृन्नारायणाद्युक्तिं खण्डयति—संख्येति ॥ छाया ॥

३ भाष्ये एकादिकेत्यर्थपरं नतु शब्दपरम् । तदाह—यथा पशुरिति ॥ छाया ॥

४ न्यायबीजमाह—सर्वार्थेति ॥ छाया ॥

५ प्रदीपं दूषयति—सर्वार्थेति ॥

६ अत्रापीति भाष्यार्थमाह—संज्ञिन इति ॥ छाया ॥

७ प्रदीपं दूषयति—वस्तुतस्त्विति ॥ विधिनियमेति न्यायोऽप्यनुगृहीतो भवतीत्याह—ज्याय इति ॥ छाया ॥

(प्रदीपः) तद्विशेषेभ्य इति । गङ्गादिभ्यः ॥

(उद्योतः) भाष्ये तद्विशेषेभ्यस्तर्हीति प्रासङ्गिकी शङ्का । तां व्याचष्टे—गङ्गादिभ्य इति । अपगङ्गं परियमुनमित्युदाहरणे । अत्र हि टचि अन्तोदात्तत्वम् । तदभावे परि[1]प्रत्युपापावर्ज्यमानाहोरात्रावयवेष्विति पूर्वपदप्रकृतिस्वरत्वमित्याहुः ॥

( समाधानभाष्यम् )

**एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति-'न तद्विशेषेभ्यो भवति' इति । यदयं विपाट्शब्दं शरत्प्रभृतिषु पठति ॥**

(प्रदीपः) यदयमिति । नित्यार्थः पाठः स्यादिति चेद्, व्यवस्थितविभाषया विपाट्शब्दस्य नित्यष्टज् भविष्यतीत्यदोषः ॥

(उद्योतः) नित्यार्थ इति । नदीपौर्णमासीत्यत्रान्यतरस्यांग्रहणानुवृत्तेरिति भावः ॥ व्यवस्थितेति । अत्र च ज्ञापकपरमिदमेव भाष्यं मानम् । केचिदे[2]साद्भाष्यान्नदीति सूत्रेऽन्यतरस्यांग्रहणं निवर्तयन्ति ॥

( आक्षेपभाष्यम् )

**इह तर्हि प्राप्नोति—"नदीभिश्च" इति ॥**

( समाधानभाष्यम् )

**बहुवचननिर्देशान्न भविष्यति ॥**

(प्रदीपः) बहुवचनेति । अन्यथाणद्या इत्यादौ यथैकवचनेन निर्देशस्तथेहापि कर्तव्यः स्यात् ॥

( आक्षेपभाष्यम् )

**स्वरूपविधिस्तर्हि प्राप्नोति ॥**

( समाधानभाष्यम् )

**बहुवचननिर्देशादेव न भविष्यति ॥**

(उद्योतः) बहुवचननिर्देशादेवेति । त[3]स्मादपीत्यर्थः । अशब्दसंज्ञेति निषेधादित्यपि बोध्यम् । तत्प्रत्याख्याने त्वयमेव हेतुः । अतोऽस्मान्निषेधान्नदीपौर्णमासीत्यादौ स्वरूपग्रहणमपि दुर्लभमित्यपास्तम् । लक्ष्यानुसारेण तत्प्रत्याख्यानेन सामर्थ्येन तस्यात्राप्रवृत्तेः । नदीभिश्चेत्यादौ तु लक्ष्यानुसारादेवार्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक् ॥

( उपसंहारभाष्यम् )

**एवं[4] च न चेदमकृतं भवति—"कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः" इति । न च कश्चिद्दोषो भवति ॥**

(प्रदीपः) न चेदमकृतमिति । अनाश्रितमित्यर्थः ॥

(उद्योतः) अस्य न्यायत्वादकृतमित्ययुक्तमत आह—अनाश्रितमिति ॥

( १९९ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उत्तरार्थं च ॥ * ॥**

( भाष्यम् )

**उत्तरार्थं च संख्याग्रहणं कर्तव्यम् । "ष्णान्ता षट्" । षकारनकारान्तायाः संख्यायाः षट्संज्ञा यथा स्यात् । इह मा भूत्—पामानो विप्रुष इति ॥**

(प्रदीपः) उत्तरार्थं चेति ॥ अयं हि सूत्रोपात्तः संख्याशब्दः स्वरूपपदार्थकः । उत्तरत्र संज्ञिनिर्देशेन प्रयोजनम् ॥

(उद्योतः) स्वरूपेति[5] । न चैवं बह्वादिसामानाधिकरण्यानुपपत्तिः । शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः ॥ संज्ञिनिर्देशेनेति । सं[6]ख्याशब्दबोध्यपञ्चादिशब्दपरेण संख्याशब्दनिर्देशेनेत्यर्थः ॥

( आक्षेपनिराकरणभाष्यम् )

**इ[7]हार्थेन तावन्नार्थः संख्याग्रहणेन ॥**

(प्रदीपः) इहार्थेनेति । इहार्थो यस्येति सामान्यविशेषभावान्न पौनरुक्त्यम् ॥

(उद्योतः) सामान्येति । अर्थशब्दोक्तसामान्यं प्रति इहार्थो यस्येत्यस्य विशेषत्वादित्यर्थः[8] ॥

( आक्षेपस्मारणभाष्यम् )

**न[9]नु चोक्तम्—*इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके * इति ? ॥**

( आक्षेपपरिहारभाष्यम् )

**नैष[10] दोषः । अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । अर्थो वाऽस्यैवंसंज्ञकेन भवति । प्रकृतं वा तत्र भवति—**

---

१ परिप्रेति । अतएव तथैवोदाहृतमिति ॥ [ अयं भावः—अपगङ्गमित्यादावुदाहृते 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः—इति ॥ ] आहुः भाष्यतत्त्वविदः ॥ छाया ॥

२ तासामन्यत्र परिगणितत्वादाह—केचिदिति ॥ एतेन तस्या लक्ष्यैकचक्षुष्कज्ञेयत्वम् । नासदादेः । वचनं विनाऽज्ञानेन तया ज्ञापनोपपादनमयुक्तमिति निरस्तम् ॥ छाया ॥ 'अनश्च' इत्यतः प्रागेव 'नदीपौर्णमासी—' इति सूत्रपाठसूचनमनेन भाष्येणेति ॥ दाधिमथाः ॥

३ एवोऽप्यर्थ इत्याह—तस्मादपीति । तत्समुच्चेयमाह—अशब्देति ॥ हेत्वन्तरमाह—लक्ष्येति ॥ अत्र मकान्ते 'नदीपौर्ण—' इत्यत्र ॥ तत्फलमाह—नदीभिरिति ॥ अत एव तत्सूत्रभाष्यविरोधो न तदाह—दिगिति ॥

४ एवं च सतीति शेषः । उपसंहारोऽयम् ॥

५ स्वरूपेति । तथा च तस्य नानुवृत्तिसंभव इति भावः ॥ कुतो नेत्याशङ्कायामाह—उत्तरत्रेति । यत्त इत्यादिः ॥ एतेनास्याग्रिमभाष्यानुवादत्वेपि प्रकृतभाष्यव्याख्यातृत्वाभावादिदमयुक्तमित्यपास्तम् ॥ छाया ॥

६ यथाश्रुतासंगतेराह—संख्याशब्देति ॥ छाया ॥

७ सिद्धान्ती समाधत्ते—इहार्थेनेति ॥

८ विशेषत्वादिति । एतेनोभयत्र सामान्यपरत्वस्यैव दर्शितत्वेन पौनरुक्त्यापरिहारादिदमयुक्तमित्यपास्तम् ॥ छाया ॥

९ तटस्थः पूर्वपक्षी वा शङ्कते—ननु चोक्तमिति ॥

१० सिद्धान्ती निराकरोति—नैष दोष इति ॥

**इदमेवंसंज्ञकेन कर्तव्यमिति । आतश्चार्थात् प्रकरणाद्वा । अङ्ग हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु—गोपालकमानय, कटजकमानयेति । उभयगतिस्तस्य भवति । साधीयो वा यष्टिहस्तं गमिष्यति ॥**

(प्रदीपः) **आतश्चेति** । इतश्चेत्यर्थः ॥ **अर्थः** सामर्थ्यम् । यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्याध्यापनासंभवात्संज्ञिनो ग्रहणम् ॥ **प्रकरणं** प्रस्तावो यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिर्गमनप्रकरणे त्वश्वे ॥ **ग्राम्यमिति** । ऊहितुमसमर्थम् ॥ **पांशुलपादमिति** । अचिरोषितम् ॥ अत एवाप्रकरणज्ञम् ॥ **उभयगतिरिति** । किं संज्ञेयं यस्य कस्यचिन्निर्दिष्टा स्यादुत यष्टिहस्तोऽस्य विवक्षितः स्यादिति संदेहवान् भवतीत्यर्थः ॥ **साधीयो वेति** । यो मम प्रसिद्धः सोऽनेन चोदितो न[1] च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते । [2]लोके च गोपालकशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति, क्रियानिमित्तं त्वर्थं न निरस्यति तुल्यजातीयविषय एव हि नियमो भवति ॥

(उद्द्योतः) भाष्ये **अर्थादित्यादि** । लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं किं त्वन्यदेवेति भावः ॥ **अर्थः** सामर्थ्यम् । तदेव दर्शयति—**अर्थोवास्येति** । अस्य वाक्यस्यार्थोऽध्यापनादि रूपं प्रयोजनमेवंसंज्ञकेन भवति तत्रास्यैव सामर्थ्यमित्यर्थः ॥ **प्रकृतं वेति** । इदमेवंसंज्ञकेन कर्तव्यमिति तत्र प्रयोजनं प्रकृतं बुद्धिस्थं भवति । संज्ञाया बुद्धिस्थत्वादित्यर्थः । इदमन्येपा[3]मपि पदार्थनियामकानामुपलक्षणम् ॥ यद्यपि **रूढियोगापहारि**णीत्यप्यत्र संभवति । तथापि **प्रकरणादिसहकृतो योगोऽपि** बलवानित्यभिप्रेत्येदमेवोक्तम् ॥ अन्वयमुक्त्वा व्यतिरेकेणाप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये **आतश्चेति** । **उभयगतिः** उभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशयेनाह—**किंसंज्ञेयमिति** । वक्तृ[4]तात्पर्यविषयसन्देहवानित्यर्थः ॥ ननु रूढेर्योगार्थापहारकत्वेन कथं संदेह इति चेन्न । तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगापहारत्वं नान्यस्येति भावात् । तदेव ध्वनयन्नाह—**साधीय इति** । क्रियाविशेषणमव्ययं वा सम्यगर्थकम् ॥ **यष्टिहस्तं गमिष्यति** । तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः ॥ ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रम इत्यत आह—**एवंमन्यते । लोके इति** । इ[5]दमपि स्वरीत्या ॥

(आक्षेपसाधकभाष्यम्)

**य[6]थैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति, एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति ॥**

(प्रदीपः) **एवमिहापीति** । बह्वादय एवात्र संख्यात्वेन प्रकृता इति भावः ॥

(उद्द्योतः) अत्र शास्त्रे । प्रकृताः बुद्धौ संनिहिताः ॥ अने[7]नात्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसंनिधिरेव प्रकरणम् ॥

(समाधानसाधकभाष्यम्)

**न[8] यथा लोके, तथा व्याकरणे । उभयगतिः पुनरिह भवति ॥**

(प्रदीपः) **न यथा लोक इति** । संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो, न त्वेकादिसंख्यानिरासायाधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य ॥

(उद्द्योतः) **संज्ञात्वेन विनियुक्त इति** । ज्ञा[9]पिताज्ञातशक्तिक इत्यर्थः । अत एव न नियमार्थतेत्याह—**तुल्येति** । तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाभावः सूचितः ॥ **इह** संख्याप्रदेशे अधिकार्थेत्यादिनान्वेति ॥ भाष्ये **न यथेत्यादि** । व्याख्यातृपरंपरावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थ इत्यन्ये ॥

(उभयगत्युदाहरणभाष्यम्)

**अन्यत्रापि, नावश्यमिहैव । तद्यथा "कर्तुरीप्सिततमं कर्म" इति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति—"कर्मणि द्वितीया" इति कृत्रिमस्य ग्रहणम्, "कर्तरि कर्मव्यतिहारे" इत्यत्राकृत्रिमस्य ॥**

(प्रदीपः) **कर्मणि द्वितीयेति** । ङ्याप्प्रातिपदिकादनभिहिते कर्मणि संख्यायां द्वितीया विधीयते । न च क्रियायाः संख्या संभवतीति सामर्थ्यात्कारकस्य ग्रहणम् । **कर्तरि कर्मव्यतिहार** इत्यत्र तु धातोः साक्षात् क्रियायां वृत्त्या क्रियाया एव ग्रहणम् ॥

(उद्द्योतः) **कर्मणि संख्यायामिति** । कर्मग[10]तसङ्ख्यायामित्यर्थः ॥ **नचेति** । तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति भावः ॥ य[11]द्यपि रूपबादिसूत्रस्थभाष्यादेकत्वं क्रियायामस्ति । त-

---

१ नच नहि ॥

२ 'लोके चेति' इत्येव पाठः कलिकातापुस्तके ॥ न तु 'एवं मन्यते' इत्यपि ॥

३ अन्येषां संयोगादीनाम् ॥ एतेन न्यूनता निरस्ता ॥ छाया ॥

४ वक्त्रिति ॥ इतीत्यादिः । तथा च विशिष्टार्थोयम् ॥ एतेनास्य भाष्यस्य तदर्थकत्वाभावादेकशब्दस्यान्यत्रार्थस्य निवेशानौचित्याच्चायुक्तमिदमित्यपास्तम् ॥ छाया ॥

५ मारवद्दूषयति—इदमपीति ॥ छाया ॥

६ पूर्वपक्षी आक्षिपति—यथैव तर्हीति ॥

७ अनेन 'प्रकृताः' इत्यनेन ॥ तदर्थमाह—बुद्धीति ॥ छाया ॥

८ सिद्धान्ती समाधत्ते—न यथेति ॥

९ सिद्धान्तरीत्याह—ज्ञापितेति ॥ प्रागुक्तासांगत्यदृढीकरणायाह—तुल्येति ॥ मात्रं कात्स्न्यें ॥ यथाश्रुतासंगतेराह—इहेत्यादि ॥ पक्षद्वयेपि कैयटासंगतेराह—भाष्ये नेति ॥ छाया ॥

१० प्रदीपस्य साधारण्येपि सिद्धान्तमतमाह—कर्मगतेति ॥ छाया ॥

११ भाष्यान्तरविरोधं परिहरति—यद्यपीति ॥ छाया ॥

थापि द्वित्वाद्यभाव इति तात्पर्यम् ॥ कारकम् । शक्तिमद्द्रव्यम्[1] ॥ साक्षात्क्रियायामित्यस्य क्रियायामेव[2] न तु कर्मकारके इत्यर्थः । अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्यात् । न हि धातोः परंपरयापि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याहुः[3] ॥

( उभयगत्युदाहरणभाष्यम् )

तथा "साधकतमं करणम्" इति कृत्रिमा करणसंज्ञा । करणप्रदेशेषु चोभयगतिर्भवति—"कर्तृकरणयोस्तृतीया" इति कृत्रिमस्य ग्रहणम्, "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यत्राकृत्रिमस्य॥

(प्रदीपः) कण्वमेघेभ्यः करण इति । तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते । क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति सामर्थ्यात् क्रियाग्रहणम् ॥

(उद्द्योतः) धातुसंज्ञा क्यङन्तस्य सनाद्यन्ता इत्यनेन ॥ साधने[4] कारके । तव्यादयोऽन्तः (?) कारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः ॥

( उभयगत्युदाहरणभाष्यम् )

तथा-"आधारोऽधिकरणम्" इति कृत्रिमा अधिकरणसंज्ञा ॥ अधिकरणप्रदेशेषु चोभयगतिर्भवति-"सप्तम्यधिकरणे च" इति कृत्रिमस्य ग्रहणम्, "विप्रतिषिद्धं चानधिकरणवाचि" इत्यत्राकृत्रिमस्य ॥

(प्रदीपः) विप्रतिषिद्धमिति । द्वन्द्वावयवानां शक्त्य[5]नभिधायित्वादधिकरणं द्रव्यं गृह्यते ॥

( समाधानान्तरभाष्यम् )

अथ वा-नेदं संज्ञाकरणम् । तद्वदतिदेशोऽयम्-बहुगणवतुडतयः संख्यावद्भवन्तीति ॥

(प्रदीपः) तद्वदतिदेशोऽयमिति । संख्याकार्या[6]तिदेशोऽयमित्यर्थः । यदि हि संज्ञा स्याद्घिघुभादिसंज्ञावदेकाक्षरा क्रियेत । तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति ॥

(उद्द्योतः) एवं सर्वसंज्ञाविषये समाधाय प्रकृतविषये समाधानान्तराण्याह—अथवेति[7] ॥

( आक्षेपभाष्यम् )

स तर्हि वतिनिर्देशः कर्तव्यः ॥

( समाधानभाष्यम् )

न कर्तव्यः ॥

( आक्षेपसाधकभाष्यम् )

न ह्यन्तरेण वतिमतिदेशो गम्यते ॥

( आक्षेपबाधकभाष्यम् )

अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा-"एष ब्रह्मदत्तः" अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते[8] मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यसंख्यां संख्येत्याह, संख्यावदिति गम्यते ॥

(उद्द्योतः) ब्रह्मदत्त इत्युक्तिविषयस्या[9]ब्रह्मदत्तत्वं स्फोरयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति—एष ब्रह्मदत्त इति ॥ असंख्यां संख्येत्याहेति । नियतविषयपरिच्छेदहेतुर्हि सङ्ख्या । एवंच बहुत्वादे[10]रसङ्ख्यात्वमिति भावः ॥ बहुत्वं हि त्र्यादिसङ्ख्याव्यापकमखण्डोपाधिरूपम् ॥

( समाधानान्तरभाष्यम् )

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु संप्रत्यय-इति । यदयं "संख्याया अतिशदन्तायाः कन्" इति तिशदन्तायाः प्रतिषेधं शास्ति ॥

कथं कृत्वा ज्ञापकम्? ॥

न हि कृत्रिमा त्यन्ता शदन्ता वा संख्याऽस्ति ॥

(प्रदीपः) अथवेति । गुरुसंज्ञाकरणादेकादयः संख्याशब्देन प्रदेशेषु न त्यज्यन्त इति लिङ्गेनाप्यनुमीयत इत्यर्थः ॥

(उद्द्योतः) गुर्विति । नन्व[11]तिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्येतेति चेन्न । शास्त्रबाधापेक्षया उभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः ॥

---

१ शक्तिग्रहे दोषतादवस्थ्यादाह—शक्तिमदिति ॥ छाया ॥

२ साक्षादर्थमाह—एवेति ॥ निपातानामनेकार्थत्वात् ॥ तद्व्यवच्छेद्यमाह—नत्विति ॥

३ आहुः प्राञ्चः ॥ वस्तुतश्चिन्त्यमेव तत् ।

४ वैपरीत्यशङ्कानिरासायाह—साधन इति ॥ तदर्थमाह—कारके इति ॥ च एवार्थ इत्याह—च एवेति ॥ छाया ॥

५ कारकेत्यादिः ॥

६ भाष्ये तद्वदिति षष्ठीतत्पुरुषः । तच्छब्देन संख्या एकादिका, मतुपा कार्यम् । तदाह—संख्याकार्येति ॥ प्राधान्यादिति भावः ॥ संभवादाह—यदि हीति । एतेन वृद्ध्यादौ तथा सत्त्वेप्यतिदेशादर्शनादिदं चिन्त्यमित्यपास्तम् । सतिसंभवे तथाङ्गीकारात् । अन्वर्थसंज्ञावदेतस्यापि तत्फलत्वस्य सुवचत्वाच्च ॥ व्याख्यानयुक्त्यपेक्षयाऽस्याः सुन्दरत्वाच्च ॥ छाया ॥

७ अथवेतीति । अथवेत्यादीत्यर्थः ॥ छाया ॥

८ त इति । विभक्तिप्रतिरूपकम् । वयमित्यर्थः ॥ तेनेति तु नूतनपाठः ॥

९ इत्युक्तिविषयस्येति । ब्रह्मदत्तत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयस्येत्यर्थः ॥ अब्रह्मदत्तत्वमिति । अतिदेशोदाहरणत्वसंपत्तय इत्यादिः ॥ ब्रह्मदत्तेति । ब्रह्मदत्तातिदेशाश्रयव्यक्तिमित्यर्थः ॥ निर्दिशतीति । विशेष्यत्वेन विवक्षितां सर्वनाम्नेत्यादिः ॥ अयं भावः—ब्रह्मदत्तभिन्ने तद्गतगुणसदृशगुणानालोक्य 'एष ब्रह्मदत्तः' इत्येवं प्रयुञ्जानोऽब्रह्मदत्तं ब्रह्मदत्त इत्याह । ततोऽस्य ब्रह्मदत्तसादृश्यमेवास्मिन्वाक्येऽभीप्सितम् । स्वतन्त्रामात्यमुद्दिश्य 'अयं राजा' इत्यत्रेव ॥ तथाच भाष्ये 'एष ब्रह्मदत्तः' इत्युत्तरम् 'इत्यत्र' इति शेषो बोध्यः ॥ दाधिमथाः ॥

१० बहुत्वादेरिति तत्त्वाभावात् ॥ छाया ॥ किंत्वतिदेशेन संख्याकार्यं क्रियते इति भावः ॥ दाधिमथाः ॥

११ नन्वत्र गुरुसंज्ञाकरणादित्यस्य नोपयोगोऽत आह—नन्वतीति ॥ औचित्यादिति । गुरुसंज्ञाकरणं चात्र बीजम् ॥ एतेनास्यार्थस्याथवामहतीति वक्ष्यमाणत्वादत्रानौचित्याज्ज्ञापकस्य गुरुसंज्ञासहायानपेक्षाणाच्चेदं चिन्त्यमित्यपास्तम् ॥ छाया ॥

( समाधानबाधकभाष्यम् )

**ननु चेयमस्ति डतिः ॥**

( समाधानसाधकभाष्यम् )

**यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति ॥**

( संपूर्णसूत्रज्ञापकताभ्युपगमभाष्यम् )

**यच्चापि त्यन्तायाः प्रतिषेधं शास्ति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्*-'डत्यर्थमेतत् स्यात्' इति ॥**

( समाधानभाष्यम् )

**"अर्थवद्ग्रहणे नानर्थकस्य" इति अर्थवतस्ति-शब्दस्य ग्रहणम् । न च डतेस्तिशब्दोऽर्थवान् ॥**

(प्रदीपः) **अर्थवत इति ।** ननूभयसंभव इयं परिभाषोपतिष्ठते । डत्यन्ता च कृत्रिमास्ति, डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकस्त्यन्तायाः प्रतिषेधः ॥ **नैष दोषः, अतिशदन्ताया** इत्युच्चारणकाल एवार्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य ॥

(उद्योतः) **नैष इति ।** अतिशदन्ताया इत्यस्य बहुव्री[1]हिगर्भतत्पुरुषत्वेन सङ्ख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोः संभवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संज्ञापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः । [2]एतत्पक्षद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तम्, तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये ॥

( समाधानान्तरभाष्यम् )

**अथ वा महतीयं संज्ञा क्रियते । संज्ञा च नाम [3]यतो न लघीयः ॥**

**कुत एतत् ? ॥**

**लघ्वर्थं हि संज्ञाकरणम् ॥ तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—[4]संख्यायते अनया संख्येति । एकादिकया चापि संख्यायते ॥**

(प्रदीपः) **अथवेति ।** ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा यथा सर्वादीनामेव सर्वनामसंज्ञा, न त्वधिकानाम् । तेन बहुगणशब्दयोः सङ्घवैपुल्यवाचिनोः संज्ञा मा भूत्, एकादीनां तु कथं स्यात् ॥ नैष दोषः, इहान्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्वं आक्षिप्यते । तेनैकादीनां तावत् ग्रहणं भवति पश्चाद्बहुगणवतुडतीति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते । अत एव सङ्घवैपुल्यवृत्त्योर्बहुगणशब्दयोः संज्ञा न भवति । तद्वदतिदेशपक्षेऽपि परस्परसाहचर्यात् संख्यावाचिनोरेव भूर्यादिनिवृत्तये नियमायातिदेशः क्रियत इत्यतिप्रसङ्गो न भवति ॥

(उद्योतः) भाष्ये—**संज्ञा च नामेति ।** नाम प्रसिद्धमेतद् यतोऽन्यल्लघीयो न भवति सा संज्ञेति ॥ **तदर्थानुगतानामिति ।** सङ्ख्यानकरणत्वसमानाधिकरणसङ्ख्याशब्दवदभिन्ना बहादय इत्यर्थादिति भावः ॥ **कथं स्यादिति ।** महासंज्ञाकरणस्य चरितार्थतया कृत्रिमन्यायबाधे मानाभावादिति भावः ॥ **सर्व इति ।** नियतानियतसङ्ख्यावाचीत्यर्थः ॥ **आक्षिप्यत इति । सङ्ख्येति** विभक्तसूत्रे इति शेषः । एवंच सङ्ख्यानकरणीभूताः सङ्ख्यासंज्ञका इत्यर्थः ॥ संज्ञायाः संज्ञ्याकाङ्क्षतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेव कल्प्यत इत्ययमेवात्राक्षेप इति भावः ॥ **[5]नियमार्थमिति । बहुगणेति** द्वितीयसूत्रे सङ्ख्येति वर्त्तते । अनियतसङ्ख्यावाचिनां चेद्बहादीनामेवेति भावः ॥ **अतएवेति ।** अन्वर्थत्वाश्रयणादेवेत्यर्थः ॥ **संज्ञा न भवतीति ।** प्राप्तेरेवाभावादिति भावः ॥ **सङ्ख्यावाचिनोरेवेति ।** बहुगणयोरित्यर्थः ॥ **नियमायेति ।** नियमफलक इत्यर्थः ॥ [6]परे तु परस्परसाहचर्यात्सङ्ख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणं न तु सङ्घवैपुल्यवचनयोरिति व्यर्थान्वर्थसंज्ञा । तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्यापि ग्रहणार्थं महती संज्ञेति भाष्याशयः ॥ **असङ्ख्यां सङ्ख्येत्याहेति**भाष्येण बहादिषु सङ्ख्यापदयोगार्थाभावबोधनाच्चेति योगविभागो व्यर्थः ॥ **एकादिकया चापि सङ्ख्यायते** इत्यस्य एकादिकया संख्यायते सापि सङ्ख्याप्रदेशेषु यथा गृह्येतेति महासंज्ञाकरणमित्यर्थः । चस्तु वाक्यालङ्कारे । [7]उभावपि वा वाक्यालङ्कार एव । [8]यद्वा बहादिकयापि सङ्ख्यायते स्वव्याप्यत्रित्वादिद्वारेत्यर्थः ॥ वत्वन्तडत्यन्तयोर्यावदादिशब्दकतिशब्दयोर्य[9]द्यपि साक्षात्सङ्ख्यानकरणीभूतार्थप्रतिपादकत्वमुपपादयितुमशक्यम् । तथापि कतीत्यत्र सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम् । एवं वत्वन्तेऽप्यूह्यमित्याहुः ॥

( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

**[10]उत्तरार्थेन चापि नार्थः संख्याग्रहणेन । इदं प्रकृतमुत्तरत्रानुवर्तिष्यते ॥**

( आक्षेपभाष्यम् )

**[11]इदं वै संज्ञार्थम्, उत्तरत्र च संज्ञिविशेषणेनार्थः ॥**

* 'ननु चेयमस्ति डतिः' इत्येवोचितम् ॥ दाधिमथाः ॥

१ बहुव्रीहीति । द्वन्द्वगर्भेत्यादिः ॥ छाया ॥

२ प्रदीपं दूषयति—एतदिति । व्याख्यानादुक्तहेतोश्चोक्तार्थसिद्धेरिति भावः ॥ छाया ॥

३ तदर्थमाह—यत इति ॥ छाया ॥

४ एकेनोभयालाभादाह—संख्येति विभक्तेति ॥ अन्यथाप्युपपत्त्या सुख्याक्षेपासंभवादाह—संज्ञाया इति । वर्तते अनुवर्तते ॥ छाया ॥

५ तादर्थ्ये चतुर्थीत्याह—नियमेति ॥ छाया ॥

६ कैयटं दूषयति—परेत्विति॥भाष्यं योजयति—तस्मादित्यादिना ॥छा.

७ लाघवादावश्यकतयाह—उभावपीति ॥ चापीत्यर्थः ॥ छाया ॥

८ अपिं सफलयति—यद्वेति ॥ छाया ॥

९ शङ्कते—यद्यपीति । साक्षादित्यस्य प्रतिपादकत्वेऽन्वयः ॥ छाया ॥

१० सिद्धान्ती द्वितीयं प्रयोजनमपि निरस्यति—उत्तरार्थेनेति ।

११ पूर्वपक्षी तटस्थो वा शङ्कते—इदमिति ॥

**[1]न चान्यार्थं प्रकृतमन्यार्थं भवति ॥ न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति । न हि गोधा सर्पन्ती सर्पणादहिर्भवति ॥**

(प्रदीपः) **संज्ञिविशेषणेनार्थं इति ।** ष्णान्तेत्यनेन विशिष्टं संज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः ॥ **नचान्यार्थमिति ।** एकशब्दत्वदर्शन इति भावः ॥ भवतु तर्हि प्रतियोगं शब्दभेद इत्याह—**न खल्वपीति ।** यथा गोधा देशान्तरगमनमात्रेण गोधात्वं न जहात्येवं शब्दोऽपि रूपान्तरं न गृह्णात्येवेत्यर्थः ॥

(उद्योतः) भाष्ये **संज्ञार्थमिति ।** संज्ञा शब्दस्वरूपं तदर्थकमित्यर्थः । संज्ञिनिरूपितसङ्ख्याशब्दनिष्ठशक्त्यवगमार्थं स्वरूपपरमिति भावः ॥ ननु ष्णान्तेत्यनेन सङ्ख्या विशेष्यत इति संज्ञिविशेषणं सङ्ख्याग्रहणमित्ययुक्तमत आह—**ष्णान्तेति ।** भाष्ये संज्ञी पद्संज्ञासंज्ञी **विशेष्यते** स्वेतरव्यावृत्ततया प्रतिपाद्यते येनेत्यर्थः ॥ ननु स्वरितत्वबलेनानुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनार्थभेदस्य सत्त्वेन **न चान्यार्थ**मित्ययुक्तमत आह—**एकेति ।** यस्य स्वरितत्वं प्रतिज्ञातं तदेवानुवर्तते न तु तज्जातीयं शब्दान्तरमिति भावः ॥ [2]अर्थाधिकार एव चाभ्यर्हितः तदर्थस्य चायोग्यत्वादिहासंबन्ध इति भावः ॥ **इत्याहेति ।** इत्याशङ्क्याहेत्यर्थः ॥ भाष्ये—**न खल्वपीति** प्रकृतमनुवर्तनाद्देशान्तरगमनादन्यद्भवतीति नखलु इत्यन्वयः[3] ॥ **यथेति ।** सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वं गोधाया वार्यत इति नार्थः, सर्पणस्याहिशब्दप्रवृत्तिनिमित्तत्वाभावात् किं तु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः ॥ **रूपान्तरम्** अर्थभेदम् ॥

(आक्षेपप्रथमयुक्तिसमाधानभाष्यम्)

**यत्तावदुच्यते-न चान्यार्थं प्रकृतमन्यार्थं भवतीति ॥ अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा-शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, [4]उपस्पृश्यते च, शालयश्च भाव्यन्ते ॥**

(प्रदीपः) **अन्यार्थमपीति ।** पदार्थानां शक्तिवैचित्र्यात् ॥

(उद्योतः) **पदार्थानामिति ।** द्वन्द्वः ॥ **शक्तिवैचित्र्यात् ।** अनेकशक्तित्वादित्यर्थः ॥ एवंच पूर्वत्र तया शक्त्या स्वरूपपरस्यापि उत्तरत्रान्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाभावः । शब्दो[5]ऽधिकारोऽत्र लक्ष्यानुरोधादाश्रीयत इति भावः ॥

(आक्षेपद्वितीययुक्तिसमाधानभाष्यम्)

**यदप्युच्यते-न खल्वप्यन्यत् प्रकृतमनुवर्तनादन्यद्भवति । नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति ॥ भवेद्-द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येन विशेषेणाभिसंबध्यते, तस्य तस्य[7] विशेषको भवति ॥**

(प्रदीपः) **शब्दस्त्विति ।** स्वरितत्वेन वाक्यान्तरे शब्दान्तरं वाक्यार्थानुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते । सादृश्यात्तु तत्त्वाध्यवसाय इत्यर्थः ॥

(उद्योतः) [भाष्ये] **भवेद् द्रव्येष्वेतदेवं स्यादिति ।** स्यादिति संभावनायां लिङ् । भवेदिति प्रार्थनायाम् । द्रव्ये विषये [6]पूर्वोक्तार्थकर्तृका संभाविता सत्ता भवत्वित्यर्थः ॥ शब्दभेदनयेऽपि न क्षतिरित्याह—**शब्दस्त्विति॥ येनयेन विशेषेणेति ।** विशेष्यत इति **विशेषः** परिच्छेद्यम् ॥ **विशेषकः** परिच्छेदकः । तैःपरिच्छेदकार्थवानन्य एव शब्दो भवतीत्यर्थः ॥ तदुपपादयति—**स्वरितत्वेनेति ॥**

(समाधानयुक्त्यन्तरभाष्यम्)

**अथ वा-सापेक्षोऽयं [8]["ष्णान्ता"इति] निर्देशः क्रियते । न चान्यत्किंचिदपेक्ष्यमस्ति । ते[9] संख्यामेवापेक्षिष्यामहे ॥**

(प्रदीपः) **सापेक्षोऽयमिति ।** स्त्रीलिङ्गेन निर्देशः कृतः । तत्र प्रकृतत्वादन्यपदार्थत्वेन संख्या स्वरितत्वेन विनाप्य[10]पेक्ष्यत इत्यर्थः ॥

(२०० आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ अध्यर्धग्रहणं च [11]समासकन्विध्यर्थम् ॥ * ॥

(भाष्यम्)

**अध्यर्धग्रहणं च कर्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**समासकन्विध्यर्थम् । समासविध्यर्थम्, कन्विध्यर्थं च ॥ समासविध्यर्थं तावत्—अध्यर्धशूर्पम् ॥ कन्विध्यर्थम्—अध्यर्धकम् ।**

(प्रदीपः) **अध्यर्धग्रहणं चेति ।** [12]वार्तिके संख्याग्रहणं कर्तव्यत्वेन स्थितम् । तदपेक्षया समुच्चयार्थश्चशब्दः । विध्यर्थं

---

१ न च नहि ॥ छाया ॥

२ एवं कैयटतात्पर्यमुक्त्वा भाष्याशयान्तरमाह—अर्थेति । अत एव च ॥ भाव इति । भाष्यस्येति भावः ॥ छाया ॥

३ अन्वय इति । भाष्येपिस्तु समुच्चय इति भावः ॥ छाया ॥

४ उपस्पर्शोऽत्राचमनादिः ॥ छाया ॥

५ स्वोक्तयुक्तेः समाधिमाह—शब्दाधीति ॥ छाया ॥

६ एतदेवमित्यस्यार्थः—पूर्वोक्तेति ॥ छाया ॥

७ भाष्ये 'तस्य' इति सकृदेव पाठः । तद्धनयन्नाह—तस्परीति ॥ छाया ॥

८ कोष्ठकान्तर्गतः पाठो बहुत्र नोपलभ्यते ॥

९ ते वयमिति भावः ॥ छाया ॥ बहुत्र तु 'तेन' इति लभ्यते ॥

१० विनापीति । तथाच लौकिकोऽपेक्षालक्षणोऽधिकार इति भावः॥ छाया॥

११ समासेति । अभ्यर्हितत्वात्पूर्वनिपातः ॥ छाया ॥ वस्तुतस्तु 'लक्षणहेत्वोः' 'अजाद्यतः' 'द्व्येकयोः' इत्यादिनिर्देशैः पूर्वनिपातप्रकरणस्य प्रायिकत्वेन न दोष इति बोध्यम् ॥ दाधिमथाः ॥

१२ भाष्ये प्रत्याख्यातत्वेन वार्तिकोपादानमिति ॥ दाधिमथाः ॥

चेदंग्रहणम्, अध्यर्धशब्दस्य त्रिभागचतुर्भागादिशब्दवदसंख्यावाचित्वात्। अर्धशब्दश्चैकदेशवाची, न संख्यावाची एकदेशादिशब्दवत्। तस्याधिशब्देन समासे कृते यौगिकोर्थः प्रतीयते न संख्या॥ **अध्यर्धशूर्पमिति।** अध्यर्धेन शूर्पेण क्रीतमिति **दिक्संख्ये** इत्यनुवर्तमाने **तद्धितार्थेति** समासः। ततः **शूर्पादञन्यतरस्यामिति** अञ्च्यो वाध्यर्धपूर्वेति लुक्॥ **अध्यर्धकमिति। संख्याया अतिशदन्तायाः कन्निति** कन्॥

(उद्द्योतः) अध्यर्धस्यासंख्यावाचित्वमुक्तमुपपादयति—अर्धशब्दश्चेति॥

(२०१ आक्षेपप्रयोजनवार्तिकम्॥ ४॥)

## ॥*॥ लुकि चाऽग्रहणम्॥*॥

(भाष्यम्)

**लुकि चाध्यर्धग्रहणं न कर्तव्यं भवति—"अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्" इति। "द्विगोः" इत्येव सिद्धम्॥**

(प्रदीपः) **द्विगोरित्येव सिद्धमिति। समासविध्यर्थमिति** संबन्धसामान्ये षष्ठी। तेन समासे विधीयमाने समासनिमित्ते चान्यस्मिन् कार्ये विधीयमान इत्यर्थः। तेन द्विगुनिमित्तो लुगपि लभ्यते॥

अन्ये त्वाहुः अध्यर्धशब्दः संख्यावाच्येव। तथाहि गण्यते—एकोऽध्यर्धो द्वावर्द्धत्रय इति। तन्मते नियमार्थमध्यर्धशब्दस्यैव संख्यात्वेन ग्रहणं यथा स्यात् सार्धादीनां मा भूदिति॥ वाक्यभेदेन च द्वितीयो नियमस्तस्य च समासकन्विध्यर्थं संख्यात्वं न कार्यान्तरार्थमित्यर्थः॥

(उद्द्योतः) ननु समासकन्सिद्धये विधीयमाना संज्ञा कथं लुको निमित्तमत आह—**समासेति॥** समासपदेन द्विगुसमास एव तस्यैव सङ्ख्यानिमित्तकत्वात्। तन्निमित्तकमपि द्विगुनिमित्तकमेवेत्याह—**तेन द्विग्विति॥**

(२०२ आक्षेपवार्तिकम्॥ ५॥)

## ॥*॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः॥*॥

(भाष्यम्)

**अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यम्॥**

**किं प्रयोजनम्?॥**

**समासकन्विध्यर्थमेव समासविध्यर्थं कन्विध्यर्थं च। समासविध्यर्थं तावत्—अर्धपञ्चमशूर्पम्॥ कन्विध्यर्थम्—अर्धपञ्चमकम्॥**

(२०३ आक्षेपवार्तिकम्॥ ६॥)

## ॥*॥ अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम्॥*॥

(भाष्यम्)

**अधिकग्रहणं चालुकि कर्तव्यम्॥**

**किं प्रयोजनम्?॥**

**समासोत्तरपदवृद्ध्यर्थम्। समासविध्यर्थमुत्तरपदवृद्ध्यर्थं च। समासविध्यर्थं तावत्—अधिकषाष्टिकः। अधिकसाप्ततिकः॥ उत्तरपदवृद्ध्यर्थम्—अधिकषाष्टिकः। अधिकसाप्ततिकः॥**

**अलुकीति किमर्थम्?।**

**अधिकषाष्टिकः। अधिकसाप्ततिकः॥**

(प्रदीपः) **अधिकषाष्टिक इति।** अधिकया षष्ट्या क्रीत इति संख्याविशेषणमधिकशब्दो, न संख्येति वचनम्। **तद्धितार्थेति** समासः। **प्राग्वतेष्ठञ्। अलुकीति** वचनाल्लुकि कर्तव्ये संख्यासंज्ञा नास्तीत्यध्यर्धपूर्वेति लुङ् न भवति। ततः **संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः॥ ननूत्तरपदवृद्ध्यर्थमिति** वचनाल्लुङ् न भविष्यति, किमलुकीत्यनेन॥ नैतदस्ति, अर्हत्यर्थात् परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तत्रैवोत्तरपदवृद्धिः स्यात्॥

(उद्द्योतः) भाष्ये अधिकग्रहणं चेति। लुग्भिन्नसङ्ख्याकार्यसिद्ध्यर्थमधिकग्रहणं सङ्ख्यासंज्ञायां कर्तव्यमित्यर्थः॥ **नन्विति।** शूणिदादिषु तद्धिविधानादिति भावः॥ **परेष्वर्थेष्विति॥ तमधीष्ट** इत्यादिष्वित्यर्थः॥

(२०४ आक्षेपप्रयोजनवार्तिकम्॥ ७॥)

## ॥*॥ बहुव्रीहौ चाग्रहणम्॥*॥

(भाष्यम्)

**बहुव्रीहौ चाधिकशब्दस्य ग्रहणं न कर्तव्यं भवति। "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" इति। संख्येत्येव सिद्धम्॥**

---

१ 'अध्यर्धपूर्वात्'इति पाठ इति तद्धितशेखरे 'अध्यर्धपूर्वद्विगोः' इति समाहारद्वन्द्वे सौत्रं पुंस्त्वम्' इति तत्र मनोरमा॥ दाधिमथाः॥

२ आहुरित्यरुचिसूचकम्॥ सा च प्रसिद्धिविरोधरूपा॥ छाया॥

३ निमित्तकमेवेति। एतेन द्विगुसंज्ञानिमित्तकस्य लुकः समाससंख्यासंज्ञानिमित्तत्वाभावादिदमयुक्तमित्यपास्तम्॥

४ चः पूर्वसमुच्चये। प्रत्ययान्त इत्यस्य तदुत्तरपदक इत्यर्थः॥ पूर्वोत्तरवदर्थासंभवात्संख्येत्यनुवृत्त्याह—संख्यासंज्ञ इति॥ अनुवृत्तेराह—समासेति॥ छाया॥

५ वार्तिके कन्नप्युपलक्षणत्वेन ग्राह्य इत्याशयेनाह—लुगिमवेति॥ एतेन द्विगुसंज्ञामात्रस्य तत्रापेक्षया लुकि संख्यासंज्ञानिषेधेऽपि लुकोऽनिवारणादलुकीत्यादि चिन्त्यमित्यपास्तम्॥ छाया॥

( २०५ प्रत्याख्यानवार्तिकप्रथमखण्डम् ॥ ८ ॥ )

॥ * ॥ बह्वादीनामग्रहणम् ॥ * ॥

( भाष्यम् )

बह्वादीनां[1] ग्रहणं शक्यमकर्तुम् ॥

( आक्षेपभाष्यम् )

केनेदानीं[2] संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति ? ॥

( २०६ प्रत्याख्यानसाधकवार्तिकद्वितीयखण्डम् ॥ ९ ॥ )

॥ * ॥ ज्ञापकात्सिद्धम् ॥ * ॥

( भाष्यम् )

ज्ञापकात् सिद्धमेतत् ॥

ज्ञापकं किम् ? ।

यदयं—"वतोरिड्वा" इति संख्याया विहितस्य कनो वत्वन्तादिटं शास्ति ॥

( आक्षेपभाष्यम् )

वतोरेव तज्ज्ञापकं स्यात् ॥

( समाधानभाष्यम् )

नेत्याह । योगापेक्षं ज्ञापकम् ॥ बहुगण ॥ २२ ॥

(प्रदीपः) ज्ञापकात्सिद्धमिति । एकादिवन्नियतसंख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः ॥ योगापेक्षमिति । अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यम्, किंतु योगानपेक्षत इति योगापेक्षम् । यदयं बहुपूगगणसङ्घस्यतिथुक्वतोरिथुक् षट्कतीति डटि परत आगमं शास्ति, तज्ज्ञापयति—भवति संख्याकार्यमिति॥२२॥

(उद्योतः) नियतसङ्ख्यावाचित्वमिति । नियतविषयपरि[3]च्छेदहेतुत्वरूपसङ्ख्यावाचित्वमित्यर्थः ॥ भाष्ये—यदयमिति । न च वैपुल्यादिवाच्चिनामपि संख्याकार्यापत्तिः, संख्यापदार्थसंबन्धिबह्वादिग्रहणज्ञापनेन चरितार्थस्य सर्वथा तदसंबन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याभावात् । पूगादिभ्यो[4] डडर्थं बहुगणेति सूत्रे कृतेऽपि ज्ञापकावश्यकत्वमिति भावः ॥ केचित्तु[5] 'वतोरिड्वे' त्यनेन संख्यानकरणत्वाभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसंख्याकार्याणां संख्याकार्यं ज्ञाप्यते । तेनाधिकादीनामपि सिद्धं तदाह—योगापेक्षमिति । प्रयोगापेक्षमित्यर्थः । एतेन पूगादिभ्यः शसादिप्रसङ्गोऽपि वारित इत्याहुः[6] ॥ २२ ॥

—ooo—

( १३ षट्संज्ञासूत्रम् ॥ १ । १ । ५ आ. १२ ॥ )

ष्णान्ता षट् ॥ १ । १ । २३ ॥

( अनिष्टापत्तीष्टानुपपत्तिनिराकरणाधिकरणम् )

( २०७ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ षट्संज्ञायामुपदेशवचनं [शताद्यष्टनोर्नुम्नुडर्थम्][7] ॥ * ॥

( भाष्यम् )

षट्संज्ञायामुपदेशग्रहणं कर्तव्यम् । उपदेशे षकारनकरान्ता संख्या षट्संज्ञा भवतीति वक्तव्यम् ॥

किं प्रयोजनम् ? ॥

शताद्यष्टनोर्नुम्नुडर्थम् । शतानि सहस्राणि । नुमि कृते "ष्णान्ता षट्" इति षट्संज्ञा प्राप्नोति । उपदेशग्रहणान्न भवति ॥ अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशग्रहणाद्भवति ॥

(प्रदीपः) ष्णान्ता ॥२३॥ षट्संज्ञायामिति । प्रकृतिप्रत्ययादिविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युपदेशे या षकारनकारान्ता संख्या सा षट्संज्ञेत्यर्थः ॥ नुम्नुडर्थमिति[8] । अर्थशब्दः प्रयोजनवाची । तत्र[9] नुमि शतानीत्यादौ षट्संज्ञानिवृत्तिः प्रयोजनम्, नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् ॥ अष्टानामिति । पर-

---

१ सूत्रं प्रत्या[ख्यातुं *"बह्वादीनामग्रहणं ज्ञापकात् सिद्धम्"* इति वार्तिकं खण्डशो व्या]चष्टे—बह्वादीनामिति ॥ छाया ॥

२ प्रत्याख्यानसाधकवार्तिकखण्डमवतारयति—केनेदानीमिति ॥

३ यथाश्रुतासंगतेराह—नियतविषयेति ॥ छाया ॥

४ ननु ज्ञापकेन सूत्रप्रत्याख्यानं न चार्वत आह—पूगेति ॥ एतेनेदं प्रत्याख्यानमयुक्तं पूगादीनामपि तेन तत्प्रसङ्गादिति निरस्तम् ॥ छाया ॥

५ कैयटापेक्षयाश्रयान्तरमाह—केचित्त्विति ॥ शसादीति । संख्यैकेतीतिभावः ॥ एतेन—'अस्य' इत्यादि चिन्त्यम्, प्रकृतसूत्रापेक्षयैव सुयोजत्वात् । 'नेत्याह । योगापेक्षम्' इति भाष्यासंगतेश्चेति निरस्तम् ॥ भाष्याक्षरास्वारस्यमत्रारुचिः ॥ छाया ॥

६ एतच्च सूत्रं भाष्ये प्रत्याख्यातम्—'बहुपूगगणसंघस्य तिथुक्' 'वतोरिथुक्' 'षट्कतिकतिपयचतुरां थुक्' इति सूत्रैर्डटि परे आगमा विधीयमाना बहुप्रभृतीनां डटो निर्वाहकं संख्यात्वं ज्ञापयन्तीति किमनेन सूत्रेण । ननु बहुपूगगणसंघेत्यादौ विशेषाश्रवणात्संघवैपुल्यवाचिनोरपि बहुगणशब्दयोः संख्याकार्यं स्यादिति चेत् ॥ न । अनियतसंख्यावाचिनोरप्येतयोः संख्याकार्यं भवतीत्येतावन्मात्रज्ञापनेन चरितार्थत्वे सति सर्वथा संख्यामप्रतिपादयतोरपि संख्याकार्यकल्पनस्य गौरवपराहतत्वात् । भूर्यादीनां त्वनियतसंख्यावाचिनां ग्रहणं न भवति, नियतसंख्यावाचिनां पश्चादीनामेव लोके संख्याशब्दत्वेन प्रसिद्धतरत्वात् । प्रसिद्धाप्रसिद्धयोः प्रसिद्धग्रहणस्य न्याय्यत्वात् ॥ नन्वेवमपि बहुगणयोरिव पूगसंघादीनामपि धाश्स्कृत्वसुजादिसंख्याकार्यप्रसङ्गः । नच बहुगणयोः सामान्यापेक्षं ज्ञापकम्, पूगादीनां तु डड्विषयकमेवेति वाच्यम् । अनुपपत्तेः समानत्वेनैकसूत्रोपात्तत्वेन च वैषम्ये बीजाभावादिति चेत् । मैवम् । लक्ष्यानुरोधेन क्वचित्सामान्यापेक्षं ज्ञापकं क्वचिद्विशेषापेक्षमित्याश्रयणात्तदनुरोधेन वैषम्यस्य सोढव्यत्वादिति दिक् ॥ इमां कुसृष्टिमसहमानेनैव सूत्रकृता सूत्रमिदं प्रणीतमिति परमार्थः ॥ श॰ कौ॰ ॥

७ कोष्ठकान्तर्गतः पाठो बहुत्र नोपलभ्यते ॥ दाधिमथाः ॥

८ नुमिति । नित्यसापेक्षत्वात्समासः ॥ छाया ॥

९ तत्र तयोर्मध्ये ॥ छाया ॥

त्वान्नित्यत्वाच्चात्वे कृते नुटोप्राप्तिः । कार्यकालत्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् ॥

(उद्योतः) ष्णान्ता षट् ॥ २३ ॥ स्वरूपप्रतिपत्त्यर्थोद्योच्चारणस्यान्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पञ्चादिषु न स्यादत आह—प्रकृतीति । [1]प्रकृतिप्रत्ययविभागेन प्रतिपादनरूपं यद् गुणैः प्रापणं तदुपदेशपदेनात्र गृह्यत इत्यर्थः ॥ एतदभिप्रायेणैवोपदेशेऽजिति सूत्रे वक्ष्यति—'संकीर्णावुद्देशोपदेशाविति' ॥ प्रत्ययाद्युपदेश इति । आदिनाऽऽगमः । यथा सप्तन्नादौ सप्यश्नूभ्यां तुट्चेति । [2]प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता संख्या निष्पन्ना भवति सेत्यर्थः ॥ यद्यपि शतानीत्यादावपि नुमागमोपदेशेन नान्तसङ्ख्यानिष्पत्तिरस्ति । तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पादकानामेव तेषां ग्रहणम् । [3]न तु विभक्तिनिमित्तकानामपि, बहिरङ्गत्वादिति भावः ॥ तन्नेति । नमनुटोरर्थः प्रयोजनं यस्येति बहुव्रीहिरिति भावः ॥ नन्वन्तरङ्गत्वात्पूर्वमेव षट्त्वं [4]प्रवृत्तमात्वेऽपि बहिरङ्गतया आत्वस्यासिद्धत्वान्न निवर्त्स्यतीत्यत आह—कार्यकालेति ॥

(प्रत्याख्यानभाष्यम्)

॥ * ॥ उक्तं वा ॥ * ॥

किमुक्तम् ? ।

इह तावच्छतानि सहस्राणीति–'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति ॥

अष्टनोऽप्युक्तम् ।

किमुक्तम् ? ॥

*अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्* इति ॥

(प्रदीपः)अष्टनो दीर्घेति । तत्र हि दीर्घग्रहणमष्टस्विति सुप उदात्तत्वनिवृत्त्यर्थं क्रियते । यदि च कृतात्वस्य षट्संज्ञा न स्यात्तदाऽष्टस्विति परत्वात् षट्स्वरो झल्युपोत्तममिति भविष्यतीति किं दीर्घग्रहणेन । कृतं च तत् कृतात्वस्याऽपि षट्संज्ञां [5]ज्ञापयति । ततश्चापवादत्वात् षट्स्वरोऽनेन बाध्यत इति दीर्घपक्ष इवादीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्तव्यं दीर्घग्रहणम् ॥

(उद्योतः) सुप उदात्तत्वेति । अष्टन इति प्राप्तेरर्थः ॥ आद्युदात्तत्वेति क्वचित्कोऽपपाठः । [6]यद्वा—दीर्घग्रहणं षट्त्वे यथोद्देशपक्षाश्रयणस्यैव ज्ञापकम् । तद्द्वारैव च षट्संज्ञाज्ञापकत्वम् । तत्पक्षे आत्वस्य बहिरङ्गतयाऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वमस्त्येव । स्पष्टं चेदमष्टनो दीर्घादित्यत्र कैयटे । किं च यथोद्देशपक्षे षट्त्वं स्थानिवद्भावेनापि सुलभम्, नकारान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य समुदायधर्मत्वेन तन्निमित्तकनुडादेरल्विधित्वाभावादिति बोध्यम् ॥ न चात्वस्य नित्यत्वादष्टस्विति प्रयोग एवासङ्गत इति वाच्यम् । तद्वैकल्पिकत्वस्यापि ज्ञापनात् ॥ यावता विनानुपपन्नं तत्सर्वं ज्ञाप्यत इति सिद्धान्तात् ॥ परत्वादिति । अष्टन्स्वर आत्वपक्षे चरितार्थः । न च तत्प्रवृत्त्युत्तरमष्टस्वित्यादौ अष्टन्स्वरः स्यादेवेति वाच्यम् । सकृद्गतिन्यायाश्रयणात् ॥ अपवादत्वादिति । [7]न च स्वरप्रवृत्तेः पूर्वमन्तरङ्गस्याप्येकादेशस्याप्रवृत्तेर्यद्वितुपरमित्यादिसूत्रस्थभाष्यसंमतत्वेनाष्टावित्यादावष्टन्स्वरश्चरितार्थ इति वाच्यम् । अष्टनो घृतादित्वादन्तोदात्तत्वेनैकादेश उदात्तेनेत्येव तत्रान्तोदात्तत्वसिद्धेः । घृतादावस्य पाठे चेदमेव भाष्यं मानम् । [8]गौणे प्रियाष्टाभिरित्यादौ षट्स्वराष्टन्स्वरयोः प्रवृत्तिरस्त्येव । [9]तेषामनभिधानाच्च । एतेन कदष्टन्शब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त इति कदष्टावित्यस्यैकादेशस्वरेणासिद्धेस्तत्राष्टन्स्वरः सावकाश इति परास्तम् । तस्याप्यनभिधानात् ॥

(एकदेशिसमाधानभाष्यम्)

[10]अथवाऽऽकारोऽप्यत्र निर्दिश्यते—षकारान्ता

---

१ यथाश्रुतासंगतेराह—प्रकृतीति ॥ छाया ॥

२ वक्ष्यमाणदोषवारणायाह—प्रकृत्यादिभिरिति ॥ छाया ॥

३ ननु विभक्तीति ॥ एतेनेदं चिन्त्यम् । शतानीत्यत्रापि तथा सत्त्वेनातिप्रसङ्गावारणात् । उपदेशपदस्य प्रसिद्धार्थपरत्वेन प्रातिपदिकोपदेशे इति सुवचत्वाच्चेति निरस्तम् ॥ छाया ॥

४ प्रवृत्तमिति ॥ एतेनान्तरङ्गानपि विधीन्बहिरङ्गो विधिर्बाधते' इति भाष्यं संयोज्य कैयटोक्तं चिन्त्यम् 'षट्संज्ञा न' इति भाष्याननुगुणत्वात् । संज्ञां विना नुटोऽप्राप्तेः । एवं तं बाधित्वाऽऽत्वप्रवृत्तौ परत्वादेर्हेतुत्वायोगात् कार्यकालमात्रेण संज्ञाया अन्तरङ्गत्वनिराकृत्यसंभवेन तद्भाष्यानुपपादनात् । यथोद्देश एव तदुपपत्तेश्चेति निरस्तम् ॥ छाया ॥

५ तथाहि—'त्रेः संख्यायाः' इत्याद्युदात्तत्वं बाधित्वा घृतादिपाठादन्तोदात्तोऽष्टन्शब्दः साधितः । तस्माद्भिसि अष्टभिरष्टाभिरिति रूपद्वयम् । तत्र आत्वाभावे मध्योदात्तम् आत्वपक्षे त्वन्तोदात्तमिति सिद्धान्तः । तत्र 'षट्त्रिचतुर्भ्यो हलादिः' इति सूत्रेणाष्टस्वित्यत्र षड्भिरित्यादाविव विभक्तेरुदात्तत्वं प्राप्तम् । तद्बाधित्वा 'झल्युपोत्तमम्' इति प्राप्तम् । षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीति तस्यार्थः । तद्बाधनाय अष्टनो दीर्घात् इत्यारभ्यते दीर्घादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवतीति सूत्रार्थः । तत्र यद्यात्वपक्षे षट्संज्ञा न स्यात्तर्हि तत्र सावकाशोऽष्टनः स्वरः परत्वादात्वाभावपक्षे 'झल्युपोत्तमम्' इति षट्स्वरेण बाधिष्यते इति किं दीर्घग्रहणेन । कृतात्वस्यापि षट्संज्ञायां सत्यां तु षट्स्वरस्याष्टनः स्वरोपवादः संपद्यते । नचाष्टनः स्वरः शसि सावकाश इति वाच्यम् । तत्रैकादेश उदात्तेनोदात्त इति सूत्रेण गतार्थत्वात् । अष्टन्शब्दोऽन्तोदात्त इति समनन्तरमेवोक्तत्वात् । तेन दीर्घपक्ष इव तदभावपक्षेऽपि विभक्तेरुदात्तता स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं सार्थकमेव । तस्माद्दीर्घग्रहणेनात्वपक्षेऽपि षट्संज्ञा ज्ञाप्यते इति स्थितम् ॥ श० कौ० ॥

६ लाघवादाह—यद्वेति ॥ अनेन कैयटोक्ते गौरवं सूचितम् ॥ भाष्यं योजयति—तद्द्वारैवेति ॥ तत्पक्षे यथोद्देशे ॥ कैयटस्य स्वविरोधमपि सूचयन्नाह—स्पष्टमिति ॥ छाया ॥

७ तदप्राप्तियोग्येऽचारितार्थ्यरूपबीजाभावमाह—नच स्वरेति ॥ छाया ॥

८ गौणे तदविषये तस्य चारितार्थ्यमिति शङ्कामपाकरोति—गौण इति ॥ ॥ छाया ॥

९ तेषामिति । इदमनुपदमेव भविष्यति व्यक्तम् ॥ छाया ॥

१० एकदेशी समाधत्ते—अथवेति ॥

नकारान्ता आकारान्ता च संख्या षट्संज्ञा भवतीति ॥

( समाधानबाधकभाष्यम् )

**इहापि[1] तर्हि प्राप्नोति,—"सधमादो द्युम्न एकास्ताः" एका इति ॥**

(प्रदीपः) एकास्ता इति । संख्यावाचित्वाभ्युपगमवादी व्यत्ययेन बहुवचनं मन्यते । अन्यवाचित्वाश्रयं तूत्तरम् ॥

(उद्योतः) ननु सङ्ख्यावाचित्वे एका इति बहुवचनमनुपपन्नमन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह—सङ्ख्येति ॥

( समाधानसाधकभाष्यम् )

**नैष[2] दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यापदम्—तद्यथा-एको द्वौ बहव इति ॥ अस्त्यसहायवाची । तद्यथा—एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति । असहायैरित्यर्थः ॥ अस्त्यन्यार्थे वर्तते । तद्यथा—'प्रजामेका रक्षत्यूर्जमेका' इति । अन्येत्यर्थः ॥ 'सधमादो द्युम्न एकास्ताः' अन्या इत्यर्थः ॥ तद्योऽन्यार्थे वर्तते तस्यैष प्रयोगः ॥**

( समाधानबाधकभाष्यम् )

**इह[3] तर्हि प्राप्नोति-'द्वाभ्यामिष्टये विंशत्या च' इति ॥**

(प्रदीपः) इह तर्हीति । द्वाभ्यामिति । षट्स्वरः स्यात् ॥

(उद्योतः) षट्स्वर इति । षट्त्रिचतुर्भ्यो हलादिरित्यनेन ॥ न च षान्तनान्तसाहचर्यादाकारान्तो बहुवचनान्त एव गृह्यते इति नायं दोषः । साहचर्यस्य सर्वत्राव्यवस्थापकत्वमित्याशयात् ॥

( सिद्धान्तिसमाधानान्तरभाष्यम् )

**एवं[4] तर्हि सप्तमे योगविभागः करिष्यते—"अष्टाभ्य औश्", ततः "षड्भ्यः" षड्भ्यश्च[5] यदुक्तमष्टाभ्योऽपि तद्भवति ॥ ततो "लुक्" लुक् च भवति षड्भ्य इति ॥**

(प्रदीपः) सप्तम इति । अष्टाभ्य इति कृतात्वानुकरणादौश्त्वविधानसामर्थ्याच्च लुङ् न विधीयते ॥

(उद्योतः) कृतात्वेति[6] । ततश्च कृतात्वस्य कार्यकालपक्षेऽसत्यपि षट्त्वेऽतिदेशान्नुट्सिद्धिरित्यर्थः ॥ औश्त्वेति । अत एव विभक्ते जश्शसोरनुवृत्तिर्न । तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव । विपरीतं तु न, व्याख्यानात् ॥

( समाधानान्तरभाष्यम् )

**अथ वा—उपरिष्टाद्[7] योगविभागः करिष्यते—"अष्टन आ विभक्तौ" । ततो "रायः" रायश्च विभक्तावाकारादेशो भवति । "हलि" इत्युभयोः शेषः ॥**

(प्रदीपः) हलीति । ततश्चाष्टानामिति नुटि कृते आत्वं भवति । जश्शसोस्त्वष्टाभ्य इति कृतात्वनिर्देशाज् ज्ञापकादात्वं भवति । कृतात्वस्य हि निर्देशस्य प्रयोजनम् यत्रात्वं तत्रौश्त्वं यथा स्यादिति । यदि ह्येतत्कृतात्वनिर्देशस्य प्रयोजनं न स्याल्लाघवार्थमष्टभ्य औशिति ब्रूयात् ॥

(उद्योतः) ततश्चेति । न च संनिपातपरिभाषयात्वं न स्यात् । अष्टानामिति रूपं तु नुटि नोपधाया इति दीर्घे नलोपे च सिद्धमिति वाच्यम् । असिद्धस्यापि तद्विघातकविधेरनयाऽप्रवृत्तिबोधनेन नलोपस्याप्यनापत्तेः । अत एव 'पुग्घ्रस्वत्वस्यानिमित्तं स्याददीदपदिति' भाष्ये कृन्मेजन्तसूत्रे उक्तम् । 'जानातेर्मित्त्वेन ज्ञापकेन ह्रस्वविषये तदप्रवृत्तिरिति च कैयटो वक्ष्यति । अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया त्वस्या अप्राप्तौ भाष्यासङ्गतिः स्पष्टैव । किं चातिदेशिकनिमित्तविघाताभावमादाय नास्या अप्रवृत्तिः । एवं हि लक्ष्मीत्यादौ संबुद्धिह्रस्वे कृते संबुद्धिलोपे कृतेऽपि प्रत्ययलक्षणेन निमित्तविघाताभावात्तत्रास्या अतिव्याप्तिपरतत्सूत्रस्थभाष्यविरोधः । किं च गव्यितेत्यादौ संनिपातपरिभाषया लोपो नेति सिद्धान्तभङ्गः[8] । यलोपस्य बहिर्भूततृज्निमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात् । वस्तुतस्तु[9] षट्त्वसंनिपातनिमित्तको नुट् । न च तस्य संनिपातस्यात्वं विघातकम्, नापि नलोपः, स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वाद् । अत्र पक्षे दीर्घग्रहणं, पुनःप्रसङ्गपक्षे अष्टभिरित्यत्र षट्स्वरे कृतेऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम् ॥ अतिदेशविषयेऽपि तत्प्रवृत्तौ तु सिद्धं न न इष्टम् । अजाद्योर्जश्शसोस्तर्ह्यात्वं न स्यादत आह—जश्शसोरिति ॥

( आक्षेपभाष्यम् )

**यद्येवम्[10]—प्रियाष्टौ प्रियाष्टा इति न सिध्यति, प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति ॥**

---

१ पूर्वपक्षी निराकरोति—इहापीति ॥

२ सिद्धान्त्येवैकदेश्याश्रयेन, एकदेश्येव वा समाधत्ते—नैष इति ॥

३ पूर्वपक्षी प्रश्नेपेऽतिप्रसङ्गान्तरं वक्ति—इह तर्हीति ॥

४ सिद्धान्ती सिद्धान्तरीत्या समाधत्ते—एवं तर्हीति ॥

५ अष्टाभ्य इत्यनुवृत्त्या शेषपूरणेन च व्याचष्टे—षड्भ्यश्चेति ॥ छाया ॥

६ कार्यकालेति । अनेन पक्षान्तराश्रयणे फलं दर्शितम् ॥ छाया ॥

७ उपरिष्टात् । ततोऽप्यग्रे ॥ छाया ॥

८ विधेः नलोपस्य ॥ अनया संनिपातपरिभाषया । तस्या लोकमूलकत्वात् ॥ अत्र मानमाह—अत एवेति । असिद्धस्थले प्रवृत्तेरेवेत्यर्थः ॥ छाया ॥

९ अस्याः संनिपातेत्यस्याः ॥ आदिना कैयटपरिग्रहः ॥ एवमग्रेऽपि ॥ निमित्तेति । संनिपातेत्यर्थः ॥ एवं हि तदप्रवृत्तौ हि ॥ विधिरूपेण तेषां प्रवृत्तिरिति सिद्धान्तमतेनाह—प्रत्ययेति ॥ तत् कृन्मेजन्तेति ॥ लोप इति ॥ यस्य हल इत्यनेनेति भावः ॥ छाया ॥

१० प्रागुक्तसंगतिं दर्शयन्सिद्धान्तमाह—वस्तुतस्त्विति॥ययोद्देशेनाह—स्थानीति ॥ सकृद्गतिपक्षे संभवादाह—पुनःप्रसङ्गेति ॥ अष्टभिरिति । प्राप्तेत्यादिः ॥ विकल्पेति । तन्मात्रेत्यर्थः ॥ तर्हि हलीत्यस्योभयशेषत्वे ॥ छाया ॥

(प्रदीपः) यद्येवमिति । हलादावुच्यमानमात्त्वमौजसोर्न प्राप्नोतीति यत्राष्टार्थस्य प्राधान्यं तत्रौत्त्वेन भवितव्यम्, तत्रैव चौत्त्वेनात्त्वमनुमीयत इति जस्यप्यात्त्वमत्र ज्ञापकान्न प्राप्नोति ॥ विभक्तिमात्रे त्वात्वं विधीयमानमौजसोः सिध्यति । **अष्टन आ विभक्तावित्यत्र पदाङ्गाधिकारे तस्य तदुत्तरपदस्य चेति** तदन्तविधिसद्भावाद्बहुवचननिर्देशाभावाद् गुणभूतेऽप्यष्टार्थे आत्वेन भाव्यमित्यत्रापि सिध्यतीति प्रश्नः ॥

(उद्द्योतः) भाष्ये—प्रियाष्टान इति प्राप्नोतीति । इत्येव प्राप्नोतीत्यर्थः । [1]अन्यथाऽपकर्षाभावेऽपि आत्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः ॥ ननु जसि ज्ञापकसिद्धात्वप्राप्तेरौशश्च प्राप्तेराह—यत्रेति । बहुवचननिर्देशादिति भावः ॥ [2]षड्भ्य इत्येतत्साहचर्यादस्य प्राधान्ये एव प्रवृत्तिरिति भावः ॥ तस्य च यथाप्रकारान्तरेण गौणेऽप्रवृत्तिस्तथा सर्वादिसूत्रे उपपादयिष्यते । [3]शुद्धलक्षणैकचक्षुष्कस्यात्र पूर्वपक्षित्वमिति तात्पर्यम् ॥ औत्त्वेनेति । औशेत्यर्थः । त्वप्रत्ययप्रयोगस्तु अनुकरणात् अनुकार्यरूपे भावे इति बोध्यम् । आत्वे इत्यादिभाष्यप्रयोगात् ॥ औत्त्वेनेति । तद्विधायकसूत्रस्थात्वनिर्देशेनेत्यर्थः ॥ अत्र । गौणे ॥ ज्ञापकादिति । [4]अस्य प्राप्तियोग्यमपीति शेषः । क्वचित्तु ज्ञापकादिति न दृश्यते ॥ नन्वनपकर्षपक्षेऽपि अष्टनो विहितमात्वं कथं तदन्ते स्यादत आह—पदाङ्गेति ॥ बहुवचननिर्देशाभावादिति । साहचर्याभावादित्यपि बोध्यम् ॥

( समाधानसिद्धान्तिभाष्यम् )

**यथालक्षणमप्रयुक्ते ॥ ष्णान्ता षट् ॥ २३ ॥**

(प्रदीपः) यथालक्षणमिति । यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिः त[5]द्यथालक्षणमनुगन्तव्यम् तदत्र मा भूदात्वमित्यर्थः ॥ नैव वा लक्षणमप्रयुक्ते प्रवर्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानात् ॥ २३ ॥

(उद्द्योतः) [6]लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे—तत्र माभूदात्वमिति । पक्षान्तरेऽपि अनभिधानादात्वाभाव एव बोध्यः ॥ [7]यत्तु भवत्येवात्रात्वमित्यर्थ इति । तन्न । अपकर्षपक्षे आत्वसाधकोपायाभावेन फलभेदापत्तेः ॥ नन्वयं भाष्यार्थो न युक्तः । तथा हि सतीष्यत एवैतदित्येव ब्रूयात् । किं चाप्रयुक्ते इति वाक्यशेषोऽसङ्गतः, प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वात् । प्रयुक्तानां हीदमन्वाख्यानमिति भाष्योक्तेश्चेत्यरुचेराह—नैव वेति । लक्षणस्याभावोऽलक्षणं, तस्य योग्यता यथालक्षणमित्यव्ययीभावः । अप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणस्येत्यर्थः । एवं च [8]तादृशप्रयोगोऽसाधुरिति भावः ॥ किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्या ज्यायसी । एवं च [9]हरदत्तादीनां प्रियाष्टन्शब्दादिषु आत्वादिप्रवृत्तिविचारोऽन्यश्च तत्प्रयोगविचारः प्रामादिक एवेत्यवधेयम् ॥ एतेन पूर्वव्याख्यानेऽस्य साधुत्वमुत्तरव्याख्यानेऽसाधुत्वमिति विरुद्धार्थकव्याख्यानद्वयमयुक्तं, किं च अष्टाभ्य इति निर्देशात्कृताकारादेवाष्टनो जश्शसोरौशिति तद्विषयेऽप्यात्वम् । [10]अन्यथाऽष्टन इत्येव ब्रूयादिति साप्तमिकभाष्ये एकवचननिर्देशात् प्रधान एवौशात्वे इति प्रश्नाशयोऽपि चिन्त्य इत्यपास्तम् ॥ [11]गौणे प्रियाष्टादीनामनभिधानमित्यत्रत्यसिद्धान्तानुसारेण तद्भाष्यस्य सत्त्वात् । अरुच्यैव व्याख्यानान्तरप्रवृत्तेश्च ॥ २३ ॥

( २२ षट्संज्ञासूत्रम् ॥ १ । १ । ५ आ. १३ ॥ )

## डति च ॥ १ । १ । २४ ॥

( प्रत्याख्यानभाष्यम् )

**इदं डतिग्रहणं द्विः क्रियते—संख्यासंज्ञायां, षट्संज्ञायां च । एकं शक्यमकर्तुम् ।**

**कथम्? ॥**

**यदि तावत् संख्यासंज्ञायां क्रियते, षट्संज्ञायां न करिष्यते ॥**

**कथम्? ॥**

**"ष्णान्ता षट्" इत्यत्र डतीत्यनुवर्तिष्यते ॥**

(प्रदीपः) डति च ॥ २४ ॥ यदि तावदिति । तत्र वतुसाहचर्यात्तद्धित एव डतिर्गृह्यते, न तु पातेर्डतिः कृत् ॥

(उद्द्योतः) डति च ॥ २४ ॥ भाष्ये यदि तावदिति । [12]ष्णान्ता च षडिति सूत्रं पाठ्यं तत्र चकारबलात्स्वरितलिङ्गासङ्गाद्नुवर्तमानं डतिग्रहणं संभन्त्स्यत इति भावः ॥ ननु पातेरिति । एवं चार्थाधिकारादिहापि तद्धितस्यैव ग्रहणमिति भावः ॥ [13]संख्येति महासंज्ञासामर्थ्यात्तत्र सङ्ख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम्॥

---

१ अन्यथा सावधारणाव्याख्याने ॥ तस्य प्रयोगस्य ॥ छाया ॥

२ बहुवचननिर्देशस्य तदसाधकत्वस्यान्यत्रोक्तत्वादाह—षड्भ्यं इति ॥ ननु तत्रैव न मानं भवन्मतेऽत आह—तस्य चेति ॥ षड्भ्य इत्यस्येत्यर्थः ॥ ॥ छाया ॥

३ नन्वेवमपि पूर्वपक्षासंगतिरनिश्चयादत आह—शुद्धेति ॥ यथाश्रुतासंगतेराह—औशेत्यर्थ इति ॥ नन्वेवं कथं त्वोऽत आह—त्वेति । एवमग्रेऽपि ॥ अत्र मानमाह—आत्व इत्यादीति ॥ आत्वेति । कृतात्वेत्यर्थः ॥ छाया ॥

४ असंबद्धत्वनिरासायाह—अस्येति ॥ ज्ञापकादित्यस्येत्यर्थः ॥ छाया ॥

५ यथालेति । लक्षणमनतिक्रम्येत्यर्थः ॥ छाया ॥

६ तत्पक्षेणैव परिहारो युक्त इत्याह—लक्षणैकेति ॥ पक्षान्तरेऽपि अपकर्षान्यपक्षेऽपि । अत एवैकवाक्यता ॥ छाया ॥

७ प्राचामुक्तिमाह—यत्त्विति ॥ छाया ॥

८ तादृशेति । आत्वघटितेत्यर्थः ॥ छाया ॥

९ आदिना दीक्षितादिपरिग्रहः ॥ तेषामेवासत्त्वात् ॥ छाया ॥

१० एतदन्तो न भाष्यपाठः किं तु तत्फलितः ॥

११ एतेनेत्यस्यार्थमाह—गौण इति ॥ छाया ॥

१२ यथाश्रुतासंगतेराह—ष्णान्ता चेति ॥ छाया ॥

१३ साहचर्यस्यानित्यत्वेऽपि युक्त्यन्तरं मूलभूतमाह—संख्येतीति ॥ कैयटं दूषयति—संख्येति ॥ नच नहि ॥ छाया ॥

अथ षट्संज्ञायां क्रियते संख्यासंज्ञायां न करिष्यते ॥

[ [1]कथम्? ] ॥

"डति च" इत्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते ॥

डति च ॥ २४ ॥

(प्रदीपः) अथेति । तत्र संख्यासंज्ञाया अनुवर्तनादन्वर्थत्वाच्च तस्याः संख्याप्रश्नविषय एव डतिर्गृह्यते, न त्वौणादिकः ॥ २४ ॥

(उद्द्योतः) भाष्ये डतिचेत्यत्रेति । चकारात्षट्संज्ञानन्तरं करणाच्चानेन संज्ञाद्वयस्यापि विधानमित्यर्थः ॥ अन्वर्थत्वाच्चेति । सङ्ख्यायतेऽनयेति हि सः । न च तस्यार्थस्य डत्यन्ते संभवः । सङ्ख्याप्रश्नविषयत्वं तु न तदर्थ इति चिन्त्यमेतत् । [2]तस्मादुणादीनामव्युत्पन्नत्वान्न तत्र डतिरिति तस्याग्रहणमित्युचितम् । व्युत्पत्तावपि पातेः कतिनापि सिध्यतीति न तत्र डतिनियम इति बोध्यम् ॥ सङ्ख्याप्रश्नेति । संनियो[3]गशिष्टन्यायाच्च षट्संज्ञापि तस्यैवेति भावः ॥ २४ ॥

---

( २३ निष्ठासंज्ञासूत्रम् ॥ १ । १ । ५ आ. १४ ॥ )

## क्तक्तवतू निष्ठा ॥ १ । १ । २५ ॥

(प्रदीपः) क्तक्तवतू ॥ २५ ॥ इहानुबन्धाः कार्यार्थमुपादीयन्ते । प्रयोगश्चैषां लुप्तत्वान्नास्ति । यत्र सारूप्यं तत्र च सन्देहः—कथमस्यानुबन्धकार्यं कृतमस्य तु न कृतमिति पूर्वपक्षाभिप्रायः ॥ सिद्धान्तवादी तु मन्यते । अध्रुवेणानुबन्धेन नियतसन्निधाना अर्थाः कारककालादयो लक्ष्यन्ते तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां कार्याणां साधुत्वं विज्ञायते । तत्र यदा देवदत्तेन लूनः शालिरिति कश्चित्प्रयुङ्क्ते तदा लक्षणज्ञः कर्मभूतकालावगमात् क्तप्रत्ययं मन्यते । यदा तु लोतमालभेतेति प्रयोगस्तदा मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति मन्यते ॥

(उद्द्योतः) क्तक्तवतू ॥ २५ ॥ अनुबन्धानां नित्यलुप्ततया विशेषणत्वासंभवादुपलक्षणत्वे च तच्छब्द[4]मात्रस्योपलक्ष्यत्वं मन्यमानो वार्तिकमारभत इत्याह—इहेति । सारूप्यं प्रयोगे इति शेषः ॥ मन्यत इति । नि[5]श्चिनोतीत्यर्थः ॥ नियतं संनिधानं येषामिति विग्रहः ॥ कारकेति । न त[6]च्छब्दमात्रं लक्ष्यम्, किं त्वर्थविशेषाद्यवच्छिन्नमिति भावः ॥ तद्दर्शनादिति । कालादिद[7]र्शनादित्यर्थः ॥ तन्प्रत्ययान्त इति । [8]ककारानुपलक्षितः प्रयुक्त इति निश्चिनोतीत्यर्थः ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( २०७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ निष्ठासंज्ञायां समानशब्द-प्रतिषेधः ॥ * ॥

( भाष्यम् )

निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । लोतो गर्त इति ॥

( २०८ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ निष्ठासंज्ञायां समानशब्दाप्र-तिषेधः ॥ * ॥

( भाष्यम् )

निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधः अप्रतिषेधः ॥

( आक्षेपभाष्यम् )

निष्ठासंज्ञा कस्मान्न भवति? ॥

(२०९ आक्षेपबाधकहेतुवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अनुबन्धोऽन्यत्वकरः ॥ * ॥

( भाष्यम् )

अनुबन्धः क्रियते सोऽन्यत्वं करिष्यति ॥

( २१० आक्षेपबाधकहेतुनिराकरणवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् ॥ * ॥

( भाष्यम् )

अनुबन्धोऽन्यत्वकर इति चेत् ।

तन्न ॥

किं कारणम्? ॥

लोपात् * । लुप्यतेऽत्रानुबन्धः । लुप्ते चानुबन्धे नान्यत्वं भवति । तद्यथा—कतरद्देवदत्तस्य गृहम्?, 'अदो यत्रासौ काकः' इति । उत्पतिते काके नष्टं तद्गृहं भवति । एवमिहापि लुप्तेऽनुबन्धे नष्टः प्रत्ययो भवति ॥

(उद्द्योतः) भाष्ये नष्टं गृहमिति । अज्ञातमित्यर्थः ॥ नष्टः प्रत्ययइति । [9]अज्ञातानुबन्धः प्रत्ययो भवतीत्यर्थः ॥

---

१ कोष्ठकान्तर्गतः पाठो न सार्वत्रिकः ॥

२ तत्त्वमाह—तस्मादिति ॥ एकदेशिमतेऽप्याह—व्युत्पत्ताविति ॥ ॥ छाया ॥

३ नन्वेवमपि षट्त्वातिप्रसङ्ग एवात आह—संनियोगेति ॥ छाया ॥

४ मात्रपदेन कालादिव्यवच्छेदः ॥ छाया ॥

५ भेदमरुचिसूचकमित्याह—निश्चीति ॥ छाया ॥

६ मात्रमवधारणे ॥ छाया ॥

७ चाक्षुषासंभवादाह—कालादीति ॥ छाया ॥

८ प्राग्वदाह—ककारेति ॥ छाया ॥

९ नाशाभावादाह—अज्ञातेति ॥ छाया ॥

( आक्षेपबाधकसाधकभाष्यम् )

यद्यपि लुप्यते, जानाति त्वसौ—सानुबन्धकस्येयं संज्ञा कृतेति । तद्यथा—इतरत्रापि कतरद्देवदत्तस्य गृहम्? 'अदो यत्रासौ काकः' इति । उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति अन्ततस्तमुद्देशं जानातीति ॥

(उद्द्योतः) सानुबन्धकस्येति । पूर्वं यः ककारवांस्तस्येत्यर्थः ॥ उद्देशम् । ऊर्ध्वं देशम् ॥

( २११ आक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ सिद्धविपर्यासश्च ॥ * ॥

( भाष्यम् )

सिद्धश्च विपर्यासः । यद्यपि जानाति, संदेहस्तु तस्य भवति—अयं स तशब्दो लूनो गतं इति, अयं स तशब्दो लूनो गीर्णं इति । तद्यथा इतरत्रापि 'कतरद्देवदत्तस्य गृहम्?', 'अदो यत्रासौ काकः' इति । उत्पतिते काके यद्यपि तमुद्देशं जानाति संदेहस्तस्य भवति—इदं तद्गृहमिदं तद्गृहमिति ।

(प्रदीपः) सिद्धविपर्यास इति । सिद्धो विपर्यासः संशय इत्यर्थः ॥ इदं तद्गृहमिति । बुद्धेरनवस्थितत्वमनेन प्रतिपाद्यते । न त्वेतद् द्विर्वचनं वीप्साद्यर्थाभावात् ॥

(उद्द्योतः) सिद्धविपर्यासश्चेति । चस्त्वर्थे । सिद्धस्तु विपर्यास इत्यर्थः ॥ यद्यपि विपर्यासो भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह—संशय इति ॥ बुद्धेरनवस्थितत्वमिति । सन्देहाभिनय इत्यर्थः[3] ॥ वीप्सादीति । पदार्थविषयव्याप्तीच्छाप्रयोक्तृधर्मो हि वीप्सेति भावः ॥

( आक्षेपनिराकरणभाष्यम् )

एवं तर्हि—

( २१२ समाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ कारककालविशेषात् सिद्धम् ॥ * ॥

( भाष्यम् )

कारककालविशेषावुपादेयौ । भूते यस्तशब्दः कर्मणि कर्तरि भावे चेति । तद्यथा इतरत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते—वेदिकां पुण्डरीकं वा ॥

(उद्द्योतः) भाष्ये कारकेति । कालातिरिक्तप्रत्ययार्थपरम्[4] । वेदिकां पुण्डरीकं चेति । भाष्ये । एवं च साक्षादितरव्यावर्तकं विशेषणम् । स्वोपस्थाप्यार्थद्वारा इतरव्यावर्तकमुपलक्षणमिति भावः ॥

( आक्षेपभाष्यम् )

एवमपि प्राकीर्ष्टेत्यत्रापि प्राप्नोति ॥

(प्रदीपः) प्राकीर्ष्टेति । अत्र भूतकालोऽस्तीति भावः ॥

(उद्द्योतः) प्राकीर्ष्टेति । यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठात्वकृतो विशेषस्तथापि यन्मा प्रकीर्ष्टेत्यस्योपलक्षणमिदम् । अत्र हि निपातैर्यद्यदीति निघाते निषिद्धे निष्ठाचद्व्यजनादिति नित्यमाद्युदात्तत्वं स्यात् । असंज्ञायामपि तत्प्रवृत्तिं मन्यते । आदिः सिच इति विकल्पस्त्विष्यत इति भावः ॥

( २१३ समाधानवार्तिकम् ॥ ७ ॥ )

॥ * लुङि सिजादिदर्शनात् ॥ * ॥

( भाष्यम् )

लुङि सिजादिदर्शनान्न भविष्यति ॥

( आक्षेपभाष्यम् )

यत्र तर्हि सिजादयो न दृश्यन्ते—प्रामित्तेति ।

( समाधानभाष्यम् )

दृश्यन्तेऽत्रापि सिजादयः ॥

किं वक्तव्यमेतत् ? ॥

न हि ॥

कथमनुच्यमानं गंस्यते ? ॥

यथैवायमनुपदिष्टान् कारककालविशेषानवगच्छति एवमेतदप्यवगन्तुमर्हति—यत्र सिजादयो नेति ॥ कृकवत् ॥ २५ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायप्रथमपादे पञ्चममाह्निकम् ॥

(प्रदीपः) दृश्यन्तेत्रेति । सिजादीत्यादिशब्दः प्रकारे । तत्र प्रामित्त घटं देवदत्त इति प्रयोगे कर्त्रेकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगो, न निष्ठान्तस्येति प्रतिपद्यते । अञ्जिघृषिभ्यः क्त इत्यस्य निष्ठासंज्ञा न भवति, उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा । अन्यथा निष्ठा च द्व्यजनादित्याद्युदात्तत्वं स्यात् ॥ २५ ॥

इति श्रीकैयटकृते भाष्यप्रदीपे प्रथमाध्याये प्रथमपादे पञ्चममाह्निकम् ॥

(उद्द्योतः) सिचोऽत्र लुप्तत्वेनादर्शनादाह—आदिशब्द इति ॥ अञ्जिघृषीति । यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाभावदर्शनात्[5] क्तोयमित्यवगतिः । एवं च सनादिविधावित्संज्ञकन-

---

१ अन्ततः तथापि ॥ छाया ॥

२ प्रयोगेऽसत्त्वादाह—पूर्वमिति ॥ छाया ॥

३ यथाश्रुतासंगतेराह—संदेहेति ॥ छाया ॥

४ न्यूनतां परिहरति—कालातीति ॥ तस्योपात्तत्वात् अत एव भाष्ये भावेचेतीत्युक्तम् ॥ छाया ॥

५ गुणाभावेति । तेषामेव तत्त्वमित्यत्र मानाभावादिति भावः ॥ छाया ॥

कारोपलक्षितः प्रकृत्यर्थानुवादी इच्छार्थो वा सकारो भवतीत्यर्थः । अनुवादे अन्यत इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः । अत एवाटश्चेत्यादेः सार्थक्यम् । अन्यथा यत्र सूत्रे आट्, न तत्र वृद्धिरिष्यते; यत्र चेष्यते प्रयोगे, न तत्राडिति तद्वैयर्थ्यं स्पष्टमेवेति सर्वमवदातम् ॥ २५ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

# प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

( अथ सर्वनामसंज्ञाप्रकरणम् )

( २४ सर्वनामसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १ ॥ )

## सर्वादीनि सर्वनामानि १ । १ । २६ ॥

( सर्वादिशब्दार्थनिरूपणाधिकरणम् )

( पूर्वपक्षिभाष्यम् )

**सर्वादीनीति कोऽयं समासः ? ॥**

(प्रदीपः) सर्वादीनि सर्वे ॥ २६ ॥ कोयमिति । ननु नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात्समासान्तराशङ्कैव नास्तीति प्रश्नानुपपत्तिः ॥ एवं तर्हि किमयं बहुव्रीहिरेवाहोस्विद्बहुव्रीहितत्पुरुषयोरेकशेषः । यथा **कन्तन्तेभ्यः कण्वादिभ्य** इति चेति प्रश्नः ॥ तत्र सारूप्यार्थं सर्वश्चासावादिश्च सर्वादिरित्यत्रादिशब्द उपादीयते, न त्वस्य प्रयोजनान्तरमस्तीति तत्र **नपुंसकमनपुंसकेनेति** वा***स्वरभिन्नानां यस्योत्तरस्वरविधिः [ स शिष्यते ]*** इति वा बहुव्रीहेः शेषः ॥

(उद्द्योतः) सर्वादी ॥ २६ ॥ नन्विति । आदिशब्दस्य नित्यपुंस्त्वेन एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वानुपपत्तेरिति भावः ॥ प्रकृते[6] तत्पुरुषः कर्मधारयः । दृष्टान्ते षष्ठीतत्पुरुषः ॥ नत्वस्येति । कर्मधारयघटकस्येत्यर्थः ॥ बहुव्रीहेरेव शेषे युक्तिमाह—तत्र नपुंसकमिति । तत्पुरुषस्तु पुंलिङ्ग इति भावः ॥ स्वरभिन्नानामिति । स्वरेण विलक्षणानां सरूपाणां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः । कर्मधारयः समासस्येत्यन्तोदात्तः । परस्तु बहुव्रीहौ प्रकृत्येति परशास्त्रेणान्तोदात्तपूर्वपद इति बोध्यम् । तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति, अन्त्ये तु सिध्यतीति विशेषः ॥

( समाधानभाष्यम् )

**बहुव्रीहिरित्याह ॥**

(प्रदीपः) वक्ष्यमाणेन न्यायेन विनाप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाह—**बहुव्रीहिरिति ॥**

(उद्द्योतः) वक्ष्यमाणेन । तद्गुणसंविज्ञानेन ॥

( अनुयोगभाष्यम् )

**कोऽस्य विग्रहः ? ।**

(प्रदीपः) एवमपि संदेहः किं प्राथमकल्पिको बहुव्रीहिः अथ बहुव्रीहितत्पुरुषयोरेकशेषेण बहुव्रीहिरिति पृच्छति—**कोस्य विग्रह इति ॥**

(उद्द्योतः) प्राथमकल्पिकः । एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः ॥ वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः ॥

( समाधानभाष्यम् )

**सर्वशब्द[12] आदिर्येषां तानीमानीति ॥**

( आक्षेपभाष्यम् )

**यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति ॥**

**किं कारणम्[13] ? ॥**

**अन्यपदार्थत्वाद्बहुव्रीहेः ॥**

**बहुव्रीहिरयमन्यपदार्थे वर्तते, तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति । तद्यथा 'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावो भवन्ति स आनीयते, न गावः[14] ॥**

---

१ कोयमिति ॥—दीनीत्ययं कः समास इत्यन्वयः ॥ छाया ॥

२ एवं तर्हीति । भाष्यस्थसमासपदमन्यथानुपपत्त्या विशेषपरमिति भावः ॥ एवव्यवच्छेद्यस्तत्पुरुषः ॥ एकशेष इति । एकस्य बहुव्रीहेः शेषः इत्यर्थः ॥ छाया ॥

३ तत्र तयोर्मध्ये ॥ छाया ॥

४ तत्र तयोर्मध्ये ॥ सूत्रप्रत्याख्यान आह—स्वरेति ॥ छाया ॥

५ एकेति । एकशेषतोऽन्यत्रेति भावः ॥ समासान्तरेति । सर्वशब्देन सहेति शेषः ॥ एतेनादिशब्दस्य तादृशस्य क्लीवबहुवचनान्तनिर्देशस्तं विना नेति तत्वनिश्चय इत्यपास्तम् । तन्मात्रस्य तथा निर्देशादिति कृष्णः ॥ प्रागुक्तक्रमेणाह—नपुमिति ॥ छाया ॥

६ तत्पुरुषत्वसामान्यधर्मेण दृष्टान्तता नतु विशेषधर्मेणापीत्याह—प्रकृत इति ॥ छाया ॥

७ सामान्येत्यादिशब्दस्य दुर्वचत्वादाह—कर्मेति । अन्यथैकशेषो नेति भावः ॥ छाया ॥

८ वार्तिकार्थमाह—स्वरेणेति ॥ इत्यर्थः इत्याद्यर्थः ॥ तत्पुरुषे तुल्यार्थेत्यस्योत्तरत्वं तु न, सामान्यस्वरयोर्मध्ये उत्तरत्वस्य विवक्षितत्वात् । आद्यस्य बहुव्रीह्यन्यविषयत्वाद् । अन्यथाऽतिप्रसङ्गापत्तेरिति कृष्णः ॥ प्रकृते तत्कृतस्वरभेदाभावश्चेति तु तत्त्वम् ॥ तदभिप्रेत्याह—कर्मेति ॥ छाया ॥

९ नन्वेवं को विशेषोऽत आह—तत्रेति ॥ तयोर्मध्ये ॥ शुद्धबहुव्रीहावित्यर्थः ॥ छाया ॥

१० द्वितीये वाक्यभेदप्रतिपत्तिगौरवे इति लाघवादाह—वक्ष्यमाणेनेति ॥ ॥ छाया ॥

११ सामान्योक्तात्तदनभिज्ञस्य संदेहतादवस्थ्यमेवेत्याह—वक्ष्येति ॥ ॥ छाया ॥

१२ सर्वशब्दः शब्दपर इति सूचयन्नाह—सर्वशब्द इति ॥ छाया ॥

१३ किमिति । कस्मात्कारणादित्यर्थः ॥ छाया ॥

१४ न गाव इति । न ता गाव इत्यर्थः ॥ छाया ॥

( समाधानभाष्यम् )

**नैष दोषः, [1]भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा "[2]चित्रवाससमानय" "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इति [3]तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति ॥**

(प्रदीपः) **तानीमानीति** अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते । [4]अन्यथा यथा चित्रा गावोऽस्येति गवां विशेष्यत्वं तद्गतश्च विशेषणत्वमवगम्यते, तथेहाप्यवगम्येत । [5]अत्र चार्थे बहुव्रीहिर्नेष्यते । यदा तु स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा तु बहुव्रीहिः । अत [6]एवं चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते । तानीमानीति सर्वनामद्वयोपादानेन प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्यान्तर्भावात्तद्गुणसंविज्ञानं सूचयति । तस्यान्यपदार्थस्य गुणा उपलक्षणानि तेषामपि कार्ये संविज्ञानं तद्गुणसंविज्ञानम् । [7]तत्र चित्रगुरानीयतामिति स्वस्वामिभावसंबन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न तु गवाम् । दण्डी विषाणी चानीयतामित्यत्र तु संयोगसमवायलक्षणेन संबन्धेन संबन्धिनि कार्ये विज्ञायमान उपलक्षणस्याप्यन्तर्भावो भवति । इहाप्यादिशब्दस्यावयववाचित्वादुद्भूतावयवभेदसमुदायः समासार्थः । तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानामेव पृथक्प्रयोगत्वात्कार्यार्थया संज्ञया प्रवर्तितव्यमिति सर्वशब्दस्यापि सा सिध्यति । देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तोऽपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एव ॥

(उद्द्योतः) [8]विग्रहप्रश्नोत्तरे तानीत्याद्यधिककथनमयुक्तमत आह—**अन्यपदार्थस्येति** ॥ **नेष्यत इति** । [9]प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः ॥ नन्वेवमपि तानीत्येव सिद्धे इमानीति [10]व्यर्थमत आह—**सर्वनामद्वयेति** । सर्वनामद्वयोपादानेन तद्गुणसंविज्ञानं सूचयतीत्यन्वयः ॥ **प्रत्यक्षेति** । उद्भूतावयवभेदस्य गणपठितस्य समुदायस्येदमा परामर्शात् । तत्र च सर्वशब्दस्यान्तर्भावादिति भावः ॥ गुणत्वं दर्शयति—**उपलक्षणानीति** । प्रकारतयाऽन्वयीनीत्यर्थः ॥ **कार्ये संविज्ञानमिति** । [11]तच्च द्वेधा । क्वचिद् विशिष्टस्य क्रियायां संनिधानमात्रेण, यथा—क्रियायोगाभावेऽपि शुक्लवाससं भोजयेति । क्वचित्तु विशेषणस्यापि क्रियायोगेन, यथा—शुक्लवाससं पश्येति । कार्यं यत्र तद्भावभावि तत्र तद्गुणत्वमित्यर्थः फलितः । एवं तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः । अन्यत्र तदुपलक्षितस्येत्यपि भेदः ॥ अयं शब्दशक्तिस्वभावगम्योऽन्तर्भावः—कार्यित्वं कार्यसंनिहितत्वं वा । [12]एवंच यत्र संयोगसमवायान्यतरसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र तद्गुणः। अन्यत्रातद्गुण इत्युत्सर्ग इति गोलार्थः ॥ ननु प्रकृते न संयोगो नापि समवाय इत्यत आह—**इहापीति** । एवं च समवायेन संबन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमित्यर्थः ॥ बहुवचनोपपत्तय आह—**उद्भूतावयवभेद इति** । अवयवगतसंख्यारोपेण बहुवचनमिति भावः ॥ नन्वेवं समुदायस्यैव संज्ञा स्यादत आह—**तस्यचेति** । [13]युगपत्प्रयोगाभावात् पृथक्प्रयोगसत्वाच्च कार्यार्थया संज्ञया तदन्तर्भूतानामेव प्रवर्तितव्यमित्यन्वयः ॥ 'पृथक्प्रयोगत्वादिति' पाठे बहुव्रीहेस्त्वो बोध्यः ॥ **सिध्यतीति** । विनिगमनाविरहादिति भावः ॥ नन्वेवं सर्वशब्दस्य संबन्धविशेष्यत्वाभावात्कथं तस्य सर्व-

---

१ निषेधे हेतुमाह—भवति हीति । हि यत इत्यर्थः । अपिनाऽतद्गुणसंविज्ञानसमुच्चयः ॥ छाया ॥

२ लौकिकवैदिके क्रमेणाह—चित्रवेति ॥ छाया ॥

३ तद्गुण इत्यादि बहुव्रीहिः ॥ छाया ॥

४ अन्यथा तानीत्यस्याभावे ॥ छाया ॥

५ इष्टापत्तावाह—अत्रचेति । चस्त्वर्थे ॥ तु ह्यर्थे ॥ छाया ॥

६ इदमेव द्रढयति—अतएवेति । तत्रैव तदिष्टत्वादेवेत्यर्थः ॥ छाया ॥

७ तयोर्विविक्ते लक्ष्ये आह—तत्रेति ॥ उक्तबुद्धिस्थतयोर्मध्ये इत्यर्थः ॥ स्वस्वामिभावसंबन्ध इति पाठः ॥ छाया ॥

८ विग्रहेति । नन्वित्यादिः ॥ अतएवाधिक्यमिति भावः ॥ आदिनेमानीति ॥ छाया ॥

९ चस्त्वर्थे, तुर्ह्यर्थे तत्रार्थेऽग्रिमस्य हेतुत्वसूचक इत्याह—प्रथमान्तेति ॥ एतेन पूर्वाचार्यप्रसिद्ध्याऽन्यपदार्थप्राधान्यस्याप्याश्रयणादिति दण्डयुक्तं निरस्तम् ॥ अत एव समानार्थतापि भाष्योक्तोपपन्ना ॥ छाया ॥

१० व्यर्थं । व्यर्थमेव ॥ समीपेऽनन्वयादाह—सर्वेति ॥ ननु तानीत्यस्य फलमुक्तं नेदमतमाह—प्रत्यक्षेतीति ॥ तत्तात्पर्यमाह—उद्भूतेति ॥ छाया ॥

११ प्रदीपन्यूनतां परिहरति—तच्चेति ॥ कार्ये संविज्ञानं चेत्यर्थः । मात्रपदेन क्रियायोगव्यवच्छेदः ॥ अनुगममाह—कार्यमिति ॥ तद्गुणत्वं तद्गुणसंविज्ञानत्वम् ॥ एवमग्रेऽपि बोध्यम् ॥ एवं तत्र भेदमुक्त्वा तयोर्भेदं प्रदीपोक्तमेवाह—एवमिति ॥ अवान्तरभेदवदित्यर्थः ॥ अन्यत्र अतद्गुणसंविज्ञाने । अत्रोपलक्षणत्वं प्रसिद्धम् ॥ एतेन गोमान् दण्डी विषाणीत्यादौ मत्वर्थे स्वस्वामिभावसंयोगसमवायानां विषयत्वादाद्ये स्वामिमात्रानयनेऽपि तद्रूपानाशाद्वनस्थाभिरपि ताभिस्तस्य तथाविधस्य सत्त्वेन न स्वस्य क्रियान्वयः । तदन्ययोस्तयोः क्रियानन्वये संयोगादेरभावात्तद्रूपनाश इति तयोरपि तदन्वय इत्यस्तु संबन्धकृतभेदः ॥ बहुव्रीहौ तु स्वस्वामिभावाविशेषेऽपि क्वचित् स्वस्य तत्रानन्वयश्चित्रगुमानयेत्यादौ । क्वचित्क्रियायां सांनिध्यमात्रं नतु संबन्धः शुक्लवाससं भोजयेत्यादौ । अत्र स्वभाव एव शरणम् । कथमन्यथा प्रकृते संयोगादेरभावेनेष्टसिद्धिः । अवयवावयविनोः समवायेऽप्यवयविनोत्र कार्यासंबन्धः । विश्वादीनां प्रत्येकं तत्संबन्धेऽपि तान्प्रति सर्वशब्दासंभवादिति चिन्त्यमित्यपास्तम् ॥ उक्तानुगतरूपेणैव निर्वाहात् । शब्दतो निष्फलकार्यान्वयस्यात्रापि सत्त्वात् । सच लक्ष्याभावादवयवपर्यवसितं इत्यन्यत् । किंच तस्य कार्यसंबन्धे एवाङ्गस्य तत्संबन्ध इत्यस्यानुक्तत्वेन तत्संबन्धानावश्यकत्वात् ॥ गृहस्थदण्डादिना दण्डीत्यादिधियोऽभावादङ्गस्य कार्यान्वयं विना संयोगादिनिरूपणमशक्यमित्याशयात् । तदेतदभिप्रेत्याह—अयमिति ॥ लम्बकर्णमानयेत्यादावाह—कार्यित्वमिति ॥ तं भोजयेत्यादावाह—कार्येति ॥ तथाच—विधेयान्वयितत्कालसंनिहितान्यतरत्वघटकावयवार्थक आद्यः । तद्भिन्नोऽन्त्य इति बोध्यम् ॥ छाया ॥

१२ कैयटाद्यनुरोधेन परिभाषितं तल्लक्षणमाह—एवंचेति ॥ उक्तरीत्या तयोर्विविक्तविषयत्वे चेत्यर्थः ॥ अस्यापि दण्डी विषाणी च भोज्यतामित्यादौ व्यभिचारादाह—उत्सर्ग इति ॥ छाया ॥

१३ अनासक्तेराह—युगपदिति ॥ गामश्वमितिवदाह—चेति ॥ नन्वेवम् । सर्वशब्दस्य विशेष्योपलक्षणत्वे ॥ उपलक्षणमपि । विशेषणमपि ॥ छाया ॥

नामत्वमत आह—यथेति । स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया संबन्धविशेष्योऽपि । यथा देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः ॥ अन्यपदार्थत्वादिति भाष्यस्यान्य[1]ः पदार्थो यस्य तत्त्वादित्यर्थः ॥

(सर्वनामपदसाधुत्वाधिकरणम्)

(आक्षेपभाष्यम्)

**इ[2]ह सर्वनामानीति "पूर्वपदात्संज्ञायामगः" इति णत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः ॥**

(प्रदीपः) **णत्वं प्राप्नोतीति** । राजपुरुषादिवत्संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वावयवार्थमाश्रित्य व्युत्पाद्यन्त इति णत्वप्रसङ्गः । प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः । तत्र संज्ञायां सणत्वा एव साधवोऽसंज्ञायां त्वणत्वा एवेति शास्त्रव्यापाराण्णत्वं प्राप्नोत्येव । सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियममात्रं संज्ञाकरणमिति शब्दार्थसंबन्धनित्यत्वस्यापि न विरोधः ॥

(उद्द्योतः) ननु सर्वनामशब्दो यदि [3]व्युत्पन्नस्तदा संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भानुपपत्तिः । नो चेत्पूर्वोत्तरपदविभागाभावात् पूर्वपदादिति णत्वाप्राप्तिरत आह—राजेति ॥ सन्तमन्वर्थसंज्ञायाम् ॥ असन्तं शुद्धरूढे रथन्तरादौ ॥ आश्रित्येति । द्वितीयविप[4]र्यये आरोप्येत्यर्थकम् । सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकत्वरूपार्थमारोप्य तत्प्रकृतेपीऽति न वार्तिकानुपपत्तिः, नापि णत्वाप्राप्तिरिति भावः ॥ ननु शब्दनित्यताविरोधात्कथमसतो णत्वस्यापादनमत आह—[5]प्रयोगे चेति ॥ ननु संज्ञा चेत्कृत्रिमा तदा शब्दार्थसंबन्धनित्यताहानिरसंज्ञा चेन्न णत्वप्राप्तिरत आह—सर्वार्थेति ॥ शक्तिनियमनं शक्तिसंबन्धबोधनमेवेत्याहुः ॥ न च 'भ्रूञोऽसंज्ञायामि'ति सूत्रे भा[6]ष्ये 'यदेतत्संज्ञायां विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः । किं तर्हि तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थः' इति वक्ष्यते । ततश्चात्र कथं णत्वप्राप्तिः । न हि कृतणत्वेन संज्ञावगतिः । अत एव रघुनाथादिशब्दे न णत्वमिति वाच्यम् ॥ आ[7]धुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत एव **महत्याः संज्ञायाः करणे** एतत्प्रयोजनमिति वक्ष्यमाणं सङ्गच्छते । [8]अनादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वाभावोऽध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न वलोपः । संज्ञात्वभङ्गापत्तेरिति दिक् ॥

(२१४ समाधानवार्तिकम् ॥ १ ॥)

## ॥ * ॥ सर्व[9]नामसंज्ञायां निपातनाण्णत्वाभावः ॥ * ॥

(भाष्यम्)

**सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति ॥**

(प्रदीपः) **निपातनादिति** । लोकेऽप्ययं णत्वरहित एव प्रयुज्यते, तस्यात्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते ॥

(उद्द्योतः) सौत्रत्वादित्येव कुतो नोक्तमत आह—लोक इति ॥

(आक्षेपभाष्यम्)

**किमेतन्निपातनं नाम ? ॥**

(प्रदीपः) **किमेतदिति** । [10]भवत्वस्य साधुत्वं णत्वप्रतिषेधे त्वस्य तात्पर्याभावाद्विकल्पः प्राप्नोतीति भावः ॥

(प्रतिबन्दीभाष्यम्)

**अथ कः प्रतिषेधो नाम ? ॥**

(प्रदीपः) [11]इतरः प्रतिषेधेन साम्यं प्रतिपादयितुं पर्यनुयुङ्क्ते—**अथ क इति** ॥

(प्रतिबन्द्युत्तरभाष्यम्)

**अविशेषेण किंचिदुक्त्वा विशेषेण "न" इत्युच्यते, तत्र व्यक्तमाचार्यस्याभिप्रायो ग[12]म्यते—'इदं न भवति' इति ॥**

(समाधानभाष्यम्)

**निपातनमप्येवंजातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते, तत्र व्यक्तमाचार्यस्याभिप्रायो ग[13]म्यते—'इदं न भवति' इति ॥**

---

१ अन्यत्पदं तदर्थ इत्यर्थभ्रमं तद्व्याख्यानेनैव निराचष्टे—अन्य इति । पदार्थः । विशेष्यभूतः ॥ छाया ॥

२ इहेति शङ्कायाम् ॥ एवमग्रेऽपि ॥ इति इत्यत्र ॥ छाया ॥

३ व्युत्पन्नः शुद्धयौगिकः ॥ षेधवार्त्तीत्यत्र धर्मनियमवत्समासः ॥ तत्त्वस्यैव तत्रासत्त्वात् निषेधस्य प्राप्तिपूर्वकत्वात् ॥ छाया ॥

४ द्वितीयेति । आद्ये तु यथाश्रुतमेवेति भावः ॥ एवमुक्तेस्तात्पर्यमाह—सामेति ॥ शुद्धरूढत्वेऽपीति भावः ॥ तत् साधुत्वान्वाख्यानम् ॥ छाया ॥

५ प्रयोगेचेतीति । चस्त्वर्थे ॥ वृद्धिसंज्ञासूत्रस्थसिद्धान्तरीत्याह—शक्तिसंबन्धेति । एवेन यथाश्रुतं चिन्त्यमिति सूचितम् ॥ आहुरिति सिद्धान्तसूचकम् ॥ छाया ॥

६ भाष्य इत्यस्य वक्ष्यत इत्यत्रान्वयः ॥ ततश्च भाष्ययोर्मिथोविरोध इति भावः ॥ छाया ॥ 'य एते संज्ञायां विधीयन्ते तेषु नैवं विज्ञायते—संज्ञायामभिधेयायाम्—इति । किं तर्हि—प्रत्ययान्तेन चेत्संज्ञा गम्यते—' इति भाष्यस्य फलितार्थभूतोऽयं पाठ इति बोध्यम् ॥ दाधिमथाः ॥

७ प्रकृतसूत्रभाष्याशयमाह—आधुनीति ॥ इदं द्रढयति—अत एवेति ॥ उक्ताशयादेवेत्यर्थः ॥ छाया ॥

८ दृष्टान्तवैलक्षण्यं सतद्भाष्याशयमाह—अनादीति ॥ यथेति न भिन्नं पदम् ॥ दिगिति ॥ तदर्थस्तु वक्ष्यमाणरीत्याऽन्वर्थत्वाश्रयेणापि भाष्यं सुयोजमिति ॥ छाया ॥

९ सर्वेति । सर्वनामेतिसंज्ञायामित्यर्थः ॥ निपेति । अस्मादेव निपातनादित्यर्थः । मुनीनां लक्ष्यैकचक्षुष्कत्वात् ॥ छाया ॥

१० भवत्विति । उक्तानुवादः ॥ छाया ॥

११ यद्यपि निपातनस्यान्यत्र विधिसाम्यमपि तथापि प्रकृताशयं भाष्यमित्याह—इतरः प्रतीति ॥ छाया ॥

१२ गम्यते शब्दतः ॥ छाया ॥

१३ गम्यतेऽनुमानेन ॥ अयमेव भेदः, अन्यत्तुल्यमिति ॥ छाया ॥

(प्रदीपः) सर्वत्रैव ह्यप्राप्त्यनुमानं बाधः । निपातनं चापि णत्वाप्राप्त्यनुमानमिति भावः ॥

(उद्द्योतः) साम्यं[1] दर्शयति—सर्वत्रैवेति ॥ निपातनं चेति । भावाभावयोरेकत्र विरोधादिति भावः ॥

(आक्षेपभाष्यम्)

**ननु च—निपातनाच्चाणत्वं स्यात्, यथाप्राप्तं च णत्वम् ॥**

(प्रदीपः) **ननु चेति** । प्रतिषेधस्य निवृत्तावेव तात्पर्यम्, निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने, न तु रूपान्तरनिवृत्ताविति भावः ॥

(उद्द्योतः) नन्विति । प्रयोग[2]भेदेन च भावाभावविरोधपरिहार इति भावः ॥

(प्रतिबन्दीभाष्यम्)

**किमन्येऽप्येवं विधयो [भवन्ति] ? ॥**

(उद्द्योतः) भाष्ये किमन्ये[3]ऽपीति । अन्येऽपि विधयः किमेवम् एवंजातीयाः इति वक्ष्यमाणाभिप्रायेण प्रश्नः ॥

(प्रतिबन्द्युत्तरभाष्यम्)

**भवन्ति[4] ॥**

(उद्द्योतः) आशयानभिज्ञ उत्तरयति—भवन्तीति । यथा[5] स्थानिवदादेश इत्येतद्विषये स्थानिप्रयुक्तं भवति, यथाप्राप्तस्यादेशप्रयुक्तस्य न निवृत्तिरिति भावः ॥

(आक्षेपभाष्यम्)

**इह—"इको यणचि" इति वचनाद् यण् स्यात् । यथाप्राप्तश्चेक् श्रूयेत ॥**

(प्रदीपः) **इकोयणचीति** । यणो हि साधुत्वं प्रतिपाद्यते, न त्विग्निवृत्तिरित्यर्थः ॥

(उद्द्योतः) शङ्कते[6]—इको यणिति । अस यदि भवन्ती, त्यादिः ॥

(समाधानभाष्यम्)

**नैष दोषः । अस्त्यत्र विशेषः । षष्ठ्यात्र निर्देशः क्रियते । षष्ठी च[7] पुनः स्थानिनं[8] निवर्तयति ॥**

(प्रदीपः) **षष्ठ्यात्रेति** । ततश्च संहिताविषये स्वाभाविकोऽप्रयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते । यथा **दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति**, न तत्र दर्भाः प्रस्तीर्यन्ते ॥

(उद्द्योतः) **ततश्च संहितेति** । स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धेर्निवृत्तिः । सा च संहितायां शाकलाभावे इति भावः ॥ **प्रस्तीर्यन्त इति** । किंतु तत्प्रसङ्गे शराः प्रस्तीर्यन्त इति शेषः । तथा च स्थानषष्ठीनिर्देशे उभयत्रापि तात्पर्यमिति भावः ॥

(आक्षेपभाष्यम्)

**इह तर्हि "कर्तरिशप्" "दिवादिभ्यः श्यन्"इति वचनाच्च श्यन् स्यात् । यथाप्राप्तश्च शप् श्रूयेत ॥**

(प्रदीपः) **इह तर्हीति** । विकल्पः प्राप्नोतीति भावः ॥ समुच्चयस्तु न भवति, एकेन परदेशस्यावष्टब्धत्वाद्धातुसार्वधातुकयोश्चार्थाभिधाने एकेनैव साहायकस्य संपादनात् ॥

(उद्द्योतः) **विकल्प इति** । स्थानषष्ठ्यभावेनोभयत्र तात्पर्याभावादिति भावः ॥ **परदेशस्येति** । विकरणविधौ धातोः परश्चेत्यधिकारेण धातोः परो विकरणः प्रयोक्तव्य इत्यर्थादिति भावः ॥ ननु धातोः परो विधातव्य इत्यर्थे पूर्वं श्यनि विहिते पश्चाच्छबपि स्यात् तिङ्विकरणवत् । सार्वधातुक इति च विषयसप्तमी स्यादत आह—धात्विति ॥ **साहायकं सहायकार्यम्** ॥

(समाधानभाष्यम्)

**नैष दोषः । शबादेशाः[10] श्यन्नादयः करिष्यन्ते ॥**

(प्रदीपः) **शबादेशा इति** । श्यनश्च शित्करणं ज्ञाप-

---

१ इतरस्याशयं सूचयन्साम्यमेवाहेत्याह—साम्यमिति ॥ छाया ॥

२ प्रागुक्तविरोधाभावमाह—प्रयोगेति ॥ चस्त्वर्थे ॥ छाया ॥

३ किमन्येऽपीत्यादेः 'श्रूयेत' इत्यन्तस्यैकत्वे दण्डिकृष्णाद्यभिमतेऽसंगतिरसंबद्धत्वमानर्थक्यं चांशस्य स्फुटमेवात आह—किमन्येऽपीतीति ॥ वक्ष्येति । अनुपदमेव यथेत्यादिनेति भावः ॥ छाया ॥

४ भाष्ये 'किमन्येऽप्येवं विधयो भवन्ति ? । भवन्ति'इत्येवं प्राचीन पाठ आसीत् । तत्र समानानुपूर्वीकशब्दयोरेकमेव लिखित्वाऽन्ते'२'इति द्वित्वसंख्याङ्कदानं कुर्वन्तिस्म लेखनलाघवाय । तत्र कस्यचिल्लेखकस्य प्रमादेन द्वित्वसंख्याङ्को नष्टः । तत्प्रतिकृतिपुस्तकेषु 'भवन्ति'इति द्वित्वसंख्याङ्करहित एव पाठः प्रचरित इति तस्य प्रमादस्याज्ञानेन दण्डिकृष्णादिभिः 'श्रूयेत' इत्यन्तस्यैकग्रन्थत्वं ज्ञातम् ॥ भाष्यभूरिपरिक्रमेण नागेशेन तु स लेखकप्रमादो ज्ञातो मनसि धृतो व्याख्यात इति भावः ॥ दाधिमथाः ॥

५ तमाशयमाह—यथेति ॥ एवं च शङ्का सप्रमाणेति साधितम् ॥ छाया ॥

६ इहार्थमाह—शङ्कते इति । तत्रेत्यादिः ॥ अतएवाह—अस्येति॥ छाया॥

७ चो यत इत्यर्थको 'अस्त्यत्र' इत्यतः प्राग् योज्यः । पुनस्त्वर्थे ॥ छाया ॥

८ शब्दनित्यत्वायाह—स्थानिन इति ॥ शाकलसत्त्वे—संहितायां च तस्याः सत्त्वादाह—सा च संहीति॥इदं च वाक्याभिप्रायम् । चिन्त्वन्ति तन्वन्तीत्यादावेकपदेऽपि बोध्यम् ॥ तस्य शाब्दत्वादाह—किंत्विति ॥ स्थाने प्रसङ्ग इत्याह—प्रसङ्गे इति ॥ भाष्यादिस्थषष्ठीपदं स्थानषष्ठीपरमित्याह—स्थानेति ॥ एतेन ततश्चेत्यादि [प्रदीपोक्तं] चिन्त्यम् । सर्वशास्त्रस्यैव स्वाभाविकप्रयोगविषयत्वेन विशिष्यात्र तदुक्त्ययोगात् । षष्ठीनिर्देशेनैव दर्भाणामभावे शरप्रस्तारेण तस्य स्वाभाविकत्वे मानाभावेन दृष्टान्तत्वायोगाच्चेति स्वोक्तमपास्तम् । शब्दनित्यत्वाय सर्वत्र तथा सत्त्वेऽपि प्रकृताशयेन तथोक्तेः । दर्भाणामित्यस्य दर्भशून्यदेशविषयकत्वेन तत्रापि स्वाभाविकत्वेन दृष्टान्तसंगतेः । अन्यथा दर्भसत्त्वेऽपि तदापत्तेश्चेति दिक् ॥ अत एवाह—स्थानषष्ठीति ॥ ॥ छाया ॥

९ अधीति । उभयोरप्यधिकारेणेत्यर्थः ॥ पूर्वोरुच्याऽग्रिमं हेत्वन्तरम् । अतएव चोन्त्ये योज्यः प्रदीप इति ध्वनयन्नाह—ननु धातोरिति ॥ इत्यर्थे ननु प्रागुक्ते ॥ ईदृशस्यादृष्टचरत्वनिरासायाह—तिङ्विकरणेति ॥ नन्वेवमपि प्रकृते सार्वधातुकाव्यवहितपरत्वस्य नोभयोः संभवोऽत आह—सार्वेति ॥ साहायके 'योपधात्' इति वुञ् ॥ इदं च भाष्यस्वारस्याच्छ्रूयमाणविकरणकलौकिकप्रयोगविषयं न वैदिकविषयं तत्रापाद्यमानरूपाभावात् ॥ छाया ॥

१० यद्यपि नाप्राप्ते इति वक्ष्यमाणनिर्दुष्टपरिहारोऽस्ति तथापि 'यक्षानुरूप' इति न्यायेन पूर्वोपस्थितत्वेन संभवेन चाह—शबादेशा इति ॥ यत इत्यादिः ॥ एवमग्रेऽपि ॥ छाया ॥

(उद्योतः) धातुत्वेन तुल्यजातीयतेत्याह—धातोरिति ॥ तस्य क्विवन्तस्येति । अत्रचेदमेवं[1] भाष्यं मानम् । प्रशामाविति तु शान्तिमद्वाचकस्य । शान्त्यर्थकस्यैव च गणे पाठः तस्यैव स्वभावेन लिङ्गाद्यभावात् । वस्तुतो गणे मान्तपाठः । प्रयोगे एव तु नत्वम् । यथा स्वरादीनां गणे रेफान्तपाठः प्रयोगे तु विसर्ग[2] इति भाष्याशयः ॥ अस्मादेवेति । धातुमात्रा[3]पेक्षं ज्ञापकमिति भावः ॥ लाक्षणिकत्वाद्वेति । वर्णग्रहणेऽपि तत्प्रवृत्तेरिति तात्[4]पर्यम् ॥

( संनिपातपरिभाषाधिकरणम् )

( २३८ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कृन्मेजन्तश्चानिकारोकारप्रकृतिः ॥ * ॥

( भाष्यम् )

**कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम् । इह मा भूत्—आधये आधेः, चिकीर्षवे चिकीर्षोरिति ॥**

(प्रदीपः) **अनिकारोकारेति** । एच एतद्विशेषणं न मकारस्य व्यवच्छेद्यासंभवात् ॥ **आधय इति** । गुणे कृतेऽन्तरङ्गबहिरङ्गयोरिति न्यायादव्ययसंज्ञा स्यात् । न लयादयः ॥ अन्तरङ्गत्वादेव च सुब्लुक् स्यात् । परिभाषान्तरप्रयोजनकथनार्थं **लक्षणप्रतिपदोक्तयोरि**त्येतदनाश्रितम् । लाक्षणिकं ह्यनुमेयं, प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम् ॥

(उद्योतः) भाष्ये ऽनिकारोकारेति । यस्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणोपदेशे एजन्तमित्यर्थादत्र न दोष इति ॥ तन्न । परिभाषयैव सिद्धे ऽन्तग्रहणं न कार्यमिति तदाशयात् ॥ गुणे कृत इति । तत्र कृते सुबनपेक्षत्वेनान्तरङ्गाऽव्ययसंज्ञा । सुपूसंबन्ध्यजपेक्षत्वादयादयो बहिरङ्गाः ॥ अन्तरङ्गत्वादेवेति । ननु वर्णमात्रापेक्षया ऽयादय एवान्तरङ्गाः ॥ एवं तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते । तेनान्तरङ्गानपीतिन्यायेन लुगिति बोध्यम् । तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनानेनैव गुणे ऽयादीन्बाधित्वाव्ययत्वं बोध्यम् ॥

( २३९ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अनन्यप्रकृतिरिति वा ॥ * ॥

( भाष्यम् )

**अथवा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ? ॥**

( समाधानभाष्यम् )

**अनन्यप्रकृतिरिति वचनमेव ज्यायः । इदमपि सिद्धं भवति—कुम्भकारेभ्यो नगरकारेभ्य इति ॥**

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ॥**

( २४० सिद्धान्तिसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ न वा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥ * ॥

( भाष्यम् )

**नवा वक्तव्यम् ।**

**किं कारणम् ? ।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्येषा परिभाषा कर्तव्या ॥**

(प्रदीपः) **संनिपातलक्षण इति** । संनिपातः संश्लेषस्तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तम् । तं संनिपातं यो विहन्ति तस्येत्यर्थः ॥

(उद्योतः) तद्विघातस्येति कर्मण्यणित्याह—तमिति । नचानया लुको बाधे ऽपि संज्ञाबाधे मानाभावः । साक्षात्परम्परया वा तद्विघातकमात्रस्यानया प्रतिबन्धात् । अत एवोपादास्तेत्यत्र कित्त्वं न । अन्यथाऽनया साक्षादेज्विषयसन्निपातविघातकक्ङिति चेति निषेधाप्रवृत्तिः स्यात् । कित्त्वं तु स्यादेव । तत्फलं तु सन्नियोगशिष्टेत्त्वसिद्धिरेव । एवं चोपादेस्तेति रूपं स्यात् । अत्रे हि किदिति न कार्यातिदेशः । इत्त्वकाले तत्कार्यासंभवात् । तस्माद्व्यपदेशातिदेश एव । तस्मात्सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्संज्ञाया अप्यने-

१ इदमेव ज्ञापकपरं भाष्यमेव । अन्यथा तदसंगतिः स्पष्टैव ॥ ननु प्रशानित्यस्याव्ययत्वे कथं प्रशामौ प्रशाम इत्यत आह—प्रशामाविति ॥ चोह्यर्थे ॥ सिंहावलोकनन्यायेनाह—वस्तुत इति ॥ अत एव प्रशाम् शब्दमित्येव पाठः । एवं च तस्य संभावनैव नेति तत्सत्त्वेऽपि न दोषः ॥ छाया ॥

२ विसर्गादीति पाठे स्वाराज्यमित्यादौ दीर्घः । स्वस्थ इत्यादौ लोपः सकारो वेति बोध्यम् ॥ छाया ॥

३ स्वरादिषु प्रशान्शब्दस्य पाठेन धातुमात्रात्प्रत्ययलक्षणेन कृदन्तत्वमुपजीव्याव्ययसंज्ञा न भवतीति ज्ञापनात् ॥ श. कौ० ॥

४ 'गौग्लौनौ'रित्यत्र नेदं सूत्रं प्रवर्तते उणादीनामव्युत्पन्नत्वात् । व्युत्पत्तिपक्षेऽपि क्विवरव्ययमित्युणादिसूत्रेण एजन्तोगादिप्रत्ययान्तश्च्व्यन्त एवाव्ययसंज्ञ इति नियमस्य कृतत्वात् ॥ श. कौ० ॥

५ अन्तरङ्गेति । परिभाषान्तरमिदम् ॥ छाया ॥

६ लाक्षणिकमिति । अन्यथेत्यादि ॥ तथाच नैवातिप्रसङ्ग इति भावः ॥ छाया ॥

७ कौस्तुभाद्युक्तिं खण्डयति—यस्त्विति ॥ परीति ॥ वक्ष्यमाणेत्यर्थः ॥ तदेति । वार्तिकेत्यर्थः ॥ लक्ष्यत इति । एवं चादावपि सा निष्फला गौरवादित्याह—तेन चेति ॥ अनेनैवं उक्तन्यायेनैव । तत्प्रयोजकत्वस्य गुणादौ सत्त्वाद् । एवं चैतदर्थपरिभाषान्तरस्वीकारो वृथैवेति भावः ॥ छाया ॥

८ संज्ञेति । तस्यास्तदविघातकत्वादिति भावः ॥ अत्र मानमाह—अत एवेति । सामान्यतः सर्वप्रतिबन्धादेवेत्यर्थः ॥ अन्यथा साक्षात्तद्विघातकमात्रप्रतिबन्धे ॥ छाया ॥

९ ननु प्राधान्यात्किदिति कार्यातिदेश इति कथमित्त्वसिद्धिः, तस्य तदकार्यत्वादत आह—अत्रहीति ॥ स्थाघ्वोरित्यत्र । यत इत्यर्थः ॥ प्रधानत्यागे बीजमाह—इत्त्वेति ॥ तस्मादुक्तानिष्टं स्यादेव ॥ उपसंहरति—तस्मा-

नाप्रवृत्तिः। अकजाद्यर्थसंज्ञा तु न। अन्तरङ्गायां तस्यां बहिरङ्गगुणादेरसिद्धत्वात् ॥

(आक्षेपभाष्यम्)

**कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत, अनन्यप्रकृतिरिति वोच्येत ॥**

(समाधानभाष्यम्)

**अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि।**

(प्रयोजनप्रश्नभाष्यम्)

**कानि पुनस्तानि?।**

(२४१ प्रयोजनवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम् ॥ * ॥

(भाष्यम्)

**[ह्रस्वत्वं तुग्विधेरनिमित्तम्। क्व। ग्रामणिकुलम्।]**

**ग्रामणिकुलं सेनानिकुलमित्यत्र ह्रस्वत्वे कृते "ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

(प्रदीपः) **ग्रामणिकुलमिति**। इको ह्रस्व इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम्। तुकि हि सति पूर्वोत्तरपदयोरानन्तर्यविघातः। यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य, अवयवावयवश्च समुदायावयवो न भवति। तदैतत्प्रयोजनं न त्वन्यथा ॥

(उद्द्योतः) **पूर्वोत्तरेति**। अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः ॥ **अवयवेति**। तथा ऽप्रतीतेरित्यभिमानः ॥ वस्तुतस्तु इगन्तपूर्वपदस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसंनिपातविघातश्चेति भाष्याशयः ॥ एवं वृत्रहभिरित्यत्र नान्तस्य स्वादिसन्निपातविघातः। नान्तस्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति ॥ लोके पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात् कैयटोक्तं चिन्त्यम्। किं च भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य दीधीवेवीटामिति निषेधो व्यर्थः स्यात्। न च ह्रस्वावयवत्वे तुको यदागमा इति न्यायेनेग्ग्रहणेन तुग्विशिष्टस्य ग्रहणान्न सन्निपातविघातः। आनेमुगिति ज्ञापकेन तदनङ्गीकारात् ॥ एतेनावयवावयवस्य समुदायावयवत्वे अवयवावयवेऽपि अवयविनां समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाप्रत्यक्षसमवेततया वायुवृक्षसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम्। भूयोवयवसंनिकर्षस्यैव फलवत्वान् कारणत्वेनाक्षतेः। संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः फलवत्वादिति दिक् ॥

(प्रयोजननिराकरणभाष्यम्)

**नैतदस्ति प्रयोजनम्। बहिरङ्गं ह्रस्वत्वम् अन्तरङ्गस्तुक्। "असिद्धं बहिरङ्गमन्तरङ्गे" ॥**

(प्रदीपः) **बहिरङ्गमिति**। द्विपदाश्रयत्वात्। यदपि **ह्रस्वो नपुंसके प्रातिपदिकस्येति** ह्रस्वत्वम्, तदपि अर्थाश्रयत्वाद्बहिरङ्गम्, तुक् तु वर्णाश्रयत्वादन्तरङ्गः। यदि तु **सन्निपातलक्षण** इत्याश्रीयते तदा ग्रामणिच्छत्रमित्यत्रापि तुग्न स्यात्। ह्रस्वत्वतुगागमयोस्तत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीति छलक्षणस्तुक् सिद्धो भवति ॥

(उद्द्योतः) असिद्धत्वेन समाधानं चावश्यकमित्याह—**यदपीति** ॥ **अर्थाश्रयत्वादिति**। इदं अयादेशे स्नन्तस्य प्रतिषेधो वक्तव्य इति स्थानिवत्सूत्रस्थेन वार्तिकेन तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धम्। प्रातिपदिकरूपसमुदायाश्रयत्वादिति वक्तुं युक्तम्। तदेवाह—**वर्णाश्रयत्वादिति**। इयंच बहिरङ्गत्वेन सिद्धिर्नाजानन्तर्य इति निषेधमनाश्रित्य ॥ कुलं ग्रामणि इत्यत्र नपुंसकह्रस्वत्वे संनिपातपरिभाषयैव न तुक्। प्रातिपादिकस्याजन्तत्वसंनिपातेन जातह्रस्वस्य तदविघातकत्वात् ॥ एतेन परनिमित्तकत्वेन कृत्स्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि ह्रस्वसमान इति नपुंसकह्रस्वत्वे तुग् दुर्वार इत्यपास्तमिति अनुपदमेव वक्ष्यामः ॥ तुकि संनिपातपरिभाषाश्रयणे दोषमप्याह—**यदित्विति**। अत्रापि वर्णमात्राश्रयत्वेन तुगन्तरङ्गः पूर्वपदोत्तरपदाश्रयो ह्रस्वो बहिरङ्गस्तद्दोषेष्वस्यागणनाच्च। तस्मादत्र तुग्न भवत्येवेत्यन्ये ॥

---

दिति। विघातकक्ङितिचेति शास्त्रप्रवृत्तौ निमित्तभूतक्त्वातिदेशाभाववदित्यर्थः ॥ नन्वेवमप्यकजाद्यर्थं संज्ञा स्यादेव तत्र तद्विघातकत्वस्य तस्याभावादत आह—अकजेति ॥ छाया ॥

१ प्रयोजनमिति ॥ ग्रामणिकुलमित्यादौ ह्रस्वत्वं तुग्विधेरनिमित्तमिति परिभाषाप्रयोजनमित्यर्थः ॥ एवमग्रेऽपि सर्वत्र ॥ छाया ॥

२ अयं कोष्ठकान्तर्गतो भाष्यग्रन्थोऽत्र त्रुटितो भवेत् अग्रिमभाष्यशैलीसंवादेन त्वत्र न्याय्य इति मत्वाऽस्माभिः कोष्ठकमध्ये स्थापितः ॥ दाधिमथाः ॥

३ पूर्वपदस्याशाब्दत्वादाह—अधीति ॥ तथाऽप्रतीत्यकारघटितच्छेदः ॥ अग्रेऽप्येवमित्याह—एवमिति ॥ इतीत्यस्य बोध्यमिति शेषः ॥ अभिमान इति सूचितारुचिमाह—लोक इति ॥ एवं तस्य लोकसिद्धत्वमुक्त्वा शास्त्रसिद्धत्वमाह—किं चेति ॥ तथासतीति शेषः ॥ तदनङ्गीति ॥ अन्यथा तुग्विशिष्टस्य तत्राप्यकूग्रहणेन ग्रहणे दीर्घापत्त्या तद्वैयर्थ्यं स्पष्टमेवेति। तेन तद्विशिष्टस्य न्यायमात्रग्रहणाभावस्य ज्ञापनमित्यर्थः ॥ छाया ॥

४ दण्डयुक्तिं खण्डयति—एतेनेति। अस्यार्थमाह—भूयोवेति ॥ दृष्टान्तवैपम्यमाह—संयोगेति ॥ छाया ॥

५ संनिपातपरिभाषया तत्रासिद्धेराह—असिद्धेति ॥ कैयटं दूषयति—इदमिति ॥ तथा सति तिस्रादेशस्य बहिरङ्गत्वेनासिद्धत्वात्प्राप्तिरेव नेति वार्तिकासंगतिः स्पष्टैव ॥ तस्याज्ञानकल्पनेऽप्याह—तत्प्रत्येति। परत्वात्तिस्रादेशे सकृद्गतिन्यायेन पुनः स नेत्येवमित्यर्थः ॥ अन्यथा तत्राप्युक्तरीत्यैव तदप्राप्त्या तन्न्यायेन वारणासंगतिः स्पष्टैव ॥ उपलक्षणत्वेन कैयटं योजयति—प्रातीति ॥ तदेवेति। तदेव ध्वनयन्नाहेत्यर्थः। इयं भाष्याद्युक्ता। तदाश्रयणे तु संनिपातेत्येव शरणम्। तदेव ध्वनयन्निक इति ह्रस्वाभावाय व्युत्क्रमेणाह—कुलमिति ॥ एतेन तथा वारणेन ॥ छाया ॥

६ इदमपि दूषयति—अत्रापीति ॥ ग्रामणिच्छत्रमित्यत्रापीत्यर्थः ॥ नन्वनित्यत्वात्तदप्रवृत्तिरत आह—तदिति ॥ निषेधाश्रयणे तु संनिपातेति वारणमेवेत्याह—तस्मादिति ॥ छाया ॥

( २४२ प्रयोजनवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ नलोपो वृत्रहभिः ॥ * ॥

( भाष्यम् )

[नलोपस्तुग्[1]विधेरनिमित्तम्। क। वृत्रहभिः।]

वृत्रहभिर्भ्रूणहभिरित्यत्र नलोपे कृते "ह्रस्वस्य पिति कृति तुक्" प्राप्नोति।

"संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति॥

(उद्द्योतः) [2]वृत्रहभिरित्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम्॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम्। असिद्धो नलोपः तस्यासिद्धत्वान्न भविष्यति॥

(प्रदीपः) असिद्धो नलोप इति। नलोपः सुपूस्वरे[3]त्यसिद्धं बहिरङ्गमिति वा॥

(उद्द्योतः) असिद्धमिति। सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो बहिरङ्ग इति भावः॥

( २४३ प्रयोजनवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ उदुपधत्वमकित्त्वस्य निकुचिते ॥ * ॥

( भाष्यम् )

उदुपधत्वमकित्त्वस्यानिमित्तम्॥

क?।

निकुचिते। निकुचितमित्यत्र नलोपे कृते "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" इत्यकित्त्वं प्राप्नोति।

"संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति॥

(प्रदीपः) निकुचित इति। कुञ्चेर्भावे क्तप्रत्ययः। अनिदितामिति नलोपः। तत्र कित्त्वनिमित्तमुदुपधत्वमुदुपधादिलकित्त्वस्यानिमित्तमिति गुणो न भवति॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम्। अस्त्वत्राकित्त्वम्, "न[4] धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति॥

( २९४ प्रयोजनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ नाभावो यञि दीर्घत्वस्यामुना ॥ * ॥

( भाष्यम् )

नाभावो यञि दीर्घत्वस्यानिमित्तम्॥

क?॥

अमुना। नाभावे कृते "अ[5]तो दीर्घो यञि" "सुपि च" इति दीर्घत्वं प्राप्नोति।

'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति॥

(प्रदीपः) अमुनेति। न मु न इत्यस्यायमर्थः—ने कर्तव्ये मुभावः सि[6]द्धो भवति, न तु ने परतो यद्दीर्घत्वं प्राप्नोति। तत्र मुभावस्यासिद्धत्वादकारान्तत्वाद्दीर्घप्रसङ्गः। तस्मिन् कृते अदसोऽसेरिति दीर्घस्य दीर्घे ऊकारः प्राप्नोति। ततश्चामूनेति स्यात्। उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्याऽनिमित्तमिति सिद्धममुनेति॥

(उद्द्योतः) यद्दीर्घत्वं प्राप्नोतीत्यस्य तत्रापि मुभावः सिद्ध इत्यर्थ इति शेषः॥ त[7]त्रेति। अस्य च एवं चेत्यादिः॥ क्वचित्तु प्राप्नोति तत्र। तथा च तत्रेति पाठः॥ असिद्धत्वादिति। शास्त्रासिद्धत्वादिति भावः॥ कृतेदसोसेरिति॥ ननु मुत्वासिद्ध्या उकारे एवाकारबुद्धौ सुपिचेत्यन्तरतमे दीर्घे आकारे मस्य स्वत एव सत्त्वाद्यात्परत्वाभावेन कथमनेन दीर्घोकारप्रवृत्तिरिति चेन्न। लोकसिद्धसंनियोगशिष्टन्यायेन [8]मुत्वस्यापि निवृत्तेर्यात्परत्वसत्त्वात्। नचाचः परस्मिन्निति स्थानिवत्त्वाद्दीर्घस्य

---

१ अयं भाष्यग्रन्थोऽत्र त्रुटितो भवेत् अग्रिमभाष्यशैलीसंवादात्। अतोऽस्माभिः कोष्ठकमध्ये स्थापितः॥ दाधिमथाः॥

२ साक्षादभावादाह—वृत्रहभिरिति॥ णत्वमित्यस्य बोध्यमिति शेषः॥ ॥ छाया॥

३ कृतितुग्ग्रहणस्य प्रत्याख्यानादाह—असिद्धमिति॥ छाया॥

४ न धातुलोप इति॥ सूत्रमतेनेदम्। सिद्धान्ते त्विदं फलमेव॥छाया॥ वस्तुतस्तु "तत्राशक्यं वर्णेनाप्यनर्थकेन किं पुनरियता सूत्रेण" "सामर्थ्ययोगान्नहि किंचिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्" इति सिद्धान्तानुसारेणादृष्टार्थमवश्यं पठितव्येन सूत्रेणैव कार्यनिर्वाहोऽपि। प्रत्याख्यानं तूपायान्तरप्रदर्शनार्थैव। तथाचोपायस्योपायान्तरादूषकत्वेन न तत्राभिनिवेशो भगवतः। अतएव क्रियते न्यास एव इति तत्र तत्रोक्तं स्वरसतः संगच्छते॥दा०

५ अत इति॥ अनुवृत्त्यर्थमुक्तम्॥

६ 'ने नाभावे नासिद्धः' इति शाब्दोर्थः। तत्फलितमाह—सिद्ध इति। अन्यथा मुत्वस्य सिद्धत्वान्नाभाव एव तावन्न स्यादिति भावः॥ छाया॥

७ तत्रेतीति। दीर्घे इत्यर्थः॥ ननु कार्यासिद्धत्वेन स्थानिनोऽनिवृत्त्या स्वाभावे (?)सुतरां तदभावात्कथमकारान्तत्वमत आह—शास्त्रेति॥ लोकेति। समुदायकार्य इत्यर्थः॥ यद्यपीयं बिल्वकादिभ्यश्छेति छग्रहणेन ज्ञापिता तथापि समुच्चयविषये न्यायसिद्धत्वमेवेति भावः॥ छाया॥

८ मस्यापि निवृत्तेरिति पाठः। मुत्वस्यापीति पाठे उत्ववन्मस्यापीत्यर्थः॥ दीर्घस्य आकारस्य॥ नान्यतरेति। मकारोकारान्यतरेत्यर्थः॥ तथा च न परिभाषाप्रवृत्तिरिति भावः॥ पूर्वत्रेति। अदसोसेरित्यत्र कार्यार्थमुपस्थितायाः परिभाषायास्तत्त्वादिति भावः॥ ननु लक्ष्ये लक्षणेति न्यायेन पुनर्नात आह—लक्ष्ये इति॥ विकारान्यानुपूर्व्या अभेदेन लक्ष्यभेदाभाव इति न पुनः स इत्यरुचिरभिमानपदेन सूचिता। तदेवाह—केचिदिवति॥ उक्तन्यायाभावे आद्यम्, तदाश्रयणेऽन्त्यम्। इति इत्यस्य॥छाया॥

नान्यतरापाय इति वाच्यम् । पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात् । लक्ष्ये लक्षणस्येति न्यायस्तु न, लक्ष्यभेदादित्यभिमानः ॥ केचित्तु अमाना अदाना इति वापत्तिरित्याहुः ॥ दीर्घत्वस्येति । उकारस्वरूपविनाशकस्येत्यर्थः ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—"न मुटादेशे" इति ॥**

(प्रदीपः) **नमुटादेश इति** । अनेकविभक्त्यन्तस्तत्र समास आश्रितः—टायां आदेशः टायामादेश इति ॥

(उद्द्योतः) नन्वेवमपि टादेश एव सिद्धत्वं स्यादत आह—अनेकेति । अनेकविभक्त्यन्तपूर्वपद इत्यर्थः । संबन्धसामान्यषष्ठ्या समास इति तात्पर्यम् ॥

( २४५ प्रयोजनवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ आत्वं कित्त्वस्योपादास्त ॥ * ॥**

( भाष्यम् )

**आत्त्वं कित्त्वस्यानिमित्तम् ॥**

**क ? ॥**

**उपादास्तास्य स्वरः शिक्षकस्येति । आत्त्वे कृते "स्थाघ्वोरिच्च" इतीत्त्वं प्राप्नोति ।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

(प्रदीपः) **उपादास्तेति** । एज्विषय आत्त्वविधानादकित्त्वसन्निपातनिमित्तमात्त्वं स्थाघ्वोरिच्चेति कित्त्वस्यानिमित्तम् । कित्त्वसंनियुक्तं चेत्त्वमिति कित्त्वाभावे न भवति ॥

(उद्द्योतः) **कित्त्वस्येति** ॥ भाष्येऽपि स्थाघ्वोरिच्चेति किरवं प्राप्नोतीति पाठः । इत्त्वमिति पाठे कित्त्वसहितमित्त्वमित्यर्थः ॥ कित्त्ववारणेपीत्त्वं स्यादत आह—कित्त्वेति ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । उक्तमेतत्—* दीङः प्रतिषेधः स्थाघ्वोरित्त्वे* इति ।**

१ अनतिप्रसङ्गाय तत्स्वरूपमाह—छाया इति ॥ छाया ॥

२ यथाश्रुतासंगतेराह—अनेकेति ॥ ननु सकृदुच्चारितवाक्ये तत्त्वमपि बाधितमत आह—संबन्धेति ॥ छाया ॥

३ एज्विषय इति । चेनेत्यर्थः ॥ छाया ॥

४ कैयटाशयमाह—भाष्येऽपीति ॥ कित्वेति । नन्वित्यादिः ॥ पीतमिति । तस्य तद्विघातकत्वात् ॥ छाया ॥

५ दीङ इति । इत्त्वयुतकित्त्वे कार्ये दीङो घुसंज्ञा नेति वार्तिकार्थः । इदमपि वार्तिकरीत्या अपूर्ववचनतोऽस्या एवौचित्यात् ॥ छाया ॥

( २४६ प्रयोजनवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ तिसृचतसृत्वं ङीब्विधेः ॥ * ॥**

( भाष्यम् )

**तिसृचतसृत्वं ङीब्विधेरनिमित्तम् ॥**

**क ? ।**

**तिस्रस्तिष्ठन्तीति चतस्रस्तिष्ठन्तीति । तिसृचतसृभावे कृते "ऋन्नेभ्यो ङीप्" इति ङीप् प्राप्नोति । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—न तिसृचतसृभावे कृते ङीब् भवतीति यदयं "नँ तिसृचतसृ" नामि दीर्घत्वस्य प्रतिषेधं शास्ति ॥**

(प्रदीपः) **यदयमिति** । ननु समस्तार्थमेतत्स्यात् प्रियतिसृणां ब्राह्मणानामिति । अत्र ह्यङ्गं पुंसि वर्तत इति नास्ति ङीपः प्राप्तिरिति केचित् ॥ तदयुक्तम् । न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति । तत्राऽवयवस्य स्त्रीत्ववृत्तित्वाद् ङीपः प्राप्तिः केन वार्यत इति ज्ञापकमेव ॥ ज्ञापकादेव च सिद्धत्वात् स्वस्रादिष्वनयोः पाठो न कर्तव्यो भवति ॥

(उद्द्योतः) **नास्ति ङीप इति** । यस्त्वन्तरङ्गत्वात्समासात्पूर्वमेव ङीबिति । तन्न । अन्तरङ्गानपीति न्यायेनान्तर्वर्तिविभक्त्याश्रयतिस्रादेशस्याप्रवृत्तेः ॥ ज्ञापकमेवेति । ङ्यन्ते तु नास्य प्रवृत्तिर्विभक्तौ लिङ्गविशिष्टाग्रहणात् ॥ नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह—ज्ञापकादेवेति । एवंचैतज्ज्ञापकपरभाष्यप्रामाण्यात्स पाठोऽप्रामाणिक इति भावः ॥

( प्रयोजनभाष्यम् )

**इमानि तर्हि प्रयोजनानि—'शतानि सहस्राणि' नुमि कृते "ष्णान्ताषट्" इति षट्संज्ञा प्राप्नोति । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

(प्रदीपः) **शतानीति** । विभक्तिसन्निपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम् । ष्णान्ताषडित्यन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थमित्यत्र न भविष्यतीति चेत् । संख्यासंप्रत्ययार्थं बहुव्रीह्यर्थं तत् स्यादित्यदोषः ॥

६ 'तिसृचतसृत्वं ङीब्विधेस्तिस्रः' इत्येवं वार्तिकपाठः पूर्वोत्तरसंवादात् ॥ छाया ॥

७ न तिसृचतस्रिति । इत्यनेनेति शेषः ॥ छाया ॥

८ तत्रेति । समस्ते इत्यर्थः ॥

९ दण्डयुक्तिं खण्डयति—यस्त्विति ॥ तिस्रेति । तदादीत्यर्थः ॥ ननु प्रातिपदिकग्रहण इति परिभाषया ङ्यन्तेऽप्यस्य प्रवृत्तिरिति न ज्ञापकत्वमत आह—ङ्यन्तेस्त्विति ॥ एवं ज्ञापकेन ङीपो वारणे ॥ एवं च ज्ञापकेन सिद्धौ च ॥ छाया ॥

(उद्योतः) **विभक्तिलुकइति** । तन्निमित्तसंज्ञायाश्चेत्यपि बोध्यम् ॥ **अन्तग्रहणमिति** । तत्सामर्थ्यादिति मन्यते ॥ सामर्थ्यमसिद्धमिति परिहारः—**संख्येति** । बहुव्रीहेः फलं संख्यासंप्रत्ययः ॥

(प्रयोजनभाष्यम्)

**शकटौ पद्धतौ । अत्त्वे कृते "अत" इति टाप् प्राप्नोति ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

(प्रदीपः) **शकटाविति** । विभक्तिसंनिपातकृतमत्वं यदि टापो निमित्तं स्याद् आनन्तर्यं विहन्येत । शास्त्रीये च कार्येऽन्तादिवद्भावो नानन्तर्ये लौकिके । टापि च सति शकटायामिति स्यात् ॥ **अच्च घेरिति** तपरकरणेनाप्यत्र टाब् निवर्तयितुं शक्यते । इदुतोर्हि स्थाने मात्रिक एवाकारो भविष्यति भाव्यमानत्वाद्वा सवर्णस्याकारो ग्राहको न भविष्यतीति लक्षणान्तरेणापि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं संपद्यते ॥

(उद्योतः) **विभक्तीति** । घेः परस्य ङेरौद्, घेरन्तादेशश्चाकार इति सूत्रार्थात् ङ्यादेशौत्वसन्नियोगेन विधीयमानमत्वमङ्गप्रत्ययसन्निपातकृतमित्यर्थः ॥ नन्वेकादेशेऽन्तवद्भावान्न टाब् व्यवधायकोऽत आह—**शास्त्रीयेचेति** ॥ ननु टापि वृद्ध्येकादेशे शकटाविति सिध्येदत आह—**टापि चेति** । वृद्धेः परत्वादाङ्गत्वाच्च याडामाविति भावः ॥ **संपद्यत इति** । तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात् । टाप्तु स्यादेव । किं च शकटावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम् ॥

(प्रयोजनभाष्यम्)

**इयेष उवोष । गुणे कृते "इजादेश्च गुरुमतोऽनृच्छः" इत्याम् प्राप्नोति ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

(प्रदीपः) **इयेषेति** । आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसंनिपातस्य विघातः स्यात् । **उषविदेति** विकल्प ओपांचक्रतुः ऊषतुरित्यादौ सावकाश इत्युवोषेति नित्य आम् प्रसज्येत ॥ **प्रतिपदविधेस्तु** बलवत्त्वात्परत्वाच्चात्रापि विकल्पेनैव भाव्यमित्यनुदाहरणमेतत् । **गुरुमत** इति नित्ययोगे मतुवाश्रयणादपि शक्योऽत्रामभावः प्रतिपादयितुम् ॥

(उद्योतः) **लुक् स्यादितीति** । लुगभावेऽपि शकटावितिवचत्संनिपातेन गुणो जातस्तदानन्तर्यविघातस्य सत्त्वेनैतत्कथनस्योपयोगश्चिन्त्यः ॥ ननूषविदेत्याम्विधानादुवोषेत्यसङ्गतमत आह—**उषविदेति** । तत्र न द्विर्वचनात्प्राग् गुरुमत्त्वमिति भावः ॥ **प्रतिपदविधेरिति** । क्वचिद्गुणे क्वचिद्द्वित्वैकादेशे गुरुमत्त्वादिजादेरित्येतन्नाप्राप्तमिति भावः ॥ **परत्वादिति** । तदुक्तस्य ऊषतुरित्यस्यावकाशत्वमभ्युपगम्येदमुच्यते ॥ **उवोखेति** कवर्गद्वितीयान्तो वा भाष्ये पाठः ॥ उषेर्विकल्पेन पक्षे आमभावेऽपि कृतद्वित्वाद् उवोषो दुर्वार एवाम् ॥ रूपे चास्यैव विशेष उवोषाञ्चकारेति ॥ उषेस्त्वामि ओषांचकारेति परे ॥ **नित्ययोगेति** । इजादेर्गुरोरित्युक्तावपि अनृच्छ इति प्रतिषेधादिजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणादिति भावः ॥ परेत्वेवं सत्यनृच्छ इत्यस्यानर्थक्यापत्तिः । तुगुत्पत्तेः प्राग् गुरुमत्त्वाभावाद् । उम्भादीनां गुरुमतामाम्नापत्तेश्च । तेषामाशीर्लिङि गुरुमत्त्वाभावादिति भाष्याशयमाहुः ॥

---

१ यद्यपि भाष्ये पदसंज्ञा आपादिता तथापि तन्मात्रकृतानिष्टाभावेन तत्रेष्टापत्तिः । किंच कार्यकालपक्षे संज्ञाशास्त्रस्य न पृथग्वाक्यार्थबोध इति कैयटेन लुक्पर्यन्तानुधावनं कृतम् । भाष्ये तावदेवोक्तिस्तु पक्षद्वयसाधारणतयाऽत एव द्वितीयपक्षेणाह—तन्निमित्तेति ॥ षष्ठीतत्पुरुषः ॥ हार इत्यस्य संख्येतीत्यत्रान्वयः ॥ संख्यासंप्रत्ययार्थं यो बहुव्रीहिस्तदर्थमिति कैयटार्थसूचनायाह—बहुव्रीहेरिति ॥ तथासति स्त्रीलिङ्गनिर्देशात्तस्या एव ग्रहणमिति भावः ॥ छाया ॥

२ ननु तदभावे सवर्णग्रहणादाकारः स्यादत आह—इदुतोरिति । स्थानेन्तरेति भावः ॥ अभ्युपेत्येदम्, वस्तुतस्तदेव नेत्याह—भाव्येति ॥ लक्षणान्तरेति । टापि सति सवर्णदीर्घः स्यादिति भावः ॥ छाया ॥

३ ननु विभक्तावविधानेन कथं विभक्तिसंनिपातकृतमत्वमत आह—घेरिति ॥ टापि सत्यपि वृद्धिरूपैकादेशे । सिध्येदेवेति पाठः ॥ व्युत्क्रमेणाह—याडामाविति । आम्याटावित्यर्थः ॥ छाया ॥ .

४ दण्डशुक्तमाह—तपरेति ॥ नहि लक्षणद्वयबाध उचितः । अनुपपत्तिपरिहारस्य तावतैव संभवात् ॥ तथा च तेन तद्विघातात्तदभावार्थं परिभाषैव शरणमिति भाष्यं सम्यगेवेति भावः ॥ अभ्युपेत्यापि स्वयं युक्त्यन्तरमाह—किं चेति सिद्धान्त इति भावः ॥ तथा च तत्सुखसुखार्थमेव ॥ छाया ॥

५ 'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते, तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इत्येवं प्रत्ययोत्तरपदयोश्चेति सूत्रस्थप्रदीपस्य 'विरुद्धयोर्द्वयोः शास्त्रयोः संनिपात एकलक्ष्ये प्रवृत्तौ यत् पराद्यन्यतमं तद्भवति । तेषां परनित्यादीनां मध्ये मिथः परनित्याद्योर्युगपत्प्रसङ्ग उपात्तक्रमेण यत्परं तद्बलवदित्यर्थः । विरोधिसंनिपात इत्यनेन भिन्नविषयागमादेशयोर्नापवादत्वमिति सूचितमिति केचित् । तन्न, तुग्घुटोर्बाध्यबाधकत्वानापत्तेः ॥' इत्येवमुद्द्योते व्याख्या दृश्यते ॥ दाधिमथाः ॥

६ प्रदीप इतीत्यस्य इत्यतोऽपीत्यर्थः । तत्रापिना तत्समुच्चयः । तदाह—लुगिति ॥ आम्विधानादिति । आम्विकल्पविधिसामर्थ्यादित्यर्थः ॥ उवोषेति । उदाहरणमित्यर्थः ॥ तत्रेति । यदि तदुत्तरमपि स्यात्तर्हि विकल्पवैयर्थ्यमेव । अत्र तु द्विर्वचनेचीत्यस्य स्थानिवत्त्वनिषेधकत्वपक्षे द्वित्वात्पूर्वं गुणेन तत्त्वमिति तं बाधित्वा आम् स्यादिति भावः ॥ छाया ॥

७ प्रतिपदविधित्वमपवादत्वं नान्यादृशमित्याह—क्वचिदिति ॥ तदुक्तस्येति । उदाहरणत्ववादिनोक्तस्येत्यर्थः । तथा च तदनुरोधेनेदम् । परमार्थतस्तु पूर्वोक्तमेवेति भावः ॥ भाष्यं समर्थयते—उवोखेतीति ॥ छाया ॥

८ तथापि यथाश्रुतमेव युक्तमित्याह—उषेरिति ॥ द्विर्वचनेऽचीत्यादेशनिषेधकमित्याशयेनाह—कृतेति ॥ तद्वैयर्थ्यं तु नेत्याह—रूपेचेति ॥ अग्रेप्योषांचक्रतुरूषांचक्रतुरिति बोध्यम् ॥ एवं च नाप्राप्तित्वेऽपि संभवे सत्यपि यौगपद्याभावात्तन्न्यायाप्रवृत्तिरिति गूढाकूतं भगवत इति दिक् ॥ छाया ॥

९ गुर्वन्तादित्याद्यर्थान्तरनिरासायाह—अनृच्छ इति ॥ कैयटं दूषयति—परेस्त्विति ॥ तस्मात्तथा न युक्तम् ॥ छाया ॥

१० गुरुमतामिति । संबन्धित्वविवक्षया षष्ठी ॥ छाया ॥

( २४७ दूपणवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ॥ * ॥

( भाष्यम् )

**तस्यैतस्य लक्षणस्य[1] दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात् ॥**

**क ? ॥**

**"अत इञ्" दाक्षिः प्लाक्षिः ॥**

**(प्रदीपः) दाक्षिरिति ।** प्रयोगे व्यवस्थितस्यैवेकारस्यान्वाख्यानमनेन क्रियत इति संनिपातलक्षणत्वं प्रत्ययस्य संभाव्यते ॥

**(उद्द्योतः)** नन्विञ्प्रत्ययो नोभयाधिष्ठानसंवन्धलक्षणसन्निपाताश्रय इत्यत आह—**प्रयोगे इति** ॥ **अन्वाख्यानं** साधुत्वेन[2] ॥ प्रत्ययस्य साधुत्वावच्छिन्नस्य ॥

( दूपणवाधकभाष्यम् )

**न प्रत्ययः संनिपातलक्षणः ॥**

**(प्रदीपः) न प्रत्यय इति ।** कल्पितप्रकृतिप्रत्ययविभागेनान्वाख्यानात्प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः ॥

**(उद्द्योतः) अविद्यमान एवेति ।** मैन्दमध्यानां[3] तथैव प्रतीतेः । साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं न प्रत्ययस्येति भावः ॥

( दूषणसाधकभाष्यम् )

**अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् ॥**

**(प्रदीपः) अङ्गसंज्ञेति ।** सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः । तत्र **वर्णविचालस्यानिमित्तं स्यादिति** अङ्गसंज्ञाद्वारेणेत्यर्थः । अत्र केचिद्वर्णाश्रय इति व्याचक्षते । तेषामात्रेयाद्यप्युदाहरणम् ॥ अन्ये **त्ववर्णाश्रय** इत्यकारप्रश्लेषमाहुः ॥

**(उद्द्योतः) सत्यामिति ।** यैस्मादित्यस्य[4] प्रत्ययविधावुद्देश्यतावच्छेदकावच्छिन्नादित्यर्थेऽवर्णान्तादिञि तदङ्गसंज्ञमिति सूत्रार्थ इति भावः ॥ यद्यङ्गसंज्ञाऽनिमित्तम्, कथं तर्हि वार्तिके प्रैत्यय[5] इत्युक्तमत आह—**तत्रेति** ॥ **आत्रेये** 'इतश्चानिञ' इति ढक् ॥

परे तु[6] वार्तिकस्यायमाशयः—निमित्तनिमित्तिनोः संवन्धवद् विशेषणविशेष्ययोः संवन्धोऽपि सन्निपातः । एवं च प्रातिपदिकस्यादन्तत्वसंवन्धनिमित्तः प्रत्ययस्तद्विघातस्यानिमित्तमिति ॥ इममाशयमजानानः शङ्कते—**न प्रत्यय इति** ॥ एकदेश्युत्तरयति—**अङ्गसंज्ञा तर्हीति** । युक्तं चैतत् । उपजीव्यविरोधस्यान्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु त्वयेव मयाप्यनित्यत्वेन सुशकवारणः । अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे तुङ् । उपजीव्यस्य प्रातिपदिकाजन्तत्वसंवन्धस्य विघातात् ॥ वहिरङ्गपरिभाषयाऽसिद्धत्वं तु न । तस्य तत्त्वाभावात् । शैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या **वर्णाश्रय** इत्यंशस्य वार्तिके वैयर्थ्यापत्तेश्चेत्याहुः ॥

( २४८ दूपणवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ आत्वं पुग्विधेः क्नापयति ॥ * ॥

( भाष्यम् )

**आत्वं पुग्विधेरनिमित्तं स्यात् ॥**

**क ? ।**

**क्नापयतीति ॥**

**(प्रदीपः) क्नापयतीति ।** णिचि वृद्धौ[7] कृतायामात्वं पुको न निमित्तं स्याद्, अङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वा दोषोपन्यासः ॥

**(उद्द्योतः)** आत्वम् 'क्रीङ्जीनां णौ'विति ॥ स्वाङ्गस्याव्यवधायकत्वादाह—**आकार इति** । श्रुतत्वात्तस्यैव पुगिति भावः ॥

परे तु[9] पुकोऽङ्गभक्तत्वेऽपि न क्षतिः, यादृशयोः सन्निपातः पुङ्निमित्तं तस्य विघातसत्त्वाद् । यदागमा इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याभावात् ॥ अत्रेदमेव भाष्यं मानम् । ह्रस्वत्वं तुग्विधेरित्यादि च । सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहुः ॥

---

१ लक्षणस्य संनिपातेति परिभाषारूपस्य ॥ दोपः अतिव्याप्तिः ॥ विचालो नाशः ॥ छाया ॥

२ आकाङ्क्षायामाह—साधुत्वेनेति ॥ अत एव यथाश्रुतासंगतेराह—साधुत्वेति ॥

३ अस्य सिद्धान्तत्वाभावादाह—मन्देति । व्यक्त्यभिप्रायं बहुवचनम् ॥ सिद्धान्तेनाप्यत एवाह—साधुत्वेति ॥ छाया ॥

४ ननु सामान्यरूपेण तस्या उभयसंनिपातलक्षणत्वेऽपि न विशेपरूपेणात आह—यस्मादिति ॥ अस्माल्लक्ष्यसंस्कारकवाक्योपप्लव इत्याह—अवर्णादिति ॥ छाया ॥

५ प्रत्यय इति ॥ इत्येतदन्तमित्यर्थः । एवं च वार्तिकासंमतमिदं भाष्योक्तमिति भावः ॥ तत्रेतीति । वार्तिक इत्यर्थः ॥ तथा च स तन्निमित्तकसंज्ञापर इति भाष्योक्तस्तच्छब्दार्थः । तत्फलितमुक्तं कैयटेनेति भावः ॥ छाया ॥

६ कैयटदण्डिकृष्णाद्युक्तिं खण्डयति—परेरित्यादिना ॥ उक्तं समर्थयते-युक्तमिति ॥ एतदिति । षष्ठीतत्पुरुषः ॥ नन्वेवमन्यत्रातिप्रसङ्गापत्तिरत आह—अतीति ॥ अस्यावश्यकत्वमाह—अतएवेति ॥ अस्यार्थमाह—उपेति ॥ कैयटाद्युक्तिं खण्डयति—वहिरिति ॥ तत्त्वाभावादिति ॥ इदं चानुपदमेव प्रागुक्तम् । प्रातिपदिकसमुदायाश्रयत्वेन तत्त्वं तु नेष्टमिति भावः ॥ तद्भाष्योपरि दोपमाह—शैव इति ॥ त्वानापत्त्या तदभावापत्त्या । उक्तरीत्येति भावः । प्रत्यय इत्यस्यावश्यकत्वादाह—अंशस्येति ॥ छाया ॥

७ वार्तिकमतेनाह—वृद्धाविति ॥

८ इति । इत्यनेन ॥ स्वाङ्गस्येति । अङ्गस्य पुकीत्यादिः ॥

९ खण्डयति—परेरिवति ॥ ननु यदेति न्यायेन न तद्विघातोऽत आह—यदेति ॥ नन्वीदृशग्रहणे किं मानमत आह—अत एवेति ॥ नन्विदं तथापि सुयोजमत आह—ह्रस्वत्वमिति ॥ प्रागुक्तमिति भावः ॥ अङ्गभक्तत्वमत्र सिद्धान्त इति कैयटाद्याकूतं खण्डयन्नाह—सिद्धान्तेति ॥ प्रतिविधेयमिति वक्ष्यमाणेत्यर्थः ॥ एवेन तद्व्यवच्छेदः ॥ छाया ॥

( २४९ दूषणवार्तिकम् ॥ १२ ॥ )

॥ * ॥ पुग् ह्रस्वत्वस्यादीदपत् ॥ * ॥

( भाष्यम् )

पुग् ह्रस्वत्वस्यानिमित्तं स्यात् ॥

क ? ।

अदीदपदिति ॥

(उद्द्योतः) भाष्ये—पुक् ह्रस्वत्वस्येति । ण्याकारसन्निपातनिमित्तः पुग् । ह्रस्वे हि तद्विघातः स्पष्ट एव । न च ह्रस्वस्य चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिः । [1]एतद्भाष्यप्रामाण्येनानयाऽसिद्धस्यापि निवृत्तिस्वीकारात् । किं च तया शास्त्रीयकार्येऽसिद्धत्वेऽपि लौकिके सन्निपातेऽसिद्धत्वाभावात् ॥

( २५० दूषणवार्तिकम् ॥ १३ ॥ )

॥ * ॥ त्यदाद्यकारष्टाब्विधेः ॥ * ॥

( भाष्यम् )

त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात् ॥

क ? ॥

या सेति ॥

( २५१ दूषणवार्तिकम् ॥ १४ ॥ )

॥ * ॥ इड्विधिराकारलोपस्य ययिवान् ॥ * ॥

( भाष्यम् )

इड्विधिराकारलोपस्यानिमित्तं स्यात् ॥

क ? ॥

ययिवान् तस्थिवानिति ।

(उद्द्योतः) भाष्ये—इड्विधिरिति । [2]वस्वेकाजादित्याकारान्तलक्षण इट् । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति भावः ॥

( २५२ दूषणवार्तिकम् ॥ १५ ॥ )

॥ * ॥ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ॥ * ॥

( भाष्यम् )

मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्याऽनिमित्तं स्यात् ॥

क ? ॥

अग्निमान् वायुमान् परमवाचा परमवाचे इति ॥

(प्रदीपः) अग्निमानिति । पूर्वमुदात्तमाश्रित्य मतुप उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात् ॥ परमवाचेति । अन्तोदात्तादुत्तरपदादिति विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्यानिमित्तं स्यात् ॥

(उद्द्योतः) पूर्वमिति । [3]ह्रस्वनुड्भ्यामित्यत्रान्तोदात्तादित्यनुवृत्तेरिति भावः ॥

( २५३ दूषणवार्तिकम् ॥ १६ ॥ )

॥ * ॥ नदीह्रस्वत्वं संबुद्धिलोपस्य ॥ * ॥

( भाष्यम् )

नदीह्रस्वत्वं संबुद्धिलोपस्यानिमित्तं स्यात् ॥

क ? ।

नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु इति । नदीह्रस्वत्वे कृते "एङ्ह्रस्वात्सम्बुद्धेः" इति संबुद्धिलोपो न प्राप्नोति ॥

(उद्द्योतः) ह्रस्वत्वम्–अम्बार्थेत्यनेन ॥

( दूषणबाधकभाष्यम् )

मा भूदेवम् । ङ्यन्तादित्येवं भविष्यति ॥

(प्रदीपः) माभूदिति । हल्ङ्यादिसूत्रे दीर्घग्रहणम[4]दृष्टेदमुच्यते । तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद्भविष्यतीति भावः ॥ ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते, तस्याङ्यावन्तत्वात् ॥

( दूषणसाधकभाष्यम् )

न सिध्यति । [4]दीर्घादित्युच्यते, ह्रस्वान्ताच्च न प्राप्नोति ॥ इदमिह संप्रधार्यम्—ह्रस्वत्वं क्रियतां संबुद्धिलोप इति ॥

किमत्र कर्तव्यम् ? ।

परत्वाद् ह्रस्वत्वम् ॥

( दूषणबाधकभाष्यम् )

नित्यः संबुद्धिलोपः । कृते ह्रस्वत्वे प्राप्नोति, अकृतेऽपि ॥

(प्रदीपः) नित्य इति । [5]कार्यं तावन्नित्यं तयेन केनचिल्लक्षणेन भवत्विति भावः ॥ संबुद्धिलोपस्यावकाशो हे देवदत्तेति ॥

(उद्द्योतः) ननु ह्रस्वग्रहणं निरवकाशत्वेन सन्निपातपरिभाषाबाधकं [6]स्यादत आह—संबुद्धिलोपस्येति ॥

---

१ अभ्युपेत्यादावाह—एतदिति ॥ वस्तुतस्तदेव नेत्याह—किं चेति ॥ तस्याशास्त्रीयत्वादिति भावः ॥ छाया ॥

२ चो ऽर्थे ॥ छाया ॥

३ अदृष्टेति । तद्विधेयणत्वेनादृष्टेत्यर्थः ॥ तथा च पृथङ्निमित्तं तदित्यभिमानः । तत्र तथासति ॥ छाया ॥

४ दीर्घादिति । न दीर्घः पृथङ्निमित्तम् । तथा सति समासेनैव निर्देशौचित्यात् । अतिप्रसङ्गापत्तेश्च ॥ छाया ॥

५ नन्वकृते एत्वत्वे हल्ङ्यादिति संबुद्धिलोपः, कृते त्वेङ्ह्रस्वादिति तथाच लक्षणभेदात्कथं नित्यत्वमत आह—कार्यमिति ॥ छाया ॥

६ स्यादिति । तथा च संबुद्धिलोप इति भावः ॥ छाया ॥

( दूषणसाधकभाष्यम् )

**अनित्यः संबुद्धिलोपः । नहि कृते ह्रस्वत्वे प्राप्नोति ।**

**किं कारणम्? ।**

**संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति॥**

( आक्षेपोपसंहारभाष्यम् )

**एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया ॥**

(प्रदीपः) **भूयांसो वेति** । दुष्टत्वप्रतिपादनाय प्रकर्षारोपः । सर्वादिषु समशब्दस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञाविधानात्तुल्यवाचिनोऽत्र समा इति प्रयोगः । अस्ति समशब्दः सर्वपर्यायः । यथा **समराज्यं वर्तते** सर्वेषां राज्यं वर्तते इत्यर्थः । वेदेऽपि—**मा नः समस्य दूढ्य** इति प्रयोगः । सर्वस्य दुर्धियो मा न इत्यर्थः । तत्र प्रयोजनानामल्पत्वात्तान्येवोपसंख्यातव्यानीत्यर्थः ॥

(उद्योतः) भाष्ये **एते दोषाः समा इति** । वार्त्तिककारोक्तसकलप्रयोजनापेक्षमिदम् ॥ यद्यपि प्रयोजनानि नव । दोषा अष्टौ ॥ तथापि अल्पान्तरत्वात्समत्वोक्तिः । यद्वाऽन्यत्रापि दोषः संभाव्यत इत्यभिमानः ॥ ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव न कुतस्तदतिशयोऽत आह—**दुष्टत्वेति** ॥ अन्ये तूक्तेषु दूषितप्रयोजनानि त्यक्त्वा स्थितप्रयोजनत्रयापेक्षया भूयस्त्वोक्तिरित्याहुः ॥ ध्यायतेर्विच्च षष्ठ्येकवचने **आतो धातोरि**ति लोपे **दुरोदाशनाशदभध्येष्विति** उत्वे उत्तरपदादेः ष्टुत्वे दूढ्य इति तदाह—**दुर्धिय इति** । सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मा वधीदित्यर्थः ॥ दुःस्थिता धीर्येषामिति विग्रहे गतिकारकपूर्वकत्वाभावाद्यण् न ॥ **तस्मान्नार्थ इति** । पूर्वपक्षाशयमाह—**तत्रेति** ॥

( सिद्धान्तिसमाधानभाष्यम् )

**नहि—दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम् । नहि—भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते ॥ दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् ॥**

**कुत एतत्? ।**

**नहि दोषाणां लक्षणमस्ति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु ॥ क्नमेजन्तः ॥ ३८ ॥**

(प्रदीपः) **प्रतिविधेयमिति** । तत्र विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यति ॥ **कष्टायेति** ज्ञापकाद्यशब्दे दीर्घो भविष्यति ॥ **न यासयोरि**ति लिङ्गादाव् भविष्यति ॥ **यथिवानिति** । **वस्वेकाजाद्**इत्ययं नियम इटो, न त्वपूर्वोऽयं विधिरित्याकारस्य लोपः ॥ **ज्ञापयतीत्या**कारान्तभक्तः पुग्न व्यवधायकः ॥ **अदीदप**दिति लिङ्गाद् ह्रस्वः । यदयं **मारणतोषणे**ति जानातेर्मित्त्वमुपधाह्रस्वार्थं शास्ति तज् ज्ञापयति—पुकि कृते उपधाह्रस्वत्वं भवतीति । नहि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति ॥ **अग्निमानिति अनुदात्तं पदमेकवर्ज**मिति परिभाषा स्वरविषया संनिपातपरिभाषां बाधते ॥ **एङ्ह्रस्वादि**त्यत्रापि **गुणात्संबुद्धे**रिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषाऽभावः । **दर्वी**त्यत्र च्छन्दसि गुणाभावपक्षे छान्दसो ङुग्भविष्यति ॥ ३८ ॥

(उद्योतः) सिद्धान्ती समाधत्ते—भाष्ये—**नहीति** ॥ परिभाषायाः कर्त्तव्यत्वे युक्त्यन्तरमप्याह सिद्धान्ती—**दोषाः खल्वपीति** ॥ **लक्षणमिति** । उपलक्षकं रूपं नास्तीत्यर्थः ॥ **तत्र विधानेति** । यादृशप्रकृतिप्रत्ययसन्निपातनिमित्ताङ्गसंज्ञा तादृशसन्निपातविघातं विना **यस्येति** लोपस्य चारितार्थ्याभावादिति भावः ॥ **कष्टायेति** । अकारसन्निपातनिमित्तो ङेर्यो यञादिनिमित्तदीर्घस्यानिमित्तं स्यादिति भावः ॥ नचैवं **दोषाः साकल्येने**ति भाष्यविरोधः । **कष्टायेति यादेशो दीर्घत्वस्येति** ग्रन्थो भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः । एवंच समा इत्यपि यथाश्रुतमेवेत्याहुः ॥ **लिङ्गादिति** । ईत्वनिषेधवैयर्थ्यादिति भावः ॥ **नत्वपूर्व इति** । क्रादिनियमादार्धधातुकस्येड्वलादेरिति सिद्ध इति नेडाकारान्तसन्निपातनिमित्त इति भावः ॥

---

१ ननु सर्वनामत्वेन समे इत्युचितमत आह—**सर्वादिष्विति** ॥ ननु सर्वपर्यायत्वमदृष्टचरमत आह—**अस्तीति** ॥ इदं लौकिकमिति सूचयन्नाह—**वेदेऽपीति** ॥ छाया ॥

२ कैयटादिकं खण्डयति—**अन्येत्विति** ॥ मा न इति भिन्नं पदमित्याह—**सर्वस्येति** ॥ यणापत्तेराह—**दुःस्थितेति** ॥ **तत्रेतीति** । दोषप्रयोजनयोर्मध्य इत्यर्थः ॥ छाया ॥

३ **तत्रेति** ॥ दोषाणां मध्य इत्यर्थः ॥ छाया ॥

४ भाष्येऽनुक्तत्वात्तत्र पूर्वपक्षाशयमाह—**अकारेति** ॥ अन्यथेत्यादिः ॥ एवम् अत्र दोषसत्त्वे ॥ **कष्टायेतीति** । यत इत्यादिः ॥ आहुः सिद्धान्तविदः ॥ छाया ॥ वस्तुतस्तु '**कष्टायेति यादेशो दीर्घत्वस्य**' इति ग्रन्थ इव '**गृहाणेति श्नाजादेशो हिलोपस्य**' इत्यपि ग्रन्थस्त्रुटितो भाष्ये । अत एव भूयांसः इत्युक्तिः । समाइत्युक्तिस्तु स्वल्पान्तरत्वादित्युक्तमेवेति केचित् ॥ अस्या अनित्यत्वेनैव हलः श्नः शानज्झौ सूत्रेण हिसंनिपातं निमित्तीकृत्य विधीयमानोऽपि शानच् **अतो हे**रिति लोपस्यानिमित्तं न भवति ॥ "**अतो हे**रित्यस्यारम्भसामर्थ्यात् संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः ॥" इति तत्त्वबोधिन्यां यदुक्तम् तच्च न सम्यक् ॥ **अतो हे**रिति सूत्रस्य भव दीव्य तुदेत्यादौ चारितार्थ्यसंभवेनारम्भसामर्थ्यस्य वक्तुमशक्यत्वात् ॥ जहीत्यत्रासिद्धत्वेन हिलोपवारणं तु परिभाषाया अनित्यत्वफलितामप्रवृत्तिमाश्रित्य उपायान्तरत्वेनाऽदुष्टत्वाद्वा ॥ सार्वधातुकसंनिपातनिमित्तकत्वमाश्रित्य शबादीनां तत्त्वबोधिन्यपि समञ्जसैवेति ॥ दाधिमथाः ॥

५ **लिङ्गानिर्देशा**दिति दण्डिकृष्णाद्युक्तयसांगत्यायाह—**इत्वेति** ॥ ननु धातोरनिट्त्वेनैकाच इति निषेधात्कथमनेन्डसिद्धिरत आह—**क्रादीति** ॥

परे तु नियमशास्त्राणां विधित्वमेव, आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसंमतत्वेनाकारान्तसन्निपातनिमित्त एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः ॥ आकारान्तेति । अङ्गस्येत्यनेन सामानाधिकरण्यस्योचितत्वादिति भावः ॥ अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् ॥ तज्ज्ञापयतीति । अतएव भरज्ञपीति निर्देशः सङ्गच्छते । मितां ह्रस्वे चोपधाया इत्यनुवर्त्तत इति भावः ॥ ह्रस्वभाविनीति । अचश्चेत्युपस्थितेरिति भावः ॥ अचश्चेत्यस्य श्रुतित्वेन तद्बाधकल्पनापेक्षयाऽस्यैवानुमितस्य लोकन्यायसिद्धस्य बाधकल्पनोचितेति तात्पर्यम् ॥ बाधते इति । ह्रस्वनुड्भ्यामित्यत्रोपस्थितयोपस्थितिसामर्थ्यादिति भावः ॥ गुणाभावेति । जसादिषु छन्दसि वावचनमिति वचनादिति भावः ॥ ३८ ॥

—•••—

( ३५ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १२ ॥ )

## अव्ययीभावश्च ॥ १ । १ । ४० ॥

( २५४ प्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः ॥ * ॥

( भाष्यम् )

अव्ययीभावस्याव्ययत्वे प्रयोजनम् ॥

किम् ?

लुङ्मुखस्वरोपचाराः ॥

लुक्—उपाग्नि प्रत्यग्नि । "अव्ययात्" इति लुक् सिद्धो भवति ॥

मुखस्वरः-उपाग्निमुखः । प्रत्यग्निमुखः । "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" इत्येष प्रतिषेधः[1] सिद्धो भवति ॥

उपचारः—उपपयःकारः उपपयःकाम इति । "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इति प्रतिषेधः सिद्धो भवति ॥

(प्रदीपः) अव्ययीभावश्च ॥ ४० ॥ प्रयोजनमिति । मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम् । यथा मशकार्थो धूम इति ॥

(उद्द्योतः) अव्ययीभावश्च ॥ ४० ॥ उपचारो नाम अतः कृ इति विहितविसर्गस्थानिकसत्वम् ॥ यथा मशकार्थ इति । एतदेव निवृत्तिकारणमिति पातञ्जलैर्व्यवह्रियते ॥

( आक्षेपभाष्यम् )

किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् ।

( समाधानभाष्यम् )

परिगणनमित्याह ॥ अपि खल्वप्याहुः—"यदन्यदव्ययीभावस्याव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः" इति ॥

(प्रदीपः) अपि खल्विति । एवं[2] खल्वित्यर्थः । परिगणनमनेन दृढीक्रियते ॥

(उद्द्योतः) अनेनेति ऋष्यन्तरवचनसंवादेनेत्यर्थः । तत्र[3] वक्तव्य इत्यन्तं तत् । तत्र यदन्यदित्यन्यत्वे प्रतियोगिनस्त्रय उक्ता इत्याहुः ॥

( अनुयोगभाष्यम् )

किं पुनस्तत् ? ॥

( परिगणनाभावे दूषणभाष्यम् )

[ पराङ्गवद्भावः । ] पराङ्गवद्भावेऽव्ययप्रतिषेधश्चोदित उच्चैरधीयान नीचैरधीयानेत्येवमर्थम्, स इहापि प्राप्नोति—उपाग्न्यधीयान प्रत्यग्न्यधीयान ॥

(प्रदीपः) उपाग्न्यधीयानेति । अग्निसमीपे अधीयानेत्यर्थः । तत्र*षष्ठ्यामन्त्रितकारकवचनम्*इति पराङ्गवद्भावो भवति ॥

(उद्द्योतः) किं पुनस्तत्पराङ्गवदित्यादिना तस्यैवोदाहरणप्रदर्शनम् ॥ षष्ठ्येति । अत्र च कारकत्वम् । तेन समुदायस्य पाष्ठमामन्त्रितस्य चेत्याद्युदात्तत्वम् ॥

( परिगणनाभावे दूषणभाष्यम् )

अकच्यव्ययग्रहणं क्रियते उच्चकैर्नीचकैरित्येवमर्थम् । तदिहापि प्राप्नोति,—उपाग्निकं प्रत्यग्निकम् ॥

( परिगणनाभावे दूषणभाष्यम् )

मुमि अव्ययप्रतिषेधश्चोद्यते—दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति,—उपकुम्भंमन्य उपमणिकंमन्य इति ॥

( परिगणनाभावे दूषणभाष्यम् )

"अस्य च्वौ" अव्ययप्रतिषेधश्चोद्यते—दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम्, स इहापि प्राप्नोति,—उपकुम्भीभूतम् उपमणिकीभूतम् ॥

( प्रत्याख्यानभाष्यम् )

यदि परिगणनं क्रियते, नार्थोऽव्ययीभावस्याव्ययसंज्ञया ॥

( आक्षेपभाष्यम् )

कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि ? ॥

---

कैयटदण्डिकृष्णाद्युक्तिं खण्डयति—परेस्त्विति । तत्र हेतुमाह—उपेति ॥ ननु लिङ्गेन तस्यैव बाधे नेष्टसिद्धिरत आह—अचश्चेत्यस्येति ॥ छाया ॥ दा०

१ मुखं स्वाङ्गमिति सूत्रविहितस्य मुखरूपोत्तरपदान्तोदात्तत्वस्येति शेषः॥

२ पूर्वोऽपि एवमर्थं इत्याह—एवमिति ॥ छाया ॥

३ तत्र संवादे ॥ तत् वचनम् ॥ साकाङ्क्षत्वादाह—तत्रेति । वचन इत्यर्थः ॥ आहुः तत्त्वविदः । प्रत्यासत्त्येति भावः ॥ छाया ॥ परिगणनाभावे तु प्रतिषेधो वक्तव्य इति गौरवम् । परिगणने तु पराङ्गवद्भावादिषु कार्येषु अव्ययसंज्ञैव नेति तत्कार्याप्राप्तौ प्रतिषेधो नैवारब्धव्य इति लाघवम् ॥ दा०॥

( प्रत्याख्यानसाधक१मप्रयोजननिरासभाष्यम् )

**नैतानि सन्ति । यत्तावदुच्यते—लुगिति । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यव्ययीभावाल्लुगिति । यदयम्—"नाव्ययीभावादतः" इति प्रतिषेधं शास्ति ॥**

(उद्द्योतः) भाष्ये यदयं नाव्ययीभावादिति । स ह्यनन्तरत्वादव्ययादाप्सुप इत्यस्यैव निषेधो न तु सुपो धात्वित्यस्येति उपमणिकमुख इत्यादौ तन्निषेधेन चरितार्थमिति न भ्रमितव्यम् ॥

( ३यप्रयोजननिरासभाष्यम् )

**उपचार इति । अनुत्तरपदस्थस्येति वर्तते ॥**

( २यप्रयोजननिरासभाष्यम् )

**तत्र मुखस्वर एकः प्रयोजयति । न चैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्—'नाव्ययादव्ययीभावाच्च' इति ॥ अव्ययीभावश्च ॥ ४० ॥**

(प्रदीपः) **न चैकमिति ।** सामान्यलक्षणमेकप्रयोजनार्थं न कर्तव्यमित्यर्थः ॥ **तत्रैवायमिति ।** न चोक्तम्, तस्मान्मुखस्वरेणात्र भवितव्यमित्याहुः ॥ अन्ये तु वर्णयन्ति—अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानान्मुखस्वरनिवृत्तिर्भवतीति नार्थः सूत्रेणेति ॥ केचित्तु—स्वरादिपाठादिसिद्धायामव्ययसंज्ञायां पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेन कतिपयान्येवाव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः ॥ तेषां वचनमन्तरेण विशेषे प्रमाणाभावः ॥ ४० ॥

(उद्द्योतः) न चोक्तमिति । भाष्ये यदीत्यसन्दिग्धे संदिग्धवचनं वेदाःप्रमाणं चेदितिवत् । तस्मात्तत्र ग्रहणं कर्तव्यम् । सूत्रं च न कार्यमिति भाष्याशय इति वयम् ॥ अन्येत्विति । त्विना ह्यारोपितमव्ययत्वं वास्तवमनव्ययत्वं च प्रतीयते इति यथालक्ष्यं किंचिदव्ययकार्यं भवति किंचिन्नेतीष्टं सिद्धमिति भावः ॥ विशेषे कार्यविशेषे ॥ किंच द्विर्बद्धं सुबद्धमिति न्यायेन पुनर्विधानात् सार्वत्रिकत्वमेव स्यादित्यपि द्रष्टव्यम् । एवं चाव्ययीभावस्याव्ययत्वात्यज्ञेति हरदत्ताद्युक्तं चिन्त्यम् । भाष्यविरोधात् ॥ अन्ये तु—मुखस्वरे नाव्ययीभावादिति नोक्तम् । सूत्रं च कृतम् । तस्मादन्यदपि प्रयोजनम्—नद्या उपकूलमित्यादौ षष्ठीसमासप्रतिषेधादीत्याद्युरिति मतं हरिटीकायां स्पष्टम् । तदपि खल्वप्याहुरित्यादिभाष्याननुगुणम् ॥ ४० ॥

( इत्यव्ययसंज्ञाप्रकरणम् ॥ )

---

( अथ सर्वनामस्थानसंज्ञाप्रकरणम् )

(३६ सर्वनामस्थानसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १३ ॥)

## शि सर्वनामस्थानम् ॥ १ । १ । ४१ ॥

(३७ सर्वनामस्थानसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १४॥)

## सुडनपुंसकस्य ॥ १ । १ । ४२ ॥

( जसः शेः संज्ञाप्रतिषेधनिराकरणाधिकरणम् )

( २५५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शेः प्रतिषेधः प्राप्नोति । कुण्डानि तिष्ठन्ति वनानि तिष्ठन्ति ॥**

(प्रदीपः) **शि सर्वे ॥ ४१ ॥ सुडनपुंसकस्येति चेदिति ।** अस्मिन् सूत्रन्यासे दोषः । **सुट्** स्त्रीपुंसयोरित्यस्मिन्न्यासे न दोष इत्यर्थः ॥

**[॥ * ॥ असमर्थसमासश्च ॥ * ॥]**

( दूषणान्तरभाष्यम् )

**असमर्थसमासश्चायं द्रष्टव्योऽनपुंसकस्येति । नहि नञो नपुंसकेन सामर्थ्यम् ॥**

**केन तर्हि ? ।**

**भवतिना—न भवति नपुंसकस्येति ॥**

(प्रदीपः) प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः पर्युदासाश्रयेण सिद्धान्तः ॥

(उद्द्योतः) शिसर्वना ॥ ४१ ॥ भाष्येऽसमर्थसमासश्चेति दूषणान्तरम् । तत्रासामर्थ्यमसंबन्धात् । चेन वाक्यभेदस्यापि सं-

---

१ नन्वन्यनिषेधेन चारितार्थ्यात्कथं ज्ञापकत्वमत आह—सह्येति । प्रतिषेधो यत इत्यर्थः ॥ तन्निषेधेन सुप इत्यस्य निषेधेन ॥ सार्थ इति पाठः ॥ छाया ॥

२ तत्र उभयोरन्यथासिद्धौ सत्याम् ॥

३ मुद्गादणित्यादेः सत्त्वादाह—सामान्येति ॥ भाष्यतात्पर्यमाह—नचोक्तमिति ॥ तर्ह्युक्तमित्यर्थः ॥ छाया ॥

४ केचिन्मतं दूषयति—तेषामिति ॥ छाया ॥

५ सर्वमतासांगत्यप्रदर्शनाय सिद्धान्तभूतं भाष्यार्थमाह—यदीति॥छाया॥

६ दोषान्तरमाह—किंचेति ॥ एवं च परिगणनावश्यकत्वे च ॥छाया॥

७ वार्तिके उभयोरनुवादात्सूत्रद्वयप्रतीकं धृतम् ॥ छाया ॥

८ सुटोऽनपुंसकेन संबन्धोऽन्यथा पूर्वसूत्रं व्यर्थमेव स्यादत आह—जसिशीति ॥ वृक्षेशाखेतिवत्सप्तम्यवयविन आधारत्वविवक्षया जसः शेः संज्ञाप्रतिषेध इत्यर्थः ॥ छाया ॥

९ तत्सूचितन्यासान्तरमाह—सुट्स्त्रीति ॥ छाया ॥

१० अग्रे भाष्यकृता 'असमर्थसमासश्चायं द्रष्टव्यः' इत्यस्यैवानूदितत्वाल्लक्षितोयं पाठो भवेदिति कोष्ठकमध्ये पठितः ॥ दाधिमथाः ॥

११ प्रसज्येति ॥ एवं हि नञः प्रतिषेधो मुख्यार्थोऽनुगृहीतो भवतीति भावः ॥ छाया ॥

१२ नासामर्थ्यमेकार्थीभावाभावप्रयुक्तम्, व्यपेक्षाया अप्यभावादत आह—तत्रेति ॥ प्रसज्यप्रतिषेधे इत्यर्थः ॥ न्यूनतां निराचष्टे—चेनेति ॥ अत्र पक्षे

ग्रहः ॥ पर्युदासेति । एवं हि समर्थसमासैकवाक्यते लभ्येते ॥ यद्यपि पर्युदासेऽपि लक्षणा, तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः ॥ वस्तुतो नञो निपातत्वेनानेकार्थत्वात्पर्युदासपक्षे लक्षणेति रिक्तं वचः ॥ पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्यम् ॥

(समाधानभाष्यम्)

**यत्तावदुच्यते—* शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसिशिप्रतिषेधः*—इति ॥**

(२५६ समाधानवार्तिकम् ॥ ३ ॥)

**॥ * ॥ नाप्रतिषेधात् ॥ * ॥**

(भाष्यम्)

**नायं प्रसज्यप्रतिषेधो—नपुंसकस्य नेति ॥**

**किं तर्हि ? ।**

**पर्युदासोऽयम्—यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित्प्राप्नोति, तेन भविष्यति । पूर्वेण च प्राप्नोति ॥**

(उद्द्योतः) भाष्ये नपुंसके न व्यापार इति । निषेधस्येति[2] शेषः ॥

(२५७ समाधानवार्तिकम् ॥ ४ ॥)

**॥ * ॥ अप्राप्तेर्वा ॥ * ॥**

(भाष्यम्)

**अथवा—अनन्तरा या प्राप्तिः सा निषिध्यते ॥**

**कुत एतत् ? ।**

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति ॥**

(प्रदीपः) अप्राप्तेर्वेति । प्रसज्य[3]प्रतिषेधेऽप्यदोषः । तत्र सुडित्यनेन या प्राप्तिः, सा निषिध्यते । न तु शि सर्वनामस्थानमिति प्राप्तिः । अन्यथा **शि सर्वनामस्थानमिति** निरवकाशं स्यात् । नपुंसकस्यैव हि शिः संभवति ॥

(उद्द्योतः) अप्राप्तेरितिवार्त्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाप्राप्तेरिति अक्षरार्थः ॥ भाष्ये तु वस्त्वर्थं[4] उच्यते ॥ अन्यथेति । सुडित्यनपेक्ष्य नपुंसकसंबन्धिमात्रस्य निषेध इत्यभिमानः ॥ सुट्संबन्धे तु इदं चिन्त्यं शसः शौ चरितार्थत्वात् ॥

(आक्षेपभाष्यम्)

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

(प्रदीपः) **ननु चेयमिति** । परत्वादित्यर्थः । प्रतिषेधयुक्तायुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः पूर्वां प्राप्तिं बाधते तामपि प्रतिषेध इति दोषः ॥

(उद्द्योतः) ननु संज्ञाया एकत्वेन कार्यैक्ये विरोधाभावात्कथं परत्वमत आह—प्रतिषेधेति । शसि[5] सावकाशत्वात् । एवं चोभयोर्यौगपद्यासंभवरूपो विरोधोऽस्तीति भावः ॥ **पूर्वां प्राप्तिमिति** । एवं च सकृद्गतिन्यायेन पुनर्न प्रवर्त्तत इति भावः ॥

(समाधानभाष्यम्)

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ।**

(प्रदीपः) **नोत्सहत इति** । अपवादविषयपरिहारेणास्याः प्रवर्तनादित्यर्थः ॥

(उद्द्योतः) अपवादेति[6] । एवं च स्वयमप्रवर्त्तमाना कथमन्यबाधिकेति तन्न्याया[7]वसरो नेति भावः ॥

(दूषणान्तरसमाधानभाष्यम्)

**यदप्युच्यते—असमर्थसमासश्चायं द्रष्टव्यः—इति ॥ यद्यपि वक्तव्यः । अथवैतर्हि बहूनि प्रयोजनानि ॥**

**कानि ? ।**

**असूर्यंपश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्ध[8]भोजी ब्राह्मण इति ॥ सुड ॥ ४२ ॥**

---

आद्यदोषस्य भाष्य एवोद्धृतत्वात्तदन्यदोषद्वयमुद्धरति—एवं हीति ॥ लक्षणेति । तद्योगिनीति भावः । लघुरेवेति । एकदोषकत्वात् । इदमप्यभ्युपेत्योक्तम् । वस्तुतस्तु सापि नेत्याह—वस्तुत इति ॥ तस्मात्सर्वथा लघुरेव स इति भावः ॥ छाया ॥

१ नाप्रतिषेधादिति वार्तिकं न प्रतिषेधनिषेधकम् । पर्युदासेऽप्यार्थिकनिषेधसत्त्वादत आह—नायं प्रेति ॥ छाया ॥

२ तदाशयमाह—पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्यमिति पाठः । अत एवाह—निषेधेति ॥ अतएवोक्तं भाष्ये—यदि केनचिदिति ॥ छाया ॥

३ पक्षान्तरोक्तौ बीजमाह—प्रसज्येति ॥ तत्र प्रसज्यप्रतिषेधेऽपि ॥छाया॥

४ वस्त्वर्थः परमार्थः ॥ दण्डिकृष्णाद्युक्तमाह—सुडित्यनेति । बाध्यसामान्यचिन्तयेति भावः ॥ छाया ॥

५ कैयटस्थचसंग्राह्यमाह—शसीति ॥ पूर्वस्येति शेषः ॥ द्वितीयस्य त्वन्यत्र तत्स्पष्टमेवेति भावः ॥ तथाच कैयटोक्तहेतुयुतसावकाशत्वं हेतुर्विरोधे । तदाह—एवं चेति ॥ उभयोस्तादृशयोः सावकाशत्वे चेत्यर्थः ॥ छाया ॥

६ बाधकत्वसामान्येनापवादत्वव्यवहारादाह—अपवादेतीति ॥ निषेधेऽपि ॥ छाया ॥

७ तन्न्यायेति । सकृद्गतिन्यायेत्यर्थः ॥ छाया ॥

८ 'भुङ्क्ते चेत्पार्वणश्राद्धे प्राणायामान्षडाचरेत् ।
उपवासस्त्रिमासादिवत्सरान्तः प्रकीर्तितः ॥
प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने ।
असरूपे स्मृतं नक्तं व्रतपारणके तथा ॥
द्विगुणं क्षत्रियस्यैतत्त्रिगुणं वैश्यभोजने ।
साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने ॥'
इति भारद्वाजेन.

'एकादशाहे भुक्त्वान्नं भुक्त्वा संचयने तथा ।
उपोष्य विधिवत्स्नात्वा कूष्माण्डैर्जुहुयाद्घृतम् ॥
चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके ।
एकाहस्तु पुराणेषु प्राजापत्यं विधीयते ॥'
इति हारीतेन.

(प्रदीपः) **अथवैतर्हीति** । इदानीमित्यर्थः । तत्र[1] स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापकम्—प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीति ॥ ४२ ॥

(उद्योतः) **इदानीमित्यर्थ इति** । **तथापीत्यर्थ** इत्युचितम् । **यद्यपि वक्तव्य** इत्युपक्रमात् ॥ **स्त्रीपुंसयोरिति** । मात्राधिक्येऽपि स्पष्ट[2]प्रतिपत्त्यर्थमित्यर्थः ॥ **पुंस्त्रियोरिति** तु वक्तुमशक्यम्, तस्यासाधुत्वाद् इति बोध्यम् ॥ अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या **शास्त्रप्रापितस्य प्रतिषेधे विकल्प** इति मीमांसकोक्तं चिन्त्यम् । सामान्यविशेषन्यायेन बाधस्यैवौचित्यात् । स्वाभावे संभावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः ॥ ४२॥

(इति सर्वनामस्थानसंज्ञाप्रकरणम्)

---

( ३८ विभाषासंज्ञासूत्रम् ॥ १ । १ । ६ आ. १५ ॥ )

## नवेति विभाषा ॥ १ । १ । ४३ ॥

( अर्थसंज्ञास्थापनाधिकरणम् )

( २५८ आक्षेपवार्तिकम् ॥ )

### ॥ * ॥ नवेतिविभाषायामर्थसंज्ञाकरणम् ॥ * ॥

( भाष्यम् )

**नवेतिविभाषायामर्थस्य संज्ञा कर्तव्या । नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम् ॥**

(प्रदीपः) **नवेति** ॥ ४३ ॥ **नवेतिविभाषायामिति** । समुदायस्यानुकरणत्वादनुकरणस्य चानुकार्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः । स्त्रीप्रत्यये च तदादिनियमाभावाड्डाबौ भवतः । अथ वा नवेत्युच्चार्य या विभाषा कृता तस्यामिति व्याख्या । तत्र[3] लोके क्रियापदसंनिधाने नवाशब्दयोर्योऽर्थौ द्योत्यो विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः । अन्यथा विभाषाप्रदेशेषु नवाशब्दावेवादेशौ स्याताम् ॥

(उद्योतः) **नवेतिविभाषा** ॥ ४३ ॥ ननु समुदायस्य समासग्रहणनियमेनाप्रातिपदिकत्वात् **नवेतिविभाषायामि**त्यनुपपन्नमत आह—**समुदायस्येति** । वार्तिको[4]च्चारितसमुदायस्येत्यर्थः ॥ नन्वेवमपि समुदायस्यानावन्तत्वात् कथं याडादीत्यत आह—**स्त्रीप्रत्यये चेति** । **स्त्रीप्रत्यये** चानुपसर्जने नेति ष्यङः संप्रसारणमित्यत्र भाष्यपठितवचनेनेति भावः ॥ यत्तु[5] **हल्ङ्याब्भ्य** इति दीर्घग्रहणादिति । तन्न । बहुश्रेयसीत्यादौ लोपार्थं **प्रत्ययग्रहण** इति तदन्तविधिना **ङ्यन्ते**त्यर्थे तस्य स्वादिप्रत्ययलब्धयस्माद्विधिस्तदादेरित्येतद्विशेषणतया **ङ्यन्तान्ते**त्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् ॥ अनुकरण[6]स्यावन्तत्वं तु **प्रकृतिवदनुकरणमिति** न्यायात् । तस्यानित्यत्वाच्च न प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम् ॥ **अथवेति** । **कृता** । उच्चा-

---

'प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके ।
त्रैपक्षिके तदर्धं स्यात्पादौ द्वैमासिके तथा ।
पादोनकृच्छ्रं निर्दिष्टं षण्मासे च तथाब्दिके ।
त्रिरात्रं चान्यमासेषु प्रत्यहं चेदहः स्मृतम् ॥
चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
त्रैपक्षिके सांतपनं कृच्छ्रो मासद्वये स्मृतः ॥
क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम् ॥
वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ।
शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् ।
सार्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवं व्रतम् ।
मासद्वये पराकः स्यादूर्ध्वं सांतपनं स्मृतम् ॥'

इति षट्त्रिंशन्मतेन, एवमन्यैरप्यृषिवचोभिः श्राद्धभोजने प्रायश्चित्तस्याभिहितत्वाच्छ्राद्धेऽभुञ्जानस्य प्रशंसापरेणामुना भाष्येण विरोधात् 'जीवतां पितॄणां श्रद्धया सेवाकरणमेव श्राद्धम्, नतु मरणोत्तरं क्रियमाणस्य श्रौतस्मार्तगृह्यविहितस्य पिण्डपितृयज्ञस्य श्राद्धत्वम्' इति वदन्त आधुनिकास्तु सकलार्षग्रन्थानभिज्ञा एवेति बोध्यम् ॥ एवं च पुण्यपत्तनमुद्रितपद्मपुराणीयसृष्टिखण्डीय ७७ पृष्ठे—

"एको मुनिस्ताम्रकराग्रहस्तो
ह्याम्रेषु मध्ये सलिलं ददाति ।
आम्राश्च सिक्ताः पितरश्च प्रीणिता
एका क्रिया ह्यर्थकरी प्रसिद्धा ॥"

एतद्वाक्यमप्युपक्रमोपसंहाराभ्यां मृतपित्रुद्देश्यकजलाञ्जलिदानपरमेवेति दिक् ॥

१ ननु वचनान्तरे तद्रूपदोष एवेत्यविशेषः इति सूत्रमते कथं दोषपरिहारोऽत आह—तत्रेति । सूत्रे इत्यर्थः ॥ छाया ॥

२ स्पष्टेति । तथाच ज्ञानलाघवमिति भावः ॥ पुंस्त्रियोरिति वक्तव्ये इत्यादि सूचितमिति तदुक्तिमेव खण्डयति—पुंस्त्रियोरिति ॥ स्त्रीपुंसेत्यनेन तस्य तत्त्वबोधनादित्यर्थः ॥ अत्र प्रकृतसूत्रे ॥ उक्तावन्वयः ॥ पक्षभेदकथनेनेति भावः ॥ विकल्प इति । वचनद्वयप्रामाण्यादिति भावः । तुल्यार्थत्वाभावादाह—सामान्येति ॥ अत्र साधारणं बीजमाह—स्वाभावे इति ॥ वचनप्राप्तस्य निषेधासंभवादाह—संभेति ॥ चो ह्यर्थे ॥ अत एव निषेधाश्च बलीयांस इति भाष्यं संगच्छते ॥ एवं च विकल्पप्राप्तिरेव न । किं चान्यथा प्रतियोगिप्रसिद्ध्या तद्बोधसंभवेन तदप्राप्तिरेव ॥ नवेतिसूत्रभाष्येऽप्येवम् । तदाह—इत्यादीति ॥ मञ्जूषायां नञर्थवादे ॥ छाया ॥

३ नन्वर्थसंज्ञायामप्यतिप्रसङ्ग एवात आह—तत्रेति ॥ तेषां मध्य इत्यर्थः ॥ क्रियेति ॥ तस्याः प्राधान्याद्दिष्टानुरोधाच्चेति भावः । इदं दुर्घटमेवेत्याह—विभाषाप्रेति ॥ छाया ॥

४ विभाषेति प्रकृतिप्रत्ययादिसमुदायस्य वारणाय पक्षान्तरस्य वक्ष्यमाणत्वादाह—वार्तिकोच्चेति ॥ एवमपि विभक्त्युत्पत्तावपि ॥ प्रत्ययग्रहण इति नियमात् ॥ छाया ॥

५ दण्डिकृष्णाद्युक्तिं खण्डयति—यत्त्विति ॥ वचनपक्षे उपसर्जने तत्सत्त्वेनार्धपिप्पलीत्यादौ सुलोपो न स्यात् समुदायस्याङ्यन्तत्वात् । अवयवतत्त्वमादाय तु न सः स्वादिप्रत्ययेन प्रकृत्याक्षेपे तेन तस्या विशेषणेनावयवस्यातत्त्वात्तस्यास्तेनोपसर्जनेऽपि सामान्यतस्तदभावो ज्ञाप्यत इति भावः॥ ङ्यन्तेत्यर्थे ङ्याबन्तेत्यर्थे सति । तस्य ङ्याबन्तस्य । एवमग्रेऽपि ॥ शाम्बि शाम्ब्यादि ॥ सिद्धान्ते तस्य खण्डितत्वमित्यपि बोध्यम् ॥ तदाह—दिगिति ॥ छाया ॥

६ नन्वेवमप्यनुकरणे प्रकृतिप्रत्ययाविभागात्कथं तत्त्वमत आह—अनुकरणेति ॥ नन्वेवमप्रत्यय इति निषेधात्कथं प्रातिपदिकत्वमत आह—तस्येति ॥ प्रतिपादितमिदमधस्तात् ॥ छाया ॥

चादेशविधावुपात्त एवेत्यत आह—**दीर्घेति** ॥ नन्वच एव स्थानित्वे ग्रहणमित्यादावपि दीर्घः स्यादत आह—**इदत्त्विति** ॥ भाष्ये **सिचो लोपो न प्राप्नोतीत्यस्य तस्मादनल्विधाविति** वक्तव्यमिति शेषः ॥ विशेषानतिदेशे दूषणान्तरमाह—**तथेति** ॥ **अंकितोऽपीति । न क्त्वा सेडिति** कित्त्वनिषेधादिति भावः ॥ **तस्मादिति** । [1]न च क इष्टः, घुभ्यामित्यादिव्यावृत्त्या तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति वाच्यम् । [2]अप्राधान्येनाप्यलाश्रयणे आर्धधातुकस्येडित्यादौ निषेधप्रवृत्तये क्रियमाणं विधिग्रहणं प्रकृतार्थज्ञापकम् । विशेषानतिदेशे तेषामसङ्ग्रहेण तद्वैयर्थ्यस्य स्पष्टत्वात् ॥ [3]वार्तिकेऽपि विधिपदघटिते प्रतिषेधेऽसत्यपीत्यर्थः ॥ ज्ञापिते विशेषातिदेशेऽनल्विधावित्यस्य चारितार्थ्यं दर्शयति—भाष्ये **इहापि प्रतिषेधेत्यादि** ॥ ननु कित्त्वस्याल्विधित्वेन **क्ङिति** चेति निषेधे स्थानिवत्त्वाभावात्प्रतिदीव्येत्यादौ गुणः स्यादत आह—**अनुबन्धेति** ॥ **स्थानिनीति** । स्थान्यलाश्रये विधौ स्थानिवत्त्वनिषेधादिति भावः ॥ **न ल्यपीति** लिङ्गमप्यत्र बोध्यम् ॥ नन्वेव[4]मप्यग्रहीदिति दीर्घस्थानिभूताजरूपेकाराश्रय एव सिज्लोपः । अनुबन्धस्तु उपदेश एव लुप्त इति तत्रापि स्थानिवत्त्वनिषेधः स्यादतो भाष्ये **विशिष्टं ह्येष इति** । [5]एवं च दीर्घ इड्वदित्येवातिदेशकल्पना, स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेव । तच्च नाल्रूपमिति इट इत्यादि न स्थान्यल्वृत्तिधर्माश्रयम् । [6]एवं च **यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योऽल् तत्स्थानिसंबन्धी वा योऽल् तन्मात्रवृत्तिधर्माश्रयणं तादृशे विधौ हि निषेधः** ॥ [7]अत्र च शब्दतो विशिष्टमनलमाश्रयते । **वलादेरित्यत्र** च शब्दतो विशिष्टमलमिति भावः ॥ **सिद्धान्तव्यवस्थापनादिति** । [8]इदं निरनुबन्धकानुवादेन विहितादेशविषयम् । **क्त्वोल्यबित्यादौ** सानुबन्धकानुवादेनादेशविधौ तु यथाऽनुबन्धकार्यस्याल्विधित्वाभावस्त[9]थाऽनेकाल्शिदित्यत्र निरूपितम् ॥ **अत्रापीट एव स्थानित्वमिति** । अन्यथा स्थान्यल्वृत्तीट्त्वाश्रयस्य लोपस्याल्विधित्वात्तत्र तत्स्थानिवत्त्वानापत्तिर्विशेषातिदेशेऽपीति भावः ॥ एवं च [10]तदुदाहरणे विशेषानतिदेशेऽपि न दोषः । [11]एतदेवाभिप्रेत्य स्वयं प्रदीव्येति गुणापत्तिर्विशेषानतिदेशे दूषणमुक्तम् । [12]वस्तुतो भाष्योक्तदोषोऽपि दृढ एव । तथा हि **अनल्विधावित्यस्याभावे** प्रायोगिकस्थानिनमादायैव वाक्योपप्लवः स्यात् । तद्बुद्धिं निवर्त्यैवादेशबुद्धेर्जायमानत्वेन तस्यैव मुख्यस्थानित्वात् । **यद्येवमित्यस्य** विशेषानतिदेशमाश्रित्य विधिग्रहणाकरणे इत्यर्थः । एवं च दीर्घस्थान्यल्परस्य कार्यं लोप इति स्थानिवद्भावेन तदप्राप्तिरिति पूर्वपक्षः ॥ विधावित्युक्तौ तु न दोषः शास्त्रस्योपस्थित्या शास्त्रोपात्तस्थान्यादेशभावस्य निमित्तस्य च ग्रहणमिति न दीर्घोऽल्विधिरित्युत्तरम् ॥ तदेतदेषोऽनलमित्यनेन दीर्घादिविधिरित्यर्थकेन ध्वनितमिति बोध्यम् । [13]अत एव **भोभगोअघो** इति सूत्रे भाष्ये रेफस्थानिकविसर्गस्य स्थान्यल्वृत्तिधर्मरुत्वाश्रयं कार्यं नाल्विधित्वादित्युक्तम् ॥

(आक्षेपवार्तिकादिशेषभाष्यम्)

**यदि तर्हि सामान्यमप्यतिदिश्यते, विशेषश्च ॥**

( ३६१(१) आक्षेपसाधकवार्तिकप्रथमखण्डम् ॥ )

## ॥ * ॥ सत्याश्रये विधिरिष्टः ॥ * ॥

( भाष्यम् )

**सति च वलादित्वे इटा भवितव्यम् अरुदिताम् । अरुदितम् । अरुदित ॥**

( उक्ताशयानभिज्ञभाष्यम् )

**किमतो यत्सति भवितव्यम् ? ।**

( ३६१(२) आक्षेपवार्तिकद्वितीयखण्डम् ॥ )

## ॥ * ॥ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् ॥ * ॥

( भाष्यम् )

**प्रतिषेधस्तु प्राप्नोति ॥**

**किं कारणम् ? ॥**

**अल्विधित्वात् । अल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥**

(प्रदीपः) **सत्याश्रय इति** । आश्रीयत इत्याश्रयः । यथा वलादित्वमिड्विधौ । तत्रेडागमस्याल्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति ॥

(उद्द्योतः) भाष्ये **यदि तर्हि सामान्यमिति** । अनल्विधाविति ज्ञापकात् । [14]तज्ज्ञापनार्थं चानल्विधाविति यदि क्रियत इत्यर्थः ॥ **आश्रयशब्दस्य** भावसाधनत्वे वलादित्व इति तद्विवरणमसंगतं स्यादत आह—**आश्रीयत इति** ॥ **स्थानिकार्यमिति** ॥ सार्वधातुकत्वाभावादिति भावः ॥ भाष्ये—**प्रतिषेधस्त्विति** । आदेशः स्थानिवद्, अल[15]श्रये विधौ तु नेति सूत्रार्थ इति भावः ॥

१ कृष्णाद्युक्तिं खण्डयति—नचेति ॥ तस्य विधिग्रहणस्य ॥ छाया ॥
२ अग्रेति ॥ यत इत्यादिः ॥ छाया ॥
३ वार्तिकविरोधं परिहरति—वार्तिकेऽपीति ॥ छाया ॥
४ एवमपि प्रदीव्येत्यादिसिद्धावपि ॥ छाया ॥
५ भाष्यतात्पर्यमाह—एवंचेति । तत्र ज्ञापिते च ॥ छाया ॥
६ एवंसति निषेधवाक्यार्थमाह—एवंचेति ॥ छाया ॥
७ अत्र च इटईटीत्यत्र च ॥ छाया ॥
८ कैयटाद्यसांगत्यमाह—इदमिति ॥ छाया ॥
९ तथेति । शिद्ग्रहणेनानुबन्धस्याल्व्यवहाराभावज्ञापनादित्यर्थः ॥ ॥ छाया ॥
१० तदिति अग्रहीदित्यत्र ॥ छाया ॥
११ एतदिति । इमामेवारुचिमित्यर्थः ॥ छाया ॥
१२ कैयटादिकं दूषयति—वस्तुत इति ॥ छाया ॥
१३ अत एव अस्मात्स्वीकारादेव ॥ छाया ॥
१४ भाष्यतात्पर्यमाह—तज्ज्ञापनार्थं चेति ॥ छाया ॥
१५ अलि स्थानिसंबन्धो नेष्ट इत्याह—अलाश्रय इति ॥ छाया ॥

( ३६२ सिद्धान्तिसमाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वानुदेशिकस्य प्रतिषेधादितरेण भावः ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ? ।**

**आनुदेशिकस्य प्रतिषेधात् । अस्त्वत्रानुदेशिकस्य वलादित्वस्य प्रतिषेधः । स्वाश्रयमत्र वलादित्वं भविष्यति । नैतद्विवदामहे वलादिर्न वलादिरिति ॥**

**किं तर्हि ? ।**

**स्थानिवद्भावात् सार्वधातुकत्वमेषितव्यम् ॥**

(प्रदीपः) **न वेति** । अतिदेश एवानुदेशः स प्रयोजनं यस्य तदानुदेशिकम् । तत्र स्वा[१]श्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमितीड्विधास्यते ॥

(उद्योतः) समाधत्ते—**नवेति** । स[२] प्रयोजनं प्रयोजको यस्य वलादित्वस्येत्यर्थः ॥ करणे ल्युट् । प[३]दसंस्कारपक्षाश्रयेण तु अतिदेशः प्रयोजनमिति प्रयुक्तम् ॥ शङ्कि[४]ताह—**नैतद्विवदामह इति** ॥

( आक्षेपोपसंहारभाष्यम् )

**तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **तत्रानल्विधावितीति** । इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते । इट् चाल्वि[५]धिरिति **अनल्विधाविति** प्रतिषेधात् सार्वधातुकत्वस्यापीडर्थत्वादिड् न प्राप्नोतीति ॥

(उद्योतः) ननु सार्वधातुकत्वस्यालधर्मत्वाभावात् कथं प्रतिषेधप्राप्तिरत आह—**इडागमेति** ॥

( स्थान्यलाश्रयविधौ प्रतिषेधसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवत्याहो स्विदविशेषेण आदेशे, आदेशिनि च ? ॥**

(प्रदीपः) इदानीं यथात्र प्रतिषेधो न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह—**किं पुनरिति** । आदेशोऽस्यास्तीत्यादेशी स्थानी । किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधोऽथाल्मात्राश्रय इति विचारः । किं प्रत्यासत्तिराश्रीयतेऽथ वा व्याप्तिरिति भावः ॥

(उद्योतः) उक्तदोषमपरिहृत्य विचारान्तरारम्भोऽनुपपन्न इत्यत आह—**इदानीमिति** ॥ प्रतिपादयितुमिति । वादिमुखेनैव प्रतिपादयितुमित्यर्थः ॥ **आदेशोऽस्येति** । आ[६]देशिनीत्यलीत्यनेन व्यधिकरणं स्थानिसम्बन्ध्यलाश्रय इत्यर्थः । सं[७]बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अल एव स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम् ॥ सन्देहबीजं दर्शयति—**किमिति** ॥

( भाष्यम् )

**कश्चात्र विशेषः ? ॥**

( ३६३ प्रथमपक्षाक्षेपवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः ॥**

**कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र लघूपधगुणः प्राप्नोति ॥**

**वधकमित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं चादुपधत्वम्, तत्र वृद्धिः प्राप्नोति ॥**

**पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र [ लघूपध ] गुणः प्राप्नोति ॥**

(प्रदीपः) **वधक इति** । हन्तेर्ण्वुलि ब[८]हुलं संज्ञाछन्दसोरिति वक्तव्यम् । अन्नवधकगात्रविचक्षणाजिराद्यर्थमिति वधादेशः । स च हलन्त इति दोषोपन्यासः । अदन्तत्वे लल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः ॥

(उद्योतः) **स्थानिवद्भावादिति** ॥ अचः परस्मिन्नित्यनेन । एवं चोपधात्वाभावो ञ्णित्परत्वाभावश्चेति भावः ॥

( द्वितीयपक्षाङ्गीकारभाष्यम् ॥ )

**अस्तु तर्ह्य[९]विशेषेण=आदेशे आदेशिनि च ॥**

( ३६४ द्वितीयपक्षाक्षेपवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् ॥ * ॥**

( भाष्यम् )

**आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानं कर्तव्यम् ॥**

---

१ अतिदेशमात्रलभ्यरूपस्य स्थान्यलसाधारणत्व एवानल्विधाविति प्रतिषेधोऽङ्गीक्रियते, तस्य 'यद्रूपवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ सत्यामतिदेशो मृग्यते तच्चेद्रूपं स्थानिरूपस्थान्यवयवान्यतरालसाधारणं न' इत्यर्थाङ्गीकारादिति भावः ॥ दाधिमथाः ॥

२ प्रदीपार्थमाह—स इति ॥ छाया ॥

३ ननु तथैव कुतो नोक्तमत आह—पदेति ॥ छाया ॥

४ 'शङ्कितारमाह' इत्येव तूचितम् ॥ दाधिमथाः ॥

५ अल्विधिरिति । इतः प्रागप्रकाशितं स्थान्यलसाधारणधर्मस्यैवातिदेश्यत्वे निषेध इति सिद्धान्तमुद्भावयितुमेवायमाक्षेपोपसंहार इति तं सिद्धान्तमजानानस्यैवायं ग्रन्थः इति सार्वधातुकत्वातिदेशफलभूतेडागमस्य वलाश्रयत्वादल्विधित्वमेवेति पूर्वपक्षिणो भावः ॥ दाधिमथाः ॥

६ सर्वसंग्रहाय व्याप्तिन्यायानादरेणाह—आदेशिनीति ॥ छाया ॥

७ नन्वेवं षष्ठ्युचिताऽत आह—संबन्धिन एवेति ॥ पक्षान्तरे तु नोभयसंग्रह इति स्पष्टमेव ॥ छाया ॥

८ बहुलं तणीतिवक्तव्यम् । किमिदं तणीति । संज्ञाछन्दसोर्ग्रहणमिति भाष्यफलितपाठोऽयम् ॥ दाधिमथाः ॥

९ भाष्ये अविशेषेणेत्यस्य व्याख्या आदेश इत्यादि ॥ सप्तम्युभयत्र प्राग्वत् ॥ छाया ॥

**सुप्—वृक्षाय प्लक्षाय । स्थानिवद्भावात्सुप्संज्ञा, स्वाश्रयं च यञादित्वं, तत्र प्रतिषेधः प्राप्नोति । सुप् ॥**

**तिङ्—अरुदिताम् । अरुदितम् । अरुदित । स्थानिवद्भावात्सार्वधातुकसंज्ञा, स्वाश्रयं च वलादित्वं, तत्र प्रतिषेधः प्राप्नोति । तिङ् ॥**

**कृदतिदिष्टं भुवनं सुवनं धुवनम् । स्थानिवद्भावात्प्रत्ययसंज्ञा, स्वाश्रयं चाजादित्वं, तत्र प्रतिषेधः प्राप्नोति ॥**

(प्रदीपः) **सुप्तिङ्कृदतिदिष्टेष्विति** । आदिष्ट एवातिदिष्टो विवक्षितः ॥ उपलक्षणं चैतत् । तद्धितादेशेष्वपि न प्राप्नोति, लैगवायन इति । अत्र हि स्वाश्रयमजादित्वं स्थानिवद्भावात्तद्धितत्वम् ॥

(उद्द्योतः) अतिदेशोऽतिदिष्टं चेदर्थासङ्गतिरत आह—**आदिष्ट एवेति** । सुवादीनामादेशेष्वित्यर्थः । तेषु[1] दीर्घत्वे इटि उवङि च स्थानिवत्त्वप्रतिषेधः प्राप्नोति ॥ **तद्धितत्वमिति** । भस्य तद्धिते ओर्गुणविधानादिति भावः ॥

( तटस्थाक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ? ।**

(प्रदीपः) **किं पुनरिति** । न्यायापेक्षः प्रकर्षः । कः पक्षो न्यायोपपन्न इत्यर्थः ॥

(उद्द्योतः) ननु पक्षद्वये दोषोक्तेः कस्यापि प्रशस्यत्वाभावाद् आतिशयिकोऽनुपपन्न इत्यत आह—**न्यायेति** । युक्तिरित्यर्थः ॥ का युक्तिः प्रकृष्टेत्यत्र प्रश्नतात्पर्यमिति भावः ॥

( समाधानभाष्यम् )

**आदेशिन्यल्याश्रीयमाणे प्रतिषेध इत्येतदेव ज्यायः ॥**

**कुत एतत् ? ।**

**तथा ह्ययं विशिष्टं स्थानिकार्यमादेशेऽतिदिशति—'गुरुवद् गुरुपुत्रे' इति यथा । तद्यथा—'गुरुवदस्मिन्गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात्पादोपसंग्रहणाच्च' इति । यदि च गुरुपुत्रोऽपि गुरुर्भवति । तदपि कर्तव्यं भवति ॥**

(प्रदीपः) **आदेशिनीति** । प्रत्यासत्त्येति भावः ॥ यत्कार्यमादेशः स्वतो न प्रतिपद्यते, तस्य तत्र स्यादतिदेशाकाङ्क्षा । तच्छेषश्च प्रतिषेधस्तद्द्वारक एवाल्कार्ये युक्तः ॥ अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्रातिदेशाकाङ्क्षा। सार्वधातुकत्वं तस्य स्वतो नास्तीति तदेवातिदेशेन प्राप्यते । यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते, तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशापेक्षेत्येतावता दृष्टान्तः । सार्वधातुकत्वं प्रत्यस्त्येवातिदेशापेक्षा ॥

(उद्द्योतः) **प्रत्यासत्त्येति** । अत[2] एव कष्टायेत्यादिनिर्देशाः सङ्गच्छन्ते । एवं च प्रत्यासत्त्याश्रयणमेव न्याय्यमिति भावः ॥ भाष्ये **विशिष्टं स्थानिकार्यमिति** । स्वरूपेणालभ्यमानमित्यर्थस्तदाह—**यत्कार्यमिति** ॥ **तच्छेषोऽतिदेशशेषः** ॥ **तद्द्वारके** । अतिदेशद्वारके ॥ **यथेति** । एवं[3] च यथा तत्रातिदेशप्राप्तोच्छिष्टभोजनस्यैव वर्जनं, न तु स्वाश्रयगुरुत्वप्राप्तस्य, एवमलंशेऽतिदेशप्राप्याल्विधेरेव वर्जनमिति भावः ॥

( प्रथमपक्षाभ्युगमभाष्यम् )

**अस्तु तर्ह्यादेशिन्यल्याश्रीयमाणे प्रतिषेधः ॥**

( उक्ताक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः* इति ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । "करोतौ तपरनिर्देशात् सिद्धम्" । पिबिरदन्तः । वधकमिति नायं ण्वुल् । अन्योऽयमकशब्दः किदौणादिकः, रुचक इति यथा ॥**

(प्रदीपः) **करोताविति** । अकारस्य ह्युकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणापि प्राप्तस्य भिन्न[4]कालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः ॥ **अन्योयमिति** । **हनो वध** चेति क्वुन्प्रत्ययः ॥

(उद्द्योतः) भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्वं व्यर्थ[5]मित्याह—**अकारस्येति** । अन्तरतमत्वादिति भावः ॥ ऋका[6]रस्थानिकावयवविकारोऽत्रेति लक्ष्यभेदान्नोदवोढामितिवल्लक्ष्ये लक्षणस्येति न्यायेनात्र निर्वाह इत्याहुः[7] । कुन्नौणादिकः ॥

( एकदेशविकृतन्यायाधिकरणम् )

( ३६५ आक्षेपवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ एकदेशविकृतस्योपसंख्यानम् ॥ * ॥**

( भाष्यम् )

**एकदेशविकृतस्योपसंख्यानं कर्तव्यम् ॥**

---

१ यथासंख्येन तात्पर्यार्थमाह—तेष्विति ॥ तथाच वार्तिके षष्ठीतत्पुरुष इति भावः ॥ छाया ॥

२ ननु प्रत्यासत्तितो व्याप्तिन्यायस्य प्राबल्यमत आह—अत एवेति ॥ तदाश्रयणादेवेत्यर्थः ॥ एवं च तन्नेदं ज्ञापकमिति तदनाश्रयणम् । तदाह—एवंचेति । ज्ञापकसत्त्वे चेत्यर्थः ॥ छाया ॥

३ भाष्यादितात्पर्यमाह—एवंचेति । तदुक्त्या तथा बोधिते चेत्यर्थः ॥ ॥ छाया ॥

४ भिन्नेति । नचैवं कुर्व इत्यादावपि दीर्घाप्रसङ्गेन न भेति कुरो निषेधो व्यर्थ इति वाच्यम् । 'यन्निमित्तक उकारस्तन्निमित्तक एव भिन्नकालस्तेन वार्य इति तात्पर्यात्' इति छाया तु दीर्घस्योकारसमाननिमित्तकत्वेन वार्यत्वापत्तेर्गुणस्योकारनिमित्तसार्वधातुकभिन्नार्धधातुकनिमित्तिकत्वेन वार्यत्वानुपपत्तेश्च चिन्त्यैव ॥ तस्माद्दीर्घस्यासिद्धत्वान्न तपरकरणेन वार्यता गुणस्य तु सपादसप्ताध्यायीस्थत्वेन सिद्धत्वाद् वार्यतेति बोध्यम् ॥ दाधिमथाः ॥

५ व्यर्थमिति । तथा च चारिताभ्यांज्ञापकत्वासंभव इति भावः॥छाया॥

६ ननु विकारान्यानुपूर्व्यैक्येन लक्ष्ये लक्षणेति न्यायेन न पुनर्गुणोऽत आह—ऋकारेति ॥ ऋकारस्थानिको य उर् तदवयवो य उकारस्तद्विकारः पुनर्गुण इत्यर्थः ॥ छाया ॥

७ आहुः भाष्यतत्त्वविदः ॥ कुन्नित्यस्य शेषमाह—औणादिक इति ॥

किं प्रयोजनम् ? ।

पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥

(प्रदीपः) एकदेशविकृतस्येति । एकदेशेन विकृत इति तृतीयासमासः ॥

(उद्द्योतः) बहुव्रीहौ[1] निष्ठान्तस्य पूर्वनिपातः स्यादत आह— तृतीयेति ॥ आनुमानिकेऽपि[2] स्थानिवत्त्वप्रवृत्तिर्वक्तव्येत्येतद्वार्त्तिकतात्पर्यम् ॥

( ३६६ समाधानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ एकदेशविकृतस्यानन्यत्वात्सिद्धम् ॥ * ॥

( भाष्यम् )

**'एकदेशविकृतमनन्यवद्भवति' इति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा—श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभ इति ॥**

(प्रदीपः) तद्यथेति । छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः । एवं पचत्वित्यत्रेकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः । तथा[3] चेकारलोपेऽप्यपचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चास्ति ॥ नाश्व इति । अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः किं तर्हि श्वत्वेन व्यवहारः ॥

(उद्द्योतः) लोकन्यायाश्रयेणैतत्प्रत्याचष्टे—अनन्यत्वात् सिद्धमिति । भाष्ये ॥ नन्ववयवविगमे जात्यभिव्यञ्जकाभावात्कथं श्वेति व्यवहारोऽत आह—छिन्नेऽपीति । तथाचेति । लोपस्य विकारत्वाभावेनैकदेशविकृतोपसङ्ख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः ॥ अर्थेत्यादि[5] दृष्टान्तार्थम् । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्बोधो न स्यात् । एतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भावः ॥

( ३६७ एकदेशाक्षेपसाधकवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ अनित्यविज्ञानं तु तस्मादुपसंख्यानम् ॥ * ॥

( भाष्यम् )

**अनित्यविज्ञानं तु भवति । नित्याः शब्दाः । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । तत्र[6] स एवायं विकृतश्चेत्येतन्नित्येषु शब्देषु नोपपद्यते । तस्मादुपसंख्यानं कर्तव्यम् ॥**

(प्रदीपः) अनित्यविज्ञानमिति । अवस्थिते तकारे इकारस्य उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः ॥ उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम् । एरुरिति स्थान्यादेशाभ्यां तिशब्दतुशब्दयोरनुमीयमानत्वात्तेः प्रसङ्गे तोर्विधानात् । तत्रादेशग्रहणादुपसंख्यानाद्वा आनुमानिकस्याप्यादेशस्य स्थानिवद्भावः सिद्धः ॥

(उद्द्योतः) अवस्थिते इति । न च इप्रसङ्गे उरिति वाच्यमिति नानित्यत्वम् । अनर्थकत्वेनार्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात् । अवयवत्वेन प्रसङ्गे त्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्वं स्यादित्यर्थः ॥ स एवायमिति प्रत्यभिज्ञया भाष्ये नित्यत्वमुपलक्षितम् । अत एव विकृत इत्यनेन विरोधः । अनित्यत्वाभावे हेतुः—तेः प्रसङ्गे इत्यादि । अस्य ह्यर्थवत्त्वात्तेः प्रसङ्गे इत्युक्तिर्नासमञ्जसेत्यर्थः ॥ तदुपपादकम्—एरुरित्यादि । एवं च कार्यशब्दवादे न्यायेन सिद्धम्, नित्यशब्दवादे तु नेति वचनारम्भवादितात्पर्यम् ॥ वस्तुतो[7] वचनारम्भेऽपि विकृतत्वबुद्धिमात्रेण तत्संगतिरित्यवश्यं वाच्यम् । अन्यथा विकृतस्येत्यसंगतं स्यात् । तदा तथैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति ॥ अनित्यविज्ञानं त्वित्याद्येकदेश्युक्तिः ॥

( ऋष्यन्तरसंवादभाष्यम् )

**भारद्वाजीयाः पठन्ति—**

( भारद्वाजीयवार्तिकम् )

## ॥ * ॥ एकदेशविकृतेषूपसंख्यानम् ॥ * ॥

( भाष्यम् )

**एकदेशविकृतेषूपसंख्यानं कर्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥**

**किंच कारणं न स्यात् ? ।**

( भारद्वाजीयवार्तिकम् )

## ॥ * ॥ अनादेशत्वात् ॥ * ॥

( भाष्यम् )

**आदेशः स्थानिवदित्युच्यते । न चेमे आदेशाः ॥**

---

१ शङ्कते—बहुव्रीहाविति । भावक्तान्तेन बहुव्रीहावित्यर्थः । कर्मक्तान्तेन बहुव्रीहौ त्वर्थासंगतिरपीति भावः ॥ तृतीयेतीति । अत्र कर्मण्येव क्तः । समुदायस्य विकृतत्वे एकदेशस्य विकारद्वारा करणत्वमिति कर्तृकरणे इति समासः । धान्येन धनवानितिवत्तृतीयायां तु सुप्सुपेति समासः ॥ आहिताग्न्यादित्वेन तथा बहुव्रीहिरपि सुवच इति गदायां निरूपितम् ॥ छाया ॥

२ यथाश्रुतार्थबाधादाह—आनुमानीति ॥ छाया ॥

३ अत्र मानमाह—तथाचेति ॥ छाया ॥

४ अवयवापगमे इति पाठः ॥ अस्याशयमाह—लोपस्येति ॥ नेऽपीति । तस्य तत्त्वोपसंख्यानेऽपीत्यर्थः ॥ तत्र अपचदित्यादौ ॥ उक्तेति । लोकन्यायाश्रयणरूपेत्यर्थः ॥ छाया ॥

५ अनुपयोगादाह—अर्थेत्यादीति ॥ अस्य तात्पर्यमाह—अन्यथेति । लोकन्यायानाश्रयण इत्यर्थः ॥ चोऽप्यर्थे ॥ छाया ॥

६ तत्र तस्मिन् सति । नित्यो विकृतश्चेत्येतन्नोपपद्यते नित्येषु विरोधादिति भाष्यार्थ इत्याह—स एवेति ॥ छाया ॥

७ भाष्यं दूषयति—वस्तुत इति ॥ एवं च कैयटादिकं चिन्त्यमेवेति भावः ॥ छाया ॥

( भारद्वाजीयवार्तिकम् )

॥ * ॥ रूपान्यत्वाच ॥ * ॥

( भाष्यम् )

अन्यत्खल्वपि रूपं पचतीति अन्यत्पचत्विति ॥

(प्रदीपः) न चेम इति। तुशब्दादयः। परुरित्यत्र साक्षात्समुदायानुपादानात्॥ रूपान्यत्वाच्चेति। यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम्। यतस्तु भेदको रूपस्य तस्मान्नास्ति तिङ्त्वमिति भावः॥

(उद्द्योतः) कात्यायनीयाद्भारद्वाजीयपाठे हेत्वभिधानं बहुवचनं च विशेषः॥ एरुरित्यत्रेति। प्रत्यक्षादेशत्वं चेह निषेध्यमिति भावः॥ लोकन्यायेन सिद्धिखण्डनाय रूपान्यत्वाच्चेति। तद्व्याचष्टे—यदीति। इदमो म इत्यादिवदिति भावः। अर्थस्यान्यथाभावेन जात्यभिव्यञ्जकाभाव इति तात्पर्यम्। एकदेशविकृतेष्विति बहुवचनेन लोपस्यापि सङ्ग्रहादपचदित्यादावपि स्थानिवत्त्वमिति बोध्यम्॥

( आक्षेपनिराकरणभाष्यम् )

इमेऽप्यादेशाः॥

कथम्?॥

आदिश्यते यः स आदेशः। इमे चाप्यादिश्यन्ते॥

(उद्द्योतः) भाष्ये वचनं खण्डयति—इमेऽपीति। आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः॥ इममाशयमजानानः पृच्छति—कथमिति। उक्तेनैवाभिप्रायेणाह—आदिश्यत इति॥ इमेचेति। तुशब्दादयः॥

( ३६८ आक्षेपसाधकवार्तिकम्॥ १०॥ )

॥ * ॥ आदेशः स्थानिवदिति चेन्नानाश्रितत्वात्॥ * ॥

( भाष्यम् )

आदेशः स्थानिवदिति चेत्। तन्न॥

किं कारणम्?।

अनाश्रितत्वात्। योऽत्रादेशो नासावाश्रीयते। यश्चाश्रीयते नासावादेशः॥

(प्रदीपः) योऽत्रादेश इति। इकारस्य उकारः। नासावाश्रीयते पदसंज्ञायाम्। सा हि तिशब्दनिबन्धना नावयवनिबन्धना॥ यश्चेति। तुशब्दः। साक्षादविधानान्नादेशः पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः॥

(उद्द्योतः) आदेशपदसामर्थ्यमजानानँ आह—आदेश इत्यादि। प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः॥ तदाह—योऽत्रेति॥ ननु तामादेः पदसंज्ञायामनाश्रयणेऽपि यथास्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह—साहीति। तेश्च नायमादेश इति भावः॥ तिङ्त्वं समुदायपर्याप्तमिति तात्पर्यम्। स्थानिवत्त्वद्वारापि नायमुकारः पदत्वहेतुतयाऽऽश्रीयत इति भाष्यार्थः॥ आश्रीयते इत्यर्थं इति। आश्रयितुमिष्यत इत्यर्थः॥

( आक्षेपबाधकभाष्यम् )

नैतन्मन्तव्यम्—'समुदाये आश्रीयमाणेऽवयवो नाश्रीयते' इति। अभ्यन्तरो हि समुदायस्यावयवः। तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति॥

(प्रदीपः) तत्रोत्तरमाह—नैतदिति। तिप् तस् झि इति तिप्सन्निवेशे इकारतकारावपि सन्निविष्टावितीकारस्य तिङ्त्वात्तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा॥

(उद्द्योतः) तत्रोत्तरमाहेति। एकदेशीति शेषः॥ भाष्ये—समुदाये इत्यादि। सुप्तिङन्तमित्यादौ ति इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाभावात् तकारेकारान्तं पदमित्यर्थः। एवं चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं सिद्धमिति भावः॥ तिङ्त्वाद् तदवच्छिन्नावयवत्वात्॥ तिङ्त्वं तदवच्छिन्नावयवेकारत्वमित्यर्थः। यथाश्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वापत्तिरिति बोध्यम्॥

( ३६९ आक्षेपवार्तिकम्॥ ११॥ )

॥*॥ आश्रय इति चेदल्विधिप्रसङ्गः॥ * ॥

( भाष्यम् )

आश्रय इति चेदल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति॥

(प्रदीपः) अल्विधिप्रसङ्ग इति। इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः। नैवं सति कश्चिदनल्विधिः स्याद्। उच्यते चेदमनल्विधाविति। तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो योऽल्विधिरिति॥

कश्च साधीयः?।

यत्र प्राधान्येनालाश्रीयते। यत्र नान्तरीयकोऽलाश्रीयते नासावल्विधिरिति॥

(प्रदीपः) यत्र प्राधान्येनेति। यत्र साक्षादल् निर्दिष्टः, तत्र प्रतिषेधो नानुमीयमाने सम्भवमात्रेणालीत्यर्थः। प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम्॥

१ दण्ड्याद्युक्तमाह—बहिरिति। तत्फलं वक्ष्यति॥ छाया॥
२ तत्फलमाह—एकेति॥ छाया॥
३ नान आह नान एवाह॥ आनुमानिकतत्त्वसत्त्वादाह—प्रत्यक्षेति॥ छाया॥
४ भाष्यतात्पर्यमाह—स्थानिवत्त्वेति॥ छाया॥
५ वर्णितभाष्याशयेन किमिति कैयटान्यथायोजना कैयटोक्त एव भाष्यार्थः कुतो नात आह—यथाश्रुते हीति॥ छाया॥

(उद्द्योतः) ननु प्राधान्येनेत्युक्तौ प्रदीन्येति न सिध्येदत आह—यत्रेति ॥ प्रत्यक्षेति । अनान्तरीयकेत्यर्थः ॥

(सिद्धान्तिसमाधानभाष्यम्)

**अथवोक्तमादेशग्रहणस्य प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यादिति ॥**

(प्रदीपः) **आदेशमात्रमिति** । आनुमानिकमपीत्यर्थः ॥

(उद्द्योतः) इदानीं सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति—भाष्ये अथवेति ॥

(शब्दनित्यत्वेऽप्यनुपपत्तिपरिहाराधिकरणम्)

(३७० आक्षेपवार्तिकम् ॥ १२ ॥)

**॥ * ॥ अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् ॥ * ॥**

(भाष्यम्)

**स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते॥**

**किं कारणम्?।**

**नित्यत्वात् । स्थानी हि नाम—यो भूत्वा न भवति । आदेशो हि नाम—योऽभूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते—यत्सतो नाम विनाशः स्यात्, असतो वा प्रादुर्भाव इति ॥**

(प्रदीपः) **अनुपपन्नमिति** । एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम् । यत्रान्वयोऽपि कस्यचिन्नास्तीत्यर्थः ॥

(उद्द्योतः) **सर्वविकार इति** । अस्तेर्भूरित्यादौ ॥ योभूत्वेत्यादिभाष्यस्य प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वमिति तात्पर्यम् ॥

(३७१ समाधानवार्तिकम् ॥ १३ ॥)

**॥ * ॥ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् ॥ * ॥**

(भाष्यम्)

**सिद्धमेतत् ।**

**कथम्? ।**

**यथा लौकिकवैदिकेषु कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दप्रयोगो वर्तते । लोके तावद्—'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते, न च तत्र उपाध्यायो भूतपूर्वो भवति ॥ वेदेऽपि—'सोमस्य स्थाने पूतीकतृणान्यभिषुणुयाद्' इत्युच्यते । न च तत्र सोमो भूतपूर्वो भवति ॥**

(प्रदीपः) **सोमस्येति** । सोमस्तृणविशेषः ॥ तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते ॥

(उद्द्योतः) स्थानशब्दः प्रसङ्गवाचीत्युत्तरम् ॥ **तदसंनिधाविति** । नित्यस्यावश्यकर्तव्यत्वादारब्धस्य चावश्यसमापनीयत्वादिति भावः ॥

(३७२ समाधानान्तरवार्तिकम् ॥ १४ ॥)

**॥ * ॥ कार्यविपरिणामाद्वा [सिद्धम्] ॥ * ॥**

(भाष्यम्)

**अथ वा कार्यविपरिणामात्सिद्धमेतत् ॥**

**किमिदं कार्यविपरिणामादिति ? ॥**

**कार्या बुद्धिः सा विपरिणंस्यते ॥**

(प्रदीपः) **कार्या बुद्धिरिति** । अन्यस्यात्र विपरिणामासम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न तु कार्यशब्दो बुद्धिपर्यायः ॥

(प्रयोगासिद्धिभाष्यम्)

**ननु च कार्याविपरिणामादिति भवितव्यम् ॥**

(प्रयोगसाधकभाष्यम्)

**सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि ॥**

(प्रदीपः) **सन्तीति** । ङ्यापोरित्यत्र बहुलग्रहणात् ॥

(उद्द्योतः) संज्ञाछन्दसत्वयोरभावादाह—बहुलेति ॥

(प्रयोगसाधकयुक्त्यन्तरभाष्यम्)

**अपि च "बुद्धिः संप्रत्यय इत्यनर्थान्तरम् ।" कार्या बुद्धिः, कार्यः संप्रत्ययः । कार्यस्य संप्रत्ययस्य विपरिणामः कार्यविपरिणामः कार्यविपरिणामादिति ॥**

(समाधानान्तरबाधकभाष्यम्)

**परिहारान्तरमेवेदं मत्वा पठितम् ॥**

(उपपत्तिप्रश्नभाष्यम्)

**कथं वेदं परिहारान्तरं स्याद् ? ॥**

(समाधानान्तरबाधकभाष्यम्)

**यदि भूतपूर्वे स्थानशब्दो वर्तते ॥**

(उद्द्योतः) भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्त-

---

१ तत्त्वमप्यविवक्षितमित्याह—अनान्तरीयेति ॥ छाया ॥

२ अन्विति । तस्याखण्डनात् । इवेन वस्तुतोऽतत्त्वं सूचितम् ॥ छाया ॥

३ पूतीकतृणानि पर्णकण्टकशून्यानि क्षुद्रीसदृशानि ॥ छाया ॥

४ काम्येऽपि तदुपयोगमाह—आरब्धेति ॥ छाया ॥

५ बाहुलकानाश्रयणेऽप्याह—अपिचेति ॥ छाया ॥

६ नानेन पूर्वस्यैवोपाय उक्तः किंतूपायान्तरमित्याह—परीति ॥ छाया ॥

७ कथमिति । तस्योभयत्राविशिष्टत्वादिति भावः ॥ छाया ॥

८ तदुत्तरमाह—यदीति ॥ छाया ॥

९ यदिपदघटिताशयमाह—भूतपूर्वे इति ॥ अन्यथेति । तेनैव सिद्धत्वात् ॥ छाया ॥

---

१ आहेति । बुद्धिपर्यायं विशेष्यं कार्यशब्दान्वययोग्यं प्रदर्शयितुं गौतमसूत्रमाहेत्यर्थः । "बुद्धिरुपलब्धिर्ज्ञानं संप्रत्यय इति पर्यायाः" इति प्रशस्तपादोक्त्यनुसारेण "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (१।१।१५) इति गौतमसूत्रे संप्रत्ययपदं लेखकप्रमादान्नष्टं भवेदिति प्रतीयते ॥ दाधिम०

रम्। अन्यथानर्थक्यप्रसङ्गात्॥ न च तत्र स्थानशब्दो दृश्यते सोमस्य स्थाने इत्यादावभूतपूर्वे एव प्रयोगदर्शनादिति यदि भूतपूर्वेत्यादि भाष्यतात्पर्यम्॥

(समाधानान्तरसाधकभाष्यम्)

**भूतपूर्वे चापि स्थानशब्दो वर्तते॥**

**कथम्?॥**

**बुद्ध्या। तद्यथा कश्चित्कस्मैचिदुपदिशति—'प्राचीनं ग्रामादाम्राः' इति। तस्य सर्वत्राम्रबुद्धिः प्रसक्ता। ततः पश्चादाह—'ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः' इति। स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपधीयमानान्। नित्या एव च स्वस्मिन्विषये आम्राः, नित्याश्च न्यग्रोधाः। बुद्धिस्त्वस्य विपरिणम्यते। एवमिहाप्यस्तिरस्मायविशेषेणोपदिष्टः। तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता। सः "अस्तेर्भूः" इत्यनेनास्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते। स ततः पश्यति—बुद्ध्या अस्तिं चापकृष्यमाणं भवतिं चोपधीयमानम्, नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च। बुद्धिस्त्वस्य विपरिणम्यते॥**

(प्रदीपः) **भूतपूर्वे चापीति**। न च नित्यत्वविरोधः। बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते, न तु तद्वशादर्थानां तथावस्थानम्॥ **प्राचीनमिति**। प्राचि देशे प्राक्। ततो **विभाषाञ्चेरदिक्स्त्रियामि**ति स्वार्थे खः। तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमैव कृता॥ **आम्रबुद्ध्या इति**। अस्या अनन्तरमित्यर्थः॥

(उद्द्योतः) **न चेति**। भूतपूर्वे हि स्थानशब्दो निवृत्तिवचनः स्यादिति भावः॥ तत्पक्षे नित्यत्वं कथमिति पृच्छति—भाष्ये क**थमिति**। उत्तरमाह—**बुद्ध्येति**॥ **प्रतिपत्तृवशादिति**। प्रतिपत्तृशब्देन तदीया प्रतिपत्तिर्लक्ष्यते तद्वशात् प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते स्वतस्तद्दृस्त्वस्य तत्र बाधादिति भावः॥ क्वचित्तु प्रतिपत्तिवशादिति पाठः॥ तदाह—**नन्विति**। आरोपितभूतपूर्वत्वव्यवहारान्न नित्यत्वहानिरिति भावः॥ ननु प्राचीनमित्यस्यार्थोऽधिकरणप्रतिपादकत्वात् सप्तमी स्यादत आह—**प्राचीति**। सप्तम्यन्तादुत्पन्नात्ततेरञ्चेर्लुगिति लुक्॥ भाष्ये—**तस्य सर्वत्रेति**। प्राग्देशवृक्षत्वावच्छिन्न इत्यर्थः॥ **स तत्र न्यग्रोधेषु**॥ नन्वाम्रबुद्ध्या इति न तृतीया अर्थासङ्गतेः, नापि षष्ठी संबन्धिनोऽनुपस्थितेरत आह—**तस्या अनन्तरमिति**। अनन्तरपदाध्याहारेण षष्ठीति भावः॥ केचित्तु आम्रबुद्ध्या इत्यस्य तां विहायेत्यर्थं इत्याहुः॥ भाष्ये **अपकृष्यमाणानिति**। तत्र यथा बुद्धेरेवापकर्षं उपधानं च आम्रेषु न्यग्रोधेषु चारोप्यते, तथात्रापि बुद्धिगतोत्पादविनाशयोः स्थान्यादेशभावस्य च शब्देष्वारोप इति भावः॥ उपधानमुत्पत्तिः॥

(उत्सर्गकार्यनिराकरणाधिकरणम्)

(३७३ आक्षेपवार्तिकम्॥ १५॥)

## ॥*॥ अपवादप्रसङ्गस्तु स्थानिवत्त्वात्॥*॥

(भाष्यम्)

**अपवादे उत्सर्गकृतं प्राप्नोति। "कर्मण्यण्"। "आतोऽनुपसर्गे कः" इति केऽपि अणि कृतं प्राप्नोति। किं कारणम्?। स्थानिवत्त्वात्॥**

(प्रदीपः) **अपवादप्रसङ्गस्त्विति**। बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः॥ **कर्मण्यणिति** सर्वत्राणुबुद्धिः प्रसक्ता **आतोऽनुपसर्गे क** इति कबुद्ध्या निवर्तते इति केऽप्यण्कृतप्रसङ्गः॥

(उद्द्योतः) ननु उत्सर्गापवादयोः स्थान्यादेशभावाभावात् कथं स्थानिवत्त्वमत आह—**बुद्धीति**। **अण्कृतेति**। ङीबित्यर्थः॥

(आक्षेपबाधकभाष्यम्)

## ॥*॥ उक्तं वा॥*॥

**किमुक्तम्?।**

***विषयेण तु नानालिङ्गकरणात् सिद्धम्*इति॥**

(प्रदीपः) **विषयेण त्विति**। तुशब्दः पुनरर्थे। यदयं **गापोष्टगिति** कापवादस्य टकः कित्त्वं शास्ति। तज्ज्ञापयति—**नोत्सर्गकृतमपवादे भवतीति**॥

(उद्द्योतः) भाष्ये **उक्तंवेति** वार्तिकस्यमुक्तमित्यंशं व्याचष्टे—**विषयेणत्वित्यादि**। अइउण्सूत्रे एकोऽकार इति पक्षेऽनुबन्धसङ्करः प्राप्नोति केऽप्यण्कृतं प्राप्नोतीति पूर्वपक्षे **विषयेण तु नानालिङ्गकरणात्सिद्धम्** इत्युक्तम्। विषयेऽणकादौ भिन्नलिङ्गकरणाद् इह मुण्डो भव इह जटी भवेति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति तथा यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नान्यानुबन्धकार्यमिति तदर्थश्चोक्तः॥ एवं च सामान्यापेक्षत्वान्नियमस्य स्थानिवत्त्वप्रयुक्तस्यापि व्यावृत्तिरिति

१ कथमिति प्रश्नो न तस्य तद्वृत्तित्वविषयः, उत्तरग्रन्थासंगतेरत आह—तत्पक्ष इति॥ छाया॥

२ यथाश्रुतासंगतेराह—प्रतीति॥ तद्वशादित्यस्य व्याख्या प्रतीति॥ छाया॥

३ पाठः पाठ एव॥ तत्तात्पर्यार्थमाह—आरोपीति॥ छाया॥

४ अत्रेति। प्राचीने देश इत्यर्थः॥ छाया॥

५ स तत्रेत्यस्य व्याख्या न्यग्रोधेष्विति॥ छाया॥

६ अर्थासंगतिरिति। आम्रबुद्ध्या अनुसंहतामनुगतां न्यग्रोधबुद्धिमिति कृष्णोक्तं तु न स्वरसंसिद्धमिति भावः॥ छाया॥

७ शाब्दसंस्त्वाचदयुक्तमित्याह—केचित्त्विति॥ छाया॥

८ Bengal Asiatic Society मुद्रितपुस्तके 'स्थान्यादेशभावात्' इति पाठं मुद्रयन् संशोधकस्तु ग्रन्थसंगतिं प्रष्टव्यः॥ दाधिमथाः॥

९ नियमस्य उक्तरूपस्य। अन्यथैतदसंगतिः स्पष्टैव॥ छाया॥

भावः ॥ वार्त्तिकेऽधिकरणस्यैव करणत्वविवक्षया तृतीया ॥ कैयटोक्तव्याख्याने तु अथवा यदयं श्यन्नादीनिति वक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभम् । शब्दमर्यादया वार्त्तिकात्तदर्थालाभश्च । तुशब्दस्य पुनरर्थत्वेऽपि नानापदानन्वयस्तदवस्थश्च । किंच कैयटोक्तार्थकं विषयेण तु पुनर्लिङ्गकरणात्सिद्धमिति भाष्ये तत्र पठितं नत्वेवमिति दिक् ॥

( भाष्यम् )

॥ अथ वा—

( ३७४ समाधानवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ? ।**

**षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम् ॥**

(प्रदीपः) **षष्ठीनिर्दिष्टस्येति** । न चापवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते ॥ **नाभि नभं चेत्यादौ** षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी ॥ विश्रवणरवणेति तु शब्दान्तरं प्रत्ययविषयं विज्ञेयम् । यथोक्तम्—* **बालवायो विदूरं च प्रकृत्यन्तरमेव वा** * इति । विश्रवः शब्दात्त्वनभिधानात् प्रत्ययाभावः ॥

(उद्योतः) तत्रैलं वेलंशं व्याचष्टे—**अथवा सिद्धंत्विति** ॥ अनुवर्तमानं षष्ठीति पदं षष्ठीनिर्दिष्टलाक्षणिकं षष्ठ्या विपरिणम्यत इत्याशयेनाह—**षष्ठीनिर्दिष्टस्येति** ॥ नन्वेवं **नाभि नभ**मित्यादौ षष्ठीनिर्देशाभावात्स्थानिवत्त्वाभावेन यत्प्रत्ययसंनियुक्तनभस्य भत्वाभत्वयोरभावाद्यस्येति लोपो न स्यादत आह—**नाभीति** । **विधानात्** करणात् ॥ यत्र तर्हि स्थान्यनुमानं तत्र कथमत आह—**विश्रवणेति** । **प्रत्ययविषयम्** । शिवाद्यणविषयम् ॥ **बालवेति** । वैदूर्यस्य विदूरात्र प्रभवः किंतु बालवायाद् इति **विदूराद् ञ्य** इत्यस्यासङ्गतौ इदं वार्त्तिकम् बालवायो विदूरमापद्यतेऽथास्मात्प्रत्ययः । यद्वा बालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इति तदर्थः ॥ ननु विश्रवणादेरनादेशत्वे विश्रवःशब्दादपि प्रत्ययः स्यादत आह—**विश्रव इति** ॥

( आक्षेपभाष्यम् )

**तत्तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम् ॥**

( समाधानभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम् ? ।**

**"षष्ठी स्थानेयोगा" इति ॥**

( समाधानान्तरभाष्यम् )

**अथ वा आचार्यप्रवृत्तिर्ज्ञापयति—नापवादे उत्सर्गकृतं भवतीति । यदयं श्यन्नादीन् कांश्चिच्छितः करोति श्यन् श्नम् श्ना शः श्नुरिति ॥**

(प्रदीपः) **यदयमिति** । न च पित्त्वनिवृत्त्यर्थं नियमार्थं शित्त्वम् । श्यनो नित्त्वाज् ज्ञापकात् पित्त्वनिवृत्तेः सिद्धत्वात् । नह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः ॥ तदयुक्तम् । ताच्छील्यादौ विषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात् । तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते—अपवादे उत्सर्गकृतं न भवतीति ॥

(उद्योतः) **विशेषोऽस्तीति** । नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्तत्वाय । स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याप्यद्युपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति भावः ॥ **आद्युदात्तार्थमिति** । इष्टमपि चित्त्वप्रयुक्तान्तोदात्तत्वं बाधित्वेत्यर्थः ॥ अन्यत्र विकरणेभ्य इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भावः ॥ किंच वावृतु इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेषः ॥ कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवेति बोध्यम् ॥ **इष्टसिद्धये इति** । वैयर्थ्यान्नियमत्वं वा ज्ञापकत्वं वेत्यत्र विनिगमकाभावान्नित्त्वसामर्थ्यादन्यत्र **विकरणेभ्य** इत्युपदेशबाधकल्पनापेक्षया **स्थानिवदित्य**तिदेशबाधकल्पनस्यैवौचित्याच्चेति भावः ॥ **सामान्येनेति** । न विकरणविषयमेव, नापि पित्त्वविषयमेवेत्यर्थः ॥ भाष्ये **श्यन्नादीनिति** । उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम् ॥

( स्थानिवत्त्वप्राप्तदूषणनिराकरणाधिकरणम् )

( ३७५ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ तस्य दोषस्तयादेश उभयप्रतिषेधः ॥ * ॥

( भाष्यम् )

**तस्यैतस्य लक्षणस्य दोषः । तयादेश उभयप्रति-**

१ व्याख्यानस्य व्याख्येयविरोधं परिहरति—वार्तिके इति ॥ छाया ॥

२ कैयटं दूषयति—कैयटोक्तेति ॥ छाया ॥

३ तस्य विशेषापेक्षत्वे आह—तत्रत्यमिति ॥ छाया ॥

४ प्रकृतत्वादाह—शिवादीति ॥ छाया ॥

५ चानशीति । ध्रुध्यमान इत्यादावित्यर्थः ॥ अस्य स्वतन्त्रत्वेन लसार्वधातुकत्वाभावादिति भावः ॥ छाया ॥

६ आद्युदात्तत्वायेति । समुदितस्येति भावः ॥ छाया ॥

७ नन्वन्यत्र विकरणेभ्य इत्युक्तेः कथमिदमत आह—अन्यत्रेति ॥ छाया ॥

८ स्वयं दोषान्तरमाह—किंचेति ॥ तर्हीदं कैयटेन कुतो नोक्तमत आह—कैयटेति ॥ छाया ॥

नन्वेवं ततोवावृत्यमाना सा रामशालां न्यविक्षत इति भट्टिप्रयोगानुपपत्तिरिति चेन्न । तत्र वाशब्दस्यैवार्थकतया कामयमानेव न तु तथा, किंतु च्छलनार्थमागतेत्यर्थात् ॥ श० कौ० ॥

९ अत एव निःसंदिग्धं ज्ञापकं प्राक्कैयटोक्तमेवाह—भाष्ये श्यन्नादीनितीति ॥ छाया ॥

१० दोष इति । अतिव्याप्तिरित्यर्थः ॥ जातावेकवचनम् । तानेवाह—तयादेश इत्यादिना ॥ छाया ॥

षेधो वक्तव्यः । उभये देवमनुष्याः । तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति ॥

( आक्षेपनिराकरणसिद्धान्तिभाष्यम् )

नैष दोषः । अयच् प्रत्ययान्तरम् ॥

( आक्षेपसाधकभाष्यम् )

यदि प्रत्ययान्तरम्, उभयीति ईकारो न प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

मा भूदेवम् । मात्रच इत्येवं भविष्यति ॥

कथम्?

मात्रजिति नेदं प्रत्ययग्रहणम् ॥

किं तर्हि?।

प्रत्याहारग्रहणम् ॥

क्व सन्निविष्टानां प्रत्याहारः?।

मात्रशब्दा[2]त्प्रभृति आ अयचश्चकारात् ॥

( आक्षेपसाधकभाष्यम् )

यदि प्रत्याहारग्रहणम्, 'कति तिष्ठन्ति' अत्रापि प्राप्नोति ॥

(प्रदीपः) कति तिष्ठन्तीति । परिहारान्तरसद्भावाद् न षट्स्वस्रादिभ्य इति प्रतिषेधोऽत्र नोक्तः ॥

( आक्षेपबाधकभाष्यम् )

अत इति वर्तते ॥

( आक्षेपसाधकभाष्यम् )

एवमपि 'तैलमात्रा घृतमात्रा' अत्रापि प्राप्नोति ॥

(प्रदीपः) तैलमात्रेति । चकारस्य प्रत्याहारार्थस्योपादानात्तस्याऽविशेषकत्वाद् मात्रशब्द[3]मात्रग्रहणप्रसङ्गः ॥

( आक्षेपबाधकभाष्यम् )

सदृशस्याप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् ॥

(प्रदीपः) सदृशस्येति । प्रत्ययानुकरणं मात्रशब्द इति प्रातिपदिकस्याऽग्रहणमित्यर्थः ॥

(उद्द्योतः) प्रत्ययानुकरणमिति । टिड्ढाणञ्सूत्रे साहचर्यादिति भावः ॥

( ३७६ आपक्षेवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ जात्याख्यायां वचनादेशे स्थानिवद्भावप्रतिषेधः ॥ * ॥

( भाष्यम् )

जात्याख्यायां वचनादेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः । व्रीहिभ्य आगत इत्यत्र "घेर्ङिति" इति गुणः प्राप्नोति ॥

(प्रदीपः) जात्याख्यायामिति । एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः ॥

(उद्द्योतः) नन्वेकस्मिन् बहुवचनमित्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह—एकस्मिन्निति ॥

( आक्षेपनिरासभाष्यम् )

नैष दोषः । उक्तमेतत्-* अर्थातिदेशात्सिद्धम् * इति ॥

(उद्द्योतः) भाष्ये—अर्थातीति । [4]बहुवचनशब्दो न प्रत्ययपरः, किं त्वर्थपर इति भावः ॥

( ३७७ आक्षेपवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ ङ्याब्ग्रहणेऽदीर्घः ॥ * ॥

( भाष्यम् )

ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम् ॥

किंप्रयोजनम्?॥

निष्कौशाम्बिः । अतिखट्वः । ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति ॥

(उद्द्योतः) ङ्याब्ग्रहणे अदीर्घ इति भाष्ये । नन्[5] गङ्गाया इर्गङ्गिः, गङ्गीयतेः क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । न च तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु सुलोपश्चास्त्विति वाच्यम् । आकारेकारप्रश्लेषमादायै[6]तत्प्रत्याख्यानपरभाष्यविरोधात् । सूत्रमतेऽपि नात्र लोपः, प्रत्यासत्त्या ङ्याप्पदोपस्थितेकाराकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न । तेषां[7]मनभिधानात् । नचेदं विशेषणं व्यर्थम् खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावादिति वाच्यम् । न[8] स्थानिवदित्यस्य स्थानिकार्यं न लभते इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति

---

१ एवं तयवन्ततया ॥ छाया ॥

२ मात्रशब्दादिति । एवंच ङीब्विधौ तयपो ग्रहणं गोबलीवर्दन्यायेन स्पष्टार्थमेवेति बोध्यम् ॥ दाधिमथास्तु-तयब्विधिसूत्रम् "उभादुदात्तो नित्यम्" इत्युत्तरमेव भवेत् । पश्चाद्विधास्यमानयोरप्यणिञोः ष्यङादेशविधाविवोद्देश्यत्वे न विरोधः । अष्टमचतुर्थपादे इव पाठव्यत्ययस्यात्रापि संभवात् । अतएव तयब्ग्रहणवैयर्थ्यशङ्कासमाधाने भगवता कतिशब्द इव न कृते इति वदन्ति ॥

३ मात्रं कार्त्स्न्ये ॥ छाया ॥

४ एकशब्दस्त्वर्थपरः स्थित एवेत्याह—बह्विति ॥ छाया ॥

५ अदीर्घ इत्यंशे शङ्कते—नन्विति ॥ इः कामः ॥ छाया ॥

६ एतदिति । वार्तिकेत्यर्थः ॥ ननु भाष्यमते तथा सत्त्वेऽपि सूत्रमते इष्टापत्तिरेवात आह—सूत्रेति ॥ अत्र गङ्गेरित्यादौ ॥ प्रत्याख्यानानुरोधेनाह—प्रत्येति ॥ अन्यथा तयोः फलाभेदापत्तिः स्पष्टैवेति भावः ॥ छाया ॥

७ तेषामिति । एवं च वार्तिकमतेऽपि न दोष इति भावः ॥ इदं अदीर्घ इति ॥ छाया ॥

८ सिद्धस्य गतिश्चिन्तनीयेति न्यायेनाह—न स्थानीति ॥ यत इत्यादिः ॥ येनेति । परादिवत्त्वेनापीत्यर्थः ॥ तस्येष्टत्वादाह—शङ्केति ॥ छाया ॥

दीर्घेण्याप्त्वप्रयुक्तकार्याभावशङ्कावारणार्थं तत्॥ ह्रस्व इति नोक्तम्, चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि टापो लुक्यपि [1]प्रत्ययलक्षणेन हलङ्यादिलोपापत्तेः ॥ मम तु लुकोपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् ॥ अतिखट्व इति । नचात्र ह्रस्व आकारस्येति तद्गतमात्वमल्विधिरिति वाच्यम् । [2]गोस्त्रियोरित्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थः । अचश्चेति तु नोपतिष्ठते, अनियमाप्रसक्तेः । स्त्रीप्रत्ययत्वं च टाङीत्यादिविशिष्टनिष्ठमिति न दोषः । [3]सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव गोटाङ्ग्रहणं कर्तव्यमिति वार्तिककृतोक्तम् । स्वरितत्वबलात् स्त्रियामिति प्रकृत्य ये विहितास्तेषां ग्रहणमिति भाष्यकृतोक्तम् । विधानं चानुबन्धविशिष्टस्यैवेति स्पष्टमेवेति दिक् ॥

( आक्षेपबाधकभाष्यम् )

**ननु च दीर्घादित्युच्यते ॥**

( आक्षेपसाधकलाघवभाष्यम् )

**तत्र वक्तव्यं भवति ॥**

( तटस्थाक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ? ।**

( तटस्थाक्षेपसमाधानभाष्यम् )

**स्थानिवद्भावप्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति—अतिखट्वाय अतिमालाय । "याडापः" इति याड् न भवति ॥**

(उद्द्योतः) अतिखट्वायेति । [4]न चावन्तादङ्गात्परस्य याडिति तदर्थः । उपसर्जनस्त्रीप्रत्यये च तदादिनियमाद् नैतदङ्गमावन्तमिति स्थानिवत्त्वेऽपि न याट्प्रवृत्तिरिति वाच्यम् । [5]प्रत्ययग्रहणपरिभाषयाऽऽबन्तग्रहणे तेन चाङ्गविशेषणे आबन्तान्तं यदङ्गमित्यर्थान्न दोषः । अत एवार्धखट्वायामित्यादौ याट्सिद्धिरिति भावः ॥

( आक्षेपभाष्यम् )

**अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते पिच्चासौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति? ।**

(प्रदीपः) भूतपूर्व इति । अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणात् । आ इति च रूपसद्भावात् ॥

( समाधानभाष्यम् )

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

(प्रदीपः) लक्षणेति । अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः ॥

( उद्द्योतः ) [6]नन्वेवमपि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेव, अयं निषेधस्तु न दीर्घत्वादत आह—अत्रचेति । एवं च स्थानिवद्भावेन तदलाभस्तत्स्थानिन्य[7]सत्त्वादिति भावः ॥

( आक्षेपभाष्यम् )

**ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम् ॥**

(उद्द्योतः) भाष्ये ननुचेदानीमिति वार्त्तिकाकरणे इत्यर्थः ॥ सत्यपीति । निष्कौशाम्बिरित्यादौ ॥

( समाधानभाष्यम् )

**नेत्याह । न तर्हीदानीं क्वचिदपि स्थानिवद्भावः स्यात् ॥**

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ॥ प्रश्लिष्टनिर्देशात्सिद्धम् ॥ प्रश्लिष्टनिर्देशोऽयम्, ङीई ईकारान्तात्—आ आप् आकारान्तादिति ॥**

(उद्द्योतः) प्रश्लिष्टनिर्देशादिति । [8]अतिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वादेव न दोषः । [9]खट्वायै इत्यादौ तु[10] न दोषो यतो लक्षणप्रवृत्तिं विना यद्रूपासंभवस्तदेव लाक्षणिकं परिभाषाया निषेधविषयः । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादित्याहुः ॥ [11]अयं च प्रश्लेषो 'याडापः' 'आङि चापः' 'औङ आपः' 'ङेराम्नद्याप्', 'हल्ङ्याब्' इत्येतेषु ॥ [12]ह्रस्वनद्याप इत्यत्र तु प्रश्लेषे न मानमिति दिक्[13] ॥ ननु भाष्यमते सूत्रमते च अतिखट्वस्य आ

१ प्रत्ययेति । नियामकेनेति भावः । ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदिति वार्तिकार्थः ॥ छाया ॥

२ गोस्त्रियोरिति । यत इत्यादिः ॥ 'प्रत्ययग्रहणे–' 'येन विधिः–' इति क्रमेण तदन्तविधिद्वयेनालोऽन्त्यपरिभाषया चेत्यर्थः ॥ छाया ॥

३ तत्र हेतुमाह—सूत्रोपात्तेति ॥ हि यतः ॥ अत्र वर्तिकसंमतिमाह—अत एवेति ॥ तस्य तत्त्वादेवेत्यर्थः ॥ गोस्त्रियोरित्यत्रत्यभाष्यसंमतिमप्याह—स्वरितत्वेति । तेन कृत्क्तिन्नादेर्न ग्रहणमिति भावः ॥ भाष्येति ॥ गोटाङ्ग्रहणमिति वार्तिकप्रत्याख्यानायेति शेषः ॥ नन्वेतावता प्रकृते किमत आह—विधानं चेति ॥ छाया ॥

४ नचेति । प्रत्ययग्रहण इत्यनयाऽतिखट्वस्य नावन्तत्वम् । यच्चावन्तं खट्वेति न तदङ्गमिति भावः ॥ छाया ॥

५ प्रत्ययेति । यत इत्यादिः ॥ छाया ॥

६ एवमपि । उक्तरीत्या प्राप्तस्य लक्षणेति वारणेऽपि ॥ छाया ॥

७ असत्त्वादिति ॥ तत्र तत्प्रवृत्तौ मानाभावात्फलाभावाच्चेति भावः ॥

८ भाष्यतात्पर्यमाह—अतीति । वर्णग्रहणेऽपि तत्प्रवृत्तेरोदित्यादौ भाष्ये स्पष्टत्वात् ॥ छाया ॥

९ नन्वेवं खट्वायै इत्यादावपि याट् न स्यात् सूत्रं तु निशायै इत्यादौ चरितार्थमत आह—खट्वायै इति ॥ आहुः भाष्यतत्त्वविदः ॥ छाया ॥

१० Bangal Asiatic Society मुद्रितपुस्तकेऽपि 'तु न' इत्यस्य स्थाने 'प्रत्युत' इति पाठस्तु शोधकबुद्ध्युत्कर्षं बोधयतितमाम् ॥ दा०

११ यदि प्रकृतसूत्र—याडापइतिसूत्रभाष्याभ्यां द्वयोरेव प्रश्लेषो लभ्यते तथापि भाष्यमुपलक्षणमित्याह—अयंचेति ॥ छाया ॥

१२ ह्रस्वे जातेऽपि ह्रस्वग्रहणेनैव नुट्प्राप्तेरिष्टत्वात्प्रयोजनाभाव इत्यभिमानः ॥ छाया ॥

१३ किंच पदाङ्गेति वार्तिकादङ्गस्य विशेष्यत्वमेवोचितम् । किंच तस्य विशेषणत्वे वार्तिकस्य तत्प्रत्याख्यानार्थाकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव स्यात् । तस्मादेतदभिप्रायेणैव वार्तिकादितत्प्रत्याख्यानान्तप्रकृतभाष्यं तत्र तथैवेष्टमित्येतत्परिहारायोपायान्तरकथनमिति बोध्यम् । तदाह—दिगिति ॥ छाया ॥

अतिखट्वा इत्यत्र सुलोपो भवति । वार्त्तिकमते तु न, अतिखद्वे आवन्तत्वस्य विच्छेदा[१]दग्रे प्ररोहासंभवादिति चेन्न । अनभिधानेनैषां प्रयोगाणामभावाद् । यद्वा[२] स्थानिवद्भावस्य कार्यार्थत्वेनातिखद्वाशब्दे आकारप्रश्लेषे फलाभावात्तदप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे तदारोहः सूत्रमते भाष्यमते च दुर्लभः, परम्परया कार्यमादायाद्य स्थानिवत्त्वप्रवृत्तौ मानाभावात् ॥ यै[३]स्तु वार्त्तिकमते लोपाप्रास्त्या भाष्यादिमतेऽपि ईकारादिप्रश्लेषान्तरेण लोपाभाव एव वाच्यः । एकप्रश्लेषेणैवातिखद्वव्यावृत्तौ सिद्धायां दीर्घग्रहणं सूत्रमते भाष्यमते तत्प्रत्याख्यानाय कृतप्रश्लेषान्तरं च नियमार्थम्—न कदाचिद् रूपान्तरं प्राप्तौ यौ ङ्थापाविति । एवं च न दोष इति ॥ तन्न । मानाभावात् । किंच अतिखद्वायेत्येव वार्त्तिकप्रयोजनं प्रदर्श्यौकारप्रश्लेषेण हि तत्प्रत्याख्यातं भाष्ये ॥

(३७८ आक्षेपवार्तिकम् ॥ २१ ॥)

## ॥ * ॥ आहिभुवोरीट्प्रतिषेधः ॥ * ॥

(भाष्यम्)

**आहिभुवोरीट्प्रतिषेधो वक्तव्यः । आत्थ अभूत् । अस्तिब्रूग्रहणेन ग्रहणादीट् प्राप्नोति[४] ॥**

(उद्द्योतः) [भाष्ये—]आहिभुवोरिति । 'ब्रुव ईट्' 'अस्तिसिचोपृक्ते' इत्याभ्यां प्राप्तः ॥

(आह्यंशे आक्षेपनिराकरणभाष्यम्)

**आहेस्तावन्न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—नाहेरीड् भवतीति । यदयम्—"आहस्थः" इति झलादिप्रकरणे थत्वं शास्ति ॥**

(ज्ञापकबाधकभाष्यम्)

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ।**

**भूतपूर्वगतिर्यथा विज्ञायेत झलादिर्यो भूतपूर्व इति ॥**

(प्रदीपः) झलादिरिति । णला[५]दिषु थलेव भूतपूर्वो झलादिरिति भावः ॥

(ज्ञापकसमाधानभाष्यम्)

**यद्येवं थवचनमनर्थकं स्यात् । आथिमेवायमुच्चारयेत्—"ब्रुवः पञ्चानामादित आथो ब्रुवः" इति ॥**

(प्रदीपः) आथिमिति । तिवादयो हि सर्वे झलादय इति णलादयो भूतपूर्वा झलादय इति भावः ॥

(भ्वंशेऽप्याक्षेपनिराकरणभाष्यम्)

**भवतेश्चापि न वक्तव्यः । "अस्स्स्त सिचोऽपृक्ते" इति द्विसकारको निर्देशः । अस्तेः सकारान्तादिति ॥**

(उद्द्योतः) द्विसकारको निर्देश इति । अ[६]स्तिस्सिच इति सूत्रपाठ इति भावः ॥ प्र[७]कारान्तरे तु आदेशैरपहारात् सद्वयोच्चार-

---

१ विच्छेदादिति ॥ प्रागुक्तरीत्येति भावः ॥ अनभीति । तथा च यत्रोदाहरणे सूत्रभाष्यवार्तिकानां फलभेदस्तेषां सर्वेषामनभिधानमिति तात्पर्यम् ॥ छाया ॥

२ इदं फलभेदमभ्युपेत्य, वस्तुतः स एव नेत्याह—यद्वेति ॥ छाया ॥

३ कौस्तुभाद्युक्तिं खण्डयति—यस्त्विति ॥ भाष्यानुक्तत्वमप्याह—किंचेति ॥ भाष्ये इत्युभयान्वयि ॥ छाया ॥

४ एवं च वेदाङ्गप्रकाशे—स्वतन्त्रे भूधातावनेन वार्तिकेनेटं वारयन्तो दयानन्दस्वामिनस्तु स्वयमधिगतभाष्यार्था एव । अस्तिग्रहणेनेति भाष्येणादादिकास्तेरादेशभूत एव भूधातौ प्राप्तिवारणस्य प्रतीतेः ॥ यदि च सिचः परत्वादीटि प्राप्तेऽनेन निषेध इत्युच्यते तदा ह्यगादस्थादपादित्यादावपि सिचः परत्वात्प्राप्तस्येटो वारणाय यत्नान्तरस्य कर्तव्यत्वे तेनैव यत्नेनाभूदित्यत्रापि वारणे वार्तिकोपन्यासस्य वैयर्थ्यापत्तेरिति प्राचीनानुयायिनो विकृतबुद्धयः ॥

५ अनतिप्रसङ्गायाह—णलादिष्विति ॥ छाया ॥

६ नन्वस्तीतिसात्पूर्वमग्रे वा सपाठे विशिष्टस्याधातुत्वात् श्तिब् न स्यात्, भिन्नपदत्वेऽप्येवम् । पदान्तर्गतस्य तस्य सिजविशेषणत्वात्तत्प्रयुक्तदोषापत्तिश्चात आह—अस्तिस्सिच इति ॥ छाया ॥

७ ननु सिच इत्यग्रे स इति लुप्तविभक्तिकमुभयविशेषणम् । तस्य च संयोगान्तलोप इति दण्डिकृष्णकौस्तुभरत्नाद्युक्तमेव कुतो नोक्तमत आह—प्रकारान्तरे त्विति ॥ छाया ॥

असूस्इति सकारद्वयनिर्देशे धातुत्वाभावात् श्तिबेव दुर्लभः, पदसध्यप्रविष्टेन सकारेण सिचो विशेषणासंभवे सिजाश्रयस्येटः प्रसङ्गश्च ॥ यत्तु-एतद्दोषोपन्यासपूर्वकं माधवाचार्यैरुक्तम्—सिचोल्पाच्कत्वाद्द्वन्द्वविषयत्वेनाभ्यर्हितत्वाच्च पूर्वनिपाते कर्तव्येऽस्तिसिच इति वचनात्तत्रादिना विद्यमान-सिच इत्यप्यर्थो लभ्यते । अत एव श्तिप्प्रयोगोऽपि सार्थकः इति ॥ तच्चिन्त्यम् । एवमपि श्तिप्प्रत्ययसमाधानेऽपि द्विसकारकोनिर्देश इति भाष्यस्यानिर्वाहात् ॥ एतेन सिच अस् च सिचस् अयस्मयादित्वेन भत्वान्न कुत्वजश्त्वे । अस्ति च तत् सिचस् चेति कर्मधारयः । लुप्तपञ्चमीकं पदम् । तेन लुप्तात्सिच आदिष्टादस्तेश्च परस्य नापत्तिरित्यपि प्रत्युक्तम् ॥ तस्मात्—अस्तिसिचस्स् इति च्छेदः । सान्तादविकृतादस्तेः सिचश्च परस्येत्यर्थेन विकृतानापत्तिः ॥ नन्वेवमस्तिसिचोपृक्ते इति संहिता कथं निर्वहतीति चेत् । शृणु । संयोगान्तस्य लोप इति द्वितीयसकारो लुप्यते । अत एव पृथक् सर्वेभ्यो विभक्तावेकशेष इति पक्षे वृक्षस्स् इत्यापाद्य संयोगान्तलोपात्सिद्धमिति भाष्यग्रन्थः संगच्छते । तथा च हरिवो मेदिनं त्वेत्यादाविव संयोगान्तलोपो रोरुत्व इति वार्तिकेन संयोगान्तलोपस्यासिद्धत्वनिषेधे रोरुत्वे संहिताया निष्पत्तेरव्याहतत्वमेवेत्यादिकल्पनायां द्विसकारको निर्देश इति भाष्यस्य श्रूयमाणसकारद्वयक इत्यर्थकस्य व्याकोपः स्यादिति भाव उद्द्योतच्छाययोः ॥

दाधिमथास्तु—नागेशदर्शितसूत्रपाठे वेदसंहितायामिव गुरुसंप्रदायावगते तत्र सकारद्वये द्वित्वादिजन्यत्वासंभवेन सकारे विशेषणतामन्तरेण विवक्षाया अप्रतीतेः द्विसकारको निर्देश इति भाष्यमेव व्यर्थं स्यात् । तथाहि—द्विसकारको निर्देश इत्यत्र किं कृत इत्यध्याहार्यम्, उत करणीय इति । नाद्यः, तथासति समाधानस्य पूर्वमेव ज्ञातत्वेनाक्षेपवार्तिकोत्थानानुपपत्तिः । नान्त्यः, तथासति पाणिनिकृतौ न्यूनतापत्तिः ॥ तस्मात्—न श्रूयमाणद्विसकारक इत्यर्थः । किंतु व्याख्यानगम्यद्विसकारक इत्येवार्थः ॥ तथा च व्याख्यानात् प्रागनवगतत्वेन शङ्काया व्याख्यानोत्तरमवगतत्वेन समाधानस्य चोपपत्तिः ॥ एवं च संयोगान्तलोपोत्तरं रोरुत्वसाधकपक्षस्य नासमञ्जसत्वम् ॥

यद्वा—'गाङ्कुटादि' इत्येवं न्यासे यणो मयो द्वे इति द्वित्वेन सकारद्वय-

णाभावेन निर्देश इति भाष्यास्वारस्यम् । अत एव वार्त्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः । सकारस्य सिज्विशेषणत्वमित्याशयेन तद्विशेषणसामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेऽपि न दोषः । भाष्यकृता तु मध्यमणिन्यायेनोभयसंबन्धमङ्गीकृत्य सुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम् ॥

( ३७९ आक्षेपवार्तिकम् ॥ २२ ॥ )

**॥ * ॥ वध्यादेशे वृद्धितत्त्वप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**वध्यादेशे वृद्धितत्त्वयोः प्रतिषेधो वक्तव्यः । वधकं पुष्करमिति । स्थानिवद्भावाद् वृद्धितत्त्वे प्राप्नुतः ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । उक्तमेतत्—'नायं ण्वुल्, किंतु अन्योऽयमकशब्दः किदौणादिको रुचक इति यथा' ॥**

(उद्योतः) नायं ण्वुलिति । यद्यपि वृद्धिर्वधस्यादन्तत्वेनापि वारयितुं शक्या, तथापि तत्त्वांशप्रत्याख्यानायेदमावश्यकमिति भावः ॥

( ३८० आक्षेपवार्तिकम् ॥ २३ ॥ )

**॥ * ॥ इड्विधिश्च ॥ * ॥**

( भाष्यम् )

**इड्विधेयः । आवधिषीष्ट "एकाच उपदेशेऽनुदात्तात्" इतीट्प्रतिषेधः प्राप्नोति ॥**

(उद्योतः) इड्विधिश्चेति । यथेड्विधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः । इड्विधेय इत्यस्य तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारेति शेषः ॥ आवधिषीष्टेति । आङो यमहन इत्यात्मनेपदम् ॥ प्रतिषेधः प्राप्नोतीति । तत्र वधेः स्थानिवत्त्वेनाङ्गतया निषेधः प्राप्त इणुनिषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाभावान्नेत्यर्थः ॥ वधेरपि सूत्रे स्थान्यनुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम् ॥

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ॥**

(उद्योतः) प्रकृतिस्वरस्य । प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य ॥

( प्रत्याक्षेपभाष्यम् )

**एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत—आवधिषीष्टेति ॥**

(प्रदीपः) **आवधिषीष्टेति** । यदा यच्छब्दप्रयोगः, यदावधिषीष्टेति [भवति, तदा] **तिङ्ङतिङ** इति निघातः प्राप्तो **निपातैर्यद्यदी**ति प्रतिषिद्धस्तदैतदुदाहरणम् । क्वचित्तु यदावधिषीष्टेति पाठः ॥

( उद्योतः ) प्रत्ययस्वरम् तत्प्रयुक्तनिघातम् ॥ नन्वत्रोदाहरणे तिङ्ङतिङ इति निघातेन भाव्यमत आह—यदायदिति । यदेत्यस्य तदैतदुदाहरणमित्यनेनान्वयः ॥मध्ये भवति तदेत्यपाठः ॥

मवगत्य पूर्वः पक्षः । द्वितीयलकारस्यैव विवक्षाश्रयणाल्लकारादा इत्यर्थाङ्गीकारेण यथा समाधानं तथात्रापि 'अस्स्तिसिचोपृक्ते' इत्येवं न्यासे, 'अस् स् स्ति सिचः' इत्येवं पदविभागे स्तीत्यस्य सप्तम्यन्तत्वेनापृक्तविशेषणत्वेन 'सकारान्तादस्तेः सिचश्च परस्य सकारतकारादेरपृक्तस्य ईडागमः' इत्यर्थः सिद्धान्ते आश्रीयते ॥ हलीत्यस्य तु 'तृणह इम्' इत्यत्रैव निवृत्तेः प्रत्ययलक्षणसूत्रभाष्ये स्पष्टमुक्तत्वात् 'तुरुस्तुशम्यमः सार्वधातुके' इत्यत्र पुनः सार्वधातुकग्रहणेन 'अचि पिति सार्वधातुके' इत्यस्यापि निवृत्तिसूचनात्॥ अस्ति असीत्यत्रातिव्याप्तेरपृक्त इति । ऐधिपि इत्यादावतिव्याप्तिवारणाय—स्तीति । वर्धीं वृत्रमित्यादौ वेदे तु 'बहुलं छन्दसि' इत्यनेन दुहत इत्यादौ रुडिवेट् सिद्ध एव ॥ तत्र लोपेन द्विसकारको दृश्यते । तत्र लोपमजानतः स्तीत्यतः प्राक् 'अस्' इत्येकसकारश्रवणेन सकारान्तस्येत्यर्थाज्ञानेन शङ्का । अस्स् इत्येवं सकारद्वयज्ञापनेन सकारान्तस्येत्यर्थबोधनेन समाधानम् ॥ यद्वा "तस्मान्नुड्द्विहलः" इत्यत्रेव "क्रियते न्यास एव 'समस्सुटि' इति द्विसकारको निर्देशः" इति भाष्यं ॥

१ इदं द्रढयति—अत एवेति ॥ अस्यार्थमाह—सकारस्येति ॥ ननु प्रत्ययलक्षण—सूत्रस्य नियमार्थत्वे निर्वाहेऽपि वार्तिकमते दोष एवात आह—तदिति ॥ एवंच सिजंशे तस्यावश्यकत्वम् । अत एवाह—भाष्येति ॥ छाया ॥

२ निषेधप्रकरणे 'इड्विधिश्च' इत्ययुक्तमत आह—यथेडिति ॥ छाया ॥

३ अस्य तात्पर्यार्थमाह—तत्रेति । आवधिषीष्टेत्यत्रेत्यर्थः ॥ छाया ॥

४ नन्वङ्गत्वाभाववदनुदात्तत्वाभावोऽपि तल्लभ्यः कुतो नोक्तोऽत आह—वधेरपीति ॥ सूत्रे हनो वधेतिसूत्रे ॥ छाया ॥

५ निघातं शेषनिघातम् ॥ भाव्यमिति । तथाच नात्र शेषनिघात इति भावः ॥ छाया ॥

६ भवतीति । पीष्टेतीत्यग्रे इति बोध्यम् ॥ छाया ॥

१ 'अस्, स्' इति लुप्तपञ्चम्यन्ते पदे, स्ति' इति सप्तम्यन्तमिति भावः ॥

२ द्विसकारक इति यथाश्रुते तु किं 'समस्सुटि' इति न्यासो विवक्षितः आहोस्वित् 'समः स्सुटि' इति ॥ नाद्यः, एकस्य सकारस्य विभक्तिजत्वेनापरस्य सप्तम्यन्तावयवत्वेन विधेयसकारोपादाननिश्चयासंभवात् प्रत्याख्यानासंगतेः । नापि द्वितीयः, तथान्यासे विधेयसकारनिश्चयात् "संपुंकानां सत्वम्" इति वार्तिकवैयर्थ्यापत्तेः ॥ तस्मात्पाणिनिना 'समस्सुटि' इत्येवं त्रिसकारे पठिते विभक्तिसकारस्यानचि चेति द्वित्वज्ञानेन विधेयसकारानिश्चयाद्वार्तिकोत्थानम् । विभक्तिसकारात्परो विधेयसकारो निर्दिष्ट इति प्रत्याख्यानभाष्यसंगतिः । तथा च तत्र त्रिसकारे द्विसकारक इत्युक्तौ द्विपदमनेकोपलक्षणमेव मन्तव्यम् ॥ नह्येवं सकारतकारसंयोगपरत्वेनाकारस्य गुरुसंज्ञायां विशेषोऽस्ति । येन वैदिकानां गुरुलघूच्चारणश्रवणयोर्विशेष उपलभ्येत ॥ नागेशदर्शितपाठे त्विकारस्य संयोगपरत्वेन गुरुतायां ब्रह्मयज्ञे वैदिकसंप्रदायावगततकारेकारलघुतोच्छिद्येतैवेति दिक् ॥ दाधिमथाः ॥

इव चात्र भाष्येऽपि द्विपदमनेकोपलक्षणमेव । तथा च सकारत्रयसत्त्वे सस्य द्वित्वं जानतः शङ्का, सकारविवक्षया समाधानमित्येव वरमिति ज्ञेयम् ॥ अत्र व्युत्क्रमेण व्यवधानेन च विशेषणविशेष्ययोरुपादानं तु 'संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति" इति वृद्धिरादैच् सूत्रभाष्योक्तौ "अनानुपूर्व्येणापि संनिविष्टानां यथेष्टमभिसंबन्धो भवति" इति नपदान्तसूत्रभाष्योक्तौ च स्वसंमतिप्रदर्शनाय "सृजिदृशोर्झल्यमकिति" 'अतो रोरप्लुतात्' "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे—" 'तदोः सः सावनन्त्ययोः' 'पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः' एकाचो बशो भष् झषन्तस्य' इत्यादाविव कृतमिति न कोऽपि दोष इति वदन्ति ॥

( असिद्धपरिभाषया सूत्रप्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । "असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे" इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति ॥ अवश्यं चैषा परिभाषा आश्रयितव्या स्वरार्थम् । कर्त्र्यां हर्त्र्येति "उदात्तयणो हल्पूर्वात्" इत्येष स्वरो यथा स्यात् ॥

(प्रदीपः) असिद्धं बहिरङ्गेति । नित्यादप्यन्तरङ्गं बलीय इति न्यायात् प्रथमं पूर्वस्य यण् इति भावः ॥ अवश्यं चेति । स्थानिवद्भावाश्रयणेऽपीत्यर्थः ॥ कर्त्र्येति । कर्तृ ई आ इति स्थिते यदि नित्यत्वात् पूर्वं परयणादेशः स्यात्तस्य स्थानिवद्भावात् पूर्वस्य यण्, तत उदात्तयणोऽनन्तर आकारो न भवतीत्युदात्तत्वं न स्यात् । यदात्वन्तरङ्गत्वात् पूर्वं पूर्वस्य यणादेशस्तदा ङीप उदात्तयण इति उदात्तत्वं तस्यापि यणि कृते आकारस्योदात्तत्वमिति सिद्धमिष्टम् ॥

(उद्द्योतः) नित्यादपीति । नाजानन्तर्ये इति निषेधस्तु अनित्यो[1] नास्त्येव वेति भाष्याशयः ॥ पूर्वं[2]निमित्तकार्यत्वमत्रान्तरङ्गत्वं विवक्षितम् ॥

( सूत्रप्रयोजनवादिभाष्यम् )

अनेनापि सिद्धः स्वरः ॥

कथम् ? ।

( सिद्ध्युपायभाष्यवार्तिकम् )

## ॥ * ॥ आरभ्यमाणे नित्योऽसौ ॥ * ॥

( व्याख्याभाष्यम् )

आरभ्यमाणे त्वस्मिन् योगे नित्यः पूर्वयणादेशः कृतेऽपि परयणादेशे प्राप्नोति, अकृतेऽपि ॥

(प्रदीपः) अनेनापीति । सति स्थानिवत्त्वे पूर्वयणादेशस्यापि नित्यत्वादित्यर्थः ॥

(उद्द्योतः) उदाहरणत्ववादी आह—भाष्ये अनेनापीति ॥ सति स्थानिवत्त्वे इति । एवं[3] च द्वयोरपि नित्यत्वेनोच्चारणक्रमे प्राथम्यात्पूर्वं पूर्वयणादेश एवेति भावः ॥

( प्रयोजननिराकर्तृभाष्यम् )

परयणादेशोऽपि नित्यः । कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि ॥

(प्रदीपः) इतर आह—परयणादेशोऽपीति ।

(उद्द्योतः) इतरः । उदाहरणत्वखण्डनवादी ॥

( सिद्ध्युपायबाधकभाष्यवार्तिकम् )

## ॥ * ॥ परश्चासौ व्यवस्थया ॥ * ॥

( व्याख्याभाष्यम् )

व्यवस्थया चासौ परः ॥

( सिद्ध्युपायबाधकभाष्यवार्तिकम् )

## ॥ * ॥ युगपत्संभवो नास्ति ॥ * ॥

( व्याख्याभाष्यम् )

न चास्ति यौगपद्येन संभवः ॥

(प्रदीपः) स[4] एवाह—परश्चासाविति ॥ शब्दपरविप्रतिषेधात् स एव प्राप्नोति । एकमपि यण्लक्षणं पूर्वपरविषयभेदाद्भिद्यते । एकस्य च कार्यित्वनिमित्तत्वयोर्विरोधात् परत्वेन व्यवस्था ॥

(उद्द्योतः) शब्दपरेति । उच्चारण[5]क्रमीयप्राथम्यस्य शास्त्रेण बाध इति भावः । तत्सूत्रे व्याप्तिन्यायेन सूत्रपाठतः शब्दतश्चोभयविधमपि परत्वं गृह्यत इति तात्पर्यम् ॥ नन्वेवं[6] परं कार्यमित्युच्यते तत्कथमभेदे स्यादत आह—एकमपीति । व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदादिति भावः ॥ विषयगतं पौर्वापर्यं तदवच्छिन्ने लक्षणे आरोप्यत इत्यत्र तात्पर्यम् ॥ विप्रतिषेधशास्त्रप्रवृत्तियोग्यं न चास्ति यौगपद्येनेति भाष्यबोधितं विरोधमुपपादयति—एकस्य चेति । प्रसङ्गे आदेशविधानादादेशसमये स्थानिनोऽसत्त्वम्, निमित्तत्वं च सत्त्वे । सत्त्वासत्त्वे चैकत्र युगपद्विरुद्धे । एवं च द्वयोर्यणोर्यौगपद्यासंभव इति भावः ॥

( भाष्यम् )

कथं च सिध्यति ? ॥

( सिद्ध्युपायसाधकभाष्यवार्तिकम् )

## ॥ * ॥ बहिरङ्गेण सिध्यति ॥ * ॥

( भाष्यम् )

'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्यनेन सिध्यति ॥

(उद्द्योतः) भाष्ये—बहिरङ्गेण सिध्यतीति । तेनैव कर्त्र्येति[7] सिध्यति, न सूत्रेणेत्यर्थः ॥ एवं च शब्दतः परत्वमादाय विप्रतिषेधसूत्रस्य नैव प्रवृत्तिरिति तात्पर्यम् ॥

( सूत्रप्रयोजनवादिभाष्यम् )

एवं तर्हि योऽत्रोदात्तयण् तदाश्रयः स्वरो भविष्यति ॥

(उद्द्योतः) उदाहरणवादी अन्तरङ्गपरिभाषाश्रयणं विनापि स्वरं साधयति—भाष्ये एवंतर्हीति ॥

---

१ प्राचां मतेनाह—अनित्य इति ॥ सिद्धान्तमतेनाह—नास्त्येव वेति ॥ भाष्येति । असिद्धं बहिरङ्गेति कार्थेत्यर्थः ॥ छाया ॥

२ अपरनिमित्तकत्वरूपान्तरङ्गत्वाभावादाह—पूर्वेति ॥ पूर्वस्थितनिमित्तककार्यत्वमित्यर्थः ॥ छाया ॥

३ नन्वेतावतापि कथमिष्टसिद्धिरत आह—एवं चेति ॥ तस्यापि नित्यत्वेनेत्यर्थः ॥ छाया ॥

४ स एव इतर एव ॥ छाया ॥

५ तदुक्तयुक्तिं खण्डयति—उच्चारणेति ॥ तत्र बीजमाह—तत्सूत्रे इति । विप्रतिषेधसूत्रे इत्यर्थः ॥ छाया ॥

६ एवं शब्दपरविप्रतिषेधे ॥ तत् परकार्यत्वम् ॥ अभेदे असति शास्त्रभेदे ॥ छाया ॥

७ कर्त्र्येति तदादि ॥ छाया ॥

**( इष्टानुपपत्तिभाष्यम् )**

**ईकारयणा व्यवहितत्वान्न प्राप्नोति ॥**

**( इष्टोपपत्तिभाष्यम् )**

**'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥**

**(उद्योतः) स्वरविधाविति** । अस्य स्वरोद्देश्यकविधित्वादिति भावः ॥

**( असिद्धपरिभाषावादिभाष्यम् )**

**सा तर्हि एषा परिभाषा कर्तव्या ॥**

**( स्थानिवद्भाववादिभाष्यम् )**

**ननु चेयमपि कर्तव्या—'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ॥**

**( असिद्धपरिभाषावादिभाष्यम् )**

**बहुप्रयोजनैषा परिभाषा । अवश्यमेवैषा कर्तव्या ॥**

**(उद्योतः) अवश्यमेवेति** । एवं च तयैव सिद्धत्वान्नैतदस्या उदाहरणमिति भावः ॥

**( असिद्धपरिभाषावादिनो लाघवभाष्यम् )**

**सा चाप्येषा लोकतः सिद्धा ॥**

**कथम् ? ।**

**प्रत्यङ्गवर्त्ती लोको लक्ष्यते । तद्यथा—पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत्करोति, ततः सुहृदाम्, ततः संबन्धिनाम् ॥ प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते । सामान्ये वर्तमानस्य व्यक्तिरुपजायते । व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति ॥ यथैव चाऽऽनुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि । तद्वत्कार्यैरपि भवितव्यम् ॥**

**(प्रदीपः) प्रत्यङ्गवर्तीति** । प्रत्यासन्नवाची प्रत्यङ्गशब्दः अङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते, अङ्गानां प्रत्यासन्नत्वाद् अङ्गमङ्गं प्रति प्रत्यङ्गमित्यव्ययीभावः ॥ **प्रतिशरीरमिति** । शरीरस्य[2] भोगायतनत्वात् ॥ **ततः सुहृदामिति** । सौहार्दस्यासत्तिहेतुत्वात् ॥ **ततः संबन्धिनामिति** । अवश्यकर्तव्यत्वात् ॥ **सामान्यभूत इति** । नित्येऽपि शब्दार्थसंबन्धे अक्रमेऽप्यर्थप्रतिपादने उपायभावेनासत्यमपि क्रमं प्रकृत्याद्यर्थं चाश्रित्योपेयव्यवस्थापनात् । तत्र[3] **नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यत** इत्यादौ सामान्यमभिधीयते । ततस्तदनुरक्तद्रव्ये प्रतीतिः । लिङ्गसंख्याशक्तीनां चाश्रयो द्रव्यमिति तत्पूर्वमभिधातव्यम् । ततः संख्यापेक्षया लिङ्गं समासन्नमिति तदभिधीयते । द्व्यादिसंख्या हि वस्त्वन्तरापेक्षोपजायते । एकत्वसंख्यापि वस्त्वन्तरापेक्षद्वित्वादिव्यवच्छेदं करोतीति बहिरङ्गा । सा[4]ऽपि सजातीयपदार्थापेक्षत्वादन्तरङ्गा । कर्मादीनि तु विजातीयक्रियापेक्षणाद्बहिरङ्गाणीति न्यायप्राप्तक्रमः ॥ **बाह्येनेति** । कर्मत्वादिना । तद्धि क्रियापेक्षणाद् बाह्यम् ॥

**(उद्योतः) साचाप्येषेति** । प्र[5]कृतोदाहरणविषयः पूर्वनिमित्तकमन्तरङ्गमित्यंशो न्यायसिद्ध इति तदनाश्रयणमशक्यमिति भावः ॥ ननु प्र[6]त्यवयववर्त्ती लोकरूपोऽवयवी लक्ष्यत इति नार्थः, प्रकृतानुपयोगादित्यत आह—**प्रत्यासन्नेति** ॥ **अङ्गानामिति** । अङ्गिनं प्रतीति शेषः ॥ **अङ्गमङ्गमिति** । प्रत्यासन्नप्रत्यासन्नवर्त्ती त[7]त्कार्याभिनिविष्टो लोको दृश्यत इति भावः ॥ **प्रत्यासन्नत्वं** च प्र[8]थमोपस्थितत्वरूपम् ॥ भा[9]ष्ये—**शरीरं प्रतीत्यन्वयः** । प्रतियोगे द्वितीया ॥ **भोगः** सुखादि[10]साक्षात्कारः ॥ **आसत्तिः** प्रथमोपस्थितिः । युगपदुपस्थिताविदम् ॥ क्रमेणोपस्थितावपि आसत्तिवशादेव पूर्वं सुहृदामुपस्थितिरिति बोध्यम् ॥ ननु **अन्वितस्य बाह्यार्थेन योगो भवती**त्युक्तं शब्दार्थसंबन्धस्य नित्यत्वात् श[11]ब्दस्य विरम्यव्यापाराभावाद् युगपदेव सकलार्थप्रतीतेः क्रमाभिधानमप्यसङ्गतमित्यत आह—**नित्येपीति** ॥ **असन्तमपीति** । असत्यमपीति पाठान्तरम् । शब्दजन्यबोधे वस्तुगत्याऽसत्त्वादित्यर्थः ॥ किंतु शास्त्रवासनाकल्पितोऽयं प्रक्रियादशायां क्रमः अ[12]र्थवदुद्देश्यकप्रातिपदिकसंज्ञोद्देश्यकङीबाद्युद्देशेन शास्त्रे स्वादिविधानादिति बोध्यम् ॥ व[13]स्तुतः प्रकृतितदर्थाद्यप्यसत्यमेव कुतस्तत्क्रमस्य सत्यतेत्याह—**प्रकृत्याद्यर्थं चेति** । असत्यमपीत्यनुकृष्यते ॥ भाष्ये—**सामान्यभूतेऽर्थे वर्त्तत इति** । वर्त्तनं नाम सामान्याभिधानम् । **विशेष्ये** । विशेषणविशिष्टे । तदेव विशेष्यत्वात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति भावः ॥ **तदनुरक्तेति** । सामान्यस्य कार्यानर्हत्वाद्व्यक्तिस्तदाश्रयतया शब्दार्थत्वेन कल्प्यत इति भावः ॥ भाष्ये **उपजायत** इत्यस्य बोधविप[14]र्ययो भवतीत्यर्थः ॥ **व्यक्तस्येति** । द्रव्यस्य सतो बुद्ध्यारूढस्येत्यर्थः ॥ **तत्पूर्वमिति** ।

---

१ तयैव असिद्धमित्यनयैव ॥ अस्याः स्वरविधावित्यस्याः ॥ छाया ॥

२ नन्वात्मनो व्यापकत्वात्स्वशरीरवत्सुहृदादिशरीरेऽपि संवन्धात्कथं स्वशरीरकार्यं प्रागत आह—शरीरेति ॥ छाया ॥

३ तदेवोपपादयति—तत्रेति । तेषां मध्य इत्यर्थः ॥ छाया ॥

४ सापि संख्यापि ॥ छाया ॥

५ तदर्थान्तरस्य लोकतोऽसिद्धत्वादाह—प्रकृतोदेति ॥ अतएवैवेति सफलं तत्र ॥ अत एवाह—अंश इति ॥ छाया ॥

६ प्रत्यङ्गेत्यत्र वीप्सायामव्ययीभाव इत्याह—प्रत्यवयवेति ॥ 'अङ्गं प्रतीकोऽवयवः" इति कोशात् ॥ छाया ॥

७ तदर्थमाह—तदिति । तत्तदित्यर्थः ॥ छाया ॥

८ तत्स्वरूपं प्रकृतोपयोगिन(?)माह—प्रथमोपेति ॥ छाया ॥

९ तद्वद्वीप्साक्रमायाह—भाष्ये शरीरं प्रतीति ॥ छाया ॥

१० आदिना दुःखम् । एवं च तस्य स्वशरीर एवोत्पादाद्भाष्यादौ शरीरपदेन स्वशरीरमिति भावः ॥ छाया ॥

११ शब्दस्येत्यादि मध्यमणिन्यायेनोभयान्वयि ॥ छाया ॥

१२ तत्र हेतुमाह—अर्थवदिति ॥ छाया ॥

१३ इदमभ्युपेत्योक्तमित्याह—वस्तुत इति ॥ छाया ॥

१४ ततस्तदनुपपत्तेराह—बोधविपेति ॥ छाया ॥

आश्रयप्रतीत्युत्तरमेव तदाकाङ्क्षणादिति भावः ॥ **वस्त्वन्तरेति** ॥ स्वसमवायिकारणनानावस्त्वपेक्षयेत्यर्थः ॥ एकत्वस्य तत्त्वाभावादाह—**एकत्वेति** । एवं च प्रयोजनापेक्षया सापि बहिरङ्गेत्यर्थः ॥ **सजातीयेति** । द्रव्य[1]त्वेन स्वाश्रयत्वेन वा सजातीयत्वम् ॥ ननु लिङ्गादिभिरेकार्थसमवायाविशेषात्कथं शक्तेः बाह्यत्वमत आह—**कर्मादीनि त्विति** ॥ **न्यायप्राप्तः क्रम इति** । शास्त्रकृत्कल्पितन्यायप्राप्तः प्रक्रियादशायामित्यर्थः ॥ अनेन विशिष्टबुद्धौ विशेषणज्ञानकारणत्वाद्यपि तान्त्रिककल्पितमिति सूचितम् ॥ भाष्ये **यथैवेति** । **अर्थानां** लिङ्गसङ्ख्याकारकाणाम् । **प्रादुर्भावो** ज्ञानम् ॥ **शब्दानामपि** तद्बोधकस्त्रीप्रत्ययविभक्तीनामपि । अस्य **प्रादुर्भाव** इति शेषः । **तद्वत्कार्यैरपी**त्यस्य तथैवानुपूर्व्येत्यर्थः । येन क्रमे[2]ण शब्दोपस्थितिस्तेनैव क्रमेण कार्यमिति पूर्वमीकारनिमित्तको यणिति भावः ॥ तत्रै[3] **पदस्यैव विभज्यान्वाख्याने सर्वेषां युगपत्प्राप्तावनया[4] व्यवस्था । क्रमेणान्वाख्याने तु पूर्वप्रवृत्तिकस्वरूपमन्तरङ्गत्वं पूर्वयणादेशस्य** बोध्यम् । **असिद्धत्वं परयणादेशस्य** निमित्ताभावादप्राप्तत्वरूपं बोध्यम् । अत एव वाय्वोरित्यत्र नासिद्धत्वम् । एवंविधा[5]न्तरङ्गत्वस्य दृष्टान्तादिबलेन युगपत्प्राप्तिविषयत्वात् । स्पष्टं चेदं वाह ऊठ्सूत्रे कैयटे ॥ यत्त्व[6]नया रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति ॥ तदयुक्तम् । अन्तरङ्गशब्दार्थाभावात् । अङ्गशब्दस्य तत्र निमित्तपरत्वात् ॥

( सूत्रारम्भवादिभाष्यम् )

**इमानि तर्हि प्रयोजनानि—पटयति लघयति अवधीत् बहुखट्वकः ॥**

( प्रयोजनोपपादनभाष्यम् )

**पटयति लघयतीति णिचि टिलोपे कृते "अत उपधायाः" इति वृद्धिः प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**अवधीदित्यकारलोपे कृते "अतो हलादेर्लघोः" इति विभाषा वृद्धिः प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

(उद्द्योतः) **अवधीदिति** । यद्यप्यतो लोप इत्यत्रार्धधातुक इति विषयसप्तमीत्यचो यदिति सूत्रस्थभाष्या[7]त्प्रतीयत इत्यपरनिमित्तकत्वात् कथं स्थानिवत्त्वम्, तथापि विषयसप्तमीत्वेऽपि प[8]रवृद्धिनिमित्तकत्वेन परनिमित्तत्वमस्त्येवेत्याशयः ॥ स्वत[9]न्त्रवधधातुस्तु नास्त्येव । अदन्तत्वे जनिवध्योश्चेति वधिग्रहणमपि न कर्तव्यमेवेति बोध्यम् ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

**बहुखट्वक इति "आपोऽन्यतरस्याम्" इति ह्रस्वे कृते "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इत्येष स्वरः प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

(उद्द्योतः) बहुखट्वक इति भाष्ये बहोर्नञ्वदुत्तरपदभूम्नीत्युक्तेरिति भावः ॥

( स्थानिवद्भावप्राप्तानिष्टनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह वैयाकरणः सौवश्व इति य्वोः स्थानिवद्भावादायावौ प्राप्नुतस्तयोः प्रतिषेधो वक्तव्यः ॥**

( ३८९ समाधानवार्तिकम् ॥ २ ॥ )

**॥*॥ अचः पूर्वविज्ञानादैचोः सिद्धम् ॥*॥**

( भाष्यम् )

**योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः । आदिष्टाच्चैषोऽचः पूर्वः ॥**

**किं वक्तव्यमेतत् ? ॥**

**नहि ।**

**कथमनुच्यमानं गंस्यते ? ॥**

**अच इति पञ्चमी । अचः पूर्वस्य ॥**

( प्रदीपः ) **योऽनादिष्टादिति** । अकृत एवादेशे अचो यः पूर्व इत्यर्थः ॥ अजपेक्षस्य पूर्वत्वस्येहाश्रयणात् । आदेशनमादिष्टं तद् यस्य नास्ति सोऽनादिष्टः ॥

(उद्द्योतः) नन्वादेशस्य सत्त्वादनादिष्टादित्यनुचितमत आह—**अकृत एवेति** । उपलक्षणमेतदिति भावः ॥ ननु सूत्रेऽनादिष्टादित्येतदनुपादानात्कथमेतल्लाभोऽत आह—**अजपेक्षयेति** । लक्ष्यानुरोधादिति भावः ॥ कर्म[10]णि क्तः अनादिश्यमानादित्यर्थः स्यादत आह—**आदेशनमिति** । बहुव्रीहौ निष्ठेति पूर्वनिपातस्तु न । तत्प्रकरणानित्यत्वात् ॥

( आक्षेपभाष्यम् )

**यद्येवमादेशोऽविशेषितो भवति ॥**

(प्रदीपः) **आदेश इति** । ततश्च हलादेशोऽपि स्थानिवत् स्यात् ॥

---

१ ननु तस्या विजातीयापेक्षत्वेनापि दृष्टत्वमत आह—द्रव्यत्वेनेति ॥ अस्यापि न्यूनत्वादाह—स्वाश्रयेति । स्वसंख्यादिभिः सहेति शेषः ॥ छाया ॥

२ भाष्यतात्पर्यमाह—येन क्रमेति ॥ छाया ॥

३ पक्षभेदेनेदमुपपादयति—तत्रेति । प्रागुक्तविषये इत्यर्थः ॥ छाया ॥

४ अनया लौकिक्या ॥ छाया ॥

५ अतएवेत्यस्यार्थमाह—एवंविधेति ॥ आदिना ज्ञापकसंग्रहः ॥ छाया ॥

६ दीक्षिताद्युक्तिं खण्डयति—यत्त्विति ॥ छाया ॥

७ भाष्यादिति । तत्र ह्यच्ग्रहणं भूतपूर्वाजन्तप्रतिपत्त्यर्थमित्युक्तम् ॥ छाया ॥

८ एतद्भाष्याशयमाह—परवृद्धीति ॥ आशयः अस्य भाष्यस्य ॥ छाया ॥

९ ननु स्वतन्त्रस्यैवेदमास्तामिति जनीति निषेधान्नैव दोषोऽत आह—स्वतन्त्रेति । लाघवमप्यन्येत्याह—अदन्तत्वे इति ॥ छाया ॥

१० कर्मणीति । वर्तमान इति भावः ॥ तदाह—मानादिति ॥ छाया ॥

---

१—स्वतन्त्रहलन्तवधधात्वनङ्गीकार इत्यर्थः ॥ परं त्विदं रायमुकुटोक्तिखण्डनाग्रहाविष्टभानुजीदीक्षितानुरोधेनोक्तम् । तथासति स्वतन्त्रभूधातोरप्यार्धधातुकप्रयोगानुपपत्तिः अस्त्यादेशेन सकलेष्टसिद्धेः । ईदृशलाघवस्य च 'क्रियते एतन्न्यास एव' इति भाष्येणानादरसूचनादभूदित्यादिप्रयोगाणां धातुद्वयनिष्पाद्यत्वस्यैवास्यापि तथाङ्गीकारे बाधकाभावः इति दाधिमथाः ॥

( आक्षेपबाधकभाष्यम् )

**आदेशश्च विशेषितः ॥**

**कथम् ? ॥**

**न ब्रूमो—यत् षष्ठीनिर्दिष्टमज्ग्रहणं तत्पञ्चमीनिर्दिष्टं कर्तव्यम्—इति ॥**

**किं तर्ह्यन्यत्कर्तव्यम् ? ॥**

**अन्यच्च न कर्तव्यम् । यदेवादः षष्ठीनिर्दिष्टमज्ग्रहणम्, तस्य दिक्शब्दैर्योगे पञ्चमी भविष्यति—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति । [ कुतः पूर्वस्य ? ॥ ] अच इति ॥ तद्यथा—आदेशः प्रथमानिर्दिष्टः, तस्य दिक्छब्दैर्योगे पञ्चमी भवति—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति । [ कुतः पूर्वस्य ? ॥ ] आदेशादिति ॥**

(प्रदीपः) **यदेवाद इति ।** सादृश्यादेवमुक्तं, शब्दान्तरमेव तु पञ्चम्यन्तमपेक्षते ॥ **तद्यथेति ।** यथादेशापेक्षया पूर्वत्वे आश्रीयमाणे विभक्तिविपरिणामस्तथा स्थान्यपेक्षयापीत्यर्थः ॥ धिन्वन्तीत्यत्रोकारात् पूर्वं यदङ्गं तस्मान्निमित्तत्वेनाश्रिताद्विधिरिति सिद्धः स्थानिवद्भावः ॥ वैयाकरण इत्यत्र तु तन्न भवति । नहीकारात् पूर्वो यो वकारः स क्वचिन्निमित्तत्वेनाश्रितः ॥

(उद्योतः) नन्वचः पूर्वत्वविज्ञाने आदेशेन पूर्वत्वस्याविशेषणात्तद्यथेत्यसुक्तमत आह—यथेति । परमतेन दृष्टान्त इति भावः ॥ पूर्वविध्यभावादाह—धिन्वन्तीति । अन्यथेडापत्तिरिति भावः ॥ अत्र[1] यद्वक्तव्यं तदुक्तम् ॥ पञ्चमीसमासाश्रयेण वैयाकरणे दोषमा[2]शङ्क्याह—वैयाकरणेति । ऐज्विधानसामर्थ्यात्तत्र न भवति स्थानिवत्त्वमिति परे ॥

( भावाभावातिदेशसाधनाधिकरणम् )

( ३९० आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तत्रादेशलक्षणप्रतिषेधः ॥ * ॥

( भाष्यम् )

**तत्रा[3]देशलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । वाय्वोः । अध्वर्य्वोः । "लोपो व्योर्वलि" इति लोपः प्राप्नोति ॥**

(प्रदीपः) **तत्रेति ।** अतिदेशेन[4] पराश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं निवर्त्यते । भाष्यकारेण तु विधिग्रहणात् स्वाश्रयकार्याभावः साधितः ॥

( उद्योतः ) विधिग्रहणं स्वाश्रयनिवृत्त्यर्थमित्युक्तत्वात्तत्रादेशलक्षणेत्यसङ्गतमत आह—भाष्यकारेण त्विति । इदं वार्तिकमिति न विरोध इति भावः ॥

( ३९१ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ असिद्धवचनात्सिद्धम् ॥ * ॥

( भाष्यम् )

**अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रत्यसिद्धो भवतीति वक्तव्यम् ॥**

( ३९२ समाधानबाधकाक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः ॥ * ॥

( भाष्यम् )

**असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः कर्तव्यः । पट्व्या मृद्व्येति ॥**

(प्रदीपः) **उत्सर्गेति ।** उत्सर्गः स्थानी स ह्यादेशेनापवादेनेव निवर्त्यते ॥ नन्वीकारयणोऽसिद्धत्वाद् विभक्तावेव यण् भविष्यति ॥ नैतदस्ति । पूर्वविधावसिद्धत्वमुच्यते न त्वानन्तर्ये लौकिके यथा प्रयोग इति नास्ति विभक्तेरानन्तर्यम् ॥ **अनुदेश इति ।** अतिदेश इत्यर्थः ॥

(उद्योतः) **निवर्त्यत इति ।** उत्सृज्यते निवर्त्यते इत्युत्सर्ग इति भावः ॥ **नत्वानन्तर्ये इति ॥** पूर्वविधावित्युक्तेः शास्त्रीये कार्येतिदेशप्रवृत्तिरिति भावः ॥ **प्रयोगे इति ।** उच्चारणे इत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**ननु चैतदप्यसिद्धवचनात्सिद्धम् ॥**

(प्रदीपः) **ननु चैतदपीति ।** शास्त्रासिद्धत्वाश्रयणात् ।

( ३९३ समाधानबाधकाक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ॥ * ॥

( भाष्यम् )

**असिद्धवचनात्सिद्धमिति चेत् । तन्न ॥**

---

१ कैयटोक्तप्रकारस्य दूषितत्वादाह—अत्रेति ॥ आरम्भ इति भावः ॥ ॥ छाया ॥

२ दोषमिति । अनादिष्टादच इकारात्पूर्वत्वेन दृष्टवकारादेरव्यवहितपरस्यैकारादेरुक्तरीत्यायादेशाद्यापत्तिमित्यर्थः ॥ तथैवाह—ऐज्विधीति ॥ नच तस्याग्रे सामर्थ्यमिति वाच्यम् । द्वारादीनां श्वादेरित्युभयविषये साफल्येऽपि न य्वाभ्यामित्यादिसूत्रचतुष्टयविषयेष्वश्रवणेन वैयर्थ्यमेवेत्याद्युदाहरणप्रदानाशयात् । भूयसा व्यपदेश इति न्यायात् । किंचावध्यवधिमतोः साक्षात्त्वेन पञ्चमीसमासस्य बेभिदितेत्याद्युदाहरणपरभाष्यप्रामाण्येन च ततः पूर्वत्वेन दृष्टस्य साव्यवस्यैव ग्रहणेन तत्रादोषः । अत्र च लावयतेलौंरित्यादेः क्नौ लुप्तमिति लक्ष्यत्वस्य 'अकृत्वा वृद्ध्यावादेशौ णिलोपः कार्यः । ततः प्रत्ययलक्षणेन वृद्धिः' इति खण्डनपरभाष्यमपि मानम् । पत्वतुकोरिति ज्ञापकादन्तरङ्गत्वमनित्यम् । एवं च नित्यत्वाण्णिलोपः । वृद्धिस्तु अकृते णिलोपे उपदेशेन कृते त्वतिदेशेनेत्यनित्या । वार्तिकमात्रिस्तु वक्ष्यमाणरीत्या नेति तस्याशयः । अन्यथोक्तरीत्या ततः पूर्वसाह्लशब्दादव्यवहितपराकारस्यावादेशरूपकार्यसत्त्वेन तदावश्यकत्वेन तदसंगतिः स्पष्टैवेत्यन्यत्र विस्तरः ॥ छाया ॥

३ तत्र वाय्वोरित्यादौ ॥छाया॥ आदेशप्रयुक्तकार्यावारण इति तु दाधि० ॥

४ अस्याशयमाह—अतिदेशेनेति ॥ छाया ॥

५ शङ्कते—विधीति ॥ छाया ॥

किं कारणम्?।

नान्यस्यासिद्धवचनादन्यस्य भावः। नह्यन्यस्यासिद्धत्वादन्यस्य प्रादुर्भावो भवति। तद्यथा—नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति॥

(प्रदीपः) नान्यस्येति। कार्यासिद्धत्वाश्रयमेतत्॥

(उद्योतः) भाष्ये नहिदेवदत्तस्येति। हतेऽपि न जीवनं चेत् किं वक्तव्यं तदारोप इत्यर्थः॥

(३९४ आक्षेपोपसंहारवार्तिकम्॥ ७॥)

॥*॥ तस्मात्स्थानिवद्वचनमसिद्धत्वं च॥*॥

(भाष्यम्)

तस्मात्स्थानिवद्भावो वक्तव्यः। असिद्धत्वं च॥ पट्व्या मृद्व्येति स्थानिवद्भावः। वाय्वोरध्वर्य्वोरित्यत्रासिद्धत्वम्॥

(परिहारवार्तिकसारकभाष्यम्)

॥*॥ उक्तं वा॥*॥

किमुक्तम्?॥

* स्थानिवद्वचनानर्थक्यं शास्त्राऽसिद्धत्वाद् * इति॥

(प्रदीपः) उक्तं वेति। शास्त्रासिद्धत्वमाश्रयणीयमित्यर्थः॥

(उद्योतः) उक्तंवेति। षत्वतुकोरित्यत्र॥ वचनद्वयकरणापेक्षो विकल्पः॥

(समाधानबाधकभाष्यम्)

विषम उपन्यासः। युक्तं तत्र यदेकादेशशास्त्रं तुक्छास्त्रे असिद्धं स्याद्—अन्यदन्यस्मिन्। इह पुनरयुक्तम्। कथं हि तदेव नाम तस्मिन्नसिद्धं स्यात्?॥

(प्रदीपः) तदेवेति। सकृत्पाठापेक्षयैतदुच्यते। विषयभेदात्तु भेदाश्रयणादसिद्धत्वमाश्रीयते॥

(उद्योतः) तदेव नामेति। इको यणचीत्येतदेव इको यणचीत्यस्मिन्नित्यर्थः॥

(समाधानसाधकभाष्यम्)

तदेव चापि तस्मिन्नसिद्धं भवति॥ वक्ष्यति ह्याचार्यः * चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वाद् * इति। चिणो लुक् चिणो लुक्येवासिद्धो भवति॥

(उद्योतः) चिणो लुकि तग्रहणाभावे किं[1] ततराम्शब्दस्य लुगुच्यते, उत तेषां क्रमेण। नाद्यः, सङ्घातस्याप्रत्ययत्वात्। नान्त्य इत्याह—भाष्ये—तलोपस्य चेति॥

(३९५ समाधानवार्तिकम्॥ ८॥)

॥*॥ काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति। कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि॥*॥

(भाष्यम्)

अथवा वतिनिर्देशोऽयम्। कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा—"उशीनरवन्मद्रेषु यवाः" सन्ति, न सन्तीति। "मातवदस्याः कलाः" सन्ति, न सन्तीति॥ एवमिहापि स्थानिवद्भवति, स्थानिवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे। इह तावत्पट्व्या मृद्व्येति यथा स्थानिनि यणादेशो भवति, एवमादेशेऽपि भवति। इहेदानीं वाय्वोरध्वर्य्वोरिति यथा स्थानिनि यलोपो न भवति, एवमादेशे ऽपि न भवतीति॥

(प्रदीपः) नेह भारोऽस्तीति। नह्यभावातिदेशेऽधिकं सूत्रं पठनीयं विधिशब्दं चान्तरेण सिध्यति॥ अधीनमिति। अध्युत्तरपदात् खविधानादव्युत्पन्न आयत्तार्थवृत्तिरधीनशब्दः॥ तद्यथेति। येनोपमाने यवानां सत्ताऽवगता, स सन्तीति वाक्यशेषं प्रकल्पयति। असत्तावगतौ न सन्तीति॥ एवमस्यापि लक्षणस्य प्रतिलक्ष्यं भेदात् क्वचिद्भावोऽतिदिश्यते क्वचिदभावः॥

(उद्योतः) एवमसिद्धवचनमात्रेण निर्वाहमुक्त्वा सूत्रकृतं स्थानिवत्त्वं समर्थयति—काममिति। नह्यभावेति। इहेत्यस्य[3] सूत्रे इत्यर्थ इति भावः॥ ननु पूर्वमस्यार्थस्य विधिशब्देन साधितत्वात् कथं तत्करणरूपो न भार इत्यत आह—विधिशब्दं चेति॥ अध्याहारमात्रेणेति[4] भावः॥ भाष्ये—एवमादेशेपि न भवतीति। आदेशनिमित्तकोपीत्यर्थः॥

(पूर्वशब्दार्थनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

किं पुनरनन्तरस्य विधिं प्रति स्थानिवद्भावः, आहोस्वित्पूर्वमात्रस्य?॥

(प्रदीपः) किं पुनरिति। अमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्यत्रानन्तरे पूर्वशब्दो दृष्टः। मथुरायाः पूर्वं पाटलिपुत्रमिति व्यवहित इति प्रश्नः॥ तत्र[5] यदा विषयभेदाल्लक्षणं भिद्यते तदा यादृशं यत्र पूर्वत्वं संभवति तादृशं तत्राश्रीयते इति व्यव-

---

1 किमिति। अकारितरामित्यादौ॥ छाया॥

2 विधानादिति। भस्य चाव्युत्पन्नत्वात्। अन्यथा वक्ष्यधीनमित्यौचित्यादिति भावः॥ छाया॥

3 नन्वधिकं सूत्रमिति कस्यार्थोऽत आह—इहेत्येति॥ भाष्यस्थस्येत्यर्थः॥ छाया॥

4 अध्याहारेति॥ तथाच लाघवमेवेति भावः॥ छाया॥

5 तत्र उभयदर्शने सति॥

हितस्यापि ग्रहणम् । यदा त्वेकमेव लक्षणं तदा किमित्यव्यवहितसंभवे व्यवहितमाश्रीयत इति अनन्तरस्यैव ग्रहणेन भाव्यम् ॥

(उद्द्योतः) यद्यपि व्यवहितेपि पूर्वशब्दो वर्त्तेत इति भाष्यकृता पूर्वमेवोक्तम् । तथापि तदर्थप्रतिपादकवार्त्तिकमवतारयितुं पृच्छति—भाष्ये किंपुनरिति । अव्यवहितसंभवे इति ॥ छन्दसि परेपि व्यवहिताश्रेत्यनेन पूर्वपरशब्दयोरव्यवहितार्थे मुख्यत्वबोधनादिति भावः ॥ तस्मिन्निति सूत्रे निर्दिष्टग्रहणाद्व्यवहिताव्यवहितसाधारणे पूर्वशब्दस्य शक्तिः । अन्त्यात्पूर्वमानयेत्यादौ तु तात्पर्यानुपपत्त्या विशेषे लक्षणा, छन्दसि परेपीत्यादौ तु पराङ्गविकलतायास्तस्मादितिपरिभाषाया उपस्थितेरव्यवधानांशलाभः । इह तु स्वरग्रहणाल्लिङ्गात्तदनुपस्थितिरिति तत्त्वम् ॥

(भाष्यम्)

कश्चात्र विशेषः ? ।

( ३९५ अनन्तरग्रहणदूषणवार्तिकम् ॥ ९ ॥ )

॥ * ॥ अनन्तरस्य चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम् ॥ * ॥

(भाष्यम्)

अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानं कर्तव्यम् ॥

एकाननुदात्त—लुनीह्यत्र पुनीह्यत्र । "अनुदात्तं पदमेकवर्जम्" इत्येष स्वरो न प्राप्नोति ॥

(प्रदीपः) लुनीह्यत्रेति । हेरपित्त्वादुदात्तत्वम् । तत्र यणादेशे कृते उदात्तस्याभावाद्वर्ज्यमानस्वरो न स्यात् । स्थानिवद्भावात्तु यथा स्थानिनि स्वरो भवति एवमादेशेऽपि सिद्धः स्वरः ॥

(उद्द्योतः) भाष्ये—एकाननुदात्तशब्देन तत्प्रयुक्तः शेषनिघातः ॥ उदात्तत्वमिति । प्रत्ययस्वरेण ॥

(उदाहरणभाष्यम्)

द्विगुस्वर—पञ्चारत्न्यः दशारत्न्यः । "इगन्तकाल—" इत्येष स्वरो न प्राप्नोति ॥

(प्रदीपः) पञ्चारत्न्य इति । जसादिषु छन्दो वा वचनं प्राङ् णौ चङ्युपधायाः इति जसि चेति गुणश्छन्दसि विकल्पितत्वान्न भवतीति यणि कृते इगन्तत्वाभावात् पूर्वपदप्रकृतिस्वराऽप्रसङ्गः ॥

(उदाहरणभाष्यम्)

गतिनिघात—यत्प्रलुनीह्यत्र । यत्प्रपुनीह्यत्र । "तिङि चोदात्तवति" इत्येष स्वरो न प्राप्नोति ॥

(प्रदीपः) यत्प्रलुनीह्यत्रेति । यच्छब्दप्रयोगो निघातप्रतिषेधार्थः । तत्र यणि कृते उदात्तवत्त्वाभावाद्गतिनिघातप्रसङ्गः । एतच्च सर्वमनाश्रित्यान्तरङ्गबहिरङ्गभावमुक्तम् ॥

(उद्द्योतः) निघातप्रतिषेधेति । निपातैर्यद्यदीत्यनेनेति भावः ॥ अनाश्रित्येति । पदसंस्कारे वाक्यसंस्कारे वा यणो वर्णाश्रयत्वेनान्तरङ्गत्वमित्यन्ये ॥

( द्वितीयपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि पूर्वमात्रस्य ॥

( ३९६ पूर्वमात्रग्रहणदूषणवार्तिकम् ॥ १० ॥ )

॥*॥ पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् ॥*॥

( भाष्यम् )

पूर्वमात्रस्येति चेदुपधाह्रस्वत्वं वक्तव्यम् । वादितवन्तं प्रयोजितवान्—अवीवदद्वीणां परिवादकेन ॥

किं पुनः कारणं न सिध्यति ? ॥

योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् ह्रस्वत्वं न प्राप्नोति ॥

( ३९७ दूषणान्तरवार्तिकम् ॥ ११ ॥ )

॥ * ॥ गुरुसंज्ञा च ॥ * ॥

( भाष्यम् )

गुरुसंज्ञा च न सिद्ध्यति । श्लेष्म३घ्न । पित्त३घ्न । द३ध्यश्व । म३ध्वश्व । "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा, "गुरोरनृतः" इति प्लुतो न प्राप्नोति ॥

(प्रदीपः) श्लेष्म३घ्न इति । कार्यार्थत्वात्संयोगसंज्ञाया व्यवहितस्यात्र प्लुतविधिरिति पूर्वपक्षः ॥

( उद्द्योतः ) श्लेष्मघ्नेति । अमनुष्यकर्तृके चेति टक् ॥ ननु संयोगत्वस्य समुदायगतत्वेन पूर्वविधित्वाभावात् कथं स्थानिवत्त्वम् । किं च न संयोगसंज्ञा व्यवहितस्य विधिः । अव्यवहितघस्य सत्त्वादत आह—कार्यार्थत्वादिति । ततश्च प्लुतद्वारा व्यवहिते पूर्वविधित्वं संज्ञाया इति भावः ॥

( पूर्वमात्रवादिभाष्यम् )

ननु च यस्याप्यनन्तरस्य विधिं प्रति स्थानिवद्भावः, तस्याप्यनन्तरलक्षणो विधिः संयोगसंज्ञा विधेया ॥

( प्रदीपः ) ननु चेति । यथोद्देशपक्षे प्रत्येकं च संयोगसंज्ञेति पक्षे आनन्तर्याश्रयेऽपि दोष इत्यर्थः ॥

---

१ नन्वत्राप्युक्तरीत्यैवेष्टसिद्धिरत आह—छन्दसीति ॥ छाया ॥

२ कैयटं दूषयन्भाष्यमन्यथा योजयति—तस्मिन्नितीति ॥ छाया ॥

३ नन्वेवं कथमन्त्यात्पूर्वमिति दृष्टान्तोऽत आह—अन्त्यात्पूर्वेति ॥छाया॥

४ नन्वेवमपि व्यवहिताश्चेति व्यर्थमेवात आह—छन्दसीति ॥ आदिना परेष्वेत्यादिसंग्रहः ॥ छाया ॥

५ नन्वेवमनेकविधत्वे प्रकृते कथं निश्चयोऽत आह—इहत्विति ॥ तत्तस्मादिति ॥ छाया ॥

६ कैयटं दूषयन्भाष्यं योजयति—पदेति ॥ छाया ॥

७ प्लुतेति । तथा च तत्र षष्ठीत्यादिदोषो बोध्यः ॥ छाया ॥

(उद्द्योतः) ननु च उक्तहेतुना[1] व्यवहितपूर्वविधित्वात्कथमनन्तरग्रहणे संयोगसंज्ञाया विधेयत्वमत आह—यथोद्देशेति। तदा कार्यपर्यालोचनं विनापि भविष्यति किंचिदित्यभिसन्धिमात्रात्तत्प्रवृत्तेरित्यर्थः॥ ननु एवमपि[2] पूर्वपरविधित्वान्न स्थानिवत्त्वप्राप्तिरत आह—प्रत्येकंचेति॥

( ३९८ समाधानवार्तिकम्॥ १२॥ )

॥*॥ न वा संयोगस्यापूर्वविधित्वात्॥*॥

( भाष्यम् )

न वा एष दोषः॥

किं कारणम्?।

संयोगस्यापूर्वविधित्वात्। न पूर्वविधिः संयोगः॥

किं तर्हि?।

पूर्वपरविधिः संयोगः॥

(प्रदीपः) न वेति। समुदायः संज्ञीति भावः॥ पूर्वमात्रस्येति पक्षोऽत्र स्थितः॥ अवीवददिति तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो वक्ष्यते॥

(उद्द्योतः) समुदाय इति। एवं[3] चानन्तर्याश्रयणे यथोद्देशपक्षेऽपि न दोष इति भावः॥ एवं[4] च पूर्वमात्रग्रहणेऽपि श्लेष्मघ्ने न दोषः। यथोद्देशाश्रयणादेव। कार्यकालपक्षेऽपि[5] यत्प्रतिबन्धद्वारा स्थानिवत्त्वस्य संज्ञाकार्यप्रतिबन्धकत्वं तस्य पूर्वमात्रवृत्तित्व एव स्थानिवत्त्वमिति गूढतात्पर्यम्॥ भाष्ये—किंतर्हि पूर्वपरविधिरिति। पूर्वपरविधौ[6] स्थानिवत्त्वाभावादेव च आरतुरित्यादौ ऋच्छत्यृतामिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमिति बोध्यम्॥ विधिग्रहण-[7]सामर्थ्याच्चैतदर्थलाभ इत्याहुः॥ पूर्वमात्रेति॥ दीर्घादिग्रहणाच्छिङ्गादिति भावः॥

(एकादेशे स्थानिवद्भावसाधनाधिकरणम्)

( ३९९ आक्षेपवार्तिकप्रथमखण्डम्॥ )

॥*॥ एकादेशस्योपसंख्यानम्॥*॥

( भाष्यम् )

एकादेशस्योपसंख्यानं कर्तव्यम्। आयसौ गोमतौ चातुरौ आनडुहौ पादे उदवाहे। एकादेशे कृते नुमामौ पद्भाव ऊडित्येते विधयः प्राप्नुवन्ति॥

(प्रदीपः) एकादेशस्येति। परस्मिन्नित्येतदवधारणार्थमुपात्तम्। तथा ह्यनुपादीयमानेऽपि परस्मिन्नित्यस्मिन् परनिमित्तकस्य स्थानिवद्भावो लभ्यत एव। तत्रानेन यथा अपरनिमित्तकस्य स्थानिवद्भावो निवार्यते वैयाघ्रपद्यः, आदीध्य इति। एवं परस्मिन्नेव य आदेश इत्यवधारणादुभयनिमित्तस्याप्राप्तिरिति भावः॥ आयसादिभ्योऽणन्तेभ्य औप्रत्यये कृते एकादेशे च तस्यादिवद्भावान्नुमामौ प्राप्नुतः। पादे उदवाहे इत्यत्र ङावेकादेशे कृते आदिवत्त्वात् भसंज्ञायां सत्यां पद्भाव ऊठ् च प्राप्नुतः॥

(उद्द्योतः) ननूभयनिमित्तत्वेऽपि परनिमित्तत्वमस्त्येवेत्यत आह—परस्मिन्निति॥ अवधारणार्थमिति। पूर्वविधिशब्दे पूर्वशब्दस्येवास्यापि विशेषणस्यान्ययोगव्यवच्छेदफलकत्वादिति भावः॥ लभ्यत एवेति। अविशेषात्सर्वत्र प्रवृत्त्येति भावः॥ आयसावित्यत्र[9] देविकाशिंशपेत्यात्त्वम्॥ तस्यादिवद्भावादिति॥ ननु आदिवद्भावेन औ इत्यस्य सर्वनामस्थानत्वेऽपि आयसित्यस्याङ्गत्वाभावात्कथं नुम्। औ इत्यस्य सान्तादविहितत्वात् आयसित्यस्य षष्ठीनिर्दिष्टादेशत्वाभावान्न स्थानिवत्त्वेन तस्याङ्गत्वमिति चेन्न। छिन्नपुच्छश्ववदेकदेशविकृतानन्यत्वेनाङ्गत्वप्रतीत्यव्याघातात्। भूयोवयवसाम्यात्। लोकन्यायसिद्धस्यानाश्रयणे बीजाभावात्। सूत्रमपि[10] वक्ष्यमाणार्थमावश्यकमिति दिक्॥

( प्रत्याक्षेपभाष्यम् )

किं पुनः कारणं न सिध्यन्ति?॥

(उद्द्योतः) भाष्ये—न सिध्यन्तीति। निवर्तंत्वेनेत्यर्थः॥

( प्रत्याक्षेपबाधकवार्तिकद्वितीयखण्डम् )

॥*॥ उभयनिमित्तत्वात्॥*॥

( भाष्यम् )

अजादेशः परनिमित्तक इत्युच्यते। उभयनिमित्तश्चायम्॥

( प्रत्याक्षेपबाधकवार्तिकतृतीयखण्डम्॥ १३॥ )

॥*॥ उभयादेशत्वाच्च॥*॥

( भाष्यम् )

अच आदेश इत्युच्यते। अचोश्चायमादेशः॥

---

१ उक्तेति। प्लुतद्वारेत्यर्थः॥ अत एव भाष्ये प्लुतपर्यन्तधावनम्॥ छाया॥

२ एवमपि तदनालोचनेनैतत्प्रवृत्तावपि॥ छाया॥

३ सिद्धान्ततात्पर्यमाह—एवंचेति। समुदायस्य संज्ञित्वे चेत्यर्थः॥ अपिना कार्यकालसमुच्चयः॥ छाया॥

४ प्रकृततात्पर्यमाह—एवंचेति॥ अस्यार्थमाह—यथोद्देशेति॥ छाया॥

५ कैयटस्यायुक्तत्वात् सिद्धान्तमाह—कार्येति॥ अपिना यथोद्देशसमुच्चयः॥ छाया॥

६ अस्य फलान्तरमप्याह—पूर्वपरेति॥ छाया॥

७ ननु फलसत्त्वेऽपि मानाभावोऽत आह—विधीति॥ फलान्तरस्य प्राप्निरस्तेन तत्सामर्थ्यादेवगर्भसमासादिति भावः॥ छाया॥

८ अनङ्गत्वे हेतुमाह—औ इत्यस्येति॥ छाया॥

९ ननु स्थानिवत्त्वेन तत्त्वमत आह—आयसिति॥ आनुमानिकादेशेनाप्यग्रानिर्वाह इति बोध्यम्॥ छाया॥

१० नन्वेवं पूर्वसूत्रं व्यर्थमत आह—सूत्रमिति॥ नन्वेवमपि तत्रादेशग्रहणं व्यर्थमेव स्थानिवदित्युक्त्वा संबन्धिशब्दमहिम्नैव तल्लाभात्। आनुमानिकादेशसंग्रहार्थमपि न तौ तित्वस्यानेनैव सिद्धेरत आह—अपीति॥ अनेनादेशसमुच्चयः॥ आदिना पचत्वित्यादि॥ अर्थस्यान्यथात्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ तित्वप्रतीतेरनेनानुपपादनात्। प्रकृते तन्निर्वाहार्थं तु सोऽप्यावश्यकः। अन्यथाङ्गत्वमेव दुर्लभम्। अत एवान्तादिवत्सूत्रे भाष्यकैयटयोरपि गुडोदकमित्यादावेकादेशे कृते दकशब्दस्यानेनोदकशब्दत्वमाश्रित्य 'उदके केवले' इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दानां नित्यत्वं तु रेखागवयन्यायेन समाधेयम् तदाह—दिगिति॥ छाया॥

(प्रदीपः) अचोश्चेति । अच इति गुणत्वादेकत्वसंख्यायाः पशुना यजेतेतिवद्विवक्षितत्वात् ॥

(उद्द्योतः) नन्वच इत्यस्य विशेषणस्यान्ययोगव्यवच्छेदकत्वेऽपि हलां व्यावृत्तिः स्यान्नार्जन्तरस्येत्यत आह—गुणत्वादिति । आदेशविशेषणत्वेनेति शेषः ॥ वस्तुतोऽचोरादेशस्याच्त्वपर्याप्त्यधिकरणादेशत्वाभाव इति भाष्याशयः ॥

(आक्षेपसाधकप्रथमहेतुनिरासभाष्यम्)

नैष दोषः ॥ यत्तावदुच्यते—*उभयनिमित्तत्वाद्* इति । इह यस्य ग्रामे नगरे वा अनेकं कार्यं भवति, शक्नोत्यसौ ततोऽन्यतरतो व्यपदेष्टुम् । तद्यथा 'गुरुनिमित्तं वसामः' इति, 'अध्ययननिमित्तं वसामः' इति ॥

(प्रदीपः) इह यस्येति । अन्वयव्यतिरेकाभ्यां निमित्तत्वावधारणाद्भवत्येव परस्य निमित्तता । अयोगव्यवच्छेदेन परस्मिन् य आदेश इति विशेषणात् ॥

(उद्द्योतः) उभयनिमित्तत्वे किं परनिमित्तत्वमेव नास्तीत्युच्यते उत परमेव निमित्तं नेति । नाद्य इत्याह—अन्वयेति ॥ नान्त्य इत्याह—अयोगेति । विशेष्यसङ्गत एवायोगव्यवच्छेदबोध इति नियमे न मानमिति भावः ॥

(आक्षेपसाधकद्वितीयहेतुनिरासभाष्यम्)

यदप्युच्यते—*उभयादेशत्वाच्च* इति । इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽसावन्यतरतो व्यपदेशम् । तद्यथा—देवदत्तस्य पुत्रः, देवदत्तायाः पुत्र इति ॥

(प्रदीपः) द्वयोरिति । वर्णनिर्देशे तावज्जातिग्रहणान्नास्ति संख्याविवक्षा, भवतु वा, तथापि न दोष इति भावः ॥

(अथ हलच्समुदायादेशस्थानिवत्त्वाभावनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

अथ हलचोरादेशः स्थानिवद् भवति, उताहो न ।

(प्रदीपः) अथ हलचोरिति । उभयथा शास्त्रे व्यवहारदर्शनात्प्रश्नः । उरण् रपर इत्यत्राणनण्समुदायोऽकडादिरादेशो रपरो न भवति । नाग्लोपीत्यत्र लत्वरराजदिति हलकोर्लोपेऽग्लोपित्वाश्रयणादुपधाह्रस्वत्वनिषेधो भवति । अस्ति ह्यत्राको दर्शनमिति ॥

(उद्द्योतः) भाष्येऽथहलचोरिति । अच् इत्यपि परस्मिन्निति वदयोगव्यवच्छेदकमुतान्ययोगव्यवच्छेदकमिति प्रश्नः ॥ अत्वरराजदिति । राजानमतिक्रान्तवानित्यर्थे प्रातिपदिकाद्धात्वर्थ इति णिजिष्ठवद्भावाट्टिलोपश्चेति बोध्यम् ॥ पूर्वस्यैव विधावित्यनाश्रित्येदम् ॥

(भाष्यम्)

कश्चात्र विशेषः ? ।

(४०० समुदायादेशस्थानिवत्त्वे दूषणवार्तिकम् ॥ १४)

॥ * ॥ हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः ॥ * ॥

(भाष्यम्)

हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोपे एकादेशो वक्तव्यः । विंशकम् । विंशं शतम् । विंशः ।

(प्रदीपः) विंशकमिति । विंशतित्रिंशद्भ्यामिति ड्वुन् ॥ विंशमिति । शदन्तविंशतेश्चेति डः ॥ विंश इति । तस्य पूरणे डट् ॥

(उद्द्योतः) भाष्ये एकादेश इति । अतो गुण इति पररूपमित्यर्थः । यस्येति चेति तु न, तिलोपस्याभीयत्वेनासिद्धत्वादिति भावः ॥ विंशं शतमित्यस्य विंशतिरधिकास्मिन्नित्यर्थः ॥ [विंश इति तु प्रक्षिप्तं शतसहस्रयोरेव डस्येष्टत्वात्] ॥

(४०१ दूषणान्तरवार्तिकम् ॥ १५ ॥)

॥*॥ स्थूलादीनां यणादिलोपेऽवादेशः ॥*॥

(भाष्यम्)

स्थूलादीनां यणादिलोपे कृते अवादेशो वक्तव्यः । स्थवीयान् दवीयान् ॥

(प्रदीपः) स्थवीयानिति । गुणलोपयोस्तुल्यकालत्वाद् गुणस्य कथमनादिष्टादचः पूर्वत्वमिति चेत् । स्थानिनोऽनादिष्टादचः पूर्वत्वात् तद्वारेण गुणस्यापि भविष्यतीत्यदोषः ॥ तत्र स्थानिवद्भावे सति लशब्देन व्यवधानादवादेशाप्रसङ्गः ॥

(उद्द्योतः) स्थानिनोऽनादिष्टादिति । अत्र यद्वक्तव्यं तद् न धात्विति सूत्रे स्थानिवत्सूत्रे चोक्तम् ॥

(४०२ दूषणान्तरवार्तिकम् ॥ १६ ॥)

॥ * ॥ केकयमित्रय्वोरियादेश एत्वम् ॥*॥

(भाष्यम्)

केकयमित्रय्वोरियादेशे एत्वं न सिध्यति । कै-

१ नाजन्तरेति ॥ तस्यान्यत्वाभावात् ॥ छाया ॥

२ नन्वेवं अहैकत्ववदविवक्षैवोचितेत्यत आह—वस्तुत इति ॥ छाया ॥

३ उभयेति ॥ नन्वित्यादिः ॥ छाया ॥

४ संगतिमाह—अच इति ॥ छाया ॥

५ ननु विंशकमित्यादावुभयविधेः सत्त्वात्कथं तत्त्वमत आह—पूर्वस्यैवेति ॥ इदं हलचोरादेश इत्यादि भाष्यम् ॥ छाया ॥

६ वस्तुतस्त्विदं प्रक्षिप्तत्वकथनमेव चिन्त्यम् 'शदन्तविंशतेश्च' इत्यधिकेऽर्थे डविधायकसूत्रे 'इष्टं शतसहस्रयोः' इत्यनुवृत्त्या उभयस्य शतसहस्रयोरेवेष्टत्वेऽपि 'तस्य पूरणे डट्' इति पूरणार्थडटो विंशोऽध्यायः विंशंसूत्रमित्यादावेिष्टत्वेन बाधकाभावात् ॥ दाधिमथाः ॥

७ कैयटं दूषयति—अत्रेति ॥ छाया ॥

८ वार्तिके भाष्ये च पष्ठ्यन्तं सूत्रोच्चारितस्य प्रत्ययस्याप्युपलक्षणम् । सप्तम्यन्तं तु स्थापवादस्यापि । तथाच केकयशब्दात् 'जनपदशब्दात्क्षत्रियादञ्' इति सूत्रेणाञि, प्रलयशब्दात् 'तत आगतः' इत्यणि यादिभागस्येयादेशे तस्य स्थानिवत्त्वेन कैकेयः प्रालेय इत्यत्र गुणैकादेशो न सिध्यति । मित्रयोरपत्यम् इत्यर्थे 'गृष्ट्यादिभ्यश्च' इति ढञि 'केकयमित्रयु' इत्यनेन यादिभागस्य प्राप्तमियादेशं बाधित्वा 'दाण्डिनायन-' इति सूत्रे मैत्रेयेति निपातनेन युशब्दस्य लोपे जाते तस्य स्थानिवद्भावेन पररूपेणैकारो न सिध्यतीति नागेशोक्तौ 'आद्गुणः' इत्यपि पररूपस्योपलक्षणमिति बोध्यम् ॥ विदा-

केयः । मैत्रेयः । अचीत्येत्वं न सिध्यति ॥

(प्रदीपः) कैकेय इति ॥ नन्वज्मात्रे गुणो विधीयते न लजादौ। तेन योऽत्राश्रीयते नासावादेशः । यश्चादेशः समुदायो नासावाश्रीयत इति न्यायान्नास्ति दोषः ॥ नैतदस्ति । स्थानिवन्न भवतीत्यभावातिदेशाश्रयणपक्षे दोषः स्यादेव । परिहारान्तरस्याभिधास्यमानत्वाद्वैतन्नाश्रितम् ॥

(उद्योतः) कैकेयादौ कैकयमित्रयस्वित्यादिना इयादेशे आद्गुणः ॥ अत्रापि पक्षे स एवार्थ इत्यत आह—परिहारान्तरस्येति । पक्षान्तरस्येत्यर्थः ॥ एतत् पूर्वोक्तम् ॥

( ४०३ दूषणान्तरवार्तिकम् ॥ १७ ॥)

## ॥ * ॥ उत्तरपदलोपे च ॥ * ॥

( भाष्यम् )

**उत्तरपदलोपे च दोषो भवति ॥ दध्युपसिक्ताः सक्तवो दधिसक्तवः । अचीति यणादेशः प्राप्नोति ।**

(प्रदीपः) दधिसक्तव इति । समानाधिकरणाधिकारे क्रुस्तृतीयापूर्वपद उत्तरपदलोपश्चेति लोपस्य परनिमित्तता ॥ यद्यप्यत्र पदान्तविधौ नेति सिध्यति । तथापि परिहारान्तरस्याभिधास्यमानत्वादेतन्नोक्तम् ॥

(उद्योतः ) लोपस्येति । समानाधिकरणेन सुपेत्यधिकारात् परसन्निधाने जायमानत्वेन परनिमित्तत्वमित्यभिमानः ॥ वस्तुत एतावता परनिमित्तत्वे पादशतस्येति लोपस्य परसन्नियोगेन विधीयमानस्य परनिमित्तत्वापत्तिरितीदमपि चिन्त्यम् । परिहारान्तरस्येत्येवात्रापि समाधिरिति तत्त्वम् ॥

( ४०४ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ यङ्लोपे यणियङुवङः ॥ * ॥

( भाष्यम् )

**यङ्लोपे यणियङुवङो न सिध्यन्ति । चेच्यः । नेन्यः । चेक्षियः । चेक्रियः । लोलुवः पोपुवः । अचीति यणियङुवङो न सिध्यन्ति ॥**

(प्रदीपः) चेच्यः नेन्य इति । ऊँतोचीत्येतदनाश्रयणादुपन्यासः ॥

( पक्षान्तराश्रयणभाष्यम् )

**अस्तु तर्हि न स्थानिवत् ॥**

(प्रदीपः) अस्तु तर्हीति । अच इत्युपादानात् साक्षादेव यस्याच् स्थानित्वेनोपात्तस्तस्यैव स्थानिवद्भावो, न तु हलादेशस्येत्यर्थः ॥

(उद्योतः ) उपादानादिति ॥ वैयर्थ्यापातत्वेतद्वारणार्थमावश्यकं तत्तत्र हि केवलहलो लोपस्तथापि व्याख्यानादच एवादेश इत्यन्ययोगव्यवच्छेदलाभ इति बोध्यम् ॥ साक्षादेवेति । अचो यत्र स्थानषष्ठीनिर्दिष्टत्वमित्यर्थः ॥ एवं हि णिलोपस्य स्थानिवत्त्वं न स्यात्तस्मादच एवादेशः प्रयोगे यत्रेत्यर्थेन तद्वारणमुचितम् ॥

( ४०५ आक्षेपवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः ॥ * ॥

( भाष्यम् )

**अस्थानिवत्त्वे यङ्लोपे गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । लोलुवः पोपुवः सरीसृपो मरीमृज इति॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः ॥ "न धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति ॥**

(इति हलचूसमुदायस्य स्थानिवत्त्वाभावनिरूपणम्)

( अथ स्थान्याश्रयणानाश्रयणाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनराश्रीयमाणायां प्रकृतौ स्थानिवद्भवति, आहोस्विदविशेषेण ? ।**

(प्रदीपः) किं पुनरिति । यत्र कार्ये स्थान्याश्रितः, किं तत्रैव स्थानिवद्भावः, उत यत्राप्यनाश्रित इति प्रश्नः ॥

(उद्योतः) किं पुनरिति । आश्रितस्थानिककार्यमेव स्थानिवद्भावेन प्राप्यते, उत अनाश्रितस्थानिकं प्रतिबध्यतेऽपीति प्रश्नः ॥ यद्यप्ययं विचारः प्राक् कृत एव भावाभावातिदेश इति सिद्धान्तश्च कृतस्तथापि अन्यवार्त्तिककारकृतवार्त्तिकव्याख्यानमिदमिति बोध्यम् ॥

( भाष्यम् )

**कश्चात्र विशेषः ? ।**

(४०६ द्वितीयपक्षे दूषणवार्तिकम् ॥ २० ॥)

## ॥ * ॥ अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः ॥ * ॥

( भाष्यम् )

**अविशेषेण स्थानिवदिति चेल्लोपयणादेशयोर्गुरुविधिर्न सिध्यति । श्लेष्मघ्नं । पित्तघ्नं । दध्यश्व । मध्वश्व । "हलोऽनन्तराः संयोगः"**

---

दिग्गणे मित्रयुशब्दपाठमाश्रित्य युलोपनिपातनप्रत्याख्यानं 'तस्येदम्' इत्यणं वा समाश्रित्येदमिति बोध्यम् ॥ दाधिसथाः ॥

१ अत्रापीति । नन्वित्यादिः ॥ छाया ॥

२ पूर्वोक्तम् । योत्रेऽति ॥ छाया ॥

३ अपिना पूर्वसमुच्चयः ॥ भाष्यासंगतिं परिहरति—परीति ॥ वक्ष्यमाणे इत्यर्थः ॥

४ ऊतोचीति । ऊतोऽचि परे यङ्लुग् भवतीत्यर्थः ॥ लोलुव इत्यादि । एतस्य सिद्धान्तत्वेनानाश्रयणादित्यर्थः ॥ छाया ॥

५ कैयटं दूषयति—यद्यपीति ॥ तत् अष्पदम् ॥ छाया ॥

६ साक्षात्पदार्थमाह—अच इति ॥ छाया ॥

७ इदमपि दूषयति—एवंहीति ॥ तद्वारणं हलजादेशवारणम् ॥छाया॥

८ सूत्रमतेनाह—न धारिवति ॥ छाया ॥

इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा "गुरोः—" इति प्लुतो न प्राप्नोति ॥

(प्रदीपः) गुरुविधिरिति । कार्यार्थत्वात् संयोगसंज्ञायां नाश्रीयते ॥

(उद्योतः) ननु संयोगसंज्ञेति वक्तव्ये किमुच्यते गुरुविधिरिति, अत आह—कार्येति ॥

(४०७ दूषणान्तरवार्तिकम् ॥ २१ ॥)

॥ * ॥ द्विर्वचनादयश्च प्रतिषेधे ॥ * ॥

(भाष्यम्)

द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः । 'द्विर्वचनवरेयलोप' इति ।

(प्रदीपः) द्विर्वचनादयश्चेति । द्विर्वचनादावपि स्थानी नाश्रीयते । अनचीति पर्युदासाश्रयणात्तत्सदृशस्य हलो द्विर्वचनादावाश्रयणं न त्वचः । एवं यलोपेऽपि । वरे लाकारलोपे विधीयमाने प्रकृतिराश्रितैवाचि क्लितीति । भाष्ये तु वरेशब्दोऽपि पठितस्तत्रायं भावः—यङ एव समुदायस्य प्रत्ययत्वं न तदवयवस्याकारस्येत्यजादौ प्रत्यय आकारलोपविधानादत्राप्रसङ्ग एवेति ॥

(उद्योतः) नन्वचि नेत्यर्थाद्द्विर्वचननिषेधेऽस्यैव स्थान्याश्रयणमत आह—पर्युदासेति । चिन्त्यमेतत् । वाक्वाक् इत्यादावसाने द्वित्वानापत्तेः । हलीत्येव वक्तुं युक्तत्वाच्च । तस्मादज्भिन्नस्याश्रयणम्, नत्वच इति वक्तुं युक्तं वागित्यादावज्भिन्नो वर्णाभाव एवेति न दोषः ॥ यङएवेति । एवं सति पक्षद्वयेपि वरे ग्रहणं न कार्यमित्यत्र तत्करणकथनं चिन्त्यमेव स्याद् । किं च तार्किकप्रत्ययत्वमादायापि प्रवृत्तिज्ञापनाय तदावश्यकमिति चिन्त्यम् ॥ वरेयलोपेत्येकमेव निमित्तमित्यभिमानेन भाष्यमित्यन्ये ॥

(४०८ दूषणान्तरवार्तिकम् ॥ २२ ॥)

॥ * ॥ क्सलोपे लुग्वचनम् ॥ * ॥

(भाष्यम्)

क्सलोपे लुग्वक्तव्यः । अदुग्ध अदुग्धाः । "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति ।

(प्रदीपः) अदुग्धेति । क्सस्य अलोऽन्त्यस्येति लोपे कृते तस्य स्थानिवद्भावाज् झलो झलीति लोपो न स्यादिति लुग्वचनम् ॥ अदुह्वहीत्येवमर्थस्त्ववश्यं वक्तव्यो वकारस्याझल्त्वात् ॥

(उद्योतः) क्सस्येति । क्सस्याचीति क्सलोपे प्रक्रुतेपि लुग्वक्तव्य इति वार्तिकार्थः ॥ पक्षान्तरे तु क्सलोपेनैव सिद्धमित्यभिमानः ॥ तत्राप्यवश्यं लुग्वक्तव्य इत्याह—अदुह्वहीति ॥

(४०९ दूषणान्तरवार्तिकम् ॥ २३ ॥)

॥ * ॥ हन्तेर्घत्वम् ॥ * ॥

(भाष्यम्)

हन्तेर्घत्वं वक्तव्यम् । घ्नन्ति घ्नन्तु अघ्नन् ॥

(प्रदीपः) घ्नन्तीति । अल्लोपस्य स्थानिवत्त्वादनन्तरो नकारो न भवतीति घत्वाप्रसङ्गः । वचनसामर्थ्यात् व्यवधानाश्रयणे तु हननादिष्वतिप्रसङ्गः ॥

(उद्योतः) भाष्ये-घ्नन्तीत्यादि । गमहनेत्यनेनाल्लोपः ॥ घत्वम् । हो हन्तेरित्यनेन ॥

(प्रथमपक्षाश्रयणभाष्यम्)

अस्तु तर्ह्याश्रीयमाणायां प्रकृताविति ।

(४१० प्रथमपक्षे दूषणवार्तिकम् ॥ २४ ॥)

॥ * ॥ ग्रहणेषु स्थानिवदितिचेज्जग्ध्यादिष्वादेशप्रतिषेधः ॥ * ॥

(भाष्यम्)

ग्रहणेषु स्थानिवदितिचेज्जग्ध्यादिषु आदेशस्य प्रतिषेधो वक्तव्यः । निराद्य समाद्य । "अदोजग्धिर्ल्यप् ति किति" इति अदो जग्धिभावः प्राप्नोति ॥

(प्रदीपः) निराद्येति । आदयतेर्णिलोपे कृते एकदेशविकृतस्यानन्यत्वाददिरेवायमिति जग्धिः प्राप्नोति । न च जग्धौ णिराश्रितः । आदिग्रहणाद् घात्यादिति वधादेशप्रसङ्गः ॥

(उद्योतः) भाष्ये जग्ध्यादिष्वादेशस्येति । जग्ध्यादिषु विषयेषु आदेशस्यार्थात्तद्रूपस्येत्यर्थः ॥ एकदेशविकृतस्येति । अन्तरङ्गत्वाद्वृद्धौ कृतायां णिलोप इति आदित्यस्यानादिष्टादचः पूर्वत्वमस्त्येव । ल्यब्लोपाविति तु णिच्स्थानिकवृद्ध्यादेर्बाधकम् । उत्तरीत्या वा तस्य तत्त्वम् ॥

१ ननु संयोगेति । लोपयणादेशयोः स्थानिनोऽचः संयोगसंज्ञायामनाश्रयणात्तयोः स्थानिवत्त्वेन संयोगसंज्ञा न प्राप्नोतीति वार्तिके वक्तव्येत्यर्थः ॥ तथा च संज्ञाफलप्रतिपत्त्यर्थं तथोक्तम् ॥ छाया ॥

२ भाष्याशयमाह—तस्मादिति ॥ अत्र अस्मिन्पक्षे ॥ तार्किकेति । संभावितेत्यर्थः ॥ अत एव यातीत्यादिसिद्धिः ॥ चिन्त्यमिति । इदमिति शेषः ॥ छाया ॥

३ नन्वेवं का गतिर्भाष्यस्यात आह—वरे इति ॥ तथाप्युक्तवक्ष्यमाणदोष एवात आह—इत्यमीति ॥ छाया ॥

४ तस्य अन्त्याकारलोपस्य ॥

५ Bengal Asiatic Society मुद्रितपुस्तकेऽपि 'कृतेपि' इति पाठस्तु अदुग्धेत्यादावच्परत्वाभावेन लोपस्योक्तसूत्रेणाप्राप्तेश्चिन्त्य एव ॥दाधि०

६ 'उवोपोपध्मा ओष्ठे' इति स्वकीयप्रातिशाख्यानुरोधेन वकारस्य केवलोष्ठ्यत्वमङ्गीकुर्वतां वार्तिककृतां (कात्यायनानां) सिद्धान्ते तु वहौ नैव भवति दन्त्यनिमित्तकः वसस्य लुगिति नपदान्तसूत्रे निरूपयिष्यामः ॥ दाधिमथाः ॥

७ ग्रहणेषु गृह्यमाणेषु स्थानिषु । बाहुलकात् कर्मणि ल्युट् ॥ छाया ॥

८ एवं च स्थानिनो णेर्जग्धिविधावनाश्रयणाण्णिलोपस्य स्थानिवत्त्वाभावे ल्यपोऽव्यवहितपूर्वस्यादेर्जग्ध्यादेशापत्तिरिति भावः ॥

९ ननु वार्तिकेनादौ णिलोपात्ततो वृद्धिरित्यादिष्टादचः पूर्वत्वात्कथं तस्य मत आह—अन्तरङ्गेति ॥ छाया ॥

१० वार्तिकाप्रातिमाह—ल्यब्लोपाविति ॥ प्राचां मतेनाह—उक्तेति । स्थानिद्वारेत्यर्थः ॥ तत्त्वम् अनादिष्टाचः पूर्वत्वम् ॥ छाया ॥

( ४११ दूषणान्तरवार्तिकम् ॥ २५ ॥ )

## ॥ * ॥ यणादेशे युलोपेत्वानुनासिकात्वप्रतिषेधः ॥ * ॥

( भाष्यम् )

यणादेशे युलोपेत्वानुनासिकात्वानां प्रतिषेधो वक्तव्यः ॥

यलोप—वाय्वोः । अध्वर्य्वोः ।"लोपो व्योर्वलि" इति यलोपः प्राप्नोति ॥

उलोप—अकुर्वि आशाम् अकुर्व्याशाम् "नित्यं करोतेः" "ये च" इत्युकारलोपः प्राप्नोति ॥

ईत्व—अलुनि आशाम् अलुन्याशाम् "ई हल्यघोः" इतीत्वं प्राप्नोति ॥

अनुनासिकात्व—अजज्ञि आशाम् अजज्ञ्याशाम् "ये विभाषा" इत्यनुनासिकात्वं प्राप्नोति ॥

(प्रदीपः) यणादेश इति । बहिरङ्गपरिभाषानाश्रयणेनैतदुच्यते ॥ अजज्ञीति । जन जनन इत्यस्माद् व्यत्ययेनाऽऽत्मनेपदम् । जनी प्रादुर्भाव इत्यस्माद्वा श्यनश्छान्दसत्वाच्लुः[१] ॥

(उद्योतः) वार्त्तिके युलोपेति । यकारोकारयोर्लोप इत्यर्थः । अकुर्व्याशामित्यादौ वाक्यसंस्कारपक्षे परस्य यणादेशे तत्तत्कार्यप्राप्तिरिति बोध्यम् ॥ बहिरङ्गेति । वाय्वोरित्यत्र यथाऽस्य न प्राप्तिस्तथोक्तम् । एवमन्यत्रापि बोध्यम् ॥ आत्मनेपदमिति । इडिति शेषः ॥

( ४१२ आक्षेपवार्तिकम् ॥ २६ ॥ )

## ॥ * ॥ रायात्वप्रतिषेधश्च ॥ * ॥

( भाष्यम् )

रायात्वस्य च प्रतिषेधो वक्तव्यः । रायि आशाम् राय्याशाम् "रायो हलि" इत्यात्वं प्राप्नोति ॥

( ४१३ आक्षेपवार्तिकम् ॥ २७ ॥ )

## ॥ * ॥ दीर्घे यलोपप्रतिषेधः ॥ * ॥

( भाष्यम् )

दीर्घे यलोपस्य प्रतिषेधो वक्तव्यः । सौर्ये नाम हिमवतः शृङ्गे, तद्वान् सौर्यी हिमवानिति सौर्य्याश्रये दीर्घत्वे कृते "सूर्यतिष्या—" इति यलोपः प्राप्नोति ॥

(प्रदीपः) सौर्यीति । तेनैकदिगित्यण् । ततो मत्वर्थीय इनिः । सौर्ये इत्यत्र तु यलोपो न प्राप्नोति । यस्येत्यादौ ईयां प्रतिषेध इति वचनात् । सूर्यमत्स्ययोर्ड्यामिति परिगणनानाश्रयेणैतदुच्यते ॥

(उद्योतः) नन्वणन्तं सौर्ये इत्येदोदाह्रियतामत आह—सौर्ये इत्यत्रेति ॥ यस्येत्यादाविति । आदिना सूर्यतिष्येति यलोपः ॥ ईयां शीप्रत्यये ॥ अह्लोपस्यासिद्धत्वं[२] तु न व्याश्रयत्वात् ॥

( ४१४ आक्षेपवार्तिकम् ॥ २८ ॥ )

## ॥ * ॥ अतो दीर्घे यलोपवचनम् ॥ * ॥

( भाष्यम् )

अतो दीर्घे यलोपो वक्तव्यः । गार्गीभ्यां वात्साभ्याम् । दीर्घे कृते "अपत्यस्य च तद्धितेऽनाति" इति प्रतिषेधः प्राप्नोति ॥

(प्रदीपः) गार्गीभ्यामिति । गोत्रस्त्रिया इति णः सङ्घाङ्कलक्षणेष्विति अण् वा । अनातीति प्रसज्यप्रतिषेधाश्रयेण चोद्यम् ॥

(उद्योतः) गार्गीभ्यामित्यत्र गार्ग्य अ भ्यामिति स्थिते पूर्वं सुपि चेति दीर्घे यलोपाप्राप्तिरिति बोध्यम् ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । आश्रीयते तत्र प्रकृतिस्तद्धित इति ॥

(प्रदीपः) पर्युदासाश्रयेण तु सदृशतद्धिताश्रयेण परिहारः ॥

(उद्योतः) पर्युदासाश्रयेण त्विति । आद्भिन्नत्वेन प्रकृत्याश्रयणात्स्थानिवत्त्वप्रवृत्त्या आद्भिन्नत्वसत्त्वेन यलोप इति भावः ॥

( सर्वाक्षेपपरिहारभाष्यम् )

सर्वेषामेष परिहारः । उक्तं विधिग्रहणस्य प्रयोजनम्—विधिमात्रे स्थानिवद्यथा स्यादनाश्रीयमाणायामपि प्रकृताविति ॥

(प्रदीपः) सर्वेषामिति । आश्रीयमाणायां प्रकृतावित्यस्मिन्नेव पक्षे आश्रीयमाणे विधिग्रहणादधिकाद् यत्नात्स्थाश्रयनिवृत्त्यर्थात्तु सिध्यन्तीति भावः ॥ अत एव[१] पक्षान्तरोपन्यासः-अथवेति ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अथ वा पुनरस्त्वविशेषेण स्थानिवदिति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् * अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः * द्विर्वचनादयश्च प्रतिषेधे * क्सलोपे लुग्वचनम् * हन्तेर्घत्वम् * इति ॥

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । यत्तावदुच्यते * अविशेषेण स्था-

१ अन्यात्रमायाह—इडितीति ॥ छाया ॥

२ असिद्धत्वम् असिद्धवदत्रेत्यनेन ॥

१ अत एवेति । प्रागाश्रयणे विधाविति स्वाश्रयनिवृत्तौ किमाश्रीयमाणायामेवेत्यनेन कृतस्यादित्यपरितोषादेवेत्यर्थः ॥ अत्रापि विधिग्रहणात्स्वाश्रयनिवृत्तिरिति भावः ॥ छाया ॥

**निवदिति चेल्लोपयणादेशे गुरुविधिः* इति । उक्तमेतत् * न वा संयोगस्यापूर्वविधित्वात् * इति ॥**

**यदप्युच्यते * द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः * इति । उच्यन्ते न्यास एव ॥**

*** क्सलोपे लुग्वचनम् * इति । क्रियते न्यास एव ॥**

*** हन्तेर्घत्वम् * इति । सप्तमे परिहारं वक्ष्यति॥**

**अचः परस्मिन् ॥ ५६ ॥**

(प्रदीपः) **न वा संयोगस्येति** । संयोगसंज्ञायाः समुदायाश्रयत्वादपूर्वविधित्वम् ॥ **उच्यन्त इति** । अत एव लिङ्गादविशेषेण स्थानिवद्भावः ॥ **क्रियत इति** । अदुद्ध्यर्थमवश्यंकर्तव्यमेवेति भावः ॥ **सप्तम इति** । श्रुतिकृतमानन्तर्यमाश्रीयते, स्थानिवद्भावकृतं तु व्यवधानं वचनसामर्थ्याद-विघातकम् ॥ ५६ ॥

(उद्द्योतः) **संयोगसंज्ञाया इति** । अस्याशय उक्तः । वस्तुतः[१] प्लुतस्य त्रैपादिकत्वात् पूर्वत्रासिद्धे न स्थानिवदित्यनेनापि इदं सुसाधम् ॥ **अत एव लिङ्गादिति** । न च पुत्रमासमन्तादत्तुं शीलं यस्याः पुत्रादिनीत्यादौ स्थानिवत्त्वात्त्रादिनीत्यस्या-प्रवृत्तौ द्वित्वं प्राप्नोति तद्वारणाय द्विर्वचनग्रहणं कथमभावातिदेशे ज्ञापकमिति वाच्यम् । एतद्भाष्यप्रामाण्येन तस्यानभिधानात् शीघ्रोपस्थितिकत्वेनाक्षरहितादिनीशब्दस्यैव तत्र ग्रहणाच्चेति दिक् ॥ ५६ ॥

( ५२ स्थानिवद्भावनिषेधसूत्रम् ॥ १ । १ । ८ आ. ३ ॥)

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ १ ॥ १ । ५७ ॥

( अथ पदान्तपदार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**पदान्तविधिं प्रति न स्थानिवदित्युच्यते । तत्र वेतस्वानिति रुः प्राप्नोति ॥**

(प्रदीपः) **न पदान्त ॥ ५७ ॥ वेतस्वानिति** । भावसाधनविधिशब्दाश्रयेणोच्यते । वेतसशब्दात् **कुमुदनडवेतसेभ्योड्मतुबिति** ड्मतुपि टिलोपे कृते स्वादौ पूर्वं पदमिति पदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वात् स्थानिवत्त्वनिषेधाद् रुत्वप्रसङ्गः ॥

(उद्द्योतः) **नपदान्तद्वि ॥ ५७ ॥** ननु स्थानिवत्त्वनिषेधं विना सस्य पदान्तत्वेनासिद्धेस्तस्य रुत्वसंपादके पदत्वे स्थानिवत्त्वस्य दुर्वारत्वात् सान्तस्य पदत्वाभावेन कथमत्र रुत्वप्राप्तिरत आह[२]—**भावेति** । पदान्तेति च भावप्रधानो निर्देश इत्यपि बोध्यम् ॥ इदं चिन्त्यम् । द्विर्वचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात् ॥ भाष्यं त्वेवं व्याख्येयम्—रुत्वस्य पदचरमावयवत्वेन तत्र कर्तव्ये तन्निष्पादकपदत्वे च कर्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्त्वनिषेधाद्रुत्वं प्राप्नोतीत्यर्थः ॥ यद्यपि पदसंज्ञा न पदचरमावयवो नापि पदान्तस्थाने विधिः, तथापि तस्याः कार्यार्थत्वात् कार्यस्य च रुत्वस्य तत्त्वान्न दोषः । पदचरमावयवसाधकस्यापि तत्त्वेन ग्रहणमित्याशयः ॥

( समाधानभाष्यम् )

**नैष दोषः । भसंज्ञाऽत्र बाधिका भविष्यति— "तसौ मत्वर्थे" इति ॥**

(प्रदीपः) **तसौ मत्वर्थ इति** । **तदस्मिन्नस्तीत्यत्रैवार्थे मतुप्** । न निर्वृत्तादिषु अनभिधानादित्येतदाश्रित्यैतदुच्यते ॥

(उद्द्योतः) सिद्धान्त्येकदेश्याह[३]—**भसंज्ञात्रेति** ॥ भत्वे प्राप्तस्थानिवद्भावस्यापि सान्तनिष्ठपदत्वाप्रतिबन्धद्वारा रुत्वसंपादकत्वेन भत्वस्यापि पदान्तग्रहणेन ग्रहणात्तत्रापि स्थानिवत्त्वनिषेध इति सान्तनिष्ठभत्वेन तन्निष्ठपदत्वबाध इति भावः ॥ नैं[३] पदान्तसूत्रदृष्ट्या त्रिपादी तु नासिद्धा, जशादिग्रहणात् ॥ कैयटोक्तरीत्या पूर्वपक्षयोजनेऽ[४]स्यायं भावः—भत्वे स्थानिवद्भावस्य सकारनिष्ठपदान्तत्वसंपादकतया परम्परया भसंज्ञाया अपि पदान्तत्वसंपादकत्वेन पदान्तत्वमिति तस्यापि निषेध इति समानावधिकत्वाद्भत्वेन पदत्वबाध इति ॥ एवं[५] च परम्परया पदान्तत्वसंपादकस्यापि पदान्तविधिशब्देन ग्रहणे मदुक्तरीत्यैव पूर्वपक्षयोजनाऽप्युचिता ॥ ननु ड्मतुपोऽर्थान्तरेऽपि विधानात्कथं सर्वत्र[६] भत्वमत आह—**अनभिधानादिति** । मतुशब्देन[७] प्रसिद्धत्वाद् मतुप एव ग्रहणमिति भावः ॥

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**अकारान्तमेतद्भसंज्ञां प्रति । पदसंज्ञां प्रति तु सकारान्तम् ॥**

(प्रदीपः) **अकारान्तमिति** । भसंज्ञां प्रति स्थानिवत्त्वनिषेधाभावात् सकारान्तत्वाभावान्नास्ति भसंज्ञा ॥ पदान्तत्वे तु विधीयमाने स्थानिवत्त्वनिषेधात् सकारान्तस्य पदत्वाद्रुत्वप्रसङ्गः ॥

(उद्द्योतः) तत्र पूर्वपक्ष्याह—**अकारान्तमेतदिति** । साक्षात्परम्परया वा पदान्तकार्यप्रतिबन्धकस्य प्रापकस्य वा निषेधे पर-

१ 'वकार ओष्ठसंभूतो दन्ताग्रकरणः स्मृतः ।' इति सकललिपिसिद्धान्तमजानतोऽयं ग्रन्थ इति ॥ दाधिमथाः ॥

२ भाष्योक्तान्यप्रकारमप्याह—वस्तुत इति ॥ ग्रहणाच्चेति । पूर्वत्रासिद्धे इति निषेधसंभवाच्चेत्यपि बोध्यम् ॥

३ ननु निषेधदृष्ट्या रुत्वासिद्ध्या कथं तत्संपादकपदत्वे तत्रापि निषेधोऽत आह—न पदान्तेति ॥ छाया ॥

४ अस्य भसंज्ञेति ग्रन्थस्य ॥ तस्यापि भत्वे स्थानिवत्त्वस्यापि ॥ छाया ॥

५ एवं च परम्पराश्रयणावश्यकत्वे च ग्रहणे । अत्रेति शेषः ॥ अपिनैतत्संग्रहः ॥ उक्तदोषाभाव औचित्ये हेतुः ॥ छाया ॥

६ सर्वत्र अन्येषाममत्वर्थत्वात् ॥ छाया ॥

७ ननु तत्र ड्मतुप एव ग्रहणमास्तामत आह—मतुशब्देनेति ॥ छाया ॥

म्परा पदान्तपदे उपस्थितपदत्वद्वारिकैव नान्यद्वारिकेति भत्वे न निषेध इति सान्तत्वाभावात्तदप्राप्तिरिति भावः ॥

( सिद्धान्त्येकदेशिसमाधानभाष्यम् )

**ननु चैवं विज्ञायते—यः संप्रतिपदान्त इति ॥**

(प्रदीपः) **ननु चेति** । स्थानिवत्त्वनिषेधाद्विना यः सिद्धः पदान्तः, तस्य विधौ स्थानिवत्त्वनिषेधः । यथा—कौ स्तः कानि सन्तीति । इह तु सकारः स्थानिवत्त्वनिषेधाद्विना पदान्तत्वेनासिद्ध इति भवत्येव स्थानिवद्भाव इत्यपदान्तत्वात्सकारस्य रुत्वाभावः ॥

(उद्द्योतः) सिद्धान्त्येकदेश्याह—**ननुचेति** । अत्र पदस्योद्देश्यतयैतत्साध्यपदत्ववत्समुदायान्यकार्ये नायं निषेध इति पदत्वेऽपि स्थानिवत्त्वात् सान्तस्य पदत्वाभावेन रुत्वाभावः सिद्ध इति भावः ॥ तत्र किमपेक्ष्या संप्रतीत्यत आह—**स्थानिवत्त्वनिषेधादिति** । एतत्साध्यपदत्ववतोऽत्रोद्देश्यत्वासंभवः । भावसाधनेऽपि विधेयस्य पदचरमावयवत्वं स्थानिद्वारैव वाच्यमिति स्थानिनः स्थानिवद्भावेन तत्त्वाभावे विधेयस्य सुतरां तदभाव इति भावः ॥ [1]स्थानिवत्त्वनिषेधं विना यः पदत्वेन सिद्धस्तस्य चरमावयवे कर्त्तव्य इत्यक्षरार्थः ॥ [2]संप्रतिपदशब्देन समस्तेनान्तशब्दस्य षष्ठीतत्पुरुष इति बोध्यम् ॥ [3]यद्यपि तस्य भाव इत्यादौ तत्साध्यत्वप्रत्ययान्तादेरप्युद्देश्यता । तथाप्यत्र लक्ष्यानुरोधादेवमर्थकत्वमिति तात्पर्यम् ॥

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**कर्मसाधनस्य विधिशब्दस्योपादाने एतदेवं [5]स्यात् ॥**

(उद्द्योतः) पूर्वपक्षी उक्तमाशयमजानानः संप्रतीति पदान्तस्य विशेषणं मन्यमान आह—भाष्ये **कर्मसाधनस्येति** । संप्रतिपदान्तस्य स्थाने विधाविति हि तदाऽर्थः ॥

( सिद्धान्त्येकदेशिभाष्यम् )

**अयं च विधिशब्दोऽस्त्येव कर्मसाधनः—विधीयत इति विधिरिति ॥**

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**अस्ति च भावसाधनो—विधानं विधिरिति । [6]तत्र भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति ॥ इह च—ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै । धकारस्य जश्त्वं प्राप्नोति ॥**

(प्रदीपः) **ब्रह्मबन्ध्वेति** । ब्रह्मबन्धुशब्दादूङ् ऊङ्नूङोरेकादेश आदिवद्भावादूङ्ग्रहणेन गृह्यत इति तस्मिन् **स्वादिष्विति** पदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानिवत्त्वनिषेधाज्जश्त्वं स्यात् । भसंज्ञां तु प्रत्येकादेशस्य स्थानिवत्त्वादुकारान्तमेतदिति मिन्नावधिकत्वाद्भपदसंज्ञयोर्नास्ति बाध्यबाधकभावः । यणादेशोच्चारणं चातन्त्रम् । एकादेशस्यैवोदाहरणत्वात् ॥

(उद्द्योतः) **तत्र भावसाधनस्येति** । [7]कर्मसाधनत्वे हि द्विर्वचनादिभिः सामानाधिकरण्यं पदान्तेन वैयधिकरण्यं च स्याद् । भावसाधने पदचरमावयवद्विर्वचनादिकर्मकविधाने इत्यर्थः । तत्र हि पदचरमावयवत्वेन सिद्धकर्मके विधाने इति वक्तुमशक्यम्, सिद्धत्वे विधानवैयर्थ्यात् । [8]एवं चाकारान्तमेतदिति प्रतीकोक्त्युक्त्या पदत्व एव स्थानिवत्त्वनिषेधात्सान्तमेव पदत्वं प्रति, भत्वे तु निषेधाभावाद् अकारान्तं भत्वं प्रतीति स्यादेव रुत्वमिति भावः ॥ जश्त्वं प्राप्नोतीति । झलां जशोन्त इत्यस्य पदचरमावयवविधायकत्वात् । [9]जश्ग्रहणं तु झलां जशझशीति जश्त्वे तन्निषेधार्थम् ॥ **एकादेशस्यैवेति** । अत एवोभयत आश्रयणे नेत्यनेन वक्ष्यमाणं समाधानं सङ्गच्छते ॥

( सिद्धान्त्येकदेशिप्रश्नभाष्यम् )

**अस्ति पुनः किंचिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्, आहोस्विद्दोषान्तमेवेति ? ॥**

(उद्द्योतः) सिद्धान्त्येकदेश्याह—अस्तिपुनरिति ॥

( पूर्वपक्षिप्रतिवाक्यभाष्यम् )

**अस्तीत्याह ॥ इह—कानि सन्ति । यानि सन्ति । कौ स्तः, यौ स्त इति । योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न श्रूयते ॥**

**षडिकश्चाऽपि सिद्धो भवति ॥**

(प्रदीपः) **कानि सन्तीति** । पक्षद्वयसाधारणमिदं प्रयोजनम् । भावसाधनपक्षेऽपि सिध्यत्येवेति तूपन्यस्तम् ॥ **यकार इति** । यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्ततया विधानम् ॥

इदानीमसाधारणं प्रयोजनमाह—**षडिक इति** । षडङ्गुलिशब्दाद् बह्वचो मनुष्यनाम्नष्ठज्वेति ठचि कृते ठाजादावूर्ध्वमिति ङ्गुलिशब्दस्य लोपे यस्येति लोपे षषियत्

---

१ अत्र निषेधे ॥ स्वासंभव इति । असिद्धत्वात् ॥ छाया ॥

२ समस्तपाठेन कथं सोर्थोऽत आह—स्थानिवत्त्वेति ॥ छाया ॥

३ नन्वेवमपि भाष्यात्कथमिदं लब्धमत आह—संप्रतीति । सुप्सुपेति समासः ॥ छाया ॥

४ अस्य व्यभिचारमाह—यद्यपीति ॥ छाया ॥

५ एतदेवं स्यादिति । उक्तदोषः परिहृतः स्यादित्यर्थः ॥ ननु भावसाधने इति भावः ॥ छाया ॥

६ तत्र तयोर्मध्ये ॥

७ तत्र बीजमाह—कर्मेति ॥ ननु भाववदत्रापि निर्वाहोऽत आह—तत्र हीति । संप्रतीत्यस्य पदान्तविशेषणत्वे हीत्यर्थः ॥ छाया ॥

८ एवं च । भावसाधनपक्षाङ्गीकारे च ॥ उक्तेति । पदत्वद्वारिकैव परम्परा नान्यद्वारिकेतीत्यर्थः ॥ कानि सन्तीत्यादौ वाक्यसंस्कारपक्षो बोध्यः ॥ छाया ॥

९ नन्वेवं जश्पदं व्यर्थमत आह—जशिति ॥ अतएव तस्यैवोदाहरणत्वादेव ॥ छाया ॥

शब्दोऽन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्ततया अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा । पदसंज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण षकारान्तस्येति सिद्धं जश्त्वम् ॥ कर्मसाधने तु षषः षकारः पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात् षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया पदसंज्ञाधिकाराद् बाधनाज्जश्त्वासिद्धिः ॥

(उद्योतः) पूर्वपक्ष्याह—इह कानीति । इह पदान्त एव थकारादिर्विधेय इति भावसाधनेऽपि सिध्यतीति भावः ॥

असाधारणमिति । भावसाधनपक्षमात्रसाध्यमित्यर्थः ॥

भाष्ये—षडिकश्चापीति । अत्रे[1]कादेशाल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतयाऽसिद्धत्वेन जश्त्वाप्रवृत्तिः, तदनन्तरं त्वल्लोपस्य स्थानिवत्त्वप्रसक्तिस्तत्र कर्मसाधने यस्येति लोपे इक्निमित्तभत्वे समासान्तर्वर्तिविभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकासिद्धिः ॥ न च भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति वाच्यम् । साक्षात्परम्परया वा पदान्तस्थानिकविधिप्रापकप्रतिबन्धकस्थानिवत्त्वस्य निषेधेन भत्वेऽपि तन्निषेधात् । [2]पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्द्वारकपरम्पराया वक्तुमशक्यत्वेनान्यद्वारिकाया अपि ग्रहणाद् ॥ भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यते इति भत्वे निषेधाभावेन स्थानिवत्त्वादकारान्ते भत्वेपि पान्ते पदत्वस्याव्याघातेन न दोष इत्याशयः ॥ कैयटे पदान्ततायाः अविधानादिति । पदत्वस्याविधानेन धर्मविशिष्टत्वेनाऽपि पदान्तस्याविधानादिति भावः ॥ सिद्ध इति । [3]जश्त्वे कार्ये इति शेषः ॥

( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )

**वाचिकस्तु न सिध्यति ॥**

(प्रदीपः) वाचिकस्त्विति । चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात् ॥ कथं पुनः षडिकस्य सिद्धिः । यावतोक्तं योसौ पदान्तो यकार इति । तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात् पदान्ततायां विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः ॥ नैष दोषः । पूर्वमेव जश्त्वेन डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः ॥ कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात् तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकासिद्धिः ॥ न च भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुम्, तस्या अपदान्तरूपत्वात् । पदान्तत्वे हि जश्त्वं स्यात् । न च जश्त्वविधिनिमित्तस्थानिवत्त्वनिषेधः । यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते सग्धिर्बग्धामिति, सोऽस्य विषयः । इह तु पूर्वमेव जश्त्वं कृतं स्थानिवत्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते । पूर्वत्रासिद्धे न स्थानिवदित्यस्याप्ययमविषयः । नह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयम् ॥

(उद्योतः) सिद्धान्त्येकदेश्याह—वाचिकस्त्विति । चकारस्येति । वाचिकेऽपि[4] वागाशीर्दत्तशब्दात् ठचि ठाजादाविति शीर्दत्तशब्दलोपे यस्येति लोपे पूर्वोदाहरणे जश्त्ववदत्रापि कुत्वापत्तिरिति भावः ॥ एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये कथं पुनरित्यादि नह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयमित्यन्तः कैयटश्चिन्त्यः । स्फुटार्थत्वाच्च न व्याख्यातः । तथा[5]हि—पूर्वमेव डस्य निष्पन्नत्वादित्यसङ्गतं सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः । किंच षकाररूपापत्तिर्न शास्त्रीया । पदचरमावयवस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वाद् इत्याद्यूह्यम् ॥

( तटस्थभाष्यम् )

**अस्तु तर्हि कर्मसाधनः ॥**

( सिद्धान्त्येकदेशिभाष्यम् )

**यदि कर्मसाधनः । षडिको न सिध्यति ॥**

( तटस्थभाष्यम् )

**अस्तु तर्हि भावसाधनः ॥**

( सिद्धान्त्येकदेशिभाष्यम् )

**वाचिको न सिध्यति ॥**

( तटस्थभाष्यम् )

**वाचिकषडिकौ [6]न संवदेते ॥**

( सिद्धान्तिभाष्यम् )

**कर्तव्योऽत्र यत्नः ॥**

(प्रदीपः) कर्तव्योऽत्र यत्न इति । एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य इति वाचिकः सिद्धः । षडिकस्तु * षषष्ठाजादिवचनात्सिद्धम् * इत्युत्तरपदलोपाभावे ठाजादाविति लोपे यस्येतिलोपे च सिद्धः ॥

(उद्योतः) सिद्धान्त्याह—कर्तव्योऽत्रेति । पञ्चमे वक्ष्यमाणं यत्नं दर्शयति—एकेति । तथा चाज्झलादेशत्वाद्वाचिके [7]भत्वेऽपि न स्थानिवत्त्वमिति भावः ॥ एवं च भावसाधनपक्षोत्र स्थितः ॥

( आक्षेपभाष्यम् )

**कथं ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै ? ॥**

(उद्योतः) पूर्वपक्ष्याह—कथं ब्रह्मबन्ध्वेति ॥

( समाधानभाष्यम् )

**उभयत आश्रयणे नान्तादिवदिति ।**

१ अत्रैकादेशेति पाठः काशीकलिकत्तामुद्रितस्तु शोधकाज्ञानजः । अत्रैकादेशस्याप्राप्तेः ॥ दाधिमथाः ॥

२ ननूक्तरीत्या वारणमत आह—पदान्तत्वेनेति ॥ स्वरीत्या व्याचष्टे—पदत्वस्येति ॥ छाया ॥

३ सर्वदा तदभावादाह—जश्त्वे इति ॥ छाया ॥

४ अपिः षडिकसमुच्चये ॥ छाया ॥

५ चिन्त्यत्वमुपपादयति—तथाहीत्यादिना ॥ छाया ॥

६ न संवदेते नैकपक्षेण सिध्यतः ॥ छाया ॥

७ अपिना पदत्वम् ॥ पर्यवसितमाह—एवंचेति ॥ निर्दुष्टत्वे मेत्यर्थः ॥ ॥ छाया ॥

(प्रदीपः) **उभयत इति** । यस्मात् स्वादिविधिस्तत्स्वादौ पदमिति पूर्वपरोभयाश्रयणम् ॥

(उद्द्योतः) सिद्धान्त्येकदेशी उक्तमपि यः संप्रति पदान्त इत्येवंरूपं सिद्धान्तं परेणागृहीतत्वाचक्षानुरूपवलिन्यायेनाह—**उभयत इति** ॥ तद्व्याचष्टे—**यस्मात्स्वादिविधिरिति** । [1]अत एवात्र नैकदेशविकृतन्यायेन धान्तस्य पदत्वसंभावना, उकारान्ताद्दूङ्विधानेनोक्तपरिमाणसंज्ञात्वेन दुर्लभत्वात् ॥ उभयत आश्रयणे इलस्यैकदेशिमतत्वाच्च । [2]एतच्चान्तादिवत्सूत्रे वक्ष्यते ॥

## ( आक्षेपभाष्यम् )

**कथं वेतस्वान् ॥**

(उद्द्योतः) पूर्वपक्ष्याह—कथं वेतस्वानिति ॥

## ( समाधानभाष्यम् )

**नैवं विज्ञायते—पदस्यान्तः पदान्तः, पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति ॥**

**कथं तर्हि ? ॥**

**पदे अन्तः पदान्तः, पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति ॥**

(प्रदीपः) **पदेन्त इति** । न च ड्मतुपप्रत्ययः पदम् ॥ एवं षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः ॥

(उद्द्योतः) अथ वेतस्वानित्येवंजातीयकानामेतदनुदाहरणत्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह—**नैवमिति** ॥ तद्व्याचष्टे—**नच ड्मतुविति** । [3]एवं ब्रह्मबन्धूशब्दे ऊकारो न पदमिति बोध्यम् ॥ [4]नन्विदमयुक्तं गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेन, [5]सुबन्तेन समासे उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधेन चोत्तरस्यापदत्वाद् गोचेत्यादावल्लोपस्य स्थानिवत्त्वेनावङापत्तेरिति चेत् न, [6]उत्तरपदस्य कार्यित्वे एव प्रत्यासत्त्या तन्निषेधप्रवृत्तेः । अत्र चेदं भाष्यमपि मानम् । [7]सुबुत्पत्तेः पूर्वं समासस्य चैतद्विषयेऽनित्यत्वान्न प्रवृत्तिरिति भावः ॥ एवं च विग्रहद्वयप्रदर्शनेन पदचरमावयवे कर्तव्ये परपदस्थाजादेश एव न स्थानिवदिति भाष्ये ध्वनितम् । कानि सन्तीत्यादीवोदाहरणम् । एवं च पूर्वसूत्रे अपरविधाविति प्रघट्टकस्थकैयटग्रन्थो भोभगो इति सूत्रस्थकैयटग्रन्थश्च चिन्त्य एव ॥ एवं षडिक इत्याद्यपि चिन्त्यम्, इकस्य पदत्वाभावेऽपि क्रुलिशब्दाकारयोर्लोपे तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेन दोषादिति दिक् ॥

## ( समाधानान्तरभाष्यम् )

**अथ वा यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च । एवमिदमपि पदकार्यमुपप्लोष्यते ॥**

**किम् ? ।**

**भसंज्ञा नाम ॥**

(प्रदीपः) **यथैवेति** । यचि भमित्यत्र तसौ मत्वर्थ इत्यत्र च पदमिति वर्तते । तेन पदं सद्भं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्त्वनिषेध इति भत्वाद्रुत्वाभावः सिद्धः ॥

(उद्द्योतः) भाष्ये—पदस्यान्त इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्थाजादेशस्य स्थानिवत्त्वनिषेधेऽपि न दोष इति प्रौढ्या प्रतिपादयितुं भसंज्ञात्र बाधिका भविष्यतीति स्वोक्तेरेकदेश्याशयमाह—**अथवेति** । [8]यः संप्रति पदान्त इत्येतत्तु न शब्दमर्यादालभ्यमिति भावः ॥ अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या, तावतापि भसंज्ञायाः पदान्तविधित्वानुपपादनात् । किंच यथा कारकाधिकारे कारकं सत्कर्मेति व्याख्यानेन तयोः संज्ञयोः समावेश उक्तस्तथात्रापि स्याद् । न हि मत्वपदत्वयोः समावेश इष्टः । [10]तस्मादेवं व्याख्येयम् यथा रुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिबध्यते । तथा भसंज्ञाविषयातिदेशस्यापि परम्परया तत्त्वाद् निषेध इति ॥ [11]यथैवान्यानि पदकार्याणि पदचरमावयवकार्याणि रुत्वजश्त्वादीनि तत्प्रापकपदसंज्ञारूपं चात्र सूत्रे उपप्लवन्ते पदान्तविधिशब्देन गृह्यन्ते । पदचरमावयवप्रापकाचापि तत्त्वेन गृह्यते । एवमिदमपि । भसंज्ञारूपमपि पदकार्यं परम्परया पदचरमावयवप्रापकं प्रतिबन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः ॥ [12]अयं भावः—यथा पदान्तपदे उपस्थितत्वात्पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद्द्वारापि पदचरमावयवविषयस्थानिवत्त्वप्रतिषेध इति ॥ [13]षडिके तु षषष्ठाजादिवचनात्सिद्धमिति द्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रामाण्यात्तद्विषये न भत्वद्वारा पदचरमावयवसंपादकस्थानिवत्त्वप्रतिषेध इति न दोषः । [14]वार्त्तिके त्वेवं न दोषः उत्तरपदलोपविधानात् । [15]पञ्चमे चेदमुपपादयिष्यते ॥ [16]एवं चामलकी, तटी, सारसीत्यादौ जश्त्वादिप्रसक्तिरेव नेति बोध्यम् ॥

---

१ अत एव अस्यासिद्धान्तत्वादेव ॥ छाया ॥

२ ननु कथमिदमत आह—एतच्चेति ॥ छाया ॥

३ अस्मिन्पक्षे आह—एवमिति ॥ भाष्यसिद्धान्ते ॥ छाया ॥

४ शङ्कते—नन्विदमिति ॥ सप्तमीसमासेन व्याख्यानमित्यर्थः ॥छाया॥

५ प्रकारान्तरमाह—सुबन्तेनेति ॥

६ द्वितीये तावदाह—उत्तरेति ॥ अपिना भाष्यान्तरसमुच्चयः ॥ तद्वान्यत्र स्पष्टम् ॥

७ आद्ये आह—सुबुत्पत्तेरिति ॥ एवं च उक्तार्थस्य ध्वनने च ॥

८ अन्नत्याभिमतदसंगतिमाह—एवमिति ॥

९ ननु प्रागुक्तरीत्या निर्वाहोऽत आह— यः संप्रेति ॥ छाया ॥

१० नन्वेवं का गतिर्भाष्यस्यात आह—तस्मादिति ॥ तत्त्वात् तत्प्रापकत्वात् प्रतिबन्धकत्वाद्वा ॥ छाया ॥

११ ननु कथमिदं भाष्याक्षरतो लब्धमत आह—यथैवेति ॥ छाया ॥

१२ ननु प्रागुक्तविरुद्धमिदमत आह—अयं भाव इति ॥ छाया ॥

१३ नन्वेवमतिप्रसङ्गोऽत आह—षडिकेस्त्विति ॥ इति इत्युक्तेः ॥ वचनं सूत्रम् ॥ छाया ॥

१४ नन्वेवं वार्त्तिके दोषोऽत आह—वार्त्तिके त्विति ॥ एवं षडिके उक्तेन प्रकारेण ॥ उत्तरेति । वार्तिकेन ॥

१५ ननु कथमिदं वैषम्यमत आह—पञ्चमेचेदमिति ॥ वैषम्यमित्यर्थः॥

१६ एवंच उक्तरीत्या तस्य निषेधे च ॥

[1]यद्यपि पूर्वत्रासिद्धे न स्थानिवदिति निषेधोऽत्र प्राप्नोति । तथापि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादिसिद्धान्तान्बोधयितुं पूर्वत्रासिद्धे इत्यादावपि साक्षात्परम्परया प्रापकप्रतिबन्धकस्य निषेध इत्यादि बोधयितुं पदेऽन्त इति सप्तमीसमासेन वेतस्वानित्यादौ न पदान्तेति निषेधवारणेन पूर्वत्रासिद्धे नेत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणम् । एवं जश्पदेनेति बोधयितुं चायमुपक्षेप इति बोध्यम् ॥

( वरे यलोपपदार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**वरे यलोपविधिं प्रति न स्थानिवद्भवतीत्युच्यते । तत्र ते "अप्सु यायावरः प्रवपेत पिण्डान्" अवर्णलोपविधिं प्रति स्थानिवत्स्यात् ॥**

(उद्द्योतः) भाष्ये—अवर्णलोपविधिमिति । [2]आतोऽलोप इटि चेत्येतं प्रतीत्यर्थः । एवं च वरेऽयलोपग्रहणे कृतेऽपि यायावर इत्यस्यासिद्धिरिति शङ्का ॥

( समाधानभाष्यम् )

**नैष दोषः । नैवं विज्ञायते—वरे यलोपविधिं प्रति न स्थानिवदिति ॥**

**कथं तर्हि ? ॥**

**वरे अयलोपविधिं प्रतीति ॥**

**किमिदमयलोपविधिं प्रतीति ? ॥**

**अवर्णलोपविधिं प्रति यलोपविधिं च प्रतीति ॥**

( समाधानान्तरभाष्यम् )

**अथवा योग[3]विभागः करिष्यते—"[4]वरे लुप्तं न स्थानिवत्" । ततो 'यलोपविधिं प्रति न स्थानिवद्' इति ॥**

(उद्द्योतः) यातिरित्यस्यात्रासिद्धेः सिद्धान्तमाह—अथवेति ॥

( आक्षेपभाष्यम् )

**यलोपे किमुदाहरणम् ? ।**

(उद्द्योतः) यलोपे किमिति । यायावरे यलोपस्य वरे इत्यनेनैव सिद्धत्वात्प्रश्नः ॥

( समाधानभाष्यम् )

**कण्डूयतेरप्रत्ययः कण्डूरिति ॥**

(प्रदीपः) **कण्डूयतेरिति** । क्यजन्तात् क्विप् । यगन्तात्तु क्विन्न भवति । उक्तं हि भाष्ये—**नैतेभ्यः क्विब् दृश्यत** इति ॥

(उद्द्योतः) [6]कैयटे उक्तं हीति । कण्ड्वादिभ्यो यगित्यत्र भाष्ये ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति ॥ क्वौ लुप्तं न स्थानिवत् ॥**

(उद्द्योतः) क्वौ लुप्तमिति । यद्यप्यप्रत्ययशब्देन विजप्यु[5]च्यते, तथापि तस्य क्वाचित्कत्वान्न दोषः ॥ क्विग्रहणं विचोऽप्युपलक्षणमित्यन्ये ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—सौरी बलाका ॥**

(प्रदीपः) **सौरीति** । एकोऽण्यकारलोपो द्वितीय ईकारे तयोः स्थानिवत्त्वाद्यकारस्योपधात्वं न स्यात् । स्थानिवत्त्वनिषेधे द्वितीयलोपस्य समानाश्रयत्वादसिद्धत्वादणि लोपस्य व्याश्रयत्वात्सिद्धत्वाद् यकारस्य उपधात्वाल्लोपः सिध्यति ॥

( बाधकभाष्यम् )

**नैतदस्ति । उपधात्वविधिं प्रति न स्थानिवत् ॥**

(उद्द्योतः) उपधात्वविधिं प्रतीति । [8]प्रत्ययविधावित्यनाश्रित्येदम् ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—आदित्यः ॥**

(प्रदीपः) **आदित्य इति** । अदितेः **सास्य देवतेत्य**त्रार्थे ण्यस्ततो भवादावर्थे द्वितीयो ण्यः । **हलो यमां यमी**ति लोप इष्यते । स च स्थानिवत्त्वनिषेधात् सिध्यति ॥

(उद्द्योतः) तत इति । [9]आदित्यशब्दादित्यर्थः । अदितेरपत्यण्यान्तःदेवतार्थे ण्य इति तु नोक्तं । आपत्यस्येत्यस्य प्राप्त्या पूर्वत्रासिद्ध इत्युत्तरग्रन्थासङ्गतेः । तस्मादेतत्खण्डनमेतदज्ञानेनैवेति बोध्यम् ॥

( बाधकभाष्यम् )

**नैतदस्ति । पूर्वत्रासिद्धे न स्थानिवत् ॥**

( प्रयोजनभाष्यम् )

**इदं तर्हि—कण्डूतिर्वल्गूतिः ॥**

---

१ सिद्धान्ते तु प्रकारान्तरेण वारणीयेत्येव तात्पर्यम् । तदेव ध्वनयन्नाह—यद्यपीति ॥

२ अतो लोप इत्यस्य प्रकृतेऽप्राप्तेराह—आतो लोप इति । एवंच एकदेशिना तथा समाध्युक्तौ च ॥ वरे इति । अल्लोपे तस्य स्थानिवत्त्वेन यलोपे प्राप्ते तत्र तन्निषेधार्थमिति भावः ॥ छाया ॥

३ योगशब्दो योगावयवे लाक्षणिकः ॥ वरे इति निपातनादलुक् द्वन्द्वश्च ॥ छा ॥

४ नन्वार्धधातुक इत्यस्य विषयसप्तमीत्वाभ्युपगमात् परनिमित्तकत्वाभावेनाकारलोपस्य न स्थानिवत्त्वप्राप्तिः । अत एव हि अचो यदिति सूत्रेऽज्ग्रहणं चरितार्थम् । अन्यथा हलन्तेभ्यो ण्यतो विशेषविहितत्वेन परिशेषादजन्तादेव यतः प्राप्तेः किं तेन । विषयसप्तम्यां तु सत्यां दित्सं धित्समित्यादावजन्तभूतपूर्वादपि यत्सिद्धयेऽज्ग्रहणमिति चेत् ॥ सत्यम् । वरेग्रहणेन परसप्तमीपक्षोऽपि ज्ञाप्यते ॥ श० कौ० ॥

५ अत्र पक्षे ॥ छाया ॥

६ अयं ग्रन्थोऽत्रैव समुचितः, नतु 'मित्यन्ये' इत्युत्तरमिति बोध्यम् ॥ ॥ दाधिमथाः ॥

७ उच्यत इति । एवंच तदर्थमावश्यकमिति भावः ॥ खण्डनाशयमाह—तथापीति ॥ ननु तत्रैव तदावश्यकमत आह—क्विप्रेति ॥ निषेधवार्तिके इति भावः ॥ छाया ॥

८ विरोधं परिहरति—प्रत्ययेति ॥

९ ण्यमात्रपरामर्शभ्रमायाह—आदित्येति ॥ छाया ॥

( बाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । कण्डूया वल्गूया इति भवितव्यम् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि—कण्डूयतेः क्तिच् । ब्राह्मणकण्डूतिः क्षत्रियकण्डूतिः ॥**

(प्रदीपः) **ब्राह्मणकण्डूतिरिति** । षष्ठीसमासः । कर्मधारये कण्डूतिशब्दस्य पूर्वनिपातप्रसङ्गः ॥

(उद्योतः) **कण्डूतिशब्दस्येति** । विशेषणत्वादित्यर्थः । नचात्राल्लोपस्य स्थानिवत्त्वाद्‌वङ् यण्वा स्यादिति वाच्यम् ॥ जाते तत्रोठा सिद्धेः । ऊठि तु न स्थानिवत्त्वमनादिष्टादचः पूर्वत्वाभावात् । अस्मादेव भाष्यप्रयोगात्स्थानिद्वारकं तदाश्रयणं क्वाचित्कमित्याहुः ॥

( ४१५ नियमाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ॥ * ॥**

( आक्षेपभाष्यम् )

**प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति वक्तव्यम् ॥**

( स्वरोदाहरणोपपादनभाष्यम् )

**स्वर—आकर्षिकः । चिकीर्षकः । जिहीर्षकः ॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—पञ्चारत्न्यो दशारत्न्यः ॥ स्वर ॥**

(प्रदीपः) **आकर्षिक इति** । चरत्यर्थे आकर्षात् ष्ठलिति ष्ठल् । **यस्येति** लोपस्य स्थानिवत्त्वात् ककाराकारस्योदात्तत्वं न स्यात् । कारक इत्यादौ च **स्वरविधौ व्यञ्जनमविद्यमानवदिति** व्यञ्जनस्याविद्यमानत्वादनन्तरस्य स्वरभाजः संभवादन्यव्यवधाने न स्यात् । यत्र तु व्यवहितेपि पूर्वशब्दो वर्तते, तत्राप्यवध्यवधिमतोरानन्तर्यासंभवादन्तरालस्थान् सतोप्यर्थानननादृत्य व्यवहारः ॥ यत्र त्वानन्तर्यसंभवस्तत्र व्यवहितं नैवाश्रीयते ॥ ष्ठलो लित्करणाद् व्यवधानेऽपि भविष्यतीति चेत् । आकारस्यापि पक्षे स्यादिति स्थानिवत्त्वनिषेधः ॥

(उद्योतः) ननु **लितीति** वचनसामर्थ्यात्स्यादेवेत्यत आह—**कारक इतीति** । अत्र वचनं सावकाशमिति भावः ॥ **स्वरविधाविति** । हलस्वरप्राप्तेः सत्त्वादिति भावः ॥ **अन्यव्यवधाने इति** । अजव्यवधाने इत्यर्थः ॥ अज्व्यधेति वा पाठः । लुप्ततया तदनुच्चारणेन तदाश्रयस्यापादयितुमशक्यत्वात्तस्य. स्यादिति नापादितम्, स्वविधौ स्थानिवत्त्वाभावाच्च ॥ ननु लितीत्यत्र प्रत्ययात्पूर्वमित्यनुवृत्तेः पूर्वग्रहणस्य सत्त्वान्निर्दिष्टपरिभाषानुपस्थितिः । पूर्वशब्दश्च व्यवहितेऽपीति न दोषोऽत आह—**यत्रत्विति** । तत्राप्यव्यवधानारोपेणैव प्रयोगः पूर्वादीनां चाव्यवहिते एव शक्तिरिति भावः ॥ **यत्रत्विति** । मुख्ये संभवति आरोपितग्रहणे मानाभाव इति भावः ॥ परंत्विदं चिन्त्यम् । तस्मिन्निति सूत्रे निर्दिष्टग्रहणात् । तस्माद् उत्तरांशविकलपरिभाषोपस्थितेः प्रत्ययः परश्चेत्यादौ दृष्टत्वादत्राप्युपस्थितिरिति तत्त्वम् ॥ **पक्षे स्यादिति** । अनुदात्तं पदमिति वचनात्पक्षे इत्युक्तम् । चिकीर्षक इत्याद्यर्थमावश्यकेन निषेधेनैव सिद्धेर्लित्वसामर्थ्यमेव कथमिति चिन्त्यम् ॥ भाष्ये—**पञ्चारत्न्य इति** । अन्तरङ्गत्वेनापीदं सिद्धम् । वैकुंकत्वक इत्युदाहरणम् । अत्र कपि आपोऽन्यतरस्यामिति ह्रस्वत्वे तस्य स्थानिवत्त्वाद् ह्रस्वान्तेऽन्त्यादिति स्वरो न भवति ॥

( दीर्घोदाहरणोपपादनभाष्यम् )

**दीर्घ—प्रतिदीव्ना प्रतिदीव्ने ॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—किर्योः । गिर्योः । दीर्घ ॥**

(प्रदीपः) **प्रतिदीव्नेति** । रेफवकारान्तस्य भस्य न भकुर्छुरामिति दीर्घत्वनिषेध इत्यत्र न प्रवर्तते ॥

(उद्योतः) **प्रतिदीव्नेत्यत्र** वहिरङ्गत्वेनासिद्धत्वमल्लोपस्येति न शङ्क्यं त्रिपाद्यां तदप्रवृत्तेः ॥ वाय्वोरित्यत्रापि यथा न सा तथोक्तम् ॥ **रेफेति** । अत्र तु नान्तं भमिति भावः ॥

( यलोपोदाहरणोपपादनभाष्यम् )

**यलोप—ब्राह्मणकण्डूतिः । क्षत्रियकण्डूतिः ॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—वाय्वोरध्वर्य्वोरिति ॥ यलोप ॥**

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् । इह हि लोपोऽपि प्रकृतः, आदेशोऽपि । विधिग्रहणमपि प्रकृतमनुवर्तते । दीर्घादीनाम् ।**

---

१ ब्रवीति । अ प्रत्ययादिति क्तिनो बाधात् ॥ इत एव भाष्यान्नावादित्वकल्पनापि ॥ छाया ॥

२ कर्मेति । कर्मणि क्तिन् ॥ छाया ॥

३ अतएवाह—विशेषणेति ॥ छाया ॥

४ धातुत्व आह—उवङिति ॥ अधातुत्व आह—यणिति ॥ इको यणित्यनेन ॥ छाया ॥

५ 'स्थानिवत्त्वाभावाद्' इति पाठः कलिकातामुद्रितपुस्तके शोधकाज्ञानसूचकः ॥ दाधिमथाः ॥

६ ननु स्थानिद्वारकं तदित्यत आह—अस्मादेवेति ॥ आहुः सिद्धान्तिनः ॥ छाया ॥

७ अत्र आकर्षिक इत्यादौ ॥ छाया ॥

८ ननु स्थानिवत्त्वे तस्यैव स्यादिति कुतो नोक्तमत आह—लुप्तेति ॥ अयस्य स्वरस्य ॥ छाया ॥

९ चिकीर्षक इति । ण्वुलो लित्वस्य कारक इत्यादौ साफल्यस्योक्तत्वात् ॥ सिद्धेः ष्ठलो लित्वसाफल्यसिद्धेः ॥ छाया ॥

१० तत्र पञ्चेत्युपलक्षणमित्याह—बहिति ॥

११ स्थानिवत्त्वनिषेधसामर्थ्यादसिद्धत्वात्मवृत्तिरिति दण्डिकृष्णाख्यसंगत्याह—प्रतीति ॥ छाया ॥ यद्योदेशपद्य इति तु दाधिमथाः ॥

दयोऽपि निर्दिश्यन्ते । केवलं तत्राभिसंबन्धमात्रं कर्तव्यम्—स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति ॥

(प्रदीपः) इह हि लोपोऽपीति । प्रकृतः प्रस्तुतः ॥

(उद्द्योतः) न सूत्रान्तरवृत्तित्वं प्रकृतत्वमित्याह—प्रस्तुत इति ॥

( आक्षेपभाष्यम् )

**आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसंबन्धः शक्यते कर्तुम् । न चैतान्यानुपूर्व्येण सन्निविष्टानि ॥**

( प्रदीपः ) आनुपूर्व्येणेति । तत्र[1] पदार्थानां समन्वयावगमात् । इह तु लोपो यशब्देन संबद्धः सकृच्च श्रुतो, द्विधा चास्योपयोग इष्यते । स्वरदीर्घयलोपाश्च विक्षिप्ताः कथं समुच्चीयन्तामिति भावः ॥

(उद्द्योतः) [2]पदान्तरेणाव्यवधानरूपासत्तिरानुपूर्व्यम् । विक्षिप्ताः विभिन्नदेशस्थाः ॥ भाष्ये यथेष्टं संबन्धः इष्टवाक्यार्थबोधजनकत्वरूपः ॥

( समाधानभाष्यम् )

**अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसंबन्धो भवति । तद्यथा—अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति । तस्य यथेष्टमभिसंबन्धो भवति—उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति ॥**

(प्रदीपः) अनानुपूर्व्येणापीति । लोपशब्द[3] आवर्तते । तत्र लोपाजादेश इति ज्ञायते । तत्र[4] द्विर्वचनविधौ लोपाजादेशस्यासंभवात्सवर्णादिविधौ तु तस्यैव संभवान्न तत्रादेशस्य लोपो विशेषणम् । पदान्ते तु यद्यपि संभवव्यभिचारौ स्तस्तानि सन्ति कानि सन्तीति, तथापि न पदान्तेति योगविभागात् तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते । स्मृति[5]शास्त्रत्वाच्चास्य एतावन्तोऽर्थाः संनिहिता इत्येतावत्प्रतीयते । ग्रहणकवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रियावाक्यम् उपप्लवत इति सिद्धमिष्टम् ॥ अनड्वाहमिति । पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसंबन्धः ॥

(उद्द्योतः) असंभवादिति । चक्षतुः, जग्मतुरित्यादौ संभवाच्चिन्त्यमिदम् ॥ पारिशेष्यादिति । [6]व्याख्यानाच्चेत्यपि बोध्यम् ॥ एतावदिति । [7]पूर्वोक्तो नियमोऽपीत्यर्थः ॥ ननु सूत्रस्यैकत्वात्तावन्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह—ग्रहणकवाक्यात्त्विति ॥ [8]पाठक्रमादिति । आर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्याकाङ्क्षितार्थान्वयक्रमः । [10]एवं च कल्पितासन्नवाक्याद्बोधविषये तात्पर्यं नियामकमिति भावः ॥ भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद्व्युत्पत्त्यनुसारेणान्वयबोध इति लभ्यते ॥ साचीनमित्यस्य तिर्यग्गच्छन्तमित्यर्थः ॥

( ४१६ न्यूनताक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥ * ॥

( भाष्यम् )

**क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्तव्यम् ॥**

(उद्द्योतः) क्विलुगिति वार्त्तिके क्वावित्यत्र विधावित्येतदध्याह्रियते । तेन क्विनिमित्तविधावित्यर्थः । आवृत्त्या क्वावित्यादेशेनापि संबध्यते । क्विनिमित्तादेश इत्यर्थस्तदेतदर्थतः[11] पठ्यते—कौलुप्तमिति । इदं च क्वाचित्कमिति वक्ष्यते ॥ एवं लुग्रूपे—आदेशे, उपधात्वप्रयुक्ते कार्ये, चङ्परह्रस्वे, कुत्वे च स्थानिवत्त्वं नेत्यर्थः ॥

( क्विग्रहणोदाहरणप्रकरणम् )

( आक्षेपभाष्यम् )

**क्वौ किमुदाहरणम् ? ।**

(उद्द्योतः) भाष्ये—क्वावित्यस्य क्वौ लुप्तमित्यर्थे उदाहरणम् ॥

( समाधानभाष्यम् )

**कण्डूयतेरप्रत्ययः कण्डूरिति ॥**

(उद्द्योतः) कण्डूरिति क्यजन्तात् क्विप् । अत्र यण् न, यलोपश्च भवतीति भावः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥**

(उद्द्योतः) [12]तत्रान्त्यं खण्डयति—यलोपेति ॥

---

१ तत्र आनुपूर्व्येण संनिवेशस्थले ॥ छाया ॥

२ भाष्यार्थमाह—पदान्तरेणेति ॥ छाया ॥

३ प्रागुक्तदोषमुद्धरति—लोपशब्द इति ॥ तत्र आवृत्तौ सत्याम् ॥ छाया ॥

४ नन्वेवं लोपाजादेशस्य सर्वान्वयः कुतो नात आह—तत्रेति । सूत्रोपात्तानां मध्ये इत्यर्थः ॥ आदिनाऽनुस्वारादि ॥ छाया ॥

५ ननु योगविभागादौ किं मानमत आह—स्मृतीति ॥ प्रयोगमूलत्वाच्च तत्त्वस्येति भावः ॥ छाया ॥

६ कैयटोक्तयुक्तेः शिथिलत्वादाह—व्याख्येति ॥

७ न्यूनतां निराचष्टे—पूर्वोक्त इति ॥ वार्तिकोक्तो लोपाजादेश एवेतीत्यर्थः ॥ छाया ॥

८ तावदिति । त्रितयविषय एवेत्यर्थः ॥ छाया ॥

९ नन्वेवमपि स्वरादीनां पदानां क्रमेणानुच्चारितानां कथमुक्तोऽन्वयोऽत आह—पाठेति ॥ छाया ॥

१० एवंच तस्य वैलक्षण्ये च ॥ छाया ॥

११ अर्थतः न तु शब्दतः ॥ छाया ॥

१२ तत्र तयोर्मध्ये ॥ छाया ॥

---

१ संमतं चेदं—"तत्कृतार्थेन गुणवचनेन" "झल्यमकिति" "अतो रोरप्लुतात्" इत्येवं सूत्राणि रचयतो भगवतः सूत्रकारस्यापि ॥ दाधिमथाः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पिपठिषतेरप्रत्ययः। पिपठीः॥**

( बाधकभाष्यम् )

**नैतदस्ति। दीर्घविधिं प्रति न स्थानिवत्॥**

(उद्द्योतः) पिपठीरिति। अल्लोपस्य स्थानिवत्त्वेन रेफान्तस्यापदत्वाद्दीर्घो न स्यादिति भावः॥ अत्र रुत्वमप्येतदधीनमेव॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—लावयतेर्लौः। पावयतेः पौः।**

(प्रदीपः) लौरिति। णिलोपस्य स्थानिवत्त्वादूठ् न स्यात्॥

(उद्द्योतः) लावयतेरिति। ण्यन्तलूधातोरित्यर्थः॥ ऊठ् नेति। कौ वान्तस्यानङ्गत्वादिति भावः॥ ऊठि एत्येधतीति वृद्धिः॥

( बाधकभाष्यम् )

**नैतदस्ति। अकृत्वा वृद्ध्यावादेशौ णिलोपः। प्रत्ययलक्षणेन वृद्धिर्भविष्यति॥**

(प्रदीपः) अकृत्वेति। ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति णिलोपस्ततो वृद्धिः। आवादेशस्तु वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति यथा गोहितमित्यवादेशः। एतच्चान्तरङ्गत्वमनाश्रित्योक्तम्। तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाभावः॥

(उद्द्योतः) वर्णाश्रयत्वादिति। अचः परस्मिन्निति स्थानिवत्त्वं तु न, [2]वृद्धेरनादिष्टादचः पूर्वत्वाभावात्॥ तत्र त्विति। [3]कारकइत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थः। तथैव चातो लोप इति सूत्रे भाष्ये स व्याख्यात इति भावः॥ परे तु षत्वतुकोरिति ज्ञापकादनित्यत्वेनान्तरङ्गत्वमनाश्रित्य कौलुप्तमिति न कार्यम्, नित्यत्वाच्च पूर्वं णिलोपः। वृद्धिस्त्वकृते णिलोपे उपदेशेन कृते त्वतिदेशेनेत्यनित्येति पूर्वपक्ष्याशयमाहुः॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—लवमाचष्टे लवयति। लवयतेरप्रत्यये लौः पौः। स्थानिवद्भावाण्णेरूठ् न प्राप्नोति॥ कौ लुप्तं न स्थानिवदिति भवति॥**

(प्रदीपः) लवमाचष्ट इति। कौ विधिं प्रति न स्थानिवदित्यस्यार्थस्य प्रदर्शनायेदमुदाहृतम्॥ इदं तु कौ लुप्तस्योदाहरणं देवयतेर्द्यूरिति॥

(उद्द्योतः) देवयतेरिति। ण्यन्तदिवेरित्यर्थः॥ नन्वत्रोठ् कौ विधिमित्येव सिद्धः। न चोकारस्य वृद्धिः स्याद् णेः स्थानिवत्त्वादिति वाच्यम्। [5]ऊठ आदिष्टादचः पूर्वत्वादिति नेदमसाधारणमुदाहरणमिति चेन्न। सखीयतेः सख्युरिति ख्यत्यात्सूत्रभाष्योक्तं गोमत्यतेर्गोमानिति उगिदचामिति सूत्रभाष्योक्तं ण्यन्तपदेः पात् पाद् इति येन विधिरिति सूत्रभाष्योक्तं कण्डूः पिपठीरित्यादौ यणभावरुत्वयोः सिद्धिश्च तस्यासाधारणमुदाहरणम्॥ [6]स्थानिद्वारकेऽनादिष्टादचः पूर्वत्वे तु इदमप्युदाहरणमिति बोध्यम्॥

( समाधानबाधकभाष्यम् )

**एवमपि न सिध्यति॥**

**कथम्?।**

**कौ णिलोपो णावकारलोपस्तस्य स्थानिवद्भावादूठ् न प्राप्नोति॥**

( समाधानसाधकभाष्यम् )

**नैष दोषः। नैवं विज्ञायते—कौ लुप्तं न स्थानिवदिति॥**

**कथं तर्हि?।**

**कौविधिं प्रति न स्थानिवदिति॥**

(उद्द्योतः) नैवं विज्ञायते कौलुप्तमिति [7]नैवमेव विज्ञायते किं त्विदमपि काचित्कं लक्ष्यसिद्धये आश्रयणीयमिति भावः॥

( इति क्विग्रहणोदाहरणनिरूपणम् )

---

( अथ लुग्ग्रहणोदाहरणनिरूपणम् )

( आक्षेपभाष्यम् )

**लुकि किमुदाहरणम्?॥**

( समाधानभाष्यम् )

**बिम्बं बदरम्॥**

(प्रदीपः) बिम्बमिति। बिम्बीबदरीशब्दाभ्यां [8]ङीषन्ताभ्यामनुदात्तादेश्चेत्यञ्, तस्य फले लुक्, लुक् तद्धितलुकीति ङीषो लुकि तस्य स्थानिवद्भावाद्यस्येति लोपः प्राप्नोतीति प्रतिषेध उच्यते। तद्धितस्य स्थानिनः परत्वाल्लुकोऽपि परत्वाश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते। अन्यथा अभावेन पौर्वापर्याभावात् कुतः परनिमित्तकत्वम्। अथवा बुद्धिपरिकल्पितमभावेनापि पौर्वापर्यं भवति॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति। पुंवद्भावेनाप्येतत्सिद्धम्॥**

(प्रदीपः) पुंवद्भावेनेति। भस्याढे तद्धित इति पुंवद्भावः॥ अत्र च भाषितपुंस्कत्वं नाश्रीयते इत्येवमुक्तम्। तदाश्रये तु नास्ति पुंवद्भावः॥

(उद्द्योतः) तदाश्रये इति। वृक्षजातिः स्त्रियामिति लिङ्गानुशासनाद् वृक्षे स्त्रीलिङ्गत्वं फले च नपुंसकत्वमिति भावः॥

---

१ एतदिति। निषेधेत्यर्थः॥ स च वार्तिकोक्तः। पूर्वत्रासिद्धे इति वा॥ छाया॥

२ वृद्धेरिति। स्थानिद्वारकं तु तत्काचित्कमिति भावः॥ छाया॥

३ नन्वेवं वार्तिकवैफल्यमत आह—कारक इति॥ स पूर्वविप्रतिषेधः॥ छाया॥

४ तत्र मानं वैपरीत्यशङ्कानिरासायाह—तथैव चेति॥ छाया॥

५ ऊठ इति। तत्त्वं तु काचित्कमित्युक्तमेव॥ छाया॥

६ अत एवाह—स्थानीति॥ छाया॥

७ यथाश्रुतार्थासंगतेराह—नैवमेवेति॥ छाया॥

८ ङीषन्ताभ्यां गौरादित्वात्॥ छाया॥

वस्तुत[1] आम्र इत्यादौ लिङ्गानुशासनस्य व्यभिचारादेत[2]द्भाष्यप्रामाण्याच्च बिम्बवदरामलका वृक्षेऽपि त्रिलिङ्गा इत्याहुः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—आमलकम् ॥**

(प्रदीपः) **आमलकमिति** । वृद्धत्वाद् मयटो विधानाद्भत्वाभावः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । वक्ष्यत्येतत्—*फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वाद् * इति ।**

(प्रदीपः) **प्रकृत्यन्तरत्वादिति** । बिम्बवदरामलकादयो न यौगिकाः शब्दाः । किं तर्हि, विशिष्टफलजातिवाचिन इत्यर्थः ॥

(उद्योतः) **किंतर्हीति** । यौगिक[3]त्वे हि वृक्षसंबन्धात् फले, न पुनः फलसंबन्धाद्वृक्षे इत्यत्र विनिगमनासंभवादिति भावः ॥ **विशिष्टेति** । विजा[4]तीयेत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुर्दशपटुरिति ॥**

(प्रदीपः) **पञ्चभिरिति** । आर्हादिति ठक् तस्याध्यर्धपूर्वेति लुक् । लुक् तद्धितलुकीति ङीषो लुक् । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति यणादेशः पूर्वं न प्रवर्तते । कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानिवत्त्वनिषेध उच्यते । अव्यविकन्यायेन पटुशब्दान्तादेव ठग् भविष्यति न तु पट्वीशब्दान्तादितिचेत्प्रतिपत्तिगौरवप्रसङ्गः ॥

(उद्योतः) अन्तरङ्गानपीति । अ[5]स्य न्यायस्यान्तरङ्गनिमित्तविनाशफलक एव तदन्तरङ्गबाधकताबोधकत्वे तु त[6]त्परिभाषाप्रवृत्त्यभावसंपादकस्थानिवत्त्वनिषेधायेदमिति बोध्यम् ॥ **अव्यविकेति** । वोतो गुणेति ङीपो वैकल्पिकत्वादिति भावः ॥ **प्रतिपत्तिगौरवेति** । ज्ञा[7]नगौरवेत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**ननु चैतदपि पुंवद्भावेनैव सिद्धम् ॥**
**कथं पुंवद्भावः ? ।**
***भस्याढे तद्धिते * पुंवद्भवतीति ॥**

( समाधानसाधकभाष्यम् )

**भस्येत्युच्यते । यजादौ च भसंज्ञा भवति । न चात्र यजादिं पश्यामः ॥**

( समाधानबाधकभाष्यम् )

**प्रत्ययलक्षणेन यजादिः ॥**

( समाधानसाधकभाष्यम् )

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥**

(प्रदीपः) **वर्णाश्रय इति** । यद्यपि ***पुंवद्भावे सिद्धश्च प्रत्ययविधा**विर्त्यस्ति तथापि यत्र भावि भत्वं तत्र पुंवद्भावः । इह तु लुकि भत्वाभावात्कुतः पुंवद्भावः ॥

(उद्योतः) ननु भसंज्ञकस्य न पुंवत्त्वम्, येन वर्णाश्रयतया भत्वाभावेन पुंवत्त्वं न स्यात्, किंतु तत्प्रत्यय[9]विषये पूर्वमेव पुंवत्त्वप्रतिपत्तिरत आह—**यद्यपीति** ॥ **इहतु लुकीति** । अनेन न लुमतेति निषेधान्न प्रत्ययलक्षणम् । किंच ढभिन्नतद्धितविषयाभावादपि न तत्प्रवृत्तिरित्यपि ध्वनितम् । **किंचान्तरङ्गानपीति** न्यायेनेकादेशात्पूर्वमेव लुकि प्रत्ययलक्षणसत्त्वेऽपि यजादित्वाभावान्न भत्वम् । न च वर्णप्राधान्याभावात्कथं **वर्णाश्रये नास्तीत्युक्ति**र्भगवत इति वाच्यम् । **प्रत्ययलक्षणसूत्रस्य** नियमार्थत्वमिति पक्षेऽदोषात् ॥

( समाधानबाधकभाष्यम् )

**एवं तर्हि—"*ठक्छसोश्च*" इत्येवं भविष्यति॥**

( समाधानसाधकभाष्यम् )

**ठक्छसोश्चेत्युच्यते । न चात्र ठक्छसौ पश्यामः ॥**

( बाधकभाष्यम् )

**प्रत्ययलक्षणेन ॥**

( समाधानसाधकभाष्यम् )

**"न लुमता तस्मिन्" इति प्रत्ययलक्षणस्य प्रतिषेधः ॥**

**न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः । क्रीताद्यर्था एव वा तद्धिताः ॥**

**किं तर्हि ? ।**

**अन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति । पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः । दशेन्द्रः । पञ्चाग्निः । दशाग्निः ॥**

(प्रदीपः) **किंतर्ह्यन्येऽपीति** । यत्र पुंवद्भावो नास्ति ॥ **पञ्चेन्द्र इति । साऽस्य देवतेत्यण्, तस्य द्विगोर्लुगनपत्य इति लुक्, ततो ङीषो लुक् । तस्य स्थानिवत्त्वाद् ङीष्-**

---

१ कैयटादिकं दूषयन्भाष्याशयमाह—वस्तुत इति ॥ छाया ॥

२ ततः किं प्रकृतेऽत आह—एतदिति ॥ अपिना फलम् ॥ छाया ॥

३ तस्यागे बीजमाह—यौगिकेति ॥ फले वृत्तिः ॥ पुनस्त्वर्थे ॥ छाया ॥

४ वृक्षसंबन्धविशिष्टेत्यर्थे दोषोक्तेराह—विजातीति ॥ छाया ॥

५ नन्वन्तरङ्गानित्यस्य न पूर्वं तदप्रवृत्तिबोधकत्वं किं तु तस्य तद्बाधकताबोधकत्वमिति बाधादेव कृतेऽपि तदप्रसङ्ग एवेति न निषेधोपयोगोऽत आह—अस्येति ॥ छाया ॥

६ तत् अन्तरङ्गमिति संपादकत्वं स्थानिवत्त्वविशेषणम् ॥ छाया ॥

७ प्रक्रियागौरवाभावादाह—ज्ञानेति । तस्यानभिधानमूलकत्वेनागतिकगतित्वात् ॥ छाया ॥

८ 'भिक्षादिभ्योऽण्' इत्यत्रत्यमिदं वार्तिकम् ॥

९ तत्प्रत्ययेति । भसंज्ञानिमित्तप्रत्ययेत्यर्थः ॥ तत् पुंवत्त्वम् ॥ किंचान्तरेति । तस्य सर्वलुग्विषयत्वात् ॥ इकादेशात् । ठस्येक इति ॥ प्रत्ययेति । आङ्गस्यैव निषेध इति भावः ॥ पक्षे इति । तथाच तद्वार्तिकमतमिति न विरोधः सिद्धान्त्युक्ताविति भावः ॥ छाया ॥

संनियुक्त आनुक् श्रूयेत, यथेन्द्राणीति । तथा पञ्चाग्नाय्यो देवता अस्य पञ्चाग्निरिति ऐकारः श्रूयेत । समानायामाकृतौ भाषितपुंस्कत्वाभावाद्वर्णाश्रयत्वाद्भत्वाभावाच्च पुंवद्भावो नास्ति । अथ वा **यस्येति** लोपप्रसङ्गः । [1]लुकि च स्थानिवत्त्वनिषेधादादीध्य इति **परस्मिन्नित्यस्य** पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते । शब्लुकि कृते टेरेत्वस्य स्थानिवद्भावादव्यवधानाच्च लोपप्रसङ्गात् ॥

(उद्द्योतः) न लुमताङ्गस्येति यथाश्रुतेऽभ्युपेत्याऽपि ठक्छसोश्चेति पुंवत्त्वं भाष्ये आह—**नखल्वपीति** ॥ नन्वानुङ् न ङीषीत्युच्यते, येन स्थानिवत्त्वेन तदापत्तिरत आह—**संनियुक्त इति** । [2]एवं च संनियोगशिष्टपरिभाषाप्राप्तानुग्निवृत्तिप्रतिबन्धद्वारा आनुग्ग्रहणमेव पूर्वविधिरिति भावः ॥ [3]अत एवैनेय इत्यादौ **यस्येति** लोपे नस्य श्रवणम् । अत एवाचः **परस्मिन्निति** सूत्रे विधिशब्दस्य भावसाधनत्वे पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवदित्यर्थ उक्तः । पूर्वः स्यादित्यस्य पूर्वः स्थितः स्यादित्यप्यर्थो बोध्यः । एवंच पूर्वसूत्रे तन्त्रेणोभयसाधनविधिशब्दघटितग्रहणम् ॥ यत्तु कैयटादिभिः **संनियोगशिष्टपरिभाषाऽनित्यत्वेनेदं** साधितम् । [4]तद्वृथैव ॥ नन्वत्रा[5]पि **भस्याढ** इति पुंवत्त्वं स्यादत आह—**समानायामिति** । पुंसि इन्द्रत्वादि प्रवृत्तिनिमित्तं स्त्रियां तु तत्संबन्ध इति भावः ॥ नन्वेवमग्नायी देवता अस्याग्नेयं हविरिति उदाहरणासिद्धिस्तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमित्यत आह—**वर्णाश्रयत्वादिति** । [6]अणो लुकि न लुमतेति निषेधाद् ढभिन्नताद्धितविषयाभावाच्चेत्यपि बोध्यम् ॥ **अथवेति** । ङीलुकः स्थानिवत्त्वेन भत्वादीकारपरत्वाच्चेति भावः ॥ **शब्लुकीति** । अन्य[7]था शब्लुकः स्थानिवत्त्वेन व्यवधानात्प्राप्तिरेव नेति भावः ॥ वस्[8]तुतः शब्लुकः परनिमित्तकत्वाभावादेव न स्थानिवत्त्वप्रसक्तिः। अत एव जुहुत इत्यादौ श्लोः स्थानिवत्त्वान्न गुणः॥

( अथोपधात्वोदाहरणनिरूपणम् )

( आक्षेपभाष्यम् )

**उपधात्वे किमुदाहरणम्?।**

( समाधानभाष्यम् )

**पिपठिषतेरप्रत्ययः पिपठीरिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि—सौरी बलाका ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पारिखीयः ॥**

(प्रदीपः) **पारिखीय इति** । परिखाशब्दाच्चातुरर्थिकेऽणि कृते आकारलोपस्य स्थानिवत्त्वात् पारिखे भव इति **वृद्धादकेकान्तखोपधादिति** च्छो न स्यात् ॥

( इत्युपधात्वोदाहरणनिरूपणम् )

( अथ चङ्परनिर्ह्रासोदाहरणनिरूपणम् )

**चङ्परनिर्ह्रासे चो[9]पसंख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ॥**

**किं पुनः कारणं न सिध्यति ? ।**

**योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति ॥**

(उद्द्योतः) भाष्ये—**योसौ णाविति** । णेर्णिच्युपसङ्ख्यानमिति सिद्धमेतत् ॥ [10]वक्तृभेदान्न दोष इति तत्त्वम् ॥ अत एव ज्ञापकात्प्रायोगिकमचूस्थानिकादेशत्वमेवाचः परस्मिन्नित्येतत्प्रवृत्त्युपयोगीति बोध्यम् ॥

( बाधकभाष्यम् )

**ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम् ॥**

---

१ फलान्तरमाह—लुकि चेति ॥ छाया ॥

२ एवं च संनियुक्तत्वे च ॥ प्रतिबन्धेति । स्थानिवत्त्वेन ॥ छाया ॥

३ अत एव एवंरीत्या स्थानिवद्भावाङ्गीकारादेव ॥एवमग्रेऽपि ॥ नतु तावता कथमेतल्लाभोऽत आह—पूर्वः स्यादित्यस्येति । एवं च तथाप्यर्थेच ॥

४ इदम् एनेय इत्यादि ॥ तद्वृथैवेति । उक्तरीत्या तदुपपत्तेः ॥ छाया ॥

५ अत्रापि पञ्चेन्द्रादावपि ॥ एवं प्रवृत्तिनिमित्तभेदे ॥ णासिद्धिरिति । निषेधस्य स्त्रीभ्य इति ढग्मात्रविषयत्वेनात्राग्नेढंगिति विषये इष्टपुंवत्त्वाभावादित्यर्थः ॥ छाया ॥

६ प्रागुक्तमेवात्राप्याह—अण इति ॥ अन्यथा लुकि निषेधाभावे ॥ नेतीति । तथाच न तत्प्रत्युदाहरणम् ॥ छाया ॥

७ अन्यथा लुकि निषेधाभावे ॥ नेतीति । तथा च न तत् प्रत्युदाहरणं स्यात् ॥ छाया ॥

८ इदमपि तदभावे, तत्सत्त्वे तु नेत्याह—वस्तुत इति । अत एव अपरनिमित्तकत्वादेव ॥ गुणः । इति बोध्यमिति शेषः ॥ छाया ॥

९ द्वन्द्वान्ते श्रूयमाणमित्याश्रित्य 'चङ्परनिर्ह्रास' इत्यंशं व्याचष्टे—चोपसंख्यानमित्यादि ॥ एतत्संवादात् "क्नौ किमुदाहरणम्" इत्येतत्स्थानेऽपि "क्नौ प्रतिषेधस्योपसंख्यानम्" इति, "लुकि किमुदाहरणम्" इत्येतत्स्थानेऽपि "लुकि चोपसंख्यानम्" इति, "उपधात्वे किमुदाहरणम्" इत्येतत्स्थाने "उपधात्वे चोपसंख्यानम्" इत्येव पाठो भवेत् ॥ एकस्य वार्तिकस्यांशभेदेन व्याख्याभेदे तु कारणं नैव व्यक्तमवलोकयामः ॥ तथैव पदमञ्जरीशब्दकौस्तुभरहस्यम् ॥ वस्तुतस्तु 'पूर्वं वार्तिकादनुपदमेवोपसंख्यानं कर्तव्यमिति व्याख्यातत्वादत्रैव पूर्वसंवादात् 'किमुदाहरणम्' इत्युचितम् । एवमग्रेऽपि ॥ दाधिमथाः ॥

१० नन्वेवं पौनरुक्त्यमत आह—वक्तृभेदादिति।वार्तिककृतामनेकत्वात् ॥ अत एव भसादेव ॥ एवेन सौत्रव्यवच्छेदः ॥ छाया ॥

---

१ एवं चैतच्छायानुरोधाद् "वस्तुभेदात्" इति पाठो बहुत्रोपलभ्यमानोऽपि शोधकशोधित एव, न वास्तविक इति बोध्यम् ॥ दाधिमथाः ॥

(साधकभाष्यम्)

**विशेषेत एतद्वक्तव्यम् ।**

**क ? ।**

**प्रत्ययविधाविति । इह मा भूत्—पटयति लघयतीति ॥**

(उद्योतः) प्रत्ययविधाविति । अत एव चङ्परहस्वे निषेधः सार्थकः ॥ ननूपधात्वे स्थानिवत्त्वनिषेधेऽपि ञ्णितपरत्वांशे णिपरत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नापि ह्रस्वे निषेधो व्यर्थ इति चेन्न । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन ञ्णिति णावित्यादेरङ्गविशेषणत्वस्यैवौचित्यात् । उपधात्वप्रयुक्तकार्ये एव तन्निषेधेन णित्परत्वांशेऽपि स्थानिवत्त्वनिषेधाच्च ॥

(अथ कुत्वोदाहरणनिरूपणम्)

**कुत्वे चोपसंख्यानं कर्तव्यम् । अर्चयतेरर्कः । मर्चयतेर्मर्कः ॥**

(उद्योतः) अर्क इति । कर्मणि घञ् । चजोरिति कुत्वमिति भावः ॥

(उपसंख्यानबाधकभाष्यम्)

**नैतद् घञन्तम् । औणादिक एष कशब्दस्तस्मिन्नाष्टमिकं कुत्वम् ॥**

(उद्योतः) नैतद् घञन्तमिति ॥ एरचः प्रसङ्गादित्यर्थः ॥

(उपसंख्यानसाधकभाष्यम्)

**एतदपि णिचा व्यवहितत्वान्न प्राप्नोति ॥**

(उद्योतः) एतदपीति । एवं च कुत्वे इत्यावश्यकमिति भावः ॥

(४१७ आक्षेपवार्तिकम् ॥ ३ ॥)

**॥ * ॥ पूर्वत्रासिद्धे च ॥ * ॥**

(भाष्यम्)

**पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम् ॥**

(उद्योतः) वस्तुतस्तदनावश्यकमित्याह—पूर्वत्रासिद्धे इति । अचः परस्मिन्नित्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानामन्तादिवदित्यादीनां त्रिपाद्यां प्रवृत्तिबोधनम् । तेनामी, क्षीरपेणेत्यादौ तत्सिद्धिरिति दिक् ॥

(भाष्यम्)

**किं प्रयोजनम् ? ।**

(४१८ प्रयोजनवार्तिकम् ॥ ४ ॥)

**॥ * ॥ प्रयोजनं क्सलोपः सलोपे ॥ * ॥**

(भाष्यम्)

**क्सलोपः सलोपे प्रयोजनम् । अदुग्ध अदुग्धाः । "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति लुग्ग्रहणं न कर्तव्यं भवति ॥**

(प्रदीपः) **क्सलोप इति ।** अदुह्वहीत्यर्थं लुग्वचनं कर्तव्यमेव । तदर्थं **लुग्ग्रहणं नेति**च्छेदं कुर्वन्ति । **कर्तव्यं भवती**त्युत्तरम् । अवश्यकार्यमित्यर्थः ॥

---

१ विशेषतः विशेषे ॥ छाया ॥

२ अत्र मानमाह—अत एवेति ॥ तस्य तद्विषयत्वादेवेत्यर्थः ॥ यथाश्रुतार्थाशयेन निमित्तं चोपधाविशेषणम् । अत एव तत्र निषेधसार्थक्यमित्याशयेन चाह—ननूपधात्वे इति॥ निषेधेऽपि । तेन तत्त्वेऽपि॥ह्रस्वे आह—णीति ॥ तस्य स्थानिवत्त्वस्य ॥ एवंच प्रत्ययविधाविति व्यर्थमिति भावः ॥ औचित्यादिति ॥ तथाचान्यस्य तत्परत्वस्य सत्त्वेन तत्र निषेधेन च तदापत्तिरेव ॥ छाया ॥

३ अभ्युपेत्यापि विधावित्यध्याहारेणाह—उपधेति ॥ छाया ॥

४ चजोरितीति । निष्ठायामनिट इत्येतदनाश्रित्येदमिति भावः ॥

५ एतदपीति । चोः कुरित्याष्टमिकमपीत्यर्थः ॥

६ तत्सिद्धिः । प्रगृह्यसंज्ञाणत्वादिसिद्धिः ॥ अन्तवत्त्वांशे ज्ञापकान्तरमपि । अन्यथा तत्र स्यादित्युक्तम् । तदाह—दिगिति ॥ छाया ॥

७ अदुह्वह्यर्थमिति ॥ इदं सर्वं तदैव संभवति यदा वकारस्य दन्त्यत्वं भवेत् । परंतु तदेव न अन्तस्थावकारस्याप्युच्चारणे दन्तव्यापारस्याप्रतीतेः केवलमोष्ठसंयोगरूपव्यापारस्यैवानुभवसिद्धत्वेन दन्तस्थानकत्वस्य कैरपि प्रातिशाख्यकृद्भिरनुक्तत्वाच्च ॥ तथाहि "ओष्ठे व-ओ-ᳵप-प ऊ" इति ऋक्तन्त्रे शाकटायनः । तथैव शुक्लयजुःप्रातिशाख्ये कात्यायनः—'उवोपोपध्माः ओष्ठे' इति सप्तम्या निर्दिष्टस्यैव स्थानत्वमङ्गीचकार । एवं तैत्तिरीयप्रातिशाख्यकृदपि 'रेफे जिह्वामूलेन प्रत्यादन्तमूलेभ्यः' इति सूत्रे तृतीयया करणत्वम्, पञ्चम्या स्थानत्वमिव 'ओष्ठान्ताभ्यां दन्तैर्वकारे' इति सूत्रेऽपि तृतीयया दन्तानां करणत्वं पञ्चम्यौष्ठान्तयोरेव स्थानत्वं दर्शितवान् ॥ कात्यायनस्तु स्थानप्रकरणे "उवोपोपध्मा ओष्ठे" (१।७०) इति सूत्रं, करणप्रकरणे 'वो दन्ताग्रैः' (१।८१) इति सूत्रं रचयन् स्फुटमेव दन्तानां करणत्वमेव सूचितवान् । यदि च तृतीयानिर्दिष्टानां करणानामपि स्थानत्वमङ्गीक्रियेत तदा "तालुस्थाना मध्येन" (१।७९) इत्यादिसूत्रेषु तृतीयादर्शितसंसर्गमात्राणां जिह्वामध्यादीनामपि स्थानत्वापत्तिर्दुर्वारैव स्यादिति तैत्तिरीयप्रातिशाख्ये पञ्चमीसप्तम्यन्यतरनिर्दिष्टानामेव कात्यायनप्रातिशाख्ये सप्तमीनिर्दिष्टानामेव स्थानत्वम् । तृतीयानिर्दिष्टानां तु संसर्गमात्रसहायकरणत्वमेव मन्तव्यमिति न दन्तस्थानत्वं वकारस्य ॥ अत एव याज्ञवल्क्यशिक्षायामपि "अष्टावोष्ठ्या उवर्णवकारोपध्मानीयपवर्गा इति" इति उवर्णसमानस्थानत्वमेव वकारस्य दर्शितम्, न तु "अष्टौ दन्त्या ऌवर्णलकारसकारतवर्गा इति" इति सूत्रे वकारस्य दन्तस्थानत्वम् ॥ अत एव "उवर्णोऽथ पवर्गश्च ओ औकारौ तथा च वः । ओष्ठ्या एते स्मृता वर्णा उपध्मानीय एव च ॥ वकार ओष्ठसंभूतो दन्ताग्रकरणः स्मृतः" इति वर्णरत्नप्रदीपिकाशिक्षायां वकारस्य दन्ताग्रकरणकत्वमोष्ठमात्रस्थानकत्वमेवोक्तम् । अत एव संप्रसारणेषु वकारस्थाने ऌकारवारणाय भगवता कोऽपि यत्नो न कृतः । वकारस्य दन्तस्थानत्वे तु दन्तस्थानसाम्येन वकारस्य स्थाने ऌकारापत्तिर्दुर्वारा स्यात् । तद्वारणाय कण्ठस्थानसाम्येन प्राप्तस्याकारस्य वारणाय 'एच इग् ह्रस्वादेशे' इति सूत्रकरणयत्नमिव यत्नं कुर्यादेवेति तदकरणेन स्फुटमेव प्रतीयते—'न वकारस्य दन्ताः स्थानानि' इति ॥ प्राचीनतरवङ्गपुस्तकेषूपलभ्यमानः दन्तोष्ठ्यो वः स्मृतो बुधैः' इति शिक्षापाठस्तु 'दन्तसंनिकृष्टे ओष्ठे भवः' इति विग्रहे 'अयःशूल—' इति सूत्रभाष्यप्रयुक्तस्य 'शिवभागवतः' इत्यस्य 'शिवो भगवान् भक्तिरस्य' इति विग्रहे कर्मधारयोत्तरमपि भगच्छब्दात्प्रत्यय इव ओष्ठशब्दादेः शरीरावयवत्वाद् यति सिद्धः दन्तानां स्थानत्वं नैव दर्शयति ॥ 'अनुपसर्जनात्' इति सूत्रभाष्ये 'विशिष्टेनैकार्थीभावेऽवयवेनापि सोऽस्त्येव' इत्येतदाशयकस्य 'अवयवादुत्पत्तिः प्राप्नोति' इति भाष्यस्य प्रामाण्येन 'दन्तसंनिकृष्टावोष्ठौ दन्तोष्ठौ तयोर्भवो दन्तोष्ठ्यः' इति सिद्धे दन्तसंनिकृष्टपदोपादानं पवर्णोच्चारण इव वकारोच्चारणे नैव बहिर्दे-

(उद्द्योतः) अदुग्धेति । क्सस्यान्त्यलोपे झलो झलीति सलोपे तदीयाल्लोपस्य स्थानिवत्त्वं न ॥

( ४१९ प्रयोजनवार्तिकम् ॥ ५ ॥ )

## ॥*॥ दध आकारलोप आदिचतुर्थत्वे ॥*॥

( भाष्यम् )

**दध आकारलोप आदिचतुर्थत्वे प्रयोजनम्— धत्से धद्ध्वे धद्ध्वमिति "दधस्तथोश्च" इति चकारो न कर्तव्यो भवति ॥**

(प्रदीपः) चकारो न कर्तव्य इति । झषन्तत्वात् पूर्वेणैव सिद्धत्वात् ॥

( उद्द्योतः ) चतुर्थत्वे इति । भष्भावे इत्यर्थः ॥ चकार इति । सध्वोरित्यनुकर्षणार्थ इत्यर्थः ॥ पूर्वेणैवेति । एकाचो बश इत्यनेनेत्यर्थः ॥

( ४२० प्रयोजनवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ हलो यमां यमि लोपे ॥ * ॥

( भाष्यम् )

**हलो यमां यमि लोपे प्रयोजनम् । आदित्यः । "हलो यमां यमि लोपः" सिद्धो भवति ॥**

( ४२१ प्रयोजनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु ॥ * ॥

( भाष्यम् )

**अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम् । पापच्यतेः पापक्तिः । यायज्यतेर्यायष्टिः । पाचयतेः पाक्तिः । याजयतेर्याष्टिः ॥**

( प्रदीपः ) पापक्तिरिति । क्तिच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतक् । संयोगादिलोपलत्वणत्वेष्विति वचनात्संयोगादिलोपे स्थानिवत्त्वा-
तदभावादत्र संयोगान्तलोपः । दोहयतेर्धोक् । लेहयतेर्लेट् । उणादीनामव्युत्पन्नत्वात् कियोर्गियोरित्यत्र दीर्घाभावः ॥

(उद्द्योतः) ननु संयोगान्तलोपप्रभृतिषु इत्युक्त्वा तं विहाय कुत्वाद्युदाहरणदाने बीजाभावोऽत आह—संयोगान्तेति । पदान्तेति । चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात् परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति ॥ तदुदाहरणानि दर्शयति—स्कन्दयतेरित्यादिना । काष्ठतगिति । नच काष्ठशगेव नास्ति । कुतः काष्ठशकृस्थातेति परेश्चेति सूत्रस्थभाष्याद् एषामनभिधानमिति वाच्यम् । यत्र संयोगादिलोपप्रसक्तिस्तद्विषयत्वेनानभिधानस्यादोषात् ॥ नन्वत्र संयोगादिलोपः प्राप्नोति । न च तत्र पदान्तविधित्वमिति न तेन सिद्धिरत आह—संयोगादिलोपेति ॥ केचित्तु एतद्भाष्यप्रामाण्यादेषां प्रयोगाणामनभिधानमेवेत्याहुः ॥

( ४२२ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ द्विर्वचनादीनि च ॥ * ॥

( भाष्यम् )

**द्विर्वचनादीनि च न पठितव्यानि भवन्ति । पूर्वत्रासिद्धेनैव सिद्धानि भवन्ति ॥**

**किमविशेषेण ? ।**

**नेत्याह ।**

( शेषवार्तिकखण्डम् ॥ ८ ॥ )

## ॥ * ॥ वरेयलोपस्वरवर्जम् ॥ * ॥

( भाष्यम् )

**वरेयलोपं स्वरं च वर्जयित्वा ॥**

(उद्द्योतः) भाष्ये—वरेयलोपस्वरवर्जमिति । सवर्णानुस्वारदीर्घादयः साहचर्यात्त्रैपादिका एव गृह्यन्ते इति भावः ॥ नन्वेवं यङन्ताण्णिजन्तप्रकृतिकण्यन्ताद्वा चिणि अशंशामि अशामीत्यादौ दीर्घो न स्यात् । णिलोपाल्लोपयोः स्थानिवत्त्वादिति चेन्न । णेर्णिच्युपसङ्ख्यानादशामीत्यस्य सिद्धेः ॥ अशंशामीति तु यङ्लुगन्ताण्णिचि भविष्यति । न हि यङ्यङ्लुकोः स्वरे रूपे वा विशेषः । ग्राहितमित्यादौ विहितविशेषणाश्रयणान्न दीर्घ इति दिक् ॥ अन्ये तु

शावच्छेदेनौष्ठ्ययोः स्थानत्वम् किंतु दन्तसंनिकृष्टयोराभ्यन्तरयोरेवेति दर्शयितुमेवेति न दन्तस्थानत्वं वकारस्येति सिद्धम् ॥ एवंच वहिप्रत्यये क्सस्य लुग् नैव ऋषीणां संमत इति वहिप्रत्यये क्सस्य लुकं साधयन् प्रदीपकारस्तु पाश्चात्यानां धीमतां बुद्धिपरीक्षणायैव प्रवृत्तः 'स्वरूपव्याक्रियैव पराक्रिया' इति दर्शयन् प्राचां ग्रन्थमनुसृतवानिति न तस्यात्राग्रहः । अत एव स्थानत्रयेऽपि असाधारणम् 'अगुह्वहि' इति प्रयोजनमपहाय 'अदुह्वहि' इति लङ्साध्यार्थकमेव प्रयोजनत्वेन दर्शितवान् ॥ एवं भाष्ययोजनं तु सर्वत्र भाष्यशैलीविरुद्धम् ॥ तथाहि भाष्यकारस्य शैली—प्रत्याख्यानोत्तरम् 'न तर्हीदानीमयं योगो वक्तव्यः' इत्यनुयोगोत्तरमेव 'वक्तव्यश्च' इत्युत्तरस्य 'किं प्रयोजनम्' इत्यादिका सर्वत्र समुपलभ्यते ॥ एवंच अदुह्वहि अदिह्वहि अलिह्वहि इति रूपाणि तु लङि साधनीयानि ॥ अगुह्वहि इति रूपं वेदे चेद् वैदिकत्वात् 'अदिप्रभृतिभ्यः शपः' 'बहुलं छन्दसि' इति साधनीयम् ॥ लोके प्रामाणिकप्रयोगश्चेत् 'छन्दोवत् कवयः कुर्वन्ति' इति साधनीयम् ॥ इति दाधिमथाः ॥

१ लोपे कृते ॥ सलोपे कार्ये ॥ तदीयेति । क्ससंबन्धीत्यर्थः ॥ एतेन 'क्सलोपः सलोपे' इति भाष्ये पाठो नतु विपरीत इत्युक्तम् ॥ छाया ॥

२ भषिति ॥ तस्यादेर्दस्य भष्भाव इत्यर्थः ॥ छाया ॥

३ आदिना कुत्वषत्वे ॥ छाया ॥

४ अनभीति । पूर्वान्वयि ॥ छाया ॥

५ अत्र काष्ठशगित्यत्र ॥ नच नहि ॥ तत्र संयोगादिलोपे ॥ तेन पदान्तविधावित्यनेन ॥ छाया ॥

६ एतदिति । तदुक्तोदाहरणकथनपरभाष्येत्यर्थः ॥ उक्तरीत्या सिद्धिरत्रारुचिबीजम् ॥ छाया ॥

७ सिद्धेनैव । पूर्वत्रासिद्धमिति वचनेनैव ॥ छाया ॥

८ नन्वेवमपि यङन्ते दोष एवात आह—नहीति ॥ छाया ॥

९ अहिडि अहीडि इति रूपार्थं चिण्णमुलोरित्यत्र दीर्घग्रहणम् । ह्रस्वविकल्पे त्वहेडीति स्यात् । तदाह—दिगिति ॥ छाया ॥

तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्यादत्र[1] दीर्घमप्युपलक्षयन्ति। एतच्च तत्रैव निरूपयिष्यामः॥

( ४२३ प्रतिप्रसववार्तिकम् ॥ ९ ॥ )

**॥ * ॥ तस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥ * ॥**

( भाष्यम् )

**तस्यैतस्य लक्षणस्य दोषः[2] संयोगादिलोपलत्वणत्वेषु ॥**

( उदाहरणभाष्यम् )

**संयोगादिलोपे—काक्यर्थम् वास्यर्थम्। "स्कोः संयोगाद्योरन्ते च" इति लोपः प्राप्नोति ॥**

(उद्द्योतः) भाष्ये काक्यर्थमिति। न च स्कोरिति सूत्रे झल्ग्रहणापकर्षेण झलन्तसंयोगस्यैव ग्रहणात् प्रकृते न दोष इति वाच्यम्। झलो लोपः संयोगान्तलोपः इत्याष्टमिकभाष्येण संयोगादिलोपे[3] तदसंबन्धबोधनात्। त्रिपाद्यां[4] बहिरङ्गासिद्धत्वाप्रवृत्तेश्चेति भाष्याभिप्रायः॥

( उदाहरणभाष्यम् )

**लत्वम्—निगार्यते निगाल्यते। "अचि विभाषा" इति लत्वं न प्राप्नोति ॥**

(उद्द्योतः) निगाल्यत इति। नन्वत्रान्तरङ्गत्वादेव[5] लत्वं सिध्यतीति वाच्यम्। सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्रवृत्तेः। त्रिपाद्यां तत्परिभाषाऽप्रवृत्तेश्च। न च प्रत्ययलक्षणम्, अल्विधित्वात्[6]। प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसंमतत्वात्॥

( उदाहरणभाष्यम् )

**णत्वम्—माषवपनी व्रीहिवपनी। "प्रातिपदिकान्तस्य" इति णत्वं प्राप्नोति ॥ न पदान्तद्विर्वचन० ॥ ५७ ॥**

(प्रदीपः) **माषवपनीति**। समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधाद् ङीबुत्पत्तेः प्राक् समासविधानात् प्राप्नोति ॥ ५७ ॥

(उद्द्योतः) ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्वं न स्यादत आह—ङीबुत्पत्तेरिति[7]। [सुबुत्पत्तेरप्युपलक्षणम्[1]।] गतिकारकोपपदानां कृद्भिरिति वचनादिति भावः। न च बहिरङ्गासिद्धत्वेनेदं सिद्धम्। त्रिपाद्यां तदप्रवृत्तेरिति[8] दिक् ॥ ५७ ॥

( ४५ अतिदेशसूत्रम् ॥ १।१।८ आ. ४ ॥ )

## द्विर्वचनेऽचि ॥ १।१।५८ ॥

(प्रदीपः) **द्विर्वचने** ॥ ५८ ॥ **अचः परस्मिन्नित्यत्र** योऽनादिष्टादचः पूर्व इति स्थितम्। साच्कस्य च द्विर्वचनमिति पूर्वविधित्वाभावादप्राप्तं स्थानिवत्त्वं विधीयते। अथापि निमित्तात् पूर्वमित्यस्मिन् पक्षे प्राप्तिः स्यात्। तथापि **न पदान्तद्विर्वचनेति** प्रतिषेधप्रसङ्गादिदं वचनम्॥

(उद्द्योतः) **द्विर्वचनेति** ॥ ५८ ॥ **अथापीति**। प्रौढिवादोऽयम्॥ तत्पक्षस्यास्थितत्वात्। नपदान्तसूत्रे आष्टमिकद्वित्वस्यैव ग्रहणाच्च॥

( इष्टानुपपत्तिपरिहाराधिकरणम् )

( ४२४(१) आक्षेपसाधकवार्तिकप्रथमखण्डम् ॥ )

**॥ * ॥ आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् ॥ * ॥**

( भाष्यम् )

**आदेशे स्थानिवदनुदेशात्। तद्वतः। किंवतः?।**

**आदेशवतः। द्विर्वचनं प्राप्नोति ॥**

( प्रत्याक्षेपभाष्यम् )

**तत्र को दोषः।**

( ४२४(२) आक्षेपवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

**॥ * ॥ तत्राभ्यासरूपम् ॥ * ॥**

( भाष्यम् )

**तत्राभ्यासरूपं न सिद्ध्यति। चक्रतुश्चक्रुरिति ॥**

(प्रदीपः) **आदेश इति**। कार्यातिदेश इति पूर्वः पक्षः॥ चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमिति स्थानिवत्त्वाद् यणयुक्तस्यैव प्राप्नोति॥

---

१ अत्र वर्ण्यकोटौ ॥ छाया ॥

२ दोषः अतिप्रसक्तिः। तस्मात्तत्र स्थानिवद्भावस्य प्रतिप्रसवः कर्तव्य इत्यर्थः। शु० कौ० ॥

३ संयोगादिलोपे च यणः प्रतिषेधो वाच्यः इत्युक्त्युत्तरं नवा झलो लोपादिति कथनेन संयोगान्तलोप इव संयोगादिलोपेऽपि तदङ्गीकारः। यणः प्रतिषेधस्य संयोगान्तसंयोगादिलोपविषयकत्वेन नवा झलो लोपादिति वार्तिकस्याप्युभयविषयकत्वमेव वाच्यम्। भाष्यं तूपलक्षणतया नेतुं शक्यम्॥ इत्थं च प्रतिप्रसववार्तिके संयोगादिलोपपदमनाश्रित्याष्टमिकं "संयोगादिलोपे च" इति वार्तिकमिति बोध्यम्॥ दाधिमथाः॥

४ दण्डिकृष्णाद्युक्तिं खण्डयति—त्रिपाद्यामिति ॥ छाया ॥

५ अन्तरङ्गत्वादिति। णिलोपात्पूर्वमिति भावः॥ छाया॥

६ अल्विति। अत एव स्थानिवत्त्वमपि न॥ छाया॥

७ ङीबुत्पत्तेरिति। तत्रोपलक्षणमावश्यकमित्याह—गतीति॥ तथाच ङीबुत्पत्तेः प्राक्समासे ङीपि अल्लोपे समासरूपप्रातिपदिकान्तत्वाण्णत्वप्राप्तिः॥छाया

८ अप्रवृत्तेरिति। पूर्वपदाक्षिप्तसमासरूपप्रातिपदिकान्तस्य णत्वविधानेन तस्यापि पूर्वपरोभयसापेक्षत्वेन समासज्ञानसापेक्षत्वेन च समत्वाच्चेत्यपि बोध्यम्। तदाह—दिगिति॥ छाया॥ यथोद्देशे॥ दाधिमथाः॥

---

१ एतच्छायानुरोधादेवास्माभिः सर्वपुस्तकेष्वनुपलभ्यमानोऽपि "सुबुत्पत्तेरप्युपलक्षणम्" इति पाठः कोष्ठकमध्ये स्थापित इति बोध्यम्॥ दाधि०॥

